# रघुवंशम्

महाकवि-कालिदासप्रणीतम्

अन्वय-वाच्यपरिवर्त्तन मल्लिनाथकृतटीका-प्रयोजनीय-सरलार्थ-
विविधपौराणिकवृत्तान्त-वङ्गानुवाद हिन्दी भाषानुवाद-
विस्तृतभूमिका ग्रन्थवर्णित विषय-विस्तृत सूचिपत्र-
काव्याद्यपरीक्षाप्रश्नादिसमेतम्


अध्यापक—

श्रीमद्गुरुनाथ-विद्यानिधि-भट्टाचार्य्येण

सम्पादितम् ।






कलिकाता—निवेदिता लेनस्थित संस्कृत विद्यालयात्

श्रीजानकीनाथ काव्यतीर्थ भट्टाचार्य्येण

प्रकाशितम् ।

१३३२ वङ्गाब्दे तृतीया वृत्तिः ।

वस्त्रबद्धं ३॥०  मूल्यं मुद्रात्रयम् ३)

पुस्तक मिलनेका पता—



छात्र-पुस्तकालय,

निवेदिता लेन, वाग्‌वाजार,

कलकत्ता ।

टेलिग्राम "अध्यापक" कलिकाता ।

श्रुतिस्मृति पुराणादि काव्य व्याकरणानि भोः ।

लभ्यन्ते न्याय्यमूल्येन परीक्षा प्रार्थ्यते सताम् ॥

मुखविलास :—श्रीजानकीनाथ काव्यतीर्थ एण्ड ब्रादार्स ।

PRINTED BY—H. K. GHOSH,

AT THE RUDRA PRINTING WORKS.

*7, Gour Mohan Mukherjee Street.*

*CALCUTTA.*

# भूमिका ।

## ( कविकथा )

इह खलु जगति गीर्वाणवाणीविरचितानि यावन्ति सन्ति महा-काव्यानि, तेषु कविकुलशिरोमणेस्तत्रभवतः कालिदासस्य पीयूषवर्षि-लेखनीप्रसूतं रघुवंशाख्यं महाकाव्यमेव परमरमणीयमिति काव्यरसाप्लुत-चेतसां मनीषिणामखण्डनीयो वादः। कविरयं कुमारसम्भवमेघदूत-ऋतुसंहारप्रभृतीनि काव्यानि अभिज्ञानशकुन्तल-मालविकाग्निमित्र-विक्रमोर्वशीयप्रभृतीनि च रूपकानि तथापराणि च बहुविधानि छन्दः-काव्यकथादीनि विरचितवान्, तेषु तावदेका रघुवंशीया कथास्माभिः कविकथोपन्यासपुरःसरं प्रबन्धेऽस्मिन्नवतार्य्यते ।

असाधारणकवित्वशक्तिप्रभावेणायं महाकविर्निखिलसहृदयहृदया-काशे समुदितो विमलकिरणसुधासूतिरिवामृतप्रवाहेण जगदिद-मालोकितयति वर्त्तमानेऽपि समये। किन्तु नितरां परितापकरमिदं यदयं कविकुलचूडामणिः कदा कुत्र जन्मना कमन्वयमलमकरोत्, को वा स महात्मा य ईदृगतुलनीयगुणं तनयमाससादेत्यादि कविविषयक-वृत्तान्तो नितान्तदुर्लभ इति। किन्तु जानीमहे रत्नान्वेषिणां गाढतर-तिमिरमयनीरनिधौ निमज्जनमिव तस्य चरितवर्णनमिदानीमस्माकं विफ-लतामेष्यति, तथापि विविधकिंवदन्तीमनुसरन्तो वयमिदानीं यथायथ-माकलयिष्यामस्तदमलमितिवृत्तम् ।

एवं किल समनुश्रूयते—आसीत् गौडाधिपतेः परमा विदुषी कन्या विद्यावती नाम। सा खलु काले विवाहार्थमीदृगङ्गीचकार—"यः किल विद्यया मां पराजेष्यते, स एव मे पाणी ग्रहीष्यतीति।" अथ श्रुत्वा तस्याः शपथवचनं नानादिग्देशतः पण्डितकेसरिणः समागत्य तया सह विविध-शास्त्रतर्कमवतारयामासुः, किन्तु किं ब्रूमः? क्रमेण सर्व्व एव तया राज-नन्दिन्या पराजिता नितरां विषेदुः। अथ भ्रष्टसम्मानास्ते सर्व्वे सम्भूय प्रगल्भां भूपतितनयां सन्तापयितुमनसः केन च महामूर्खेण सह तस्याः पाणिग्रहं सम्पादयितुं यतन्ते स्म, अपिच सामान्यस्त्रीजनतः पराजय-माप्नुवन्तस्ते नितान्तक्षुब्धहृदयाः स्वावासं न जग्मुः, केवलं केनोपायेन

ताहशं महामूर्खं संग्राहयिष्याम इत्थं विचिन्तयन्त: पथ: पर्यटन्ति स्म। अथ ते गते बहुतिथे काले स्वाधिष्ठानेन आनन्नाया वृक्षशाखाया मूलदेशं कृन्तन्तमेकं ब्राह्मणकुमारमपश्यन्, पण्डितास्तु तथाविधं ब्राह्मणकुमारं दृष्ट्वा मनोरथसिद्धिमदूरवर्त्तिनीं मन्यमानास्तमाहु:—"भो भोः कुमार! वृक्षादवतर।" य: खलु वाक्यमपि सम्यगुच्चारयितुं न शक्नोति, स पण्डितानां परिशुद्धां भारतीं कथमवगन्तुमर्हति? यातु, ततस्ते अतिमहता कष्टेन तं वृक्षादवतार्य्य स्वाभिलाषमकथयन्।

ललनालाभकथया काष्ठप्रतिकृतिरपि बाहू प्रसारयति, का कथा चेतनावतां मानवानां? महामूर्खोऽपि ब्राह्मणतनय: कन्यालाभं विशेषतो राजकन्याप्राप्तिं श्रुत्वा तेषामित्यमनुगतोऽभूत्—यत्ते पण्डिता यादृशमेवानुष्ठानमवलम्बितुमुपदिष्टवन्त: स मूर्खस्तथाविधमेवाङ्गीचकार। तत: पण्डिता अकथयन्—'भो: वयं त्वां नीत्वा राजसभां गमिष्याम:, त्वया तु तत्र मौनिना भूयतां, यदा अस्माकं शास्त्रीया: कथा: भवेयु:, राजकन्यापि तर्कमवतारयिष्यति, तदा त्वमुभयोरन्तरं हुङ्कारेणास्मत्पक्षं समर्थयिष्यसि। ब्राह्मणकुमारोऽपि "मया तथाविधमेव कर्त्तव्यम्" इत्यङ्गीकृत्य पण्डितै: सह राजधानीं गतवान्। तत: पण्डिता: तेन सार्द्धं राजसभां गत्वा अघोषयन्—"असावस्माकं मौनी गुरु:। वयं राजनन्दिन्या सह शास्त्रवादं कुर्य्याम। अथ यदि कदाचित् शास्त्रवादे प्रमाद: सञ्जायते, तदा मौनी गुरुरसौ हुङ्कारेण तं निराकरिष्यतीति।" अथ पुन: शास्त्रवादे प्रवृत्ते विधिवशात् पण्डितानां प्रमादात्तौ कपटगुरोर्हुङ्कारशब्द: पपात। अथानुरूपं वरमलभमाना गतप्राययौवना राजनन्दिनी तथाविधं पण्डितमवलोक्य तद्गुरो: पाण्डित्यं बहुमन्यमाना तमेव पुन: परीक्षितुकामा तमङ्गुलीद्वयमदर्शयत्, स: मूर्ख: कपटगुरु: कालिदासोऽचिन्तयत्—अहं मूर्ख इति मामवज्ञाय राजनन्दिनी दण्डविधानसूचकमङ्गुलीद्वयमदर्शयत्, कालिदासस्तु प्रथममेकामङ्गुलीं दर्शयित्वा तत: पुनरङ्गुलीद्वयमेवादर्शयत्। कालिदासस्तदीयचक्षुर्द्वयनाशार्थं राजकन्याया अङ्गुलीप्रदर्शनं मन्यमान: इङ्गितेन उत्तरयत्—'यदि त्वमेकया अङ्गुल्या मे नयनमेकं नाशयिष्यसि, तदा अहमपि अङ्गुलीद्वयेन ते लोचनद्वयं नाशयिष्यामि।' किन्तु राजनन्दिनी तद्विपरीतमवगतवती। सा तु एकं द्विर्वेति ब्रह्मण: स्वरूपं जिज्ञासमाना प्रथममेकामङ्गुलीं तत: पुनरङ्गुलीद्वयमदर्शयत्—इदानीं राजकुमारी कालिदासदर्शितमङ्गुलीद्वयम् दृष्ट्वा "प्रकृतिपुरुषात्मकं ब्रह्म" इत्यवगतवती। अथ सा तमशेषशास्त्रदर्शिनं मत्वा तमेव स्वामित्वेनाग्रहीत्, फलितकपटप्रबन्धा:

पण्डितास्तु पश्चात् कालिदासस्य मूर्खता व्यक्तीभविष्यतीति राजदण्डभिया ततः पलायिताः।

अथ विद्यावती तद्दिन एव वरशय्यामधिशयानस्य स्वामिनो मूर्खत्वमवगम्य नितान्तविभ्रान्तमानसा सती पदाघातेन तमपसारितवती। सोऽपि पत्नीतः पदाघातं प्राप्य आत्महत्यया विद्यावती-पदाघातदुःखावहं जीवनं त्यक्तुकामः सन् गभीरारण्यं गत्वा प्रथमं विद्याप्रदायिनीं वाग्देवीमाराधयितुं यतते स्म। एकान्ततन्मयतयाराधनेन सा तस्य प्रत्यक्षं गता, अकथयच्च—वत्स! वरं वृणुष्वेति। कालिदासोऽपि विद्यालाभवरं प्रार्थितवान्। भगवती भारती तं "तथास्तु" इत्युक्त्वा अन्तर्दधे।

वरं दत्त्वा भारती यदा अन्तर्द्धातुमुपचक्रमे, तदासौ कालिदासः परिशुद्धया भाषया तां स्तोतुमारेभे, किन्तु देव्याश्चरणकमलमपहाय वक्षःस्थलवर्णनमुपक्रममाणं तं प्रति क्रुद्धा देवी शशाप,—"रे दुर्बुद्धे! यतस्त्वया मच्चरणारविन्दमपहाय अन्यदङ्गं वर्ण्यते, अतो मच्छापाद् गणिकागृहे त्वं प्राणान् त्यक्ष्यसि। अपिच देवदर्शनं कदाचित् न विफलतामेति, शास्त्रज्ञानं ते अनन्यसाधारणं भविष्यति, किन्तु कस्यामपि परिषदि ते विद्यास्फूर्त्तिर्न भविष्यती"ति। एतादृगभिशप्तोऽपि असाधारणधीशक्तितया स महाकविः केनापि न पराजितः, अपितु केवलकौशलजालं विस्तीर्य राजसभागतान् दिग्विजयिनोऽपि पण्डितान् स एव पराजितवान्।

अनन्तरं लब्धवरः कालिदासः पुनः पत्नीसमीपमागत्य अर्गलितद्वारगृहाभ्यन्तरस्थां तामाजुहाव, सापि अज्ञतया मूर्खपतिं न सम्बभाषे, अपि तु स्वरपरिचयेन स्वामिनं ज्ञात्वा गृहाभ्यन्तरस्थैव तस्य प्रत्यागमनकारणमपृच्छत्। कालिदासोऽपि "अस्ति कश्चिद् वाग्विशेषः" इत्यादिसंस्कृतवाक्येन तां पुनराहूतवान्। एतेनापि यदासौ विद्यावती द्वारं न मोचितवती तदा स कालिदासः विविधसंस्कृतवाक्येन निजपाण्डित्यं प्रत्याय्य तां मुक्तकवाटामकरोत्। अपि च क्रमेण "अस्ति" इति प्रथमवाक्येन 'अस्त्युत्तरस्यां दिशि देवतात्मा" इत्यादिभिः श्लोकैः सप्तदशसर्गात्मकं कुमारसम्भवं काव्यं "कश्चित्" इति द्वितीयेन 'कश्चित् कान्ताविरहगुरुणा' इत्यादिभिः श्लोकैः मेघदूतं नाम खण्डकाव्यं, 'वाग्विशेषः' इति तृतीयेन च 'वागर्थाविव सम्पृक्तौ' इत्यादिभिः श्लोकैः ऊनविंशसर्गात्मकमिदं रघुवंशं नाम महाकाव्यं प्रणीय पत्नीं श्रावयामास। ततः क्रमेण च स ऋतुसंहार-नलोदय-पुष्पबाणविलासश्रुतबोधद्वात्रिंशत्पुत्तलिकाशृङ्गारतिलकशृङ्गाराष्टकमाल-

विकाग्निमित्राभिज्ञान-शकुन्तलविक्रमोर्वशीप्रभृतीनुपादेयान् ग्रन्थान् विरचय्य कविकुलेषु श्रेष्ठासनमधिचकार। तदयं श्लोकः सर्वत्रैव प्रचलति—

"पुष्पेषु जाती नगरीषु काञ्ची नारीषु रम्भा नरपेषु रामः।
नदीषु गङ्गा पुरुषेषु विष्णुः काव्येषु माघः कविकालिदासः॥"

इमा अन्याश्च बहुतराः सन्ति किंवदन्त्यः, किन्तु आधुनिकानामसत्यतया मन्थरवचनैरस्माभिर्न ताः सर्वा उल्लेखनीयाः।

या तु सा कथा। यस्य कवित्वसुधया जगदिदमभिषिच्यते, मानवचरित्रचित्रणे स्वभाववर्णने, सुमधुरच्छन्दोबन्धने च वाल्मीकिमन्तरेण यस्य जगतीह द्वितीयो नास्ति, यः खलु गृहे गृहे आबालवृद्धैर्देवताधिया पूज्यते, दुःखं पुनरेतत् स्मरणीयकीर्त्तेस्तस्य कालिदासस्य जन्मसमयमाकलयितुं न खलु वयं प्रभवामः। नासौ कालिदासो वर्त्तते नवास्ति तादृग्विद्वज्जनबहुला उज्जयिनी नगरी,न च विराजति साम्प्रतं महाराजाधिराज उज्जयिनीपतिर्विक्रमादित्यः किन्तु अमरकविः कालिदासः सर्वेषामेव हृदयमधिकुर्वाणः अद्यापि गृहे गृहे सम्पूज्यते।

आसीत् पुरा विक्रमादित्यपालितायाः उज्जयिन्याः सारस्वतकुञ्जे विबुधभूयिष्ठा परिषत्, तत्र च यानि नव रत्नानि आसन्, तेषामेकतमो मनीषिशिरोमणिः कालिदासः।

तत्रायं श्लोकः ;—धन्वन्तरिक्षपणकामरसिंहशङ्कु वेतालभट्टघटकर्परकालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य॥

एतेषामपि रत्नानां मध्ये "सशेमिरा" "राजपुत्र चिरं जीव" "देहि लक्षं ततो मे" "सो वा भवेन्न हि भवेदिति मे वितर्कः" इत्यादिभिरन्यैश्च मधुरसन्दर्भात्मकैः कौशलजालसमाकुलैः श्लोकैरप्यनुमीयते कालिदासस्य कवित्वचातुर्य्यम्।

अस्य खलु महात्मन आविर्भावसमयनिर्णये बहवो मतभेदाः सन्ति। ग्रन्थबाहुल्यभयात् तेषां सारांश एव संक्षेपेण अत्रोद्ध्रियते।

केचित् कलयन्ति यदुज्जयिनीपतेर्विक्रमादित्यस्य सभापण्डितोऽयमासीत्। अस्य राज्ञः "संवत्" नाम्नो वत्सरगणना प्रचलिता। इदानीं खृष्टीयदशाधिकोनविंश १९१० शताब्दी। संवत् संज्ञया तु १९६७ सप्तषष्ट्यधिकोनविंशशताब्दी। अतः खृष्टजन्मनः ५७ सप्तपञ्चाशद्वर्षात् पूर्वं विक्रमादित्यस्य सत्ताकालः अतएव तदीयसभासत् कालिदासोऽपि तात्कालिकः। मतमिदं प्रायेण सर्वेषामेव भारतवर्षीयसंस्कृतविद्यालयाध्यापकानां महामहोपाध्यायपण्डितानाम्। अपरे वदन्ति—कालिदासः खृष्टीयतृतीयशताब्द्यां आविर्बभूव, केचन प्रत्नतत्त्वविदो मन्यन्ते यत्—

महाकविरयं खृष्टीय-पञ्चमशताब्दीमनुजग्राह जन्मनेति । अपरेषामभिमतं —यतः कालिदासो विक्रमादित्यस्य नरपतेर्नवरत्नसभायामेकतमं रत्नमासीदतोऽयं खृष्टीयषष्ठशताब्दीय इति। कथमिति चेदुच्यते —प्रसिद्ध-पण्डितः भाउदाजिः ब्रह्मगुप्तप्रणीत—"खण्डखाद्यस्य" टीकात आविष्कृतवान् यत्—नवरत्नानामेकतमं रत्नमाचार्यवराहः सप्ताधिकपञ्च-शत ५०७ शकाब्दे परलोकमियाय, अतएव सप्ताधिकपञ्चशत ५०७ शकाब्दं यावत् नवरत्नमासीदिति निश्चयः ।

अष्टसप्तति ७८ खृष्टाब्दे राजा कनिष्कः सिंहासनमलंकुर्वाणः शकाब्द इति वर्षनाम प्रणिनाय,तदेवाधुना शकाब्द इति नाम्ना व्यपदिश्यते। सुतरां ५८५ ( खृ: ) वराहमरणकालः, नवरत्नकालस्य षष्ठशकाब्दत्वे कालि-दासविलासकालोऽपि स एव स्वीकरणीयः । बहव एव प्रत्नतत्त्वविद एतत् खलु समर्थयन्ते । वस्तुतो महाकविकालिदासः सप्तशताब्द्याः प्रागाविर्बभूवेत्यत्र नास्ति संशयावकाशः—यतः कान्यकुब्जाधिपतिर्हर्ष-वर्द्धनः खृष्टीय-सप्ताधिकषष्ठ ६०७ शताब्द्यां सिंहासनमधिरूढः सन् प्रायश्चत्वारिंशद्वत्सरान् साम्राज्यं शशास । तदीयसभासत् कविवरो बाणभट्टः हर्षचरितस्य भूमिकायां कालिदासमित्थं प्रशशंस । तद्यथा—

"निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥" इति ।

कालिदासस्य सप्तम ७ शताब्द्याः पूर्वमाविर्भावस्य एषैव युक्तिः। अलं पल्लवितेन ? एतदालोचनाभारः समालोचनचतुरैः प्रत्नतत्त्वविद्भिरेव बोढव्यः, वयमत्र साम्प्रतमुदासीना इति ।

---

## ( काव्यकथा )

अस्य खलु इतरैरतुलनीयात्मनो महाकाव्यस्य प्रथमतः रघुवंशस्य समाप्तिं यावत् सर्वाङ्गमेव सुरसमिति चाभिमतमेतद्ग्रन्थमधीयानानां काव्यरसिकानाम्। अस्य य एवांशः सम्यगालोच्यते, स एवाद्वितीयकवेः कालिदासस्य अलौकिकीं कवित्वशक्तिं विशेषेण विकाशयन् आलोचयितृणां मनसि कामपि नवीननवीनामानन्दपरम्परामुद्भावयति।

काव्यस्य जीवनं तावत् अतिमनोरमाणां चरितानां सृष्टिः, सृष्टानां पुनरमीषां देशकालावस्थामनुसृत्य समावेशः। अत्र च कवयितुरलौकिकीं प्रतिभामृतेनापरो गरीयानुपायः। प्राकृतिकनियमानुसारेण ये व्यापाराः प्रतिदिनमेव घटन्ते, स्वभावसुलभता च येषां पूर्वघटितानां व्यापाराणाम्, तदनुयायिघटनानिवेशविषये कविना समवहितेन भवितव्यं, यतः स्वभावविरुद्धं वस्तु जनानां विरागं जनयति ; यदि पुनर्नैसर्गिकान् व्यापारान् कवयिता स्वप्रतिभासम्पदा स्वाभाविकादपि अधिकतरं मनोहरं वैचित्र्यमधुरञ्च निर्मातुं क्षमते, तस्य अनन्यसुलभा प्रतिभा सर्व्वथैव प्रशंसनीया। प्रकृतपक्षे तु स्वाभाविकविषयेषु वैचित्र्यं प्रदर्शयितुमक्षमे कवयितरि न राजन्ते प्रकृतकविजनसुलभगुणाः। यतः वैचित्र्यविहीनानां विदितपूर्वाणां विषयाणां पुनः साक्षात्कारेण जागतिकानां सामाजिकानाम् उपकारो वा आनन्दसन्दोहोद्बोधो न स्यात्। सम्यगासादितरसमपि यन्नाम काव्यं केषामपि नोपकुरुते तदुत्तमकाव्यमिति नाङ्गीकुर्वन्ति आचार्यपादाः। अतएव तत्रभवताम् ऋषीणाम् अनुशासनं—"निर्मेयं चरितं शुद्धं जगन्मङ्गलकारणं" मिति। तस्य पुनरुत्तमवस्तुनो बाहुल्येन उत्कर्षप्रतिपादनाय वैचित्र्यसम्पादनाय च प्रयोजनमनुसृत्यानुत्तमगुणप्रतिनायकसृष्टिर्नो दोषाय, प्रत्युत गुणायैव भवति।

संस्कृतभाषया प्रणीतानां महाकाव्यानामवतंसे रघुवंशे प्रतिवर्णमयं नियमो विलसति लोकशिक्षोपयोगिनामुपदेशानां विलासैः परिपूर्णमादितोऽवसानं रघुवंशस्य।

यशोंऽशुकलापशुक्लीकृतनिखिलाशः कविकुलामरः कालिदासो दिलीप-रघु-अज-दशरथादीनां वर्णनावसरे साधारणानावेदयत्, यत्—संसारे अविनश्वरं यशः समधिगम्य जिगमिषूणां त्यागस्वीकारः, वंशमुन्नमयितुमभिलषतां स्नानादीनामधिगमः, परहृदयजिगीषूणां विनयः, विपुलमङ्गलमधिगन्तुमनसां गुरुषु गरीयाननुरागः—तत् कार्यशस्यसाधन-

विधौ रमणीयोपाय इति। एवं सर्वथा धर्मप्रबलमतिना भवितव्यं, परहितसाधनप्रयोजनं निजप्राणविसर्जनमुत्साहेन समाधेयं, गुरूणामनुशासनं सविश्वासं सानन्दं सोत्साहं शिरसि धारणीयं, पूज्यानां पूजाव्यतिक्रमः परममङ्गलमादधातीति। महाकविरितरदपि निवेशितवान् यत्—आत्मजललामभूतानां प्रजानां हृदयरञ्जनसमर्थ एव राजपदेनाभिधेयः। सत्यात् नास्ति गरीयसी सम्पत्, सत्यादधिकतरो न विद्यते धर्मः,—सत्यपालनतत्परा महात्मा प्राणान् किञ्च प्राणाधिकं तनयमपि त्यक्तुं चक्षमे, पितृवाक्यरक्षणाय जगतामादर्शः पुत्रः सानन्दं राजसिंहासनं परित्यक्तुं प्रभवति, शक्नोति च पितृणां तृप्तिसाधनाय हिंस्रकुलसङ्कुलम् अरण्यं गन्तुम्। वर्त्तमाने गुरुणि कर्त्तव्यतासाने स्वीयहस्तपिण्डं स्वहस्तेन छित्त्वा करणीतायाश्चरणेषु उपहारीकर्त्तुमिव समर्थयते कर्त्तव्यतारणदीक्षो जितेन्द्रियः। स्वाधीनचित्तानां भूदेवानां समक्षं प्रासादतलविलासिनो भूपतयः तथा पर्णकुटीरोदरशायिनो भिक्षोपजीविनस्तुल्यमूल्यं भजन्ते इति। इत्थमेव सम्भाव्यमानसामाजिकमङ्गलानामालोचनसहानां चरितादीनां समावेशविषये कृतालौकिकप्रतिभाविकाशः कालिदासस्तदीयमनर्घमनन्यसदृगुणसहोदरमसम्भाव्यं महाकाव्यं सकलकाव्यानामवतंसं रघुवंशं विरचय्य लोकानामतिमात्रमुपकारमानन्दमप्यात्मनि समुदपादयत्।

अथ पुनर्यावन्तः कारणकलापा विपुलसमृद्धिशालिसाम्राज्यमपि उत्सादयन्तितमां, येन च सुवर्णमयोऽपि संसारः श्मशानभस्मत्वेन परिणम्यते, तादृशां तत्तद्विपरीतवस्तूनामपूर्वमवतारणं तदीयप्रियकाव्ये सविशेषमकरोत्।

दीलिपादिदशरथान्तानां रघुवंशवर्णितनृपतीनां, दीलिपात् रघुः महत्तरः, रघोरजः, अजात् दशरथ इति क्रमेणैवातुलनीयगुणशालित्वं परिलक्ष्यते; क्रमेणैव वर्द्धिता, सन्ततिशान्तिविधायिनी, राज्यसुखसुरधुनी रामचन्द्रशासनसमये वेलाव्यापिनी आसीत्। अयोध्यासाम्राज्यगगने रामचन्द्रः पूर्णचन्द्र इव शुशुभे; दीलिपतः क्रमेण परिवर्द्धिताभिरेकैकाभिः कलाभिः रामरूपः सर्वाङ्गसुन्दरो निर्लाञ्छनः पौर्णमासीसुधाकरः समुदियाय। सति पुनरस्ताचलचूड़ावलम्बिनि रामचन्द्ररजनीरञ्जने अयोध्यायां शुक्लपक्षस्य चिरावसानं संवृत्तम्। अथ तत्र समुपस्थिता कृष्णप्रतिपत् परवर्त्तिनां नरपतीनाम् अधःपतनसूचिका।

एकैकशः क्षीणासु कलासु, तत्र बभूव हि अग्निवर्णशासनदशायाम् अभ्रतमसभीषणवपुषोऽमावसीनिशः शाश्वतिकदुःखकराविर्भावः। हन्त यथैव क्रमिको वृद्धिस्तथैव क्रमिकः क्षयः। ईदृग्वैचित्र्यं कस्य कवेः

कुत्र काव्ये विलोक्यते ? शुभक्षणे वाणीविलासमानसः कालिदासः स्वीयकवित्ववीणाभङ्कारमकरोत् ! !

आदितः शेषं यावत् प्रतिपदमेव रघुवंशे प्रसादमाधुर्य्ययोर्गुणयोः समावेशः । एवमेकमपि पदं महाकाव्येऽस्मिन् न निबद्धं, यत् परिवृत्तिं परिवृद्धिं वा सहते ।' या चोपमा अत्र कालिदाससुधाखनिलेखनीतो निरगमत् तयैव उपमेयोपमानयोः साधर्म्म्यमायासमन्तरेण सद्यः प्रतिपत्तुमर्हन्ति मन्दमतयोऽपि । कदाचिदपि केनचिदप्रसिद्धेन पदार्थेन समं न खलूपन्यस्तं सादृश्यम् । 'वागर्थाविव सम्पृक्तौ' इत्यादिकमारभ्य यं कञ्चन श्लोकं प्रति पातयामि दृष्टिं स एव हृद्यकाव्यतया सहृदयहृदयतलमधिकर्त्तुं प्रभवति चिराय । अतः साधु खलु गीयते सामाजिकैः यत् "रघोः काव्यं पदे पदे" इति ।

केचन महोदयाः एवंविधपरमरमणीयं महाकाव्यमपि सावज्ञमवलोकयन्तः "रघुरपि काव्यं तदपि च पाठ्यं, तस्य च टीका सापि च पाठ्या" इति अरसिकरचितं रघुवंशस्य अकिञ्चित्करतावादं व्याहरन्ति; संस्पृष्टबहुलशास्त्रास्ते शिक्षिता भवितुमप्यर्हन्ति, किन्तु तेषां नास्ति सहानुभूतिः नो वा रसज्ञतेति वयं मुक्तकण्ठं वक्तुं शक्नुयामः ।

कालिदासस्तदीये रघुवंशेऽपरमप्येकतममुद्देश्यं साधितवान्, यन्न बभूव साधितं कुमारसम्भवे मेघदूते वा । कुमारसम्भवे केवलं हिमालयवर्णनं, किन्तु न विद्यते भारतीयानामपरेषां प्राकृतिकशोभाशालिनां नयनमनोहराणां प्रदेशानां वर्णनम् इत्येव महाकविः कुमारसम्भवात् परं मेघदूतप्रणयनावसरे रामगिरिमारभ्य अलकां यावत् भारतवर्षस्योत्तरभागं पयोधरपथनिर्देशच्छलेन वर्णयामास । अतःपरं रघुवंशे अयोध्यानगरीमारभ्य दक्षिणसमुद्रमध्यवर्त्तिनीं लङ्कानगरीं यावत् दक्षिणभारतसौन्दर्य्यं समवर्णयत् । वस्तुतः कविर्मेघदूते तथा रघुवंशीयचतुर्थषष्ठत्रयोदशसर्गेषु समग्रभारतवर्षस्यैव मानचित्रमङ्कितमकरोत्, अदर्शयच्च यावतीयसुन्दरपदार्थानां वर्णनया स्वीयदिगन्तव्यापिकल्पनायाश्चरमोत्कर्षम् । कालिदासमानसमानसे राजहंसीव हंसवाहना नरीनर्त्ति, येन अस्य कवेः कवित्वपीयूषमधुराणि सर्वाण्येव वस्तूनि मनोरमाणि अनवद्यानि च । तदीयं दृश्यकाव्यं श्राव्यकाव्यं वा सर्वाङ्गसुन्दरं सर्वोत्कृष्टम् । वयं सदैवं ब्रूमो यत् क्वचिदपि देशे कोऽपि कविर्महाकविकालिदास इव सकलेषु विषयेषु समानगुणसम्पदुपेतो न बभूव, न वास्ति, न जानीमहे भविष्यति किं नवेति च । तदीयाविर्भावेन भारतं गौरवान्वितं, तदीयविमलकवितालोकमालया संस्कृतभाषा विशदीकृता समर्च्चिता च सर्वेष्वेव देशेषु तस्य प्रतिभासम्पदा । इति ।

# रघुवंशे वर्णनीयविषयाः ।

## प्रथमसर्गे—

ग्रन्थकर्त्तुर्देवतानमस्कारः । कवेरहङ्कारपरिहारः । तत्प्रसङ्गे समासेन रघुवंशीयानां चरितवर्णनम् । वैवस्वतमनुवंशे दिलीपजन्म, तच्चरित्रवर्णनञ्च । पत्न्या सुदक्षिणया सह दिलीपस्य वशिष्ठाश्रमगमनम् । वशिष्ठाश्रमवर्णनम् । प्रभाते राज्ञि ऋषेरनामयजिज्ञासा । अपत्यकामस्य दिलीपस्य वशिष्ठसमीपे पुत्रलाभप्रार्थना । दिलीपस्य पुत्रप्रतिबन्धकसुरभिशापश्रवणन् । तत्कथनसमये वनतो नन्दिन्याः शुभागमनम् । नन्दिनीमाहात्म्यवर्णनम् । नन्दिनीदर्शने दिलीपस्य भाविपुत्रलाभाशंसा । पातालावस्थितायाः सुरभेरदर्शनतया नन्दिनीं तत्प्रनिधिं विधाय वशिष्ठेन तदाराधनप्रकारकथनम् । दिलीपेन वशिष्ठादेशस्याङ्गीकारः । ब्रह्मचर्य्यावस्थितस्य राज्ञः मुनिकल्पितायां पर्णशय्यायां शयनम् । ततः निशावसाने तदीयशिष्याणां वेदाध्ययनध्वनिना दिलीपस्य निद्राभङ्गश्च ।

---

## द्वितीयसर्गे—

प्रभाते दिलीपस्य पत्नीप्रतिग्राहितगन्धमाल्यायाः स्वेच्छानुगामिन्या नन्दिन्या अनुगमनम् । ततः कदाचित् कण्डूयनादिना, कदाचित् पानीयदानेन, कदाचित् दंशननिवारणेन, कदाचित् प्रत्युद्गमनेन प्रत्युपवेशनेन च स्वैरचारिण्या नन्दिन्या शुश्रूषावर्णनम् । राज्ञो वनोपशोभादर्शनवर्णनम् । दिनावसाने नन्दिन्या सह राज्ञः पुनराश्रमप्रत्यावर्त्तनम् । तत्प्रसङ्गे पुनररण्यशोभावर्णनम् । सपत्नीकेन पार्थिवेन दोहावसाने न्यस्तवलिप्रदीपायाः नन्दिन्याः शुश्रूषणम् । इत्थं शुश्रूषापरायणस्य अतीतसप्तदिवसस्य राज्ञः अष्टमदिवसीयकथारम्भः । अथाष्टमदिवसे अनुचरस्य राज्ञो हृदयं जिज्ञासमानायाः नन्दिन्याः सिंहाक्रमणवर्णनम् । सिंहं हन्तुकामस्य नृपतेर्भुजावष्टब्धता । नन्दिनीप्रदानेनात्मरक्षार्थं दिलीपं प्रति सिंहस्योपदेशः । तत्प्रत्याख्यानवर्णनम् । आत्मविनिमयेन नन्दिनीमुद्धर्त्तुकामं दिलीपं प्रति नन्दिन्याः प्रसन्नता । नृपतेः पुत्रवरप्राप्तिः । सिंहस्यान्तर्धानम् नृपमस्तके स्वर्गतः पुष्पवृष्टिः । "पत्रपुटे मदीयं दुग्धमुपभुङ्क्ष्व" इति राजानं प्रति नन्दिन्या आदेशः । एकान्तभक्तिप्रवणस्य राज्ञः "वत्सस्य पानान्ते होमविधि-

प्रयोजनावशिष्टं दुग्धं "पास्यामि" इति नन्दिनीं प्रति प्रार्थना। नन्दिन्या सह राज्ञः पुनराश्रमप्रत्यावर्त्तनम्। गुरोः पत्न्याश्च समीपे राज्ञः नन्दिनी-प्रसन्नतावर्णनम्। वशिष्ठाज्ञया राज्ञो नन्दिनीदुग्धपानम्। ततः वशिष्ठस्य नन्दिन्याश्च प्रणामप्रदक्षिणानन्तरं नृपतेरयोध्यां प्रति प्रस्थानम्। सुदक्षिणाया गर्भधारणञ्च।

---

## तृतीयसर्ग—

सुदक्षिणाया दौहृदलक्षणवर्णनम्। पत्नीगर्भदर्शनेन राज्ञो मनः-प्रसादः। पुंसवनादिक्रियानुष्ठाने विविधगर्भपोषणसामग्रीप्रदाने च राज्ञश्चेष्टावर्णनम्। राज्ञः पुत्रोत्पत्तिः। पुत्रजन्महर्षितस्य राज्ञः धन-रत्नादिवितरणम्। राज्ञः पुत्रमुखदर्शनम्। तनयस्य जातकर्मादेरनु-ष्ठानम्। पुत्रस्य "रघुः" इति नामकरणम्। ततः उपनयनसंस्कारवर्णनम्। विद्याशिक्षा। रघोर्विवाहः। एकोनशततमस्य राज्ञः पुनरश्वमेधोद्यमः। अश्वरक्षणे रघोर्नियोगः। अश्वचौरेण सुरराजेन सह रघोः समरः। समर-निपुणं रघं प्रति इन्द्रस्य प्रसन्नता। अप्रत्यर्पणेनापि अश्वस्य इन्द्राज्ञया ज्ञाताश्वमेधसमाप्तिवृर्णनम्। रघोरभिषेकः। दिलीपस्य वानप्रस्थावलम्बनञ्च॥

---

## चतुर्थसर्ग-

रघोः प्रजापालनवर्णनम्। शरदवसाने राज्ञो दिग्विजयोद्योगः। सैन्यं प्रति अभियानार्थमादेशप्रदानम्। युद्धयात्रा। रघोर्यात्राकाले लाज-वर्षणादिविविधशुभानुष्ठानम्। सेनासन्निवेशः। हिमवतः समुद्रोपकण्ठं यावत् समन्तात् सुह्मवङ्गकलिङ्ग-उत्कलकलिङ्गपाण्ड्यताम्रपर्णीपारसीक-यवन-हूणकाम्बोजप्राग्ज्योतिषकिरातादिजनपदजयवर्णनम्। सर्वस्वदक्षिण-विश्वजिद्यज्ञानुष्ठानम्। तदन्ते सचिवानुमोदनेन रघोः पुरप्रवेशः।

---

## पञ्चमसर्ग-

विश्वजिद्यज्ञे निःशेषविश्राणितकोषजातस्य राज्ञः समीपे लब्धविद्यस्य गुरुदक्षिणार्थिनः कौत्सस्य आगमनम्। वरतन्तुशिष्यस्य कौत्सस्य पूजादि-नातिथिसत्कारः। मुनेः कुशलजिज्ञासा। राज्ञः प्रशंसापूर्वककुशल-विज्ञप्तिः। गुरुदक्षिणाधनपरिमाणकथनम्। शरीरमात्रस्थितस्य नृपते-स्तादृग्धनदानाभावचिन्तनम्। "रघुवंशीयतः प्रार्थी विमुखो भवति"

इति "परीवादनवावतार: कदाचित् माभूत्" इति चिन्तयतो रघोः कुबेर-जयोद्‌योग: ॥ वशिष्ठमन्त्रप्रभावेण भीतस्य कुबेरस्य विनापि युद्धं तद्गृहे धनवृष्टिः। कौत्साय तत्समस्तदानं रघोरादेश:। विगतकामस्य कौत्सस्य गुरुदक्षिणां विना धनग्रहणे अनिच्छा। उष्ट्रवाहितयानेन तद्धनस्य मुने-राश्रमे प्रेरणम्। पुत्रवरप्रदानानन्तरं कौत्सस्य स्वाश्रमं प्रति प्रस्थानम्। रघुपत्नीगर्भधारणम्। रघोरनुरूपपुत्रप्राप्ति:। "अज" इति तस्य नाम-करणम्। तस्य विद्याशिक्षा। विदर्भराजदुहितुरिन्दुमत्या: स्वयंवर-वर्णनम्। ससैन्यस्य अजस्य स्वयंवरसभागमने उद्‌योग:। पथि करिरूप-धारिणा गन्धर्वतनयेन प्रियंवदेन सह अजस्य युद्धम्। अजबाणनिहतस्य तस्य शापमुक्ति:। अजस्य प्रियंवदत: सम्मोहननामकाजैयास्त्रप्राप्तिः। अजस्य भोजराजधानीगमनम्। भोजराजधान्यां कदाचिन्निद्रागतस्य अजस्य सूतमागधकृतस्तोत्रवर्णनम्। वन्दिकृतस्तोत्रेण व्यपगतनिद्रस्य अजस्य स्वयंवरसभागमनञ्च।

---

### षष्ठसर्ग-

सभागतस्य अजस्य शोभावर्णनम्। अजस्य विक्रमदर्शने सभासदा-मन्येषामवनीपालानामवस्था। स्वयंवरसभायामिन्दुमत्या आगमनवर्णनम्। अङ्गुलिचालनेन इन्दुमतीं प्रति सुनन्दया "अयमीदृक् वीर्यवान्, असावेता-दृग्‌गुणयुत:" इति कार्त्तवीर्यप्रमुखाणाम् राजकुमाराणां "इमं वरय" इत्यादिकोपदेशप्रदानम्। इन्दुमत्या अजसमीपागमनम्। "इयं मां वृणुते किं न वा" इति अजस्य चित्तविक्षेप:। अन्यराजसमीपगमनकथने सुनन्दां प्रति इन्दुमत्या: क्रोध:। अतिक्रान्तनिखिलावनीपालाया इन्दुमत्या: अजगले वरमाल्यप्रदानम्। नवदम्पत्योस्तात्कालिकशोभावर्णनम्।

---

### सप्तमसर्ग—

भोजराजात्मजसमभिव्याहारेण अजस्य इन्दुमत्या: सह भोजपुर-प्रवेशनम्। इन्दुमतीमलभमानानामन्येषां हतोद्यमानां राजकुमाराणां स्वशिविरगमनम्। विविधोपचारप्रदानेन अन्त:पुरनारीणामजं प्रति अनुरागप्रदर्शनम्। पुरोहितादिभिर्नवदम्पत्योस्तयोर्विवाहहोमानुष्ठानम्। अजस्य इन्दुमत्या: पाणिग्रहणम्। विविधोपायनप्रदानेन अजं प्रति विदर्भ-पते: शिष्टाचारदर्शनम्। गृहीतानुमतेरिन्दुमत्या सह अजस्य अयोध्यां प्रति प्रस्थानम्। इन्दुमत्या: स्वयंवरे विमुखैर्महीपतिभिः सह अजस्य युद्धम्।

गन्धर्वप्रदत्तेन सम्मोहनास्त्रेण समरे नरपतीनां पराजयः। विजेतुरजस्य रघोः समीपागमनम्। अजविजयश्रवणेन रघोरानन्दप्रकाशः। अजस्याभिषेकः। मुमुक्षो रघोर्गृहस्थाश्रमपरित्यागोद्योगश्च।

---

अष्टमसर्ग—

निखिलपितृगुणविभूषितस्य अजस्य राज्यपालनवर्णनम्। युवराजस्य अजस्य पितुर्वनगमननिषेधप्रार्थना। अजप्रार्थनेन रघोर्ग्रामोपकण्ठे वासः। साग्निकस्य रघोः स्वर्गारोहणम्। श्रुतपितृमृत्योरजस्य शोकः। "मृतं प्रति शोको न प्रतिविधेय" इति अजमुद्दिश्य सचिवानामुपदेशप्रदानम्। नगरोपकण्ठे इन्दुमत्या सह अजस्य विहारः। वीरप्रसविन्याः इन्दुमत्याः पुत्रप्राप्तिः। "दशरथ" इति तस्य नामकरणम्। आकाशचारिणो देवर्षेर्नारद-हस्तात् मालापतनम्। तद्दर्शने इन्दुमत्याः संज्ञाविलोपः। इन्दुमतीमृत्युः। राज्ञो विलापः। यज्ञदीक्षितस्य वशिष्ठस्य शिष्यमुखे सान्त्वनाप्रदानप्रसङ्गेन तृणविन्दुशापविवरणवर्णनम्। इन्दुमत्याः प्रतिकृतिस्थापनेन राज्ञः शोकापनोदनम्। दशरथस्य राज्याभिषेकः। मुक्तिनिमित्तमजस्य प्रायोपवेशनावलम्बनम्। कृतप्राणत्यागस्य अजस्य स्वर्गप्राप्तिः।

---

नवमसर्ग—

दशरथस्य राज्यरक्षणम्। दिग्विजयः। अयोध्याप्रत्यावर्त्तनम्। दशरथस्य बलवीर्य्यप्रशंसा। अश्वमेधानुष्ठानम्। "मृगया चललक्ष्यभेदज्ञानं जनयति" इति सचिवानुमोदनेन राज्ञो मृगयाशिक्षा। तत्प्रसङ्गे वनविहारवर्णनम्। तदीयवनविहारप्रसङ्गेन वसन्तवर्णनम्। मृगयावर्णनम्। मृगयामाचरतो दशरथस्य तमसातीरगमनम्। तमसातीरे गजबृंहणवत् कश्चित् शब्दं प्रति दशरथस्य शब्दभेदिबाणनिक्षेपः। अकस्मात् "हा तात!" इति क्रन्दनशब्दश्रवणम्। तत्समीपगतस्य दशरथस्य मुनिकुमारदर्शनलाभः। तस्य परिचयजिज्ञासा। प्राप्तपरिचयस्य दशरथस्य तत्समभिव्याहारे तदीयपित्रोः समीपागमनम्। स्वकीयाज्ञानकृतकर्म्मविज्ञप्तिः। दशरथं प्रति मुनेः पुत्रशोकप्राप्तिरूपशापप्रदानम्। तयोरन्धदम्पत्योरन्त्येष्टिक्रियानुष्ठानानन्तरम् "अपुत्रस्य पुत्रप्राप्तिः" इति "शापं वरं वा" इति मन्यमानस्य दशरथस्य अयोध्याराजधान्यां प्रत्यावर्त्तनञ्च।

---

दशमसर्गः

किञ्चिद्दूनायुतवत्सरराज्यपालनानन्तरम् ऋष्यशृङ्गेण दशरथस्य पुत्रेष्टि-यागकरणम्। अत्रान्तरे रावणपीडितानां देवानां क्षीरोदशायिनो विष्णोः समीपागमनम्। विष्णुस्तुतिः। देवान् प्रति विष्णोः प्रसन्नतावर्णनम्। राक्षसविनाशाय दशरथपुत्ररूपेण विष्णोरवताराङ्गीकारः। दशरथस्य पुत्रेष्टियागसमापनान्ते चरुकरस्य दिव्यपुरुषस्याविर्भावः। कौशल्या-कैकेयीभ्यां नृपपत्नीभ्यां यज्ञीयचरुप्रदानम्। विदितदशरथाभिप्रायाभ्यां ताभ्यां पुनः सुमित्रायै स्वस्व चरोरंशप्रदानम्। चरुभक्षणेन महिषीणां गर्भ-सञ्चारः। तासां गर्भकालीनावस्थावर्णनम्। "शङ्खचक्रगदापद्मधारी कश्चित् पुरुषस्तासां गर्भं रक्षति" इति महिषीणां स्वप्नदर्शनम्। दशरथ-समीपे महिषीणां स्वप्नवृत्तान्तकथनम्। "कौशल्यातः रामः, कैकयीतो भरतः, एकस्याः सुमित्रायाः लक्ष्मणशत्रुघ्नौ" एवं क्रमेण चतुरंशेन विष्णोराविर्भावः। तेषां रामादीनामाविर्भावेण राज्यस्य शुभलक्षण-वर्णनम्। रामादीनां भ्रातृसौहार्द्दवर्णनञ्च।

---

एकादशसर्गः—

विघ्नितयज्ञस्य विश्वामित्रस्य दशरथसमीपागमनम्। यज्ञरक्षार्थं विश्वा-मित्रेण दशरथसमीपे रामस्य यज्ञभूमिगमनप्रार्थना। पितुरादेशाद् विश्वा-मित्रेण सह रामलक्ष्मणयोर्गमनम्। विश्वामित्रात् रामलक्ष्मणयोः तारका-शापवृत्तान्तश्रवणम्, बलातिबलाविद्याप्राप्तिश्च। ताड़कावधः। राम-लक्ष्मणयोर्मुनीनां सत्रशालागमनम्। मुनीनां पुनर्यज्ञारम्भः। राक्षसैः पुनर्यज्ञविघ्नोत्पादनोद्योगः। रामास्त्रघातेन राक्षसवधः। तयोः कार्य्यदर्शने प्रीतिमतां मुनीनामभिनन्दनम्। विश्वामित्रेण सह रामलक्ष्मणयो-र्मिथिलायज्ञभूमिगमनम्। पथि गौतमपत्न्याः अहल्याया पाषाणमुक्तिः। हरधनुर्भङ्गः रामादीनां विवाहार्थं जनकेन दशरथसमीपे पुरोहित-प्रेरणम्। दशरथस्य विदेहराजधानीप्राप्तिः। सीतोर्म्मिलाकुशोदरी-श्रुतकीर्त्तिभिः सह यथाक्रमं रामलक्ष्मणभरतशत्रुघ्नानां परिणयः। पुत्रैः पुत्रवधूभिश्च सह दशरथस्य अयोध्याप्रत्यावर्त्तनसमये पथि जामदग्न्य-संरम्भः। जामदग्न्यपराभवः। दशरथस्य अयोध्यापुरप्रवेशनञ्च।

---

द्वादशसर्गः—

जराग्रस्तस्य दशरथस्य रामाभिषेकाभिलाषः। क्रूरनिश्चयया कैकय्या दशरथसमीपे पूर्वप्रार्थितवरद्वयप्रार्थनम्। रामनिर्वासनम्। दश-

रथस्य मृत्यु: राष्ट्रविप्लवशङ्कया नन्दिग्रामत: सचिवैर्भरतस्यानयनम्। भरत-विलाप:। रामानयनार्थं भरतस्य चित्रकूटयात्रा। रामादेशेन भरतस्य राज्यपालनम्। वनमटता रामचन्द्रेण सीताविप्रियकारिण: काकस्य निर्य्यातनम्। विराधवध:। अगस्त्यादेशेन रामस्य पञ्चवटीगमनम्। पञ्चवट्यां शूर्पनखासमागम:। रामप्रणयकाङ्क्षिण्या: शूर्पणखाया नासाकर्णच्छेदनम्। खरदूषणाभ्यां सह रामस्य संग्राम:। तयोर्वध:। स्वर्णमृगरूपधारिमारीचसहायेन रावणेन सीताहरणम्। सीतान्वेषणम्। दशरथसखेन जटायुषा सह रामस्य साक्षात्कार:। रावणास्त्रघातेन मृतकल्पाज्जटायुष: सीतासंवादप्राप्ति:। गतायुषो जटायुष: अन्त्येष्टि:। कबन्धमुक्ति:। कबन्धोपदेशत: सुग्रीवेण सह रामस्य सख्यम्। बालिवध:। हनूमता सीतान्वेषणम्। हनूमतो लङ्कापुरीदर्शनम्। अक्षयराक्षसवध:। सीतादर्शनलाभ:। सीतायै रामस्याभिज्ञानप्रदानम्। रावणपदाहतस्य बिभीषणस्य रामपक्षावलम्बनम्। सागरकूले रामस्य सेनासन्निवेश:। सेतुबन्धनम्। लङ्कावरोध:। रावणेन सह रामस्य युद्धारम्भ:। इन्द्रेण विमानप्रेरणम्। राक्षसमायाकल्पितराममस्तकदर्शने सीताविलाप:। त्रिजटया तस्या: सान्त्वना। रामादीनां नागपाशबन्धनम्। गरुड़ागमनेन तन्मुक्ति:। लक्ष्मणस्य शक्तिशेलम्। हनूमदानीतया सञ्जीवन्या पुन: रामादीनां जीवनप्राप्ति:। कुम्भकर्णवध:। रावणवध:। सीताया अग्निपरीक्षा। राक्षसराजेऽ विभीषणस्याभिषेक:। विमानस्य पुनस्त्रिदशालयगमनम्। सीताहनूमत्सुग्रीवविभीषणै: सह रामस्य अयोध्यायां प्रत्यावर्त्तनञ्च।

---

त्रयोदशसर्ग —

विमानारोहणेन प्रयातस्य रामस्य सीतासमीपे समुद्रविभूतिकीर्त्तनम्। अतिक्रान्तसमुद्रेण रामेण पुन: सीतायै विमानतो मुनीनामाश्रमप्रदर्शनम्। सीताहरणपथप्रदर्शनकथाच्छलेन तया सह प्रकृतिशोभावर्णनप्रमुख: विविधालाप:। राममित्रस्य गुहस्य आवासदर्शनम्। सुमन्त्रविलाप:। सरयूदर्शनम्। वशिष्ठप्रमुखेण सह भरतेन रामादीनां प्रत्युद्गमनम्। भरतसमीपे रामेण सुग्रीवादीनां परिचयप्रदानम्। भरतेन सुग्रीवादीनामभिनन्दनम्। भरतेन रामसीतयोश्चरणवन्दना। मन्दीभूतजवेन पुष्पकेण रामादीनमयोध्योपवनगमनञ्च।

---

चतुर्दशसर्ग—

ससीतयोरामलक्ष्मणयोर्माहसमीपे गमनम्। प्रणतयोस्तयोः कौशल्यादीनामाशीर्वादप्रयोगः। सीतायाः खेदोक्तिः। श्वश्रूभिस्तस्याः परिसान्त्वनम्। रामाभिषेकः। अन्तःपुरनारीणां दर्शनकौतूहलादिना रामं प्रति अनुरागप्रदर्शनम्। विभीषणादीनामातिथ्यवर्णनम्। सीतायाः स्वहस्तनिर्मितपुरस्कारदानेन सुग्रीवादीनां स्वदेशगमनानुमोदनम्। रामाभिषेके मातॄणां प्रीतिः। रामस्य प्रजापालनम्। सीतायां गर्भोत्पत्तिः। गर्भपरिपुष्टिकामेन रामेण सीतायाः स्पृहणीयजिज्ञासा। सीतायाः पुनस्तपोवनदर्शनाभिलाषविज्ञप्तिः। इत्यवसरे रावणपरिगृहीतायाः सीतायाः समन्ततो निन्दाप्रचारः। विदितचरित्रेणापि रामचन्द्रेण प्रजाप्रीत्या पुनः सीतानिर्वासनम्। तपोवनदर्शनव्याजेन वाल्मीकेराश्रमे सीताया निर्वासनम्। सीताविलापः। समित्कुशादीनाहरतो वाल्मीकेः सीतादर्शनम्। तेन सीतायाः सान्त्वना। सीताया वाल्मीकेराश्रमगमनम्। वाल्मीकेरुपदेशेन सीताया आश्रमोचिताचारावलम्बनम्। रामेण सीतायाः प्रतिकृतिनिर्माणम्। अश्वमेधानुष्ठानञ्च।

पञ्चदशसर्ग—

पृथिवीं शासतो रामचन्द्रस्य समीपे लवणपीड़ितानां तपस्विनां समागमः। रामादेशेन लवणवधार्थं शत्रुघ्नस्य अभियानम्। मुनिभिर्लवणवधोपायकथनम्। युद्धयात्राप्रसङ्गेन शत्रुघ्नस्य वाल्मीकेराश्रमगमनम्। सीतायाः पुत्रजन्म। भ्रातृपुत्रजन्मश्रवणेन परमप्रीतस्य शत्रुघ्नस्य लवणपुरीगमनम्। लवणवधः। मधुपुरे लक्ष्मणस्य राज्यस्थापनम्। वाल्मीकिना सीतापुत्रयोः "लवः कुशश्च" इति नामकरणम्। लवकुशयोः रामायणगानशिक्षा। शत्रुघ्नतनययोः शत्रुघातिसुबाहोर्मथुराराज्ये अभिषेककथा। शत्रुघ्नस्य रामसमीपे गमनम्। रामप्रश्नेन विदितकुशलसंवादस्य शत्रुघ्नस्य वाल्मीकेरादेशेन सीतायास्तनयजन्मगोपनम्। मृतपुत्रस्य कस्यचिद् विप्रस्य रामसमीपागमनम्। "राज्ञोऽपचारेण ब्राह्मणतनयस्याकाले मृत्यु" रिति जानतो रामस्य तत्कारणानुसन्धानार्थं मरण्यगमनम्। रामस्य शूद्रकतपस्विदर्शनम्, तस्य शिरश्छेदः। रामहस्तमृतस्य शूद्रकस्य मुक्तिः। ब्राह्मणतनयस्य जीवनप्राप्तिः। अश्वमेधार्थं यज्ञीयाश्वमोचनम्। यज्ञे निमन्त्रितानां मुनिमहर्षीणामयोध्यागमनम्। यज्ञसभायां लवकुशाभ्यां रामायणगानम्। रामायणश्रवणेन जातसन्देहस्य रामस्य "कस्य कवेरियं कृतिः" इति लवकुशयोः समीपे प्रश्नजिज्ञासा। "वाल्मीकेः कृतिः" इति रामसमीपे तयोर्निवेदनम्। रामप्रदत्तपारितोषिकग्रहणे कुशलवयोरनिच्छा।

सीतानयने वाल्मीके: समीपे रामस्याङ्गीकार:। सपुत्रसीताया रामसमीपागमनम्। पुनरग्निपरीक्षार्थं सीतां प्रति रामस्य आदेश:। सीताया वसुन्धरागर्भाश्रयणम्। युधाजिदादेशेन भरताय सिन्धुदेशप्रदानम्। भरतात् गन्धर्वाणां पराजय:। भरतपुत्रयोस्तक्षकपुष्कलयो: तक्षपुष्कलस्याधिपत्यग्रहणम्। लक्ष्मणतनययोरङ्गदचन्द्रकेत्वो: कारापथाधिपत्यनिर्वाचनम्। रामेण परलोकगतानां मातॄणां श्राद्धानुष्ठानम्। मुनिवेशधारिण: कृतान्तस्य रामसमीपागमनम् रामेण सह कृतान्तस्य रहस्यालाप:। निषिद्धेऽपि गृहे दुर्वासस: प्रवेशनम्। लक्ष्मणस्य स्वर्गारोहणम्। कुशलवयो: कुशस्थलीशरावत्यो: प्रतिष्ठा। अनुजै: सह रामस्य उत्तरपथप्रस्थानम्। अयोध्यावासिनां रामानुगमनम्। रामस्य स्वमूर्त्तौ प्रवेशश्च।

षोडशसर्ग —

रामनिर्वाणानन्तरं कुशलवयो राज्यपालनम्। रात्रौ स्वप्नयोगे कुशस्य दिव्यनारीदर्शनम्। तस्या: समीपे हीनप्रभस्य अयोध्यापुरस्य विविधामङ्गलश्रवणम्। वेदविद्ब्राह्मणसमीपे राज्ञ: स्वप्नवृत्तान्तज्ञापनम्। ब्राह्मणानामुपदेशेन कुशस्य पुनरयोध्यागमनम्। सौधादीनां संस्कारेण पुनरयोध्याया: संस्कारसाधनम्। देवालये विविधबलिप्रदानम्, कुशलवयोर्गमनेन अयोध्याया विविधसमृद्धिसाधनम्। कुशविहारप्रसङ्गेन वसन्तवर्णनम्। कुशस्य जलकेलिवर्णनम्। जलकेलिसमयेऽगस्त्यप्रदत्तरत्नालङ्कारदर्शनम्। धीवरेण रत्नान्वेषणम्। अप्राप्तरत्नस्य नृपतेर्गरुड़ास्त्रग्रहणम्। कुशास्त्रभीतेन कुमुदनागेन भगिन्या सह तस्मै आभरणप्रदानञ्च।

सप्तदशसर्ग —

कुशस्य महिष्या कुमुद्वत्या गर्भे अतिथेर्जन्म। कुशनृपस्य पञ्चत्वप्राप्ति:। कुमुद्वत्या: पत्युरनुगमनम्। सचिवैरतिथे राज्याभिषेचनम्। बालनृपतेरतिथे राज्यपालनम्॥ अतिथेरश्वमेधानुष्ठानञ्च।

अष्टादशसर्ग —

अतिथेरनन्तरं निषधतोऽग्निवर्णपर्य्यन्तं रघुवंशीयानां ये राजानो राज्यमपालयन् संक्षेपेण तेषां चरितवर्णनम्।

ऊनविंशसर्ग —

विलासिन: अग्निवर्णस्य राज्यपालनम्। तस्य व्यसनासक्तिवर्णनप्रसङ्गेन विविधरतिवर्णनम्। राज्ञ: क्षयरोग: तेन पञ्चत्वप्राप्ति:। अग्निवर्णस्य महिष्या राज्यप्राप्तिश्च।

# निवेदनम् ।

जगदम्बाया विपुलानुग्रहेण महाकाव्यवरिष्ठं रघुवंशं मल्लिनाथकृत-टीकया इतिवृत्तान्वय-प्रयोजनीय-सरलार्थ-वाच्यान्तरानुवाद-काव्याद्य-परीक्षा-प्रश्नपत्र-रघुवंश-वर्णितविषयसूचिपत्रादिभिश्च समलङ्कृत्य नूतनमिव प्रकाशितम्। ग्रन्थेऽस्मिन् विद्यार्थिनामुपकाराय कृतो गरीयान् परिश्रमः विपुलश्च अर्थव्ययः। मत्सम्पादितेषु ग्रन्थान्तरेषु यादृशी प्रीतिर्विद्यार्थिनामत्रापि यदि प्रीतिस्तादृशी स्यात् तदेव परिश्रमोऽर्थव्ययश्च मम सफलतां यास्यतीत्यलं विस्तरेणेति शम्।

१३३२ वङ्गाब्दीय-रथ-द्वितीयायाम् } चिराश्रव—सम्पादकस्य।

*　　*　　*　　*

*　　*　　*　　*

तृतीय-संस्करणविज्ञप्तिः—

चराचरगुरोरीश्वरस्य करुणया श्रीमतां सहृदयानां ग्राहकमहाभागाना-माशिषानुग्रहेणानुकूल्येन च रघुवंशमहाकाव्यस्य तृतीयसंस्करणं प्रकाशित-मिति परं प्रमोदस्थानम्।

अलङ्घनीयेन विधातृशासनेन प्रतिहतमनोरथस्य मे ग्रन्थप्रकाशे कालातिक्रमकृतमपराधं मर्षयन्तु कल्याणाभिनिवेशिनो दैववैभवं भावयन्तो विद्यार्थिनः।

संस्करणेऽस्मिन् परीक्षायां पाठ्यरूपेण निर्व्वाचितानामंशानां हिन्दीभाषया कृतोऽनुवादः संयोजित इति तद्भाषाविदां प्रकाममानुकूल्यं सम्पद्येत इत्याशास्यते।

अस्य ग्रन्थस्य संशोधनादिविषये शुभानुध्यायिनौ मे पण्डितवरः श्रीयुक्त-भुवनमोहन काव्य-व्याकरण-सांख्यतीर्थ महोदयः सुहृद्वरः श्रीयुक्त गोविन्दचन्द्र काव्यतीर्थमहोदयश्च विशेषेण साहाय्यकं व्यधातामिति चिरस्मरणीयोऽयमुपकार इति शम्।

गुरुधाम निविदिता लेन
कलिकाता।
महाविषुवसंक्रान्तिः
वङ्गाब्द १३३२ } आश्रव—
प्रकाशकः।

# অকারাদি বর্ণানুক্রমে রঘুবংশ-বর্ণিত দেশ ও পর্ব্বতাদির প্রাচীন এবং আধুনিক নাম।



অঙ্গ। বর্ত্তমান নাম ভাগলপুর। উশীনর ভ্রাতা তিতিক্ষুর কুলোদ্ভব বলি। ঋষি দীর্ঘতমা এই বলিপত্নীর গর্ভে—অঙ্গ, বঙ্গ, কলিঙ্গ' সুহ্ম এবং পুণ্ড্র নামে পাঁচ পুত্র উৎপাদন করেন। জ্যেষ্ঠ অঙ্গ তদীয় নামানুসারে এই 'অঙ্গ' রাজ্য প্রতিষ্ঠা করেন। ইহার রাজধানী—চম্পানগর।

অনূপদেশ।—বিন্ধ্যগিরির পৃষ্ঠদেশে এই অনূপদেশ প্রতিষ্ঠিত। অনেকে অনুমান করেন,—বর্ত্তমান "মৌ" প্রদেশেরই নাম অনূপদেশ।

অবন্তী।—বর্ত্তমান নাম—মালব বা মালওয়া। উজ্জয়িনী ইহার রাজধানী।

উৎকল।—বর্ত্তমান নাম—উড়িষ্যা। চন্দ্রবংশীয় নৃপতি সুদ্যুম্নের পুত্র উৎকল—কর্ত্তৃক এই দেশ প্রতিষ্ঠিত এবং তদীয় নামে প্রসিদ্ধ।

উৎসবসঙ্কেত। জাতিবিশেষ।

উত্তর-কোশলা।—অযোধ্যা। অযোধ্যা মানবেন্দ্র মনুদ্বারা পুণ্যতোয়া সরযূতীরে প্রতিষ্ঠিত। অযোধ্যায় ইক্ষ্বাকু প্রথমে রাজা হন। হিন্দুস্থানবাসীরা অন্তস্থীয় যকারকে "য়"রূপে উচ্চারণ করেন, তাঁহারা অযোধ্যা না কহিয়া অয়োধ্যা কহিয়া থাকেন; ক্রমে অযোধ্যাস্থানে "আউধ" হইয়াছে।

ঋক্ষবান্।—তাপী ও নর্ম্মদানদীর মধ্যবর্ত্তী বর্ত্তমান গন্দোয়ানা দেশস্থিত একটী প্রসিদ্ধ পর্ব্বত। এই পর্ব্বত হইতে নর্ম্মদা নদী উদ্ভূত।

কপিশা।—সুবর্ণরেখা নদী।

কলিঙ্গ।—বর্ত্তমান নাম সরকার। রাজধানীর নাম ওয়ারঙ্গল। উৎকলের দক্ষিণ হইতে দ্রাবিড় পর্য্যন্ত সাগরোপকূলে এই দেশ বিস্তৃত জাভা বালী প্রভৃতি দ্বীপ-বাসিগণ ইহাকে কিলিঙ্গও কহিয়া থাকে। ঋষি দীর্ঘতমার তনয় কলিঙ্গ নৃপ কর্ত্তৃক কলিঙ্গরাজ্য প্রথম প্রতিষ্ঠিত।

কামরূপ।—আসাম প্রভৃতি ঐ কামরূপের অন্তর্গত।

কাম্বোজ।—বোখারার দক্ষিণাংশে পারোপমিশ পর্ব্বতে ও তাহার উত্তরভূমিতে যে সকলস্থানে কাম্বোজজাতির বাস ছিল, ঐ সকল দেশই কাম্বোজনামে প্রসিদ্ধ।

কাবেরী।—পশ্চিমঘাট পর্ব্বত হইতে সমুদ্ভূত হইয়া এই নদী মহীশূররাজ্যে প্রবাহিত হইতেছে।

কারাপথ।—ভারতবর্ষের উত্তরে কেকয়দেশের নিকটবর্ত্তীস্থান কারাপথনামে অভিহিত হয়।

কিরাত।—হিমালয়ের পূর্ব্বভাগে বর্ত্তমান সিকিমের পশ্চিমে মুঙের পর্ব্বতে কিরাত জাতির বসবাসহেতু এই স্থান কিরাতদেশ নামে কথিত।

কুশাবতী।—বর্ত্তমান নাম—দ্বারকা। বিন্ধ্যপর্ব্বতের শিখরে রামতনয় কুশকর্ত্তৃক কুশাবতী নগরী প্রতিষ্ঠিত হইয়াছিল। বহুদ্বারবিশিষ্ট বলিয়া দ্বারকা এবং কুশপ্রতিষ্ঠিত বলিয়া এই নগরীর নাম কুশাবতী।

কেকয়।—পঞ্জাবের অন্তর্গত বিপাশানদীর কিয়দ্দূরে এই দেশ অবস্থিত।

কেরল।—বর্ত্তমান নাম—মালাবার বা কানারার। সহ্যাদিখণ্ডে বর্ণিত হইয়াছে—পরশুরাম এইস্থানে পরশু নিক্ষেপ করেন। অনুমান—এইজন্যই লোকে এই স্থানকে পরশুক্ষেত্রও কহিয়া থাকে।

ক্রথকৈশিক।—বর্ত্তমান নাম বিদর; অধিক সম্ভব—বিদর্ভ হইতে এই বিদর নামের উৎপত্তি হইয়াছে। বর্ত্তমান সময়ে কিরাত ও খান্দেশের অধিকাংশ স্থান এই দেশের সঙ্গে মিলিত হইয়াছে।

ক্রৌঞ্চপর্ব্বত।—হিমালয়ের অংশবিশেষ।

গোকর্ণ।—সমুদ্রের উপকূলে বর্ত্তমান তুলু প্রদেশের মধ্যে গোকর্ণ অবস্থিত।

গোদাবরী।—সহ্যাদ্রি পর্ব্বত হইতে সমুদ্ভূত নদী; ইহার অপর নাম পূর্ব্বগঙ্গা।

গোবর্দ্ধন।—কৃষ্ণের লীলাপর্ব্বত গোবর্দ্ধন মথুরার পশ্চিমে ভরতপুররাজ্যে বিদ্যমান।

গৌরীগুরু।—বর্ত্তমান নাম—কোটগুরু। হিমালয়ের এই অংশে গৌরী তপস্যা করিয়াছিলেন।

চিত্রকূট।—বিন্ধ্যপর্ব্বতের পূর্ব্বাংশের নাম চিত্রকূট। বর্ত্তমান বন্দেলখণ্ডবাসীরা ইহাকে চিত্রকোট কহে।

তমসানদী।—বর্ত্তমান নাম তোন্স, গরোয়ালদেশে প্রবাহিত। এই নদী ঋক্ষ—পর্ব্বত হইতে সমুদ্ভূত।

তক্ষশিলা।—বর্ত্তমান নাম—তখ্‌শিলা। পঞ্জাবান্তর্গত বিতস্তা ও সিন্ধুনদীর মধ্যবর্ত্তী নগরবিশেষ।

তাম্রপর্ণী।—বর্ত্তমান টিনাবেলিদেশে প্রবাহিত। এই নদী পশ্চিমঘাট অর্থাৎ মলয়পর্ব্বত হইতে সমুদ্ভূত।

ত্রিকূটপর্ব্বত।—সুমেরুর দক্ষিণদিকস্থ পর্ব্বতাংশের নাম ত্রিকূট। শৃঙ্গত্রয়বিশিষ্ট হইয়া ইহার এইরূপ নাম হইয়াছে। অনেকে অনুমান করেন,—বর্ত্তমান কিমিউন পর্ব্বতই ত্রিকূট।

দণ্ডকারণ্য।—রামায়ণ প্রসিদ্ধ গোদাবরীর দক্ষিণতীরস্থিত কাননভূমি ইহাই রামায়ণের দণ্ডকারণ্য নামে বিখ্যাত। বর্ত্তমানে এই প্রদেশসমূহকেই দাক্ষিণাত্য বলে।

দর্দ্দুর।—দাক্ষিণাত্যের মলয়পর্ব্বত সন্নিহিত পর্ব্বতবিশেষ।

নন্দিগ্রাম।—নিষধদেশের শৃঙ্গবেরপুরের সন্নিহিত গ্রাম। ভরতের মাতুলালয়।

নর্ম্মদা।—বর্ত্তমান গান্দোয়ানা হইতে এই নদী উদ্ভূত। অমরকোষে ইহা মেখলকন্যকা, রেবা বা সোমোদ্ভবা বলিয়া বর্ণিত হইয়াছে।

নাগপুর।—বর্ত্তমান গান্দোয়ানা প্রদেশস্থিত বিবার নামে আখ্যাত।

নৈমিষারণ্য।—হিন্দুস্থানীয়েরা ইহাকে নিমখারমিশ্র বলে। বর্ত্তমান কানপুরের পরপারের প্রায় সাত ক্রোশ দূরে সরস্বতীতীরে এই নৈমিষারণ্য অবস্থিত। এখানে মিশ্র নামে একটী সরোবর আছে।

পঞ্চবটী।—বর্ত্তমান নাম নাসিক। এই স্থানে লক্ষ্মণ শূর্পণখার নাসিকাচ্ছেদন করেন, ঐ নাসা শব্দ হইতেই নাসিক নামের উৎপত্তি। টেলঙ্গদেশ মধ্যে ইন্দ্রের স্বর্গোদ্যান নামে পাঁচটী উদ্যান আছে; উহাদের সমষ্টি হইতেই পঞ্চবটী নামের উৎপত্তি। এই পাঁচটী উদ্যান পরস্পর সন্নিহিত। নাম যথা—অমরারাম, কমরারাম, ক্ষীরারাম, ভীমারাম এবং দ্রাক্ষারাম।

পঞ্চাপ্সর।—পঞ্চবটীর মধ্যস্থিত সরোবর। ঋষি শাতকর্ণির অভিশাপে লতা শ্যামা প্রভৃতি অপ্সরাপঞ্চক সরোবর রূপে পরিণত হয়।

পম্পাসরোবর। ঋষ্যমূক পর্ব্বত হইতে উদ্ভূত।

পাটলীপুত্র।—বর্ত্তমান নাম—পাটনা বা আজিমাবাদ। পূর্ব্বে মগধ রাজধানী কুসুমাবতী বা পদ্মাবতী নামে প্রসিদ্ধ ছিল।

পাণ্ড্য।—দণ্ডকারণ্যের অন্তর্গত পাণ্ড্যরাজ্য।

পুষ্কলবতী।—বর্ত্তমান নাম অটক।

প্রাগ্‌জ্যোতিষপুর।—কামরূপ।

মগধদেশ।—বর্ত্তমান নাম—দক্ষিণবেহার।

মন্দরপর্ব্বত।—সুমেরুর দক্ষিণাংশ।

মন্দাকিনী।—ত্রিকূটপর্ব্বত হইতে উদ্ভূত পূতজলা নদী।

মধুপত্ন।—মথুরা।

মলয়পর্ব্বত।—পশ্চিমঘাটপর্ব্বত। চন্দনের উৎপত্তিস্থান বলিয়া ইহার অপর নাম চন্দনাদ্রি।

মহাকালপর্ব্বত।—অবন্তীদেশের মধ্যস্থিত পর্ব্বতভেদ। এইস্থানে মহাকাল নামে এক শিব আছেন।

মহেন্দ্র।—সপ্তকুলাচলের একটী পর্ব্বত। বর্ত্তমান উড়িষ্যা ও উত্তর সরকার হইতে গান্দোয়ানা পর্য্যন্ত পর্ব্বতশ্রেণীই মহেন্দ্র বলিয়া নির্দ্দিষ্ট।

মাল্যবান্।—উত্তরভারতের পর্ব্বতশ্রেণী।

মাহিষ্মতী নগরী।—বর্ত্তমান নাম—চুলি মাহেশ্বরপুর। কার্ত্তবীর্য্যার্জ্জুনের পূর্ব্বপুরুষ মহিষ্মান্ নরপতি এই নগরী প্রতিষ্ঠিত করেন। অনন্তর কার্ত্তবীর্য্যের সহস্রবাহু দ্বারা রক্ষিত হওয়ায় ইহার অপর নাম হইয়াছে—"সহস্রবাহুকাবস্তি"।

মিথিলা।—বর্ত্তমান নাম ত্রিহুত। ইক্ষ্বাকুতনয় মিথির নামানুসারে এই দেশের নাম মিথিলা হইয়াছে।

মুরলা। কেরলদেশীয় নদী।

যবন।—পাঠান, আরব,তুর্কী, পারসীক প্রভৃতি জাতিবিশেষ। এই জাতিসম্বন্ধে অনেক মতভেদ দৃষ্ট হয়।

রেবানদী।—নর্ম্মদার নামান্তর।

লৌহিত্য।—ব্রহ্মপুত্র। হিমালয় হইতে সমুদ্ভূত।

বিদিশা।—বর্ত্তমান নাম ভিল্সা। বেত্রা নদীতীরে অবস্থিত।

শরাবতী।—বর্ত্তমান নাম—ফইজাবাদ এইস্থান অযোধ্যার অন্তর্গত।

শিপ্রানদী।—মালবারের সান্নিধ্যে বিন্ধ্যগিরি পশ্চিমাংশ।

শূরসেন।—বর্ত্তমান মথুরানগর। রাজা শূরসেনের পুত্র উগ্রসেন, তৎপুত্র কংস

সপ্তকুলাচল।—(১) মহেন্দ্র (২) মলয় (৩) সহ্য (৪) শুক্তিমান্ (৫) ঋক্ষ (৬) বিন্ধ্য এবং (৭) পারিপাত্র।

সহ্যপর্ব্বত।—পশ্চিমঘাট পর্ব্বতের উত্তরাংশের নাম—সহ্য।

সুহ্ম।—বঙ্গরাজ্যের পূর্ব্বোত্তর অংশ। বর্ত্তমান নাম—ত্রিপুরা ও আরাকাণ প্রভৃতি।

হূণ।—ভারতবর্ষের উত্তরদিক্স্থিত দেশবিশেষ।

# टीकाकृतो मङ्गलाचरणम् ।



मातापितृभ्यां जगतो, नमो वामार्द्धजानये ।
सद्योदक्षिणदृक्पात-संकुचद्वामदृष्टये ॥ १
अन्तरायतिमिरोपशान्तये, शान्तपावनमचिन्त्यवैभवम् ।
तं नरं वपुषि कुञ्जरं मुखे, मन्महे किमपि तुन्दिलं महः ॥ २
शरणं करवाणि शर्म्मदं ते, चरणं वाणि चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः, कुरु मामम्ब कृतार्थसार्थवाहम् ॥ ३
वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां,
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ ४
मल्लिनाथकविः सोऽयं, मन्दात्मानुजिघृक्षया ।
व्याचष्टे कालिदासीयं, काव्यत्रयमनाकुलम् ॥ ५
कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्म्मुखोऽथवा साक्षाद्विदुर्नान्ये तु मादृशाः ॥ ६
तथापि दक्षिणावर्त्तनाथाद्यैः क्षुण्णवर्त्मसु ।
वयञ्च कालिदासोक्तिष्ववकाशं लभेमहि ॥ ७
भारती कालिदासस्य, दुर्व्याख्याविषमूर्च्छिता ।
एषा सञ्जीवनी टीका, तामद्योज्जीवयिष्यति ॥ ८
इहान्वयमुखेनैव, सर्व्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ९

इह खलु सकलकविशिरोमणिः कालिदासः "काव्यं यशसेऽर्थकृते, व्यवहारविदे शिवेतरक्षतये। सद्यःपरनिर्वृतये, कान्तासम्मिततयोपदेशयुजे" इत्याद्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनतां "काव्यालापांश्च वर्जयेत्" इत्यस्य निषेधशास्त्रस्यासत्काव्यविषयताञ्च पश्यन्, रघुवंशाख्यं महाकाव्यं चिकीर्षुः, चिकीर्षितार्थाविघ्नपरिसमाप्ति सम्प्रदायाविच्छेदलक्षणफलसाधनभूतविशिष्टदेवतानमस्कारस्य शिष्टाचारपरिप्राप्तत्वात्, 'आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्' इत्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात्, काव्यनिर्म्माणस्य विशिष्टशब्दार्थप्रतिपत्तिमूलकत्वेन, विशिष्टशब्दार्थयोश्च "शब्दजातमशेषन्तु धत्ते सर्वस्य वल्लभा। अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः॥" इति वायुपुराणवचनबलेन पार्वतीपरमेश्वरायत्तदर्शनात्, तत्प्रतिपित्सया तावेवाभिवादयते—

---

सटीकान्वयानुवाद—

# रघुवंशम्।

## प्रथमः सर्गः।

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्व्वतीपरमेश्वरौ ॥१

अन्वयः। (अहं) वागर्थप्रतिपत्तये वागर्थौ इव सम्पृक्तौ जगतः पितरौ पार्व्वतीपरमेश्वरौ वन्दे॥ वाच्यपरिवर्त्तनम्—(मया) वन्द्यते।

१। वागर्थाविति। वागर्थाविवेत्येकं पदम् इवेन सह नित्यसमासो विभक्त्यलोपः पूर्व्वपदप्रकृतिस्वरत्वञ्चेति वक्तव्यम्. एवमन्यत्रापि द्रष्टव्यम्। वागर्थाविव शब्दार्थाविव सम्पृक्तौ नित्यसम्बद्धावित्यर्थः नित्यसम्बद्धयोः शब्दार्थयोरुपमानत्वेनोपादानात्। "नित्यः शब्दार्थसम्बन्धः" इति मीमांसकाः। जगतः लोकस्य पितरौ, माता च पिता च पितरौ। 'पिता मात्रे'ति द्वन्द्वैकशेषः। "मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ" इत्यमरः। एतेन शर्वशिवयोः सर्व्वजगज्जनकतया वैशिष्ट्यमिष्टार्थप्रतिपादनशक्तिः, परमकारुणिकत्वञ्च सूच्यते। पर्व्वतस्यापत्यं स्त्री-पार्वती, तस्यापत्यमित्यण्. "टिड्ढाणञ्" इत्यादिना ङीप्। पार्व्वती च परमेश्वरश्च पार्व्वतीपरमेश्वरौ, परमशब्दः सर्वोत्तमत्वद्योतनार्थः। मातुरभ्यर्हितत्वात् अल्पाक्षरत्वाच्च पार्व्वतीशब्दस्य पूर्व्वनिपातः। वागर्थप्रतिपत्तये शब्दार्थयोः सम्यग्ज्ञानार्थं वन्दे अभिवादये अहम् इति शेषः। अत्रोपमालङ्कारः स्फुट एव। तथोक्तं—"स्वतः सिद्धेन भिन्नेन सम्पन्नेन च धर्म्मतः। साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकगोपमे"ति। प्रायिकश्चोपमालङ्कारः कालिदासोक्तकाव्यादौ। प्रथमं (वागर्थौ) इति भूदेवताकस्य सर्व्वगुरोः मगणस्य प्रयोगात् शुभलाभः सूच्यते। तदुक्तं—"शुभदो मो भूमिमयः" इति। वकारस्यामृतवीजत्वात् प्रचयगमनादिसिद्धिः।

১ অনুবাদ। আমি শব্দ এবং অর্থের সম্যক্ জ্ঞানের নিমিত্ত শব্দ অর্থের ন্যায় নিত্যসম্বদ্ধ জগতের মাতাপিতা-স্বরূপ পার্ব্বতীপরমেশ্বরের বন্দনা করি॥

**क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः।**

**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥ २**

२ अ:। सूर्य्यप्रभवः वंशः क्व, अल्पविषया मे मतिः च क्व, (अहं) मोहात् उडुपेन दुस्तरं सागरं तितीर्षुः अस्मि॥ वाच्य—तितीर्षुणा भूयते।

२। क्वेति।—सम्प्रति कविः स्वाहङ्कारं परिहरति—क्व सूर्य्येत्यादि श्लोकद्वयेन। प्रभवत्यस्मादिति प्रभवः कारणम् "ऋदोरप् अकर्त्तरि च कारके संज्ञाया"मिति साधुः। सूर्य्यः प्रभवो यस्य स सूर्य्यप्रभवः वंशः क्व? अल्पो विषयो ज्ञेयः अर्थो यस्याः सा मे मतिः प्रज्ञा च क्व? द्वौ क्वशब्दौ महदन्तरं सूचयतः, सूर्य्यवंशमाकलयितुं न शक्नोमीत्यर्थः। तथाच तद्विषयप्रबन्धनिरूपणं दूरापास्तमिति भावः। तथाहि दुस्तरं "ईषद्दुःसुषु" इत्यादिना खल्प्रत्ययः। तरितुमशक्यम् सागरं मोहादज्ञाना दुडुपेन प्लवेन भेलेन इति यावत् "उडुपन्तु प्लवः कोल" इत्यमरः। अथवा चर्म्मावनद्धेन पानपात्रेण। "चर्म्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्" इति सज्जनः। तितीर्षुः तरीतुमिच्छुरस्मि भवामि। तरतेः सनन्तात् उप्रत्ययः। अल्पसाधनैरधिकारम्भो न सुकर इति भावः। इदञ्च वंशोत्कर्षकथनं स्वप्रबन्धमहत्त्वार्थमेव। तदुक्तं "प्रतिपाद्यमहिम्ना च प्रबन्धो हि महत्तर" इति॥

২ অনুবাদ। কোথায় বা সূর্য্যসম্ভূত বংশ! আর কোথায় বা আমার অল্পবোধশক্তি-সম্পন্ন বুদ্ধি! আমি মোহবশতঃ ভেলাদ্বারা দুস্তর সাগর পার হইতে অভিলাষী হইয়াছি।

**मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्।**

**प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः॥ ३**

३ अ:। अहं मन्दः (यतः) कवियशःप्रार्थी, (अतएव) प्रांशुलभ्ये फले लोभात् उद्बाहुः वामन इव उपहास्यतां गमिष्यामि॥ वाच्य—मन्देन कवियशःप्रार्थिना उपहास्यता गमिष्यते। उद्बाहुना वामनेनेव।

३। मन्द इति।—किञ्च मन्दो मूढ़ः। "मूढ़ाल्पापटुनिर्भाग्या मन्दाः स्युः" इत्यमरः। तथापि कवियशःप्रार्थी कवीनां यशः काव्यनिर्म्माणेन जातं यत् यशः तत्प्रार्थनाशीलः अहं, प्रांशुना उन्नतपुरुषेण लभ्ये प्राप्ये फले फलविषये लोभात् फलविषयात् लोभादित्यर्थः, उद्बाहुः उत् उन्नमितः बाहुर्येन सः फलग्रहणाय उच्छ्रितहस्तो वामनः खर्व्व इव। 'खर्व्वो ह्रस्वश्च वामन" इत्यमरः। उपहास्यताम् उपहासविषयताम्। 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः। उपहसतेः सकर्म्मकत्वात् उपहस्यते यः तस्य भावः तां गमिष्यामि प्राप्स्यामि॥

৩ অনুবাদ। আমি মূঢ় হইয়াও কবিকুলের যশঃ প্রার্থনা করিতেছি, সুতরাং

লোভবশতঃ উন্নত পুরুষলভ্য ফলগ্রহণার্থ উত্তোলিতবাহু বামন যেরূপ উপহাসাস্পদ হয়, আমাকেও সেইরূপ উপহসিত হইতে হইবে॥

**अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्व्वसूरिभिः।**
**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः॥ ४**

४ अ:। अथवा पूर्व्वसूरिभिः कृतवाग्द्वारे अस्मिन् वंशे वज्रसमुत्कीर्णे मणौ सूत्रस्य इव मे गतिः अस्ति॥ वाच्य—गत्या भूयते।

४। मन्दश्चेत्तर्हि त्यज्यतामयमुद्योग इत्यत आह— अथवेति। अथवा पक्षान्तरे पूर्व्वैः सूरिभिः कविभिः वाल्मीक्यादिभिः कृतवाग्द्वारे कृतं रामायणादिप्रबन्धरूपा या वाक् सैव द्वारं प्रवेशो यस्य तस्मिन्, अस्मिन्, सूर्य्यप्रभवे वंशे कुले। जन्मनैकलक्षणः सन्तानो वंशः। वज्रेण मणिवेधकसुचीविशेषेण। 'वज्रं त्वस्त्री कुलिशशस्त्रयोः मणिवेधे रत्नभेदे" इति केशवः। समुत्कीर्णे विद्धे मणौ रत्ने सूत्रस्येव मे मम गतिः सञ्चारोऽस्ति। वर्णनीये रघुवंशे मम वाक्प्रसरोऽस्तीत्यर्थः।

निर्गलितार्थ:—मणिस्तावत् स्वभावतः कठिनः किन्तु तस्मिन् कृतच्छिद्रे सति यथा अतिकोमलस्यापि सूत्रस्य तत्र प्रवेशः, तथा निसर्गतो दुष्प्रवेशेऽपि वाल्मीक्यादिकृतप्रवेशमार्गे रघुवंशे ममापि वाक्प्रसरोऽस्ति। वाल्मीक्यादिकृतां काव्यप्रणयनपद्धतिम् अनुसरन्नहं रघुवंशं वर्णयिष्यामि इति॥

৪ অনুবাদ। অথবা সূত্র যেমন বজ্রদ্বারা কৃতচ্ছিদ্র রত্নমধ্যে অনায়াসে প্রবেশ করিতে সমর্থ হয়, আমিও সেইরূপ প্রাচীন পণ্ডিতগণ-প্রণীত বাক্যরূপ দ্বার দিয়া এই রঘুবংশে প্রবেশ করিতে সমর্থ হইব॥

**सोऽहमाजन्मशुद्धानामाफलोदयकर्म्मणाम्।**
**आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्॥ ५**
**यथाविधिहुताग्नीनां यथाकामार्च्चितार्थिनाम्।**
**यथापराधदण्डानां यथाकालप्रबोधिनाम्॥**
**त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम्।**
**यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्॥ ७**
**शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।**
**वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्॥ ८**
**रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्।**
**तद्गुणैः कर्णमागत्य चापलाय प्रणोदितः॥ ९**

५—९ अ:। सोऽहं तनुवाग्विभवोऽपि तद्गुणैः कर्णम् आगत्य चापलाय प्रणोदितः सन् आजन्मशुद्धानाम् आफलोदयकर्म्मणाम् आसमुद्रक्षितीशानाम् आनाकरथवर्त्मनां यथाविधिहुताग्नीनां यथाकामार्च्चितार्थिनां यथापराधदण्डानां यथाकालप्रबोधिनां त्यागाय सम्भृतार्थानां सत्याय मितभाषिणां यशसे विजिगीषूणां प्रजायै गृहमेधिनां शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणां वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजां रघूणाम् अन्वयं वक्ष्ये॥ वाच्य—तेन मया अन्वयो वक्ष्यते तनुवाग्विभवेनापि सता प्रणोदितेन।

५। एवं रघुवंशे लब्धप्रवेशः कविरिति शेषः तद्वर्णनां प्रतिजानानः सोऽहमित्यादिभिः पञ्चभिः श्लोकैः कुलकेनाह—सोऽहमिति। सोऽहं रघूणाम् अन्वयं वक्ष्ये इत्युत्तरेण सम्बन्धः, किंविधानां रघूणामित्यत्र उत्तराणि विशेषणानि योज्यानि। आ जन्मनः जन्म आरभ्येत्यर्थः। "आङ्मर्य्यादाभिविध्यो" रित्यव्ययीभावः। तत आजन्म इति पदस्य शुद्धानाम् इत्यनेन सुप्सुपेति समासः। एवमुत्तरत्रापि द्रष्टव्यम्। आजन्मशुद्धानां निषेकादि- (गर्भाधानादि) सर्व्वसंस्कारसम्पन्नानामित्यर्थः। आफलोदयम् आ फलसिद्धेः कर्म्म येषां ते तथोक्ताः तेषां प्रारब्धान्तगामिनामित्यर्थः। आसमुद्रं क्षितेरीशानां सार्व्वभौमाणामित्यर्थः। आनाकं स्वर्गपर्य्यन्तं रथवर्त्म येषां ते तेषामिन्द्रसहचारिणामित्यर्थः। अत्र सर्व्वत्र आङोऽभिविध्यर्थकत्वं द्रष्टव्यम्, मर्य्यादार्थकत्वे जन्मादिषु शुद्धभावप्रसङ्गः, अभिविध्यर्थकत्वे तु सर्व्वं निर्दोषं स्यात्। 'द्वाभ्यान्तु युग्मकं प्रोक्तं त्रिभिः स्यात्तु विशेषकं। कलापकं चतुर्भिः स्यात् तदूर्द्ध्वं कुलकं स्मृतम्॥" इति कुलकादिलक्षणम्।

६। यथेत्यादि। विधिमनतिक्रम्य यथाविधि, यथा सादृश्ये" इत्यव्ययीभावः, तथा हुतशब्देन 'सुप्सुपे"ति समासः; एवं यथाकामार्च्चितेत्यादीनामपि द्रष्टव्यम्। यथाविधि हुता अग्नयो यैस्तेषां, यथाकामं अभिलाषमनतिक्रम्य अर्च्चितार्थिनां अर्च्चिताः सत्कृताः अर्थिनो याचका यैः तेषाम्। यथापराधम् अपराधमनतिक्रम्य दण्डो येषां ते तेषां। यथाकालं कालमनतिक्रम्य प्रबोधिनां प्रबोधनशीलानाम्। चतुर्भिर्विशेषणैर्देवतायजनातिथिसत्कारदण्डधरत्वप्रजापालनसमयजागरूकत्वादीनि विवक्षितानि॥

७। त्यागायेति।—त्यागाय सत्पात्रे विनियोगस्त्यागो दानमित्यर्थः। "त्यागो विहापनं दान"मित्यमरः। तस्मै सम्भृतार्थानां सम्भृतः सञ्चितः अर्थो धनं यैः तेषाम्, न तु दुर्व्यापाराय। सत्याय सत्यकथनाय। मितं परिमितं भाषन्ते ये तेषां मितभाषणशीलानां न तु पराभवाय। यशसे कीर्त्तये "यशः कीर्त्तिः समज्ञा च" इत्यमरः। विजिगीषूणां विजेतुमिच्छूनां न तु अर्थसंग्रहाय। प्रजायै सन्तानाय गृहमेधिनां दारपरिग्रहशीलानां, न तु कामोपभोगाय। अत्र त्यागायेत्यादिषु सर्व्वत्र "तादर्थ्ये चतुर्थी" इत्यादिना समासविधानज्ञापकात् चतुर्थी। गृहैर्दारैर्मेधन्ते स-

इच्छन्ति इति गृहमेधिनः। 'दारेष्वपि गृहा' इत्यमरः। 'जाया च गृहिणी गृह'मिति हलायुधः। मेधृ सङ्गमे इति धातोर्णिनिः। एभिर्विशेषणैः परोपकारित्वं, सत्यवचनत्वं यशःपरत्वं, पितृणां दारसंग्रहद्वारा पुत्रोत्पादनेन ऋणमुक्तत्वञ्च विवक्षितानि॥

८। शैशव इति। शिशोर्भावः शैशवः बाल्यम्। प्राणभृज्जातिवयोवचनाद्गात्र' इत्यञ् प्रत्ययः। 'शिशुत्वं शैशवं बाल्य'' मित्यमरः। तस्मिन् वयसि अभ्यस्तविद्यानाम् अभ्यस्ताः शिक्षिता विद्या यैः तेषाम्, एतेन ब्रह्मचर्य्याश्रमो विवक्षितः। यूनो भावः यौवनं तारुण्यम्। युवादित्वादण्। "तारुण्यं यौवनं समम्"मित्यमरः। तस्मिन् वयसि विषयैषिणां विषयान् इच्छन्ति ये तेषाम् भोगाभिलाषिणाम्, एतेन गृहस्थाश्रमो विवक्षितः। वृद्धस्य भावो वार्द्धकं वृद्धत्वम्। "द्वन्द्वमनोज्ञादिभ्यश्च" इति वुञ्। 'वार्द्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्म्मणी'ति विश्वः। तस्मिन् वार्द्धके वयसि मुनीनां वृत्तिरिव वृत्तिर्येषां तेषाम्, एतेन वानप्रस्थाश्रमो विवक्षितः। अन्ते शरीरत्यागकाले योगेन परमात्मध्यानेन, न तु रोगाद्यभिभवेन। योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। तनुं देहं त्यजन्तीति तनुत्यजाम् देहत्यागिनाम्। कायो देहः क्लीवपुंसोः स्त्रियां मूर्त्तिस्तनुस्तनूरित्यमरः। "अन्येभ्योऽपि दृश्यते" इति क्विप्। एतेन भिक्ष्वाश्रमो विवक्षितः, तेन मोक्षलाभः सूच्यते॥

९। रघूणामिति। सोऽहं लब्धप्रवेशः तनुवाग्विभवोऽपि स्वल्पवाणीप्रसरोऽपि सन् तेषां रघूणां गुणैस्तद्गुणैः आजन्मशुद्धत्वदिभिः कर्त्तृभिः कर्णं मम श्रोत्रमागत्य चापलाय चापलं चपलकर्म्म अविमृष्यकरणरूपं कर्त्तुम्। युवादित्वात् कर्म्मण्यण्। 'क्रियार्थोपपदस्य'त्यादिना चतुर्थी। प्रणोदितः प्रेरितः सन् रघूणाम् अन्वयं तद्विषयप्रबन्धं वक्ष्ये॥ [चापलाय प्रमोदितः इति वल्लभः, तद्गुणैः तथा प्रमोदं प्रापितः यथा चापलं कर्त्तुं प्रवृत्तः सन् वक्ष्ये इत्यर्थः॥]

৫ অনুবাদ। যাঁহারা জন্ম হইতেই পূত, যাঁহারা অভিলষিত ফললাভ না হওয়া পর্য্যন্ত আরব্ধ ক্রিয়ার অনুষ্ঠানে ক্ষান্ত হইতেন না, যাঁহারা সসাগরা পৃথিবীর অধীশ্বর ছিলেন, যাঁহাদিগের রথগতি স্বর্গলোকেও অপ্রতিহত ছিল; (৬) যাঁহারা যথাবিধি অগ্নিতে আহুতি প্রদান করিতেন, যাঁহারা অর্থীদিগের ইচ্ছানুরূপ ফলপ্রদানে কখনই পরাঙ্মুখ হইতেন না, যাঁহারা অপরাধীদিগের অপরাধানুরূপ শাস্তি বিধান করিতেন, যাঁহারা যথাসময়ে রাজকার্য্যানুষ্ঠানে জাগরিত হইতেন; (৭) যাঁহারা দানাদি সৎক্রিয়ার ব্যয়ের জন্যই অর্থ সঞ্চয় করিতেন, যাঁহারা সত্য কহিবার অনুরোধেই সতত মিতভাষী ছিলেন, যাঁহারা যশোলাভের জন্যই দিগ্‌বিজয় করিতেন, যাঁহারা বংশরক্ষা হেতুই দারপরিগ্রহ করিতেন; (৮) যাঁহাদিগের শৈশবকালেই সমস্ত বিদ্যা অভ্যস্ত হইত, যাঁহারা

যৌবনে ভোগ সুখানুভব করিতেন, এবং বৃদ্ধবয়সে মুনিবৃত্তি অবলম্বন ও শেষ অবস্থায় যোগবলে দেহত্যাগ করিতেন; (৯) আমি তাদৃশ গুণপরম্পরা-বিভূষিত রঘুদিগের বংশাবলী কীর্ত্তন করিব। আমার বাগ্‌বিভব অল্প হইলেও রঘুবংশীয়দিগের গুণরাশি আমার কর্ণে প্রবেশ করিয়াই যেন আমাকে এই অবিমৃষ্যকারীর কার্য্যে প্রবর্ত্তিত করিতেছে ॥

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः।**

**हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥१०**

१० अः। सदसद्व्यक्तिहेतवः सन्तः तं श्रोतुम् अर्हन्ति, (तथाहि) अग्नौ हेम्नः विशुद्धिः अपि वा श्यामिका संलक्ष्यते॥ वाच्य—सः सद्भिः श्रोतुमर्ह्यते सदसद्व्यक्तिहेतुभिः, संलक्षयन्ति विशुद्धिं श्यामिकामपि वा।

१०। सम्प्रति स्वप्रबन्धपरीक्षार्थं सतः (सज्जनान्) प्रार्थयते—तमिति। तं रघुवंशाख्यं प्रबन्धं सदसतोर्गुणदोषयोः व्यक्तेर्विचारस्य हेतवः कर्त्तारः सन्तः साधवः श्रोतुमर्हन्ति। तथाहि—हेम्नो विशुद्धिः निर्दोषस्वरूपं श्यामिकापि लोहान्तरसंसर्गात्मको दोषोऽपि वा अग्नौ संलक्ष्यते नान्यत्र, तद्वत् अत्रापि सन्त एव गुणदोषविवेकाधिकारिणः. नान्ये इति भावः। [अत्रानुरूपश्लोकम्—"सन्तः परीक्ष्यान्यतरद्भजन्ते, मूढः परप्रत्ययनेय-बुद्धिः।" "उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः। श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥" ]

১০ অনুবাদ। সদসদ্‌বিবেকজ্ঞানসম্পন্ন পণ্ডিতেরাই যেন আমার এই প্রবন্ধ শ্রবণ করেন, কারণ অগ্নিতেই সুবর্ণ পরীক্ষিত হইলে তাহার বিশুদ্ধি বা (ধাত্বন্তর) বিমিশ্রতা পরিজ্ঞাত হইয়া থাকে।

**वैवस्वतो मनुर्नाम माननीयो मनीषिणाम्।**

**आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥ ११**

११ अः। मनीषिणां माननीयः वैवस्वतः नाम मनुः छन्दसां प्रणव इव महीक्षिताम् आद्यः आसीत्॥ वाच्य—वैवस्वतेन मनुना माननीयेन अभूयत आद्येन प्रणवेनेव।

११। वर्ण्यं वस्तूपक्षिपति (प्रस्तौति)—वैवस्वत इति। मनसः ईषिणो मनीषिणो धीराः विद्वांस इति यावत्। पृषोदरादित्वात् साधुः। तेषां माननीयः पूज्यः मनीषिणामित्यत्र कर्त्तरि षष्ठी। छन्दसां वेदानाम्। 'छन्दः पद्ये च वेदे चे'ति विश्वः। प्रणवः प्रणूयते संक्षेपतः स्तूयते अनेन इति ओङ्कार इव, महीं क्षयन्ति ईशते इति महीक्षितः क्षितीश्वराः क्षिधातोरैश्वर्य्यार्थात् क्विप् तुगागमश्च। क्षियन्ति इति लिपिकरप्रमाद-जम् क्षयतेरेव ऐश्वर्य्यार्थत्वात्. न तु क्षियतेः; अस्य वासगत्यर्थत्वात्।

तेषामाद्यः आदिभूतः विवस्वतः सूर्य्यस्यापत्यं पुमान् वैवस्वतो नाम वैवस्वत इति प्रसिद्धो मनुरासीत् ॥

১১ অনুবাদ। পূর্ব্বকালে মনস্বিসমাজে মাননীয়, মনু নামে সূর্য্যদেবের এক পুত্র ছিলেন; বেদের মধ্যে যেরূপ ওঙ্কার, তিনিও সেইরূপ ক্ষিতিপতিদিগের মধ্যে আদিভূত ছিলেন ॥

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ १२

१२ अः। शुद्धिमति तदन्वये शुद्धिमत्तरः दिलीप इति राजेन्दुः क्षीरनिधौ इन्दुः इव प्रसूतः ॥ वाच्य—प्रसूतं शुद्धिमत्तरेण, दिलीपेन, राजेन्दुना इन्दुना।

१२। तदन्वय इति। शुद्धिरस्यास्तीति शुद्धिमान् तस्मिन् शुद्धिमति तदन्वये तस्य मनोरन्वये वंशे। 'अन्ववायोऽन्वयो वंशो गोत्रञ्चाभिजनः कुलम्' इति हलायुधः। अतिशयेन शुद्धिमत्तरः, 'द्विवचनविभज्योप' इत्यादिना तरप्। दिलीप इति प्रसिद्धः। राजा इन्दुरिव राजेन्दुः 'राजश्रेष्ठः [राजेन्द्रः इति वल्लभः] 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति उपमितसमासः। क्षीराणि निधीयन्ते अस्मिन्, क्षीरनिधौ इन्दुरिव प्रसूतः जातः ॥

১২ অনুবাদ। সেই পবিত্র মনুবংশে দিলীপনামে পবিত্রতর নরপতিশ্রেষ্ঠ ক্ষীরসমুদ্রে শশধরের ন্যায় সমুদ্ভূত হইয়াছিলেন।

व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।
आत्मकर्मक्षमं देहं क्षात्रो धर्म्म इवाश्रितः ॥ १३

१३ अः। (स किम्भूतः) व्यूढोरस्कः वृषस्कन्धः शालप्रांशुः महाभुजः (अतएव) आत्मकर्मक्षमं देहम् आश्रितः क्षात्रः धर्म्मः इव (स्थितः) ॥ वाच्य—व्यूढोरस्केन वृषस्कन्धेन शालप्रांशुना महाभुजेन, क्षात्रेण धर्म्मेण आश्रितेन।

१३। व्यूढेति। व्यूढेत्यादिभिः त्रिभिः श्लोकैर्दिलीपं विशिनष्टि। व्यूढं विपुलम् उरो वक्षःस्थलं यस्य सः व्यूढोरस्कः "उरःप्रभृतिभ्यः कः" इति कः। "व्यूढं विपुलं भद्रं स्फारं समं वलिष्ठञ्चे"ति यादवः। वृषस्य स्कन्ध इव स्कन्धो यस्य सः। 'सप्तम्युपमान' इत्यादिना उत्तरपदलोपो बहुव्रीहिः। शालो वृक्ष इव प्रांशुः उन्नतः शालप्रांशुः। "प्राकारवृक्षयोः शालः शालः सर्ज्जतरुः स्मृत" इति यादवः। 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः। महाभुजो महान्तो भुजौ यस्य सः महाबाहुः, आत्मकर्मक्षमं स्वव्यापारानुरूपं विपन्नत्राणादिसमर्थम् इति यावत् देहम् आश्रितः प्राप्तः, क्षात्रः क्षत्रसम्बन्धो धर्म्म इव स्थितः; मूर्त्तिमान् पराक्रम इव स्थित इत्युत्प्रेक्षा। अनुरूपं—"क्षात्रो धर्म्मः श्रित इव तनुं ब्रह्मकोषस्य गुप्त्यै।"

১৩ অনুবাদ। তাঁহার বক্ষঃস্থল বিশাল, স্কন্ধদেশ বৃষের ন্যায় স্থূল, বাহুযুগল

আজানুলম্বিত ছিল এবং তিনি শালবৃক্ষের ন্যায় উন্নত ছিলেন; তাঁহাকে দেখিলেই বোধ হইত যেন স্বয়ং বিপন্নত্রাণকারী মূর্ত্তিমান্ ক্ষত্রিয়ধর্ম্ম স্বকার্য্যকুশল শরীর পরিগ্রহ করিয়া পৃথিবীতে প্রাদুর্ভূত হইয়াছে॥

**সর্ব্বাতিরিক্তসারেণ সর্ব্ব-তেজোঽভিভাবিনা।**
**স্থিতঃ সর্ব্বোন্নতেনোর্ব্বীং ক্রান্ত্বা মেরুরিবাত্মনা॥ ১৪**

১৪ অঃ। (পুনঃ কিম্ভূতঃ সঃ) সর্ব্বাতিরিক্তসারেণ সর্ব্বতেজোঽভিভাবিনা সর্ব্বোন্নতেন আত্মনা মেরুঃ ইব উর্ব্বীং ক্রান্ত্বা (আক্রম্য) স্থিতঃ॥ বাচ্য—স্থিতং মেরুণেব।

১৪। সর্ব্বাতিরিক্তেতি। সর্ব্বাতিরিক্তসারেণ সর্ব্বেভ্যো ভূতেভ্যঃ অতিরিক্তঃ অধিকঃ সারো বলং যস্য তেন 'সারো বলে স্থিরাংশে চ' ইত্যমরঃ। সর্ব্বাণি ভূতানি তেজসা অভিভবতীতি সর্ব্বতেজোঽভিভাবী তেন, সর্ব্বেভ্য উন্নতেন আত্মনা শরীরেণ। 'আত্মা দেহে ধৃতৌ জীবে স্বভাবে পরমাত্মনী'তি বিশ্বঃ। মেরুরিব উর্ব্বীং ক্রান্ত্বা আক্রম্য স্থিতঃ। মেরাবপি বিশেষণানি তুল্যানি। "অষ্টাভিশ্চ সুরেন্দ্রাণাং মাত্রাভির্নির্ম্মিতো নৃপঃ। তস্মাদভিভবত্যেষ সর্ব্বভূতানি তেজসে"তি মনুবচনাদ্রাজ্ঞঃ সর্ব্বতেজোঽভিভাবিত্বং জ্ঞেয়ম্॥

১৪ অনুবাদ। তিনি সর্ব্বাপেক্ষা সমধিক সারবান্, সকল তেজের অভিভবকারী এবং সর্ব্বোন্নত দেহ দ্বারা ভূমণ্ডল আক্রমণ করিয়া গিরিবর মেরুর ন্যায় বিরাজ করিতেন।

**আকারসদৃশপ্রজ্ঞঃ প্রজ্ঞয়া সদৃশাগমঃ।**
**আগমৈঃ সদৃশারম্ভ আরম্ভসদৃশোদয়ঃ॥ ১৫**

১৫ অঃ। (কিম্ভূতঃ) আকারসদৃশপ্রজ্ঞঃ প্রজ্ঞয়া সদৃশাগমঃ আগমৈঃ সদৃশারম্ভঃ আরম্ভসদৃশোদয়ঃ (আসীৎ)॥ বাচ্য—প্রজ্ঞেন, সদৃশাগমেন সদৃশারম্ভেণ, সদৃশোদয়েন।

১৫। আকারেতি। আকারেণ মূর্ত্ত্যা সদৃশী প্রজ্ঞা যস্য সঃ, প্রজ্ঞয়া সদৃশাগমঃ প্রজ্ঞানুরূপশাস্ত্রপরিশ্রমঃ, আগমৈঃ সদৃশ আরম্ভঃ কর্ম্ম যস্য সঃ তথোক্তঃ, আরভ্যতে ইতি আরম্ভঃ কর্ম্ম তৎসদৃশ উদয়ঃ ফলসিদ্ধির্যস্য সঃ তথোক্তঃ।

১৫ অনুবাদ। তাঁহার যেরূপ আকৃতি, বুদ্ধিও তদনুরূপ তীক্ষ্ণ ছিল; বুদ্ধির অনুরূপ শাস্ত্রজ্ঞান ছিল; শাস্ত্রজ্ঞানসদৃশ কার্য্যানুষ্ঠান ছিল এবং কার্য্যানুষ্ঠানের অনুরূপ ফললাভ হইত।

**ভীমকান্তৈর্নৃপগুণৈঃ স বভূবোপজীবিনাম্।**
**অধৃষ্যশ্চাভিগম্যশ্চ যাদোরত্নৈরিবার্ণবঃ॥ ১৬**

১৬ অঃ। সঃ ভীমকান্তৈঃ নৃপগুণৈঃ যাদোরত্নৈঃ অর্ণবঃ ইব উপজীবিনাম্ অধৃষ্যঃ অভিগম্যঃ চ বভূব॥ বাচ্য...তেন বভূবে (বভূবে) অধৃষ্যেণ অভিগম্যেন অর্ণবেন ইব।

১৬। ভীমেতি। ভীমৈঃ কান্তৈশ্চ নৃপগুণৈঃ রাজগুণৈঃ তেজঃপ্রতাপাদিভিঃ

कुलशीलदाक्षिण्यादिभिश्च सः दिलीपः उपजीविनाम् आश्रितानां यादोभिः जलजीवैः। 'यादांसि जलजन्तवः' इत्यमरः। रत्नैश्च अर्णव इव अधृष्यः अनभिभवनीयश्च अभिगम्य आश्रयणीयश्च बभूव॥

১৬ অনুবাদ। ভীষণ জলজন্তুগণের অবস্থান হেতু সমুদ্র যেরূপ অভিগম্য নহে অথচ তন্নিহিত রত্নাদিলোভে যেমন লোকের অভিগম্যও হইয়া থাকে, রাজা দিলীপও তদ্রূপ স্বীয় ভীষণ এবং কমনীয় রাজগুণে আশ্রিতগণের অধৃষ্য ও অভিগম্য ছিলেন॥

रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः॥ १७

१७ अः। नियन्तुः तस्य नेमिवृत्तयः प्रजा आमनोः क्षुण्णात् वर्त्मनः परं रेखामात्रमपि न व्यतीयुः॥ वाच्य—व्यतीये प्रजाभिः नेमिवृत्तिभिः।

१७। रेखामात्रमिति। नियन्तुः शिक्षकस्य सारथेश्च तस्य दिलीपस्य सम्बन्धिन्यः नेमीनां चक्रधाराणां वृत्तिरिव वृत्तिर्व्यापारो यासां ताः 'चक्रधारा प्रधिर्नेमिः' इति यादवः। 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्' इत्यमरः। प्रजाः, आ मनोः मनुमारभ्य इत्यभिविधिः, पदद्वयं चैतत् समासस्य विभाषितत्वात्। क्षुण्णात् अभ्यस्तात् प्रहताच्च वर्त्मनः आचारपद्धतेः अध्वनश्च परम् अधिकम् इतस्तत इत्यर्थः। रेखा प्रमाणमस्येति रेखामात्रं रेखाप्रमाणम् ईषदपीत्यर्थः। 'प्रमाणे द्वयसज्' इत्यादिना मात्रच् प्रत्ययः। परमर्द्धविशेषणं चैतत्। न व्यतीयुः न अतिक्रान्तवत्यः। कुशलसारथिप्रेरिता रथनेमय इव तस्य प्रजाः पूर्वक्षुण्णमार्गं न जहुरिति भावः॥

১৭। অনুবাদ। সুনিপুণ সারথি-চালিত রথের চক্র যেরূপ অগ্রনেমির রেখামাত্র অতিক্রম করে না, সেইরূপ শাসন-নিপুণ মহারাজ দিলীপের শাসনগুণে প্রজাগণ, মনুর সময়াবধি প্রচলিত, নীতিমার্গ অণুমাত্রও অতিক্রম করিত না॥

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः॥ १८

१८ अः। सः प्रजानां भूत्यर्थम् एव ताभ्यः बलिम् अग्रहीत्, (तथाहि) रविः सहस्रगुणम् उत्स्रष्टुं रसम् आदत्ते॥ वाच्य—तेन बलिरग्राहि। आदीयते रसो रविणा।

१८। प्रजानामिति। सः राजा प्रजानां भूत्यै अर्थाय, भूत्यर्थं वृद्ध्यर्थम् एव। अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या, ग्रहणक्रिया विशेषणञ्चैतत्। ताभ्यः प्रजाभ्यो बलिं षष्ठांशरूपं करम् अग्रहीत्। 'भागधेयः करो बलिः' इत्यमरः। तथाहि—रविः सहस्रं गुणा यस्मिन् कर्म्मणि तत् यथा तथा सहस्रगुणं सहस्रधा उत्स्रष्टुं दातुम्। उत्सर्जन-

क्रियाविशेषणञ्चैतत्। रसम् अम्बु आदत्ते गृह्णाति। 'रसो गन्धे रसे स्वादे तिक्तादौ विषरोगयोः। शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे' इति विश्वः॥

১৮ অনুবাদ। তিনি প্রজাদিগের হিতসাধন নিমিত্তই তাহাদিগের নিকট করগ্রহণ করিতেন; সূর্য্যদেব সহস্রগুণ প্রতিদান করিবার নিমিত্তই রস গ্রহণ করিয়া থাকেন।

**सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम्।**
**शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता॥ १९**

১৯ অ:। तस्य सेना परिच्छदः आसीत् शास्त्रेषु अकुण्ठिता बुद्धिः धनुषि च आतता मौर्व्वी. द्वयमेव अर्थसाधनं (बभूव)॥ वाच्य—सेनया परिच्छदेन अभूयत। द्वयेन अर्थसाधनेन। अकुण्ठितया बुद्ध्या। आततया मौर्व्व्या।

১৯। सम्प्रति बुद्धिशौर्य्यसम्पन्नस्य तस्य अर्थसाधनेषु परानपेक्षत्वमाह सेनेति। तस्य राज्ञः सेना चतुरङ्गबलं, परिच्छाद्यते अनेनेति परिच्छदः उपकरणं बभूव छत्रचामरादितुल्यमभूदित्यर्थः। 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः। 'छादेर्घेऽद्व्युपसर्गस्य' इति उपधाह्रस्वः। अर्थस्य प्रयोजनस्य तु साधनं द्वयम् एव, शास्त्रेषु अकुण्ठिता अव्याहता बुद्धिः। 'व्यापृता' इत्यपि पाठः। धनुषि आतता आरोपिता मौर्वी च। 'मौर्व्वी ज्या शिञ्जिनी गुणः' इत्यमरः। नीतिपुरःसरमेव तस्य शौर्य्यमभूदित्यर्थः॥

১৯ অনুবাদ। চতুরঙ্গ বল কেবল তাঁহার ছত্রচামরাদির ন্যায় রাজশ্রীর উপকরণ মাত্র ছিল; শাস্ত্রে অপ্রতিহত বুদ্ধি ও ধনুকে সংযোজিত জ্যা এই উভয় দ্বারাই তাঁহার প্রয়োজন সম্পন্ন হইত॥

**तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च।**
**फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव॥ २०**

২০ অ:। संवृतमन्त्रस्य गूढाकारेङ्गितस्य च तस्य प्रारम्भाः प्राक्तनाः संस्कारा इव फलानुमेयाः (आसन्) वाच्य-फलानुमेयैः प्रारम्भैः संस्कारैः प्राक्तनैः अभूयत।

২০। राज्यमूलं मन्त्रसंरक्षणं तस्यासीदित्याह—तस्येति। संवृतमन्त्रस्य गुप्तविचारस्य। 'वेदभेदे गुप्तवादे मन्त्रः' इत्यमरः। शोकहर्षादिसूचको भ्रूकुटिमुखरागादिः आकारः, इङ्गितं चेष्टितं हृदयगतविकारो वा। 'इङ्गितं हृद्गतो भावो बहिराकार आकृतिः' इति सज्जनः। गूढे आकारेङ्गिते यस्य स्वभावचापलात् भ्रमपरम्परया मुखरागादिलिङ्गैर्वा अन्यतोयगामिमन्त्रस्य तस्य, प्रारभ्यन्त इति प्रारम्भाः सामाद्युपायप्रयोगाः, प्रागित्यव्ययेन पूर्व्वजन्म उच्यते, तत्र भवाः प्राक्तनाः। 'सायं चिर' इत्यादिना ट्युल्प्रत्ययः। संस्काराः पूर्व्वकर्म्मवासनाः इव फलेन कार्य्येण अनुमेयाः अनुमातुं योग्याः आसन्। अत्र याज्ञवल्क्यः,—'मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम्। कुर्य्यात् यथा तन्न विदुः कर्म्मणामाफलोदयात्' इति॥

২০ অনুবাদ। তাঁহার মন্ত্রণা এবং আকার ইঙ্গিত এতই গূঢ় ছিল যে, কেহই তাঁহার হৃদয়গত ভাব বুঝিতে সমর্থ হইত না; অতএব তাঁহার কার্য্যকলাপ যেন প্রাক্তন সংস্কারের ন্যায় কেবল ফলদ্বারাই অনুমেয় হইত ॥

**जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः ।**
**अगृध्नुरादटे सोऽर्थमसक्तः सुखमन्वभूत् ॥ २१**

२१ अः। सः अत्रस्तः सन् आत्मानं जुगोप, अनातुरः सन् धर्म्मं भेजे, अगृध्नुः सन् अर्थम् आददे, असक्तः सन् सुखम् अन्वभूत् । वाच्य—तेन अत्रस्तेन आत्मा जुगुपे, अनातुरेण धर्म्मः, अगृध्नुना अर्थः, असक्तेन अन्वभावि ।

२१। सम्प्रति सामाद्युपायान् विनैव आत्मरक्षादिकं कृतवान् इत्याह—जुगोपेति। अत्रस्तः अभीतः सन् । 'त्रस्तो भीरुभीरुक-भी[रु]लुका' इत्यमरः। त्रासोपाधिमन्तरेणैव त्रिवर्गसिद्धेः प्रथमसाधनत्वात् एव आत्मानं शरीरं जुगोप। * रक्षितवान् इत्यर्थः। अनातुरः अरुग्ण एव धर्म्मं सुकृतं भेजे अर्ज्जितवानित्यर्थः। अगृध्नुः अगर्द्धनशील एव अर्थमाददे स्वीकृतवान्। 'गृध्नुस्तु गर्द्धनः। लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुप-लोलुभा'वित्यमरः "त्रसिगृधिधृषिक्षिपेः क्नुः" इति क्नुप्रत्ययः। असक्तः आसक्तिरहित एव सुखमन्वभूत्।

২১। তিনি ভীত না হইয়া আত্মরক্ষা করিতেন, রুগ্ন না হইয়া ধর্ম্মোপার্জ্জন করিতেন, লোভহীন হইয়া অর্থসংগ্রহ করিতেন এবং আসক্তিশূন্য হইয়া বিষয় সুখ ভোগ করিতেন।

**ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्य्ययः ।**
**गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ २२**

२२ अः। ज्ञाने (सति) मौनं, शक्तौ ( सत्यां ) क्षमा, त्यागे ( सति ) श्लाघाविपर्य्ययः ( अतएव ) तस्य गुणाः गुणानुबन्धित्वात् सप्रसवा इव ( बभूवुः ) ॥ वाच्य—मौनेन, क्षमया, श्लाघाविपर्य्ययेण, गुणैः सप्रसवैः इव ( अभूयत ) ।

२२। परस्परविरुद्धानामपि गुणानां तत्र साहचर्य्यमासीदित्याह—ज्ञान इति। ज्ञाने परवृत्तान्तज्ञाने सत्यपि मौनं वाङ्नियमनं, यथाह कामन्दकः—'नान्योपतापि वचनं मौनव्रतचरिष्णुते'ति शक्तौ प्रतीकार-सामर्थ्येऽपि क्षमा अपकारसहनम्। अत्र चाणक्यः—'शक्तानां भूषणं क्षमे'ति। त्यागे वितरणे सत्यपि श्लाघाया विकत्थनस्य विपर्य्ययः अभावः। अत्राह मनुः—'न दत्त्वा परिकीर्त्तयेत्' इति। इत्थं तस्य गुणाः ज्ञानादयः गुणैर्विरुद्धैर्मौनादिभिरनुबन्धित्वात् सहचारित्वात् सह प्रसवो जन्म येषां ते

* असत्यपि शरीरे त्रिवर्गस्य धर्म्मार्थकामस्य आद्यसाधनम् आत्मा अतः आत्मरक्षणम् उचितम् इति ।

সপ্রসবাঃ সোদরা ইব অভূবন্। বিরুদ্ধা অপি গুণাস্তস্মিন্ অবিরোধেনৈব স্থিতা ইত্যর্থঃ।

নির্গলিতার্থঃ—স্বভাবতঃ পৃথক্স্থানস্থিতিশীলা অপি জ্ঞানমৌনাদয়ো গুণাঃ তদেকাধারবাসলোভাৎ সহজং বৈরং তত্যজুরিতি।

২২। জ্ঞানসত্ত্বেও তিনি মৌনী হইয়া থাকিতেন, শক্তিসত্ত্বেও তাঁহার ক্ষমা ছিল এবং দান করিয়া তিনি কদাচ আত্মশ্লাঘা করিতেন না। এইরূপ পরস্পর বিরোধী জ্ঞানমৌনাদি গুণসমূহ সহোদরের ন্যায় তাঁহার শরীরে বিরাজমান ছিল।

অনাকৃষ্টস্য বিষয়ৈর্বিদ্যানাং পারদৃশ্বনঃ।
তস্য ধর্ম্মরতেরাসীদ্বৃদ্ধত্বং জরসা বিনা॥ ২৩

২৩ অঃ। বিষয়ৈঃ অনাকৃষ্টস্য বিদ্যানাং পারদৃশ্বনঃ ধর্ম্মরতেঃ তস্য জরসা বিনা বৃদ্ধত্বম্ আসীৎ॥ বাচ্য—বৃদ্ধত্বেন অভূয়ত।

২৩। দ্বিবিধং বৃদ্ধত্বং জ্ঞানেন বয়সা চ, তত্র তস্য জ্ঞানেন বৃদ্ধত্বমাহ—অনাকৃষ্টস্যেতি। বিষয়ৈঃ শব্দাদিভিঃ। 'রূপং শব্দো গন্ধরসস্পর্শাশ্চ বিষয়া অমী' ইত্যমরঃ। অনাকৃষ্টস্য অবশীকৃতস্য বিদ্যানাং বেদবেদাঙ্গাদীনাং পারদৃশ্বনঃ পারম্ অন্তং দৃষ্টবতঃ। দৃশেঃ ক্বনিপ্। ধর্ম্মে রতির্যস্য তস্য রাজ্ঞঃ জরসা জরয়া বিনা। 'বিস্রসা জরা' ইত্যমরঃ। 'ষিদ্ভিদাদিভ্যোঽঙ্' ইতি অঙ্ প্রত্যয়ঃ। 'জরায়া জরসন্যতরস্যাম্' ইতি জরসাদেশঃ। বৃদ্ধত্বং বার্দ্ধক্যম্ আসীৎ। তস্য যূনোঽপি বিষয়বৈরাগ্যাদিজ্ঞানগুণসম্পত্ত্যা জ্ঞানতো বৃদ্ধত্বমাসীদিত্যর্থঃ। নাথস্তু চতুর্বিধং বৃদ্ধত্বমিতি জ্ঞাত্বা 'অনাকৃষ্টস্য' ইত্যাদিনা বিশেষণত্রয়েণ বৈরাগ্যজ্ঞানশীলবৃদ্ধত্বান্যুক্তানীত্যবোচৎ।

নির্গলিতার্থঃ—বৈরাগ্যবৃদ্ধত্বং জ্ঞানবৃদ্ধত্বং শীলত্বং বয়োবৃদ্ধত্বঞ্চেতি চতুর্বিধং বৃদ্ধত্বম্। তস্য পূর্ব্বোক্তমেব ত্রিবিধং বৃদ্ধত্বং জাতম্ ইতি।

২৩। শব্দ, গন্ধ, রূপ, রস প্রভৃতি বিষয়ভোগে অবশীভূত, নিখিল বিদ্যার পারদর্শী, ধর্ম্মানুরক্ত রাজা দিলীপের জরা ব্যতীত বৃদ্ধত্ব জন্মিয়াছিল।

প্রজানাং বিনয়াধানাদ্রক্ষণাদ্ভরণাদপি।
স পিতা পিতরস্তাসাং কেবলং জন্মহেতবঃ॥ ২৪

২৪ অঃ। বিনয়াধানাৎ রক্ষণাৎ ভরণাদপি স প্রজানাং পিতা (আসীৎ) তাসাং পিতরঃ কেবলং জন্মহেতবঃ [আসন্]॥ বাচ্য—তেন পিত্রা, পিতৃভিঃ জন্মহেতুভিঃ (অভূয়ত)।

২৪। প্রজানামিতি। প্রজায়ন্তে ইতি প্রজাঃ জনাঃ। 'উপসর্গে চ সংজ্ঞায়াম্' ইতি ডপ্রত্যয়ঃ। 'প্রজা স্যাৎ সন্ততৌ জনে' ইত্যমরঃ। তাসাং বিনয়স্য শিক্ষায়াঃ আধানাৎ করণাৎ সন্মার্গপ্রবর্ত্তনাৎ ইতি যাবৎ রক্ষণাৎ ভয়হেতুভ্যঃ ত্রাণাৎ, আপন্নিবারণাৎ ইতি যাবৎ। ভরণাৎ অন্নপানাদিভিঃ পোষণাদপি। অপি সমুচ্চয়ে। সঃ রাজা পিতা অভূৎ,

तासां पितरस्तु जन्महेतवः जन्ममात्रकर्त्तारः केवलमुत्पादका एव अभूवन्। जननमात्र एव पितृणां व्यापारः, सदा शिक्षारक्षणादिकन्तु स एव करोतीति तस्मिन् पितृत्वव्यपदेशः। आहुश्च, 'स पिता यस्तु पोषकः' इति।

২৪। প্রজাদিগের শিক্ষাবিধান, রক্ষণ এবং পোষণহেতু তিনিই তাহাদিগের পিতা ছিলেন, তাহাদের পিতারা কেবল জন্মদাতা ছিলেন।

स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये।
अप्यर्थकामौ तस्यास्तां धर्म्म एव मनीषिणः॥ २५

२५ अः। स्थित्यै दण्ड्यान् दण्डयतः प्रसूतये परिणेतुः मनीषिणः तस्य अर्थकामौ अपि धर्म्म एव आस्ताम्॥ वाच्य—अर्थकामाभ्याम् ( अभूयत )।

२५। स्थित्यै इति। दण्डम् अर्हन्तीति दण्ड्याः। 'दण्डादिभ्यो यः' इति यप्रत्ययः। 'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकञ्चैव गच्छति॥' इति शास्त्रवचनात्। तान् दण्ड्यान् एव स्थित्यै लोकप्रतिष्ठायै दण्डयतः शिक्षयतः प्रसूतये सन्तानाय एव परिणेतुः दारान् परिगृह्णतः मनीषिणः विदुषः दोषज्ञस्य इति यावत्। 'विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः। धीरो मनीषी' इत्यमरः। तस्य दिलीपस्य अर्थकामौ अपि धर्म्म एव आस्तां जातौ। अस्तेर्लङ्। अर्थकामसाधनयोर्दण्डविवाहयोर्लोकस्थापनप्रजोत्पादनरूपधर्म्मार्थत्वेन अनुष्ठानात् अर्थकामावपि धर्मशेषतामापादयन् स राजा धर्मोत्तरोऽभूदित्यर्थः। आह च गौतमः,—'न पूर्वाह्णमध्यन्दिनापराह्णानफलान् कुर्य्यात्, यथाशक्ति धर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्यात्' इति।

निर्गलितार्थस्तु—न खल्वसौ सम्राट् लोभोऽपहृतचेताः सन् छिद्रादिकारणभूतमयथादण्डं प्रजासु प्रयुज्य ताभ्यो धनसंग्रहमकार्षीत् अतस्तस्य धनसंग्रहो धर्म्मानुगत एवासीत्। दारपरिग्रहमपि सन्तानोत्पादनार्थमेव कृतवानसौ न तु इन्द्रियवृत्तिं चरितार्थयितुम्, अतः परिणयोऽपि तस्य धर्म्ममूलक एव पुत्रोत्पादनेन पितृऋणान्मुक्तिरिति तत् धर्म्मशास्त्रसम्मतमेव। तथाच "पुत्त्रार्थं क्रियते भार्य्या पुत्त्रपिण्डप्रयोजनम्।" इत्यादिधर्म्मशास्त्रम्।

২৫। তিনি উচ্ছৃঙ্খলতানিবারণের জন্য দণ্ডার্হদিগকে দণ্ড দিতেন ( কিন্তু অর্থসংগ্রহের জন্য নহে )। পুত্রলাভকামনায়ই তিনি দারপরিগ্রহ করিয়াছিলেন ( ইন্দ্রিয়োপভোগের জন্য নহে ) সুতরাং সেই মনীষী দিলীপের অর্থ এবং কামও ধর্ম্মস্বরূপই হইয়াছিল।

दुदोह गां स यज्ञाय शस्याय मघवा दिवम्।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्॥ २६

२६ अः। सः यज्ञाय गां, मघवा शस्याय दिवं दुदोह, उभौ सम्पद्विनिमयेन भुवनद्वयं दधतुः॥ वाच्य—तेन गौः, मघवता द्यौः दुदुहे। उभाभ्याम् दधे।

२६। दुदोहेति सः राजा यज्ञाय यज्ञं कर्त्तुं गां भुवं दुदोह, करग्रहणेन रिक्तां चकार इत्यर्थः मघवा देवेन्द्रः शस्याय शस्यं वर्द्धयितुं दिवं स्वर्गं दुदोह, द्युलोकात् महीलोके वृष्टिमुत्पादयामास इत्यर्थः। 'क्रियार्थोपपदस्य' इत्यादिना यज्ञशस्याभ्यां चतुर्थी। एवमुभौ सम्पदः विनिमयेन परस्परमादानप्रतिदानाभ्यां भुवनद्वयं दधतुः पुपुषतुः। राजा यज्ञैरिन्द्रलोकम्, इन्द्रश्च उदकेन भूलोकं पुपोष इत्यर्थः। उक्तञ्च दण्ड-नीतौ—'राजा त्वर्थान् समाहृत्य कुर्य्यादिन्द्रमहोत्सवम्। प्रीणितो मेघ-वाहस्तु महतीं वृष्टिमावहेत्।' इति।

२७। তিনি পৃথিবী হইতে করগ্রহণ করিয়া ইন্দ্রের প্রীতির জন্য যজ্ঞ করিতেন এবং ইন্দ্রও প্রীত হইয়া শস্যাদি বর্দ্ধনের নিমিত্ত স্বর্গ হইতে বারি বর্ষণ করিতেন; এইরূপে তাঁহারা উভয়ে পরস্পরের সম্পদ্ বিনিময় দ্বারা উভয় লোক পালন করিতেন।

न किलानुययुस्तस्य राजानो रक्षितुर्यशः।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता॥ २७

२७ अ:। राजानः रक्षितुः तस्य यशः न अनुययुः किल, यत [यस्मात्] तस्करता परस्वेभ्यः व्यावृत्ता [सती] श्रुतौ स्थिता॥ वाच्य—राजभिः अनुययौ, तस्करतया व्यावृत्तया स्थितम्।

२७। न किलेति। राजानः अन्ये नृपा रक्षितुः भयेभ्यस्त्रातुः तस्य राज्ञःयशः न अनुययुः किल न अनुचक्रुः खलुः। कुतः, यत् यस्मात् कारणात् तस्करता चौर्य्यं परस्वेभ्यः परधनेभ्यः स्वविषयभूतेभ्यः व्यावृत्ता सती ? श्रुतौ वाचकशब्दे स्थिता प्रवृत्ता। अपहार्य्यान्तराभावात् [अप-हारिणश्चौरस्य अभावात्] तस्करशब्द एव अपहृत इत्यर्थः। अथवा 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायेन शब्दे स्थिता स्फुरिता, न तु स्वरूपतोऽस्ति इत्यर्थः। [खपुष्पवन्ध्यासुतघोटकडिम्बवत् तस्करशब्दः तस्मिन् राजनि महीं शासति निरर्थक एव आसीदिति)।

२१। অন্যান্য নরপতিগণ তাঁহার যশের অনুকরণ করিতে সমর্থ হন নাই, কারণ তাঁহার শাসনসময়ে চৌর্য্যবৃত্তির লেশমাত্র ছিল না; অতএব তস্করতা পরস্বাপহরণে বিরত হইয়া কেবল শব্দমাত্রেই অবস্থিত ছিল।

द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्त्तस्य यथौषधम्।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता॥ २८

२८ अ:। द्वेष्योऽपि शिष्टः आर्त्तस्य औषधं यथा तस्य सम्मतः आसीत्, प्रियोऽपि दुष्टः उरग-क्षता अङ्गुलीव तस्य त्याज्य आसीत्॥ वाच्य—द्वेष्येण शिष्टेन औषधेन सम्मतेन अभूयत। प्रियेण दुष्टेन, उरगक्षतया अङ्गुल्या इव त्याज्येन।

२८। द्वेष्य इति। शिष्टः जनः द्वेष्यः शत्रुः अपि आर्त्तस्य रोगिणः औषधं

यथा औषधम् इव तस्य सम्मतः अनुमतः आसीत्, दुष्टः जनः प्रियः अपि प्रेमास्पदीभूतोऽपि उरगक्षता सर्पदष्टा अङ्गुली इव 'छिन्द्याद् बाहुमपि दुष्टमात्मनः' इति न्यायात्। त्याज्यः आसीत्। तस्य शिष्ट एव बन्धुः, दुष्ट एव शत्रुरित्यर्थः।

২৮। দ্বেষ্য ব্যক্তি ও শিষ্ট হইলে, পীড়িত ব্যক্তির নিকট ঔষধের ন্যায় তাঁহার নিকট সমাদৃত হইত এবং প্রিয়ব্যক্তিও দুষ্ট হইলে সর্পদষ্ট অঙ্গুলীর ন্যায় তিনি তাহাকে পরিত্যাগ করিতেন।

तं वेधा विदधे नूनं महाभूतसमाधिना।
तथाहि सर्वे तस्यासन् परार्थैकफला गुणाः॥ २९

२९ अः। वेधा महाभूतसमाधिना तं विदधे नूनं, तथाहि तस्य सर्वे गुणाः परार्थैकफला आसन्॥
वाच्य—वेधसा सः, सर्वैः गुणैः परार्थैकफलैः अभूयत।

२९। तस्य परोपकारित्वमाह—तमिति। वेधाः स्रष्टा। 'स्रष्टा प्रजापति-र्वेधा' इत्यमरः। तं दिलीपं, समाधीयते अनेनेति समाधिः कारणसामग्री, महाभूतानां यः समाधिः तेन महाभूतसमाधिना, विदधे ससर्ज नूनं ध्रुवम् इत्युत्प्रेक्षा। तथाहि, तस्य राज्ञः सर्वे गुणाः रूपरसादिमहाभूतगुणवदेव परार्थः परप्रयोजनम् एव एकं मुख्यं फलं येषां ते तथोक्ताः आसन्। महाभूतगुणोपमानेन कारणगुणाः कार्य्ये संक्रामन्तीति न्यायः सूचितः॥

२९ निर्गलितार्थः—क्षितिजलवाय्वाकाशाः पञ्चभूतानि, एषु च श्रेष्ठानि पर्व्वतजलधिसूर्य्यादीनि, एतान्येव महाभूतानि कथ्यन्ते। विधाता तैस्तैरुपादानैरेतानि पर्व्वतादिरूपक्षित्यादिमहाभूतानि निर्म्मितानि तैरेवोपादानैर्महात्मा दिलीपो निरमायि, यतः क्षित्यादीनां रूपरसगन्धादिगुणा इव अस्य शौर्य्यधैर्य्यादिगुणाः केवलं परोपकारप्रयोजनका आसन्। तथाहि अयमार्त्तजनपरित्राणाय बलं दधौ, सत्पात्रविनियोगाय धनं समग्रहीत्, विद्वज्जनगौरवाय विद्यामुपार्ज्जयामास। अपरे तु जनाः क्षित्यादिभिरेव उपादानैर्निर्म्मिताः सन्तः परार्थस्वार्थफलकगुणशालिनो भवन्ति, अयन्तु न तथा, अतोऽस्य महाभूतनिर्म्माणोपादानैर्निर्म्माणोत्प्रेक्षणं युक्तमिति।

২৯। বিধাতা নিশ্চয়ই পঞ্চ মহাভূত নির্ম্মাণের উপকরণ দ্বারা দিলীপকে নির্ম্মিত করিয়াছিলেন; সেই কারণে তাঁহার গুণরাশি কেবল পরের উপকারের নিমিত্ত নিয়োজিত হইত।

स वेलावप्रवलयां परिखीकृतसागराम्।
अनन्यशासनामुर्वीं शशासैकपुरीमिव॥ ३०

३० अः। स वेलावप्रवलयां परिखीकृतसागराम् अनन्यशासनाम् उर्व्वीं एकपुरीमिव शशास॥
वाच्य—तेन वेलावप्रवलया परिखीकृतसागरा अनन्यशासना उर्व्वी एकपुरी इव शशासे।

३०। स इति। सः दिलीपः, वेलाः समुद्रकूलानि। 'वेला कूलेऽपि

 7136

वारिधिः' इति विश्वः । ता: एव वप्रवलयाः प्राकारवेष्टनानि यस्याः ताम् । 'स्वादयो वप्र'मस्त्रियाम् । प्राकारो वरणः शालः प्राचीरं प्रान्ततो वृतिः' इत्यमरः । परितः खातं परिखा दुर्गवेष्टनं खातम् । 'खातं खेयन्तु परिखा' इत्यमरः । अन्येष्वपि दृश्यते इत्यत्र अपिशब्दात् खनेर्ड प्रत्ययः । अपरिखाः परिखा: सम्पद्यमानाः कृताः परिखीकृताः सागराः यस्याः ताम् ! अभूततद्भावे च्विः । अविद्यमानम् अन्यस्य राज्ञः शासनं यस्याः ताम् अनन्यशासनाम् उर्व्वीं पृथ्वीं एकपुरीमिव शशास, अनायासेन शासितवान् इत्यर्थः ॥

৩০। সমুদ্রতীর তাঁহার রাজ্যের প্রাচীরস্বরূপ এবং সমুদ্র পরিখার ন্যায় ছিল ; ইহার মধ্যে অন্য কোন রাজার প্রভুত্ব ছিল না ; তিনি পৃথিবীর একাধীশ্বর হইয়া সমস্ত ভূখণ্ড একটী পুরীর ন্যায় শাসন করিয়াছিলেন।

**तस्य दाक्षिण्यरूढ़ेन नाम्ना मगधवंशजा ।**

**पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥ ३१**

३१ अ: । तस्य मगधवंशजा दाक्षिण्यरूढ़ेन नाम्ना ( उपलक्षिता ) सुदक्षिणा इति नाम्ना पत्नी अध्वरस्य दक्षिणा इव आसीत् ॥ वाच्य—वंशजया दक्षिणया इव सुदक्षिणेति नाम्ना पत्न्या अभूयत ।

३१ । तस्येति । तस्य राज्ञः मगधवंशे जाता मगधवंशजा । 'सप्तम्यां जनेर्ड' इति डप्रत्ययः । एतेनाभिजात्यमुक्तम् । दाक्षिण्यं परच्छन्दानुवर्त्तनम् । 'दक्षिणः सरलोदारपरच्छन्दानुवर्त्तिषु' इति शाश्वतः । तेन रूढ़ं प्रसिद्धं तेन नाम्ना अध्वरस्य यज्ञस्य दक्षिणा दक्षिणाख्या पत्नी इव सुदक्षिणा इति प्रसिद्धा पत्नी आसीत् । अत्र श्रुतिः,—'यज्ञो वै गन्धर्वस्तस्य दक्षिणा अप्सरस' इति । 'दक्षिणाया दाक्षिण्यं नाम ऋत्विजो दक्षिणात्वं प्रापकत्वं तं दयन्ते दक्षिणां प्रतिगृह्य' इति च ॥

৩১। দক্ষিণা যেমন যজ্ঞের পত্নী, তদ্রূপ মগধবংশপ্রসূতা দয়াদাক্ষিণ্যাদি সদ্‌গুণসম্পন্না সুদক্ষিণা নামে তাঁহার এক সার্থকনামা সহধর্ম্মিণী ছিলেন।

**कलत्रवन्तमात्मानमवरोधे महत्यपि ।**

**तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥ ३२**

३२ अ: । वसुधाधिपः महति अवरोधेऽपि मनस्विन्या तया लक्ष्म्या च आत्मानं कलत्रवन्तं मेने ॥ वाच्य—वसुधाधिपेन आत्मा कलत्रवान् ।

३२ । कलत्रवन्तमिति । वसुधाधिपः अवरोधे अन्तःपुरवर्गे महति सति अपि मनस्विन्या दृढ़चित्तया पतिचित्तानुवृत्त्यादिनिर्बन्धक्षमया इत्यर्थः, तया सुदक्षिणया लक्ष्म्या च आत्मानं कलत्रवन्तं भार्य्यावन्तं मेने । 'कलत्रं श्रोणिभार्य्ययोः' इत्यमरः । वसुधाधिप इत्यनेन वसुधया चेति गम्यते ॥

৩২। বসুধাধিপতি দিলীপের অন্যান্য অনেক অন্তঃপুরচারিণী সহধর্ম্মিণী থাকিলেও

মনস্বিনী সুদক্ষিণা এবং রাজলক্ষ্মী এই উভয় দ্বারাই তিনি আপনাকে কলত্রবান্ মনে করিতেন।

**तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः।**
**विलम्बितफलैः कालं स निनाय मनोरथैः॥ ३३**

३३ अः। सः आत्मानुरूपायां तस्याम् आत्मजन्मसमुत्सुकः (सन्) विलम्बितफलैः मनोरथैः कालं निनाय॥ वाच्य—तेन समुत्सुकेन कालः निन्ये।

३३। तस्यामिति। सः राजा आत्मानुरूपायां तस्याम् आत्मनः जन्म यस्य असौ आत्मजन्मा पुत्रः तस्मिन् समुत्सुकः यद्वा आत्मनः जन्मनि पुत्ररूपेण उत्पत्तौ समुत्सुकः सन्। 'आत्मा वै पुत्रनामासि' इति श्रुतेः। विलम्बितं फलं सुतप्राप्तिरूपं येषां तैः मनोरथैः कदा मे पुत्रो भवेत् इत्याशाभिः कालं निनाय यापयामास॥

৩৩। তিনি অনুরূপা পত্নী সুদক্ষিণার গর্ভ হইতে পুত্রলাভে সমুৎসুক হইয়া "কত দিনে মনোরথ পূর্ণ হইবে" এই চিন্তাতে কালযাপন করিতে লাগিলেন।

**सन्तानार्थाय विधये स्वभुजादवतारिता।**
**तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे॥ ३४**

३४ अः। तेन सन्तानार्थाय विधये स्वभुजात् अवतारिता गुर्वी जगतो धूः सचिवेषु निचिक्षिपे॥ वाच्य—सः अवतारितां गुर्वीं धूरम् चिक्षेप।

३४। सन्तानेति। तेन दिलीपेन सन्तानः अर्थः प्रयोजनं यस्य तस्मै सन्तानार्थाय विधये अनुष्ठानाय स्वभुजात् अवतारिता अवरोपिता जगतः लोकस्य गुर्वी धूः भारः सचिवेषु निचिक्षिपे निहिता॥

৩৪। তিনি পুত্রলাভানুকূল ব্রতানুষ্ঠান করিবার নিমিত্ত দুর্ব্বহ ভূভার আপন হস্ত হইতে অবতারিত করিয়া মন্ত্রিহস্তে ন্যস্ত করিলেন।

**अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया।**
**तौ दम्पती वशिष्ठस्य गुरोर्जग्मतुराश्रमम्॥ ३५**

३५ अः। अथ प्रयतौ तौ दम्पती पुत्रकाम्यया विधातारं अभ्यर्च्य गुरोर्वशिष्ठस्य आश्रमं जग्मतुः॥ वाच्य—प्रयताभ्यां ताभ्यां दम्पतिभ्याम् आश्रमः जग्मे।

३५। अथेति। अथ धुरोऽवतारानन्तरं पुत्रकाम्यया आत्मनः पुत्रेच्छया। काम्यच्' इति पुत्रशब्दात् काम्यच्प्रत्ययः। 'अ प्रत्ययात्' इति पुत्रकाम्यटातोरकारप्रत्ययः ततः टाप्। तया तौ दम्पती जायापती। राजदन्तादिषु जायाशब्दस्य दमिति निपातनात् साधु प्रयतौ पूतौ विधातारं

প্রজাপতিম্ অভ্যর্চ্য। 'স খলু পুত্রার্থিভিরুপাস্যতে' ইতি মাল্লিকাঃ। গুরোঃ কুলগুরোঃ বশিষ্ঠস্য আশ্রমং জগ্মতুঃ পুত্রপ্রাপ্ত্যুপায়াপেক্ষয়া ইতি শেষঃ॥

৩৫। অনন্তর তাঁহারা স্ত্রী-পুরুষে পুত্রলাভবাসনায় প্রজাপতির অভ্যর্চ্চনা করিয়া কুলগুরু বশিষ্ঠদেবের আশ্রমাভিমুখে প্রস্থান করিলেন।

**স্নিগ্ধগম্ভীরনির্ঘোষমেকং স্যন্দনমাস্থিতৌ।**

**প্রাবৃষেণ্যং পয়োবাহং বিদ্যুদৈরাবতাবিব॥ ৩৬**

৩৬ অ:। স্নিগ্ধগম্ভীরনির্ঘোষম্ একং স্যন্দনম্ আস্থিতৌ (অতএব) (স্নিগ্ধগম্ভীরনির্ঘোষং) প্রাবৃষেণ্যং পয়োবাহম্ আস্থিতৌ বিদ্যুদৈরাবতৌ ইব (স্থিতৌ)॥ বাচ্য—আস্থিতাভ্যাং বিদ্যুদৈরাবতাভ্যাম্।

৩৬। স্নিগ্ধেতি। স্নিগ্ধঃ মধুরঃ গম্ভীরঃ নির্ঘোষঃ যস্য তম্, একং স্যন্দনং রথম্। প্রাবৃষি ভবঃ প্রাবৃষেণ্যঃ। 'প্রাবৃষ এণ্য' ইতি এণ্যপ্রত্যয়ঃ। তং প্রাবৃষেণ্যং পয়োবাহং মেঘং বিদ্যুদৈরাবতৌ ইব আস্থিতৌ আরূঢ়ৌ জগ্মতুঃ ইতি পূর্বেণ সম্বন্ধঃ। ইরাঃ আপঃ। 'ইরা ভূবাক্সুরাপ্সু স্যাৎ' ইত্যমরঃ। ইরাবান্ সমুদ্রঃ তত্র ভবঃ ঐরাবতঃ অভ্রমাতঙ্গঃ। 'ঐরাবতাভ্রমাতঙ্গৈ-রাবণাভ্রমুবল্লভাঃ' ইত্যমরঃ। 'অভ্রমাতঙ্গত্বাচ্চাভ্রস্থত্বাদভ্ররূপত্বাৎ' ইতি ক্ষীরস্বামী। অতএব মেঘারোহণং বিদ্যুত্সাহচর্য্যঞ্চ ঘটতে। কিন্তু বিদ্যুত ঐরাবতসাহচর্য্যাদৈব ঐরাবতী সংজ্ঞা ঐরাবতস্য স্ত্রী ঐরাবতীতি ক্ষীরস্বামী। তস্মাৎ সুষ্ঠূক্তং বিদ্যুদৈরাবতাবিবেতি। একরথারোহণোক্ত্যা কার্য্যসিদ্ধিবীজং দম্পত্যোরত্যন্তসৌমনস্যং সূচয়তি।

৩৬। বর্ষাকালীন জলধরে সমারূঢ় বিদ্যুৎ ও ঐরাবতের ন্যায় তাঁহারা স্নিগ্ধ গম্ভীর শব্দযুক্ত একই রথে আরোহণ করিয়া গমন করিতে লাগিলেন।

**মা ভূদাশ্রমপীড়েতি পরিমেয়পুরঃসরৌ।**

**অনুভাববিশেষাত্তু সেনাপরিবৃতাবিব॥ ৩৭**

৩৭ অ:। "আশ্রমপীড়া মাভূৎ" ইতি (হেতোঃ) পরিমেয়পুরঃসরৌ (কিন্তু) অনুভাববিশেষাৎ সেনাপরিবৃতৌ ইব (লক্ষ্যমাণৌ)॥ বাচ্য—আশ্রমপীড়য়া মা ভূয়ত।—সরাভ্যাং—পরিবৃতাভ্যাম্।

৩৭। মা ভূদিতি। পুনঃ কিম্ভূতৌ দম্পতী? আশ্রমপীড়া মা ভূৎ মা অস্ত্বিতি হেতোঃ। 'মাঙি লুঙ্' ইত্যাশীরর্থে লুঙ্ 'ন মাঙ্যোগে' ইত্যড়াগমনিষেধঃ। পরিমেয়পুরঃসরৌ পরিমিতপরিবারৌ, অনুভাববিশেষাত্তু তেজোবিশেষাৎ, সেনাপরিবৃতৌ ইব স্থিতৌ।

৩৭। পাছে গুরুদেবের আশ্রমে কোন উপদ্রব ঘটে এই আশঙ্কায় তাঁহারা পরিমিত পরিচারক সমভিব্যাহারে গমন করিলেন; কিন্তু তাঁহাদিগের তেজঃ-প্রভাবে বোধ হইতে লাগিল যেন তাঁহারা চতুরঙ্গিণী সেনা বেষ্টিত হইয়াই গমন করিতেছেন।

सेव्यमानौ सुखस्पर्शैः शालनिर्य्यासगन्धिभिः ।
पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥ ३८

३८ अः । (पुनः किम्भूतौ)—शालनिर्य्यासगन्धिभिः पुष्परेणूत्किरैः आधूतवनराजिभिः अतएव सुखस्पर्शैः वातैः सेव्यमानौ ॥ वाच्य—सेव्यमानाभ्याम् ।

३८ । पुनः कथम्भूतौ । सुखः शीतलत्वात् प्रियः स्पर्शो येषां तैः, शालनिर्य्यासगन्धिभिः सर्जतरुनिस्यन्दगन्धवद्भिः । 'शालः सर्जतरुः स्मृतः' इति शाश्वतः । उत्किरन्ति विक्षिपन्तीति उत्किराः । 'इगुपध'—इत्यादिना किरतेः कप्रत्ययः । पुष्परेणूनामुत्किरास्तैः. आधूता मान्द्यादीषत्कम्पिता वनराजयो यैस्तैर्वातैः सेव्यमानौ ।

৩৮। শালনির্য্যাসগন্ধবাহী ও পুষ্পরেণুযুক্ত সুখস্পর্শ সমীরণ বনরাজি মন্দ মন্দ কম্পিত করিয়া পথিমধ্যে তাঁহাদিগের সেবা করিতে লাগিল ॥

मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।
षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥३९

३९ अः । (पुनः कथम्भूतौ)—रथनेमिस्वनोन्मुखैः शिखण्डिभिः द्विधा भिन्नाः षड्जसंवादिनीः (अतएव) मनोऽभिरामाः केकाः शृण्वन्तौ ॥ वाच्य—शृण्वद्भ्याम् ।

३९ । रथनेमिस्वनोन्मुखैः मेघध्वनिशङ्कया उन्नमितमुखैरित्यर्थः । शिखण्डिभिर्मयूरैर्द्विधा भिन्नाः । शुद्धविकृतभेदेनाविष्कृतावस्थायां च्युताच्युतभेदेन वा षड्जो द्विविधः, तस्मात्तच्छ्यात्केका अपि द्विधा भिन्ना इत्युच्यते । अत एवाह—षड्जसंवादिनीरिति । षड्भ्यः स्थानेभ्यो जातः—षड्जः । तदुक्तम्—"नासाकण्ठमुरस्तालुजिह्वादन्तांश्च संस्पृशन् । षड्भ्यः संजायते यस्मात्तस्मात् षड्ज इति स्मृतः ॥" स च तन्त्रीकण्ठजन्मा स्वरविशेषः । "निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥" इत्यमरः । षड्जेन संवादिनीः सदृशीः । तदुक्तं मातङ्गेन—"षड्जं मयूरो वदति" इति । मनोभिरामाः मनसः प्रियाः । के मूर्ध्नि कायन्ति ध्वनन्तीति केकाः मयूरवाण्यः । "केका वाणी मयूरस्य" इत्यमरः । ताः केकाः शृण्वन्तौ । इति श्लोकार्थः ।

৩৯। রথচক্রের গম্ভীর রব শ্রবণে মেঘগর্জ্জন ভ্রমে উন্মুখ ময়ূর-ময়ূরীগণের স্ত্রী-পুরুষ-ভেদে দ্বিধা উচ্চারিত ও ষড়্জের অনুরূপ সেই কেকারব তাঁহাদের শ্রবণাভিরাম হইয়াছিল ॥

परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ ४०

৪০ অ:। (পুন: কিম্ভূতৌ)—অদূরোজ্ঝিতবর্ত্মসু স্যন্দনাবদ্ধদৃষ্টিষু মৃগদ্বন্দ্বেষু পরস্পরাক্ষি-সাদৃশ্যং পশ্যন্তৌ॥ বাচ্য—পশ্যদ্‌ভ্যাম্।

৪০। বিশ্রম্ভাৎ তপঃপ্রভাবাৎ ন হি অধিকবলো হীনবলং বাধতে ইতি বিশ্বাসাৎ অদূরং সমীপং যথা ভবতি যথোজ্ঝিতং বর্ত্ম যৈস্তেষু। স্যন্দনাবদ্ধদৃষ্টিষু স্যন্দনে রথে আবদ্ধা আসক্তিতা দৃষ্টির্নেত্রং যৈস্তেষু। 'দৃগ্‌-দৃষ্টিনেত্রলোচনচক্ষুর্নয়নাম্বকেক্ষণাক্ষীণি' ইতি হলায়ুধঃ। কৌতুকবশা-দ্রথাসক্তদৃষ্টিষ্বিত্যর্থঃ. মৃগ্যশ্চ মৃগাশ্চ মৃগাঃ। 'পুমান্ স্ত্রিয়া' ইত্যেকশেষঃ। তেষাং দ্বন্দ্বেষু মিথুনেষু। 'স্ত্রীপুংসৌ মিথুনং দ্বন্দ্বম্' ইত্যমরঃ। পরস্পরাক্ষ্ণাং সাদৃশ্যং পশ্যন্তৌ। দ্বন্দ্বশব্দসামর্থ্যান্মৃগীষু সুদক্ষিণাক্ষিসাদৃশ্যং দিলীপঃ, দিলীপাক্ষিসাদৃশ্যঞ্চ মৃগেষু সুদক্ষিণা ইত্যেবং বিবেক্তব্যম্।

৪০। কোথাও বা মৃগমিথুন বিশ্বাসবশতঃ রথের প্রতি দৃষ্টিপাত করিয়া রহিল এবং রাজদম্পতি তাহাদের নেত্রে পরস্পরের নেত্রসাদৃশ্য সন্দর্শন করিতে করিতে গমন করিতে লাগিলেন॥

শ্রেণীবন্ধাদ্বিতন্বদ্ভিরস্তম্ভাং তোরণস্রজম্।
সারসৈঃ কলনির্হ্রাদৈঃ ক্বচিদুন্নমিতাননৌ॥৪১

৪১ অ:। (পুন: কথম্ভূতৌ)—শ্রেণীবন্ধাৎ অস্তম্ভাং তোরণস্রজং বিতন্বদ্ভিরিব স্থিতৈঃ কল-নির্হ্রাদৈঃ সারসৈঃ ক্বচিৎ উন্নমিতাননৌ॥ বাচ্য—উন্নমিতাননাভ্যাম্।

৪১। শ্রেণীবন্ধাৎ পঙ্‌ক্তিবন্ধনাৎ তোরণস্তম্ভমাধারস্তম্ভরহিতাম্। তোরণং বহির্দ্বারম্। 'তোরণোঽস্ত্রী বহির্দ্বারম্' ইত্যমরঃ। তত্র যা স্রগ্‌ বিরচ্যতে তাং তোরণস্রজং বিতন্বদ্ভিঃ কুর্বদ্ভিরিবেত্যর্থঃ। উৎপ্রেক্ষাব্যঞ্জকেব-শব্দপ্রয়োগাভাবেন গম্যোৎপ্রেক্ষেয়ম্। কলনির্হ্রাদৈরব্যক্তমধুরধ্বনিভিঃ সারসৈঃ পক্ষিবিশেষৈঃ করণৈঃ ক্বচিদুন্নমিতাননৌ 'সারসো মৈথুনো কামী গোনর্দঃ পুষ্করাহ্বয়ঃ' ইতি যাদবঃ।

৪১। কোথাও সারসকুল কলধ্বনি করিয়া যেন স্তম্ভহীন তোরণমালা বিস্তার পূর্ব্বক শ্রেণীবদ্ধ হইয়া আকাশমার্গে গমন করিতেছিল। তাঁহারা উভয়ে সেই শোভা সন্দর্শন করিবার নিমিত্ত কখন কখন মস্তক উত্তোলন করিতে লাগিলেন॥

পবনস্যানুকূলত্বাৎ প্রার্থনাসিদ্ধিশংসিনঃ।
রজোভিস্তুরগোৎকীর্ণৈরস্পৃষ্টালকবেষ্টনৌ॥ ৪৩

৪২ অ:। (পুন: কীদৃশৌ)—প্রার্থনাসিদ্ধিশংসিনঃ পবনস্য অনুকূলত্বাৎ তুরগোৎকীর্ণৈঃ রজোভিঃ অস্পৃষ্টালকবেষ্টনৌ॥ বাচ্য—অস্পৃষ্টালকবেষ্টনাভ্যাম্।

৪২। প্রার্থনাসিদ্ধিশংসিনোঽনুকূলত্বাদেব মনোরথসিদ্ধি-সূচকস্য পবনস্যানুকূলত্বাদ্‌গন্তব্যদিগভিমুখত্বাৎ। তুরগোৎকীর্ণৈ রজোভিরস্পৃষ্টা

अलका ईष्याः वेष्टनमुष्णीषं च राज्ञो ययोस्तौ तथोक्तौ। 'शिरसा वेष्टनशोभिना सुतः' ( ८।१२ ) इति वक्ष्यति।

৪২। তৎকালে অভীষ্টসিদ্ধিসূচক অনুকূল বায়ু প্রবাহিত হইতেছিল, সুতরাং অশ্বখুরোত্থিত ধূলিপটল রাজার উষ্ণীষ ও মহিষীর চূর্ণকুন্তল স্পর্শ করিতে পারে নাই॥

सरसीष्वरविन्दानां वीचिविक्षोभशीतलम्।
आमोदमुपजिघ्रन्तौ स्वनिश्वासानुकारिणम्॥ ४३

৪৩ অ:। (পুন: কিংবিধৌ)—বীচিবিক্ষোভশীতলং স্বনিশ্বাসানুকারিণং সরসীষু অরবিন্দানাম্ আমোদম্ উপজিঘ্রন্তৌ॥ বাচ্য—উপজিঘ্রদ্ভ্যাম্।

४३। सरसीषु वीचिविक्षोभशीतलम् ऊर्म्मिसङ्घट्टनेन शीतलं, स्वनिश्वासमनुकर्त्तुं शीलमस्येति स्वनिश्वासानुकारिणम्, एतेन तयोरुत्कृष्टस्त्रीपुंसजातीयत्वमुक्तम्। अरविन्दानामामोदमुपजिघ्रन्तौ घ्राणेन गृह्णन्तौ।

৪৩। কোন স্থানে তাঁহারা সরোবরমধ্যে বিকসিত উৎপলসমূহের তরঙ্গসঙ্গশীতল স্বীয়নিশ্বাসানুরূপ পদ্মগন্ধ আঘ্রাণ করিতে লাগিলেন॥

ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम्।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः॥ ৪৪

৪৪ অ:। (পুন: কিংভূতৌ)—আত্মবিসৃষ্টেষু যূপচিহ্নেষু গ্রামেষু যজ্বনাম্ অমোঘা আশিষঃ অর্ঘ্যানুপদং প্রতিগৃহ্ণন্তৌ॥ বাচ্য—প্রতিগৃহ্ণদ্ভ্যাম্।

৪৪। आत्मविसृष्टेषु स्वदत्तेषु। यूपो नाम संस्कृतः पशुबन्धाय दारुविशेषः, यूपा एव चिह्नानि येषां तेषु ग्रामेषु, अमोघाः सफलाः, यज्वनां विधिनेष्टवताम्। 'यज्वा तु विधिनेष्टवान्' इत्यमरः। 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्ययः। आशिषः आशीर्वादान्। अर्घः पूजाविधिः। तदर्थं द्रव्यमर्घ्यं। 'पादार्घाभ्यां च' इति यत्प्रत्ययः। 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः। अर्घ्यस्यानुपदमन्वक्, अर्घ्यस्वीकारानन्तरमित्यर्थः। प्रतिगृह्णन्तौ स्वीकुर्वन्तौ पदस्य पश्चादनुपदं पश्चादर्थेऽव्ययीभावः। 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः।

৪৪। কোথাও বা তাঁহারই প্রদত্ত যূপচিহ্নিত গ্রামসমূহ হইতে যাজ্ঞিকগণ আগমন করিয়া আশীর্ব্বাদ প্রয়োগ করিলেন, রাজদম্পতিও অর্ঘ্যপ্রদান পূর্ব্বক তাঁহাদের অমোঘ আশীর্ব্বাদ গ্রহণ করিলেন॥

हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम्॥४५

৪৫ অ:। (পুনঃ কথম্ভূতৌ)—হৈয়ঙ্গবীনম্ আদায় উপস্থিতান্ ঘোষবৃদ্ধান্ বন্যানাং মার্গশাখিনাং নামধেয়ানি পৃচ্ছন্তৌ ॥ বাচ্য—পৃচ্ছদ্ভ্যাম্ ।

৪৫। হ্যস্তনগোদোহোদ্ভবং ঘৃতং হৈয়ঙ্গবীনম্ । হ্যঃ পূর্ব্বেদ্যুর্ভবম্ । 'তত্তু হৈয়ঙ্গবীনং যদ্ধ্যোগোদোহোদ্ভবং ঘৃতম্' ইত্যমরঃ । 'হৈয়ঙ্গবীনং সংজ্ঞায়াম্' ইতি নিপাতঃ । তন্নব্যোদ্ঘৃতমাদায় উপস্থিতান্ ঘোষবৃদ্ধান্ 'ঘোষ আভীরপল্লী স্যাত্' ইত্যমরঃ । বন্যানাং মার্গশাখিনাং নামধেয়ানি পৃচ্ছন্তৌ । 'দুহ্যাচ্—' ইত্যাদিনা পৃচ্ছতের্দ্বিকর্ম্মকত্বম্ । কুলকম্ ।

৪৫। তাঁহারা সদ্যোজাতঘৃতহস্তে উপস্থিত ঘোষবৃদ্ধদিগকে পথিস্থিত বন্যবৃক্ষ সকলের নাম জিজ্ঞাসা করিতে করিতে গমন করিয়াছিলেন ॥

কাপ্যভিখ্যা তয়োরাসীদ্ ব্রজতোঃ শুদ্ধবেশয়োঃ ।
হিমনির্ম্মুক্তয়োর্যোগে চিত্রাচন্দ্রমসোরিব ॥ ৪৬

৪৬ অ:। হিমনির্ম্মুক্তয়োঃ চিত্রাচন্দ্রমসোঃ ইব যোগে শুদ্ধবেশয়োঃ ব্রজতোঃ তয়োঃ কাপি অভিখ্যা আসীত্ ॥ বাচ্য—কয়া অভিখ্যয়া অভূয়ত ।

৪৬। ব্রজতোর্গচ্ছতোঃ শুদ্ধবেশয়োরুজ্জ্বলনেপথ্যয়োস্তয়োঃ সুদক্ষিণাদিলীপয়োঃ । হিমনির্ম্মুক্তয়োশ্চিত্রাচন্দ্রমসোরিব যোগে সতি কাপি অনির্বাচ্যা অভিখ্যা শোভা আসীত্ । 'অভিখ্যা নামশোভয়োঃ' ইত্যমরঃ । 'আতশ্চোপসর্গে' ইত্যঙ্প্রত্যয়ঃ । চিত্রা নক্ষত্রবিশেষঃ । শিশিরাপগমে চৈত্র্যাং পৌর্ণমাস্যাং চিত্রাপূর্ণচন্দ্রমসোরিবেত্যর্থঃ ।

৪৬। শিশিরাপগমে চিত্রানক্ষত্রগত চন্দ্রমার ন্যায় বশিষ্ঠাশ্রমপ্রস্থিত পবিত্রবেশধারী সস্ত্রীক রাজা দিলীপের কি এক অপূর্ব্ব শোভা হইয়াছিল ॥

তত্তদ্ভূমিপতিঃ পত্ন্যৈ দর্শয়ন্ প্রিয়দর্শনঃ ।
অপি লঙ্ঘিতমধ্বানং বুবুধে ন বুধোপমঃ ॥ ৪৭

৪৭। সঃ বুধোপমঃ প্রিয়দর্শনঃ ভূমিপতিঃ তত্তত্ পত্ন্যৈ দর্শয়ন্ লঙ্ঘিতম্ অপি অধ্বানং ন বুবুধে ॥ বাচ্য—বুধোপমেন প্রিয়দর্শনেন ভূমিপতিনা দর্শয়তা লঙ্ঘিতঃ অধ্বা ।

৪৭। প্রিয়ং দর্শনং স্বরূপং যস্যাসৌ প্রিয়দর্শনঃ, দর্শনীয় ইত্যর্থঃ ভূমিপতিঃ পত্ন্যৈ তত্তদদ্ভুতং বস্তু দর্শয়ন্, লঙ্ঘিতমপি বাহিতমপি অধ্বানং ন বুবুধে ন জ্ঞাতবান্ । বুধঃ সৌম্য উপমা উপমানং যস্যেতি বিগ্রহঃ । ইদং বিশেষণং তত্তদ্দর্শয়িত্বমুপযোগিতয়া এতস্য জ্ঞাতৃত্বসূচনার্থম্ ।

৪৭। পণ্ডিতোপম প্রিয়দর্শন নৃপতি দিলীপ স্বীয় মহিষীকে পথিস্থিত বস্তুজাত প্রদর্শনে ব্যাসক্তচিত্ত হইয়া কত পথ অতিক্রম করিয়া আসিয়াছেন, তাহা বুঝিতে পারিলেন না ॥

स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः॥ ४८

৪৮ অ:। दुष्प्रापयशाः श्रान्तवाहनः महिषीसखः सः सायं संयमिनः तस्य महर्षेः आश्रमं प्रापत्। वाच्य—दुष्प्रापयशसा श्रान्तवाहनेन महिषीसखेन तेन आश्रमः प्रापि।

४८। दुष्प्रापयशाः दुष्प्रापम् अन्यदुर्लभं यशो यस्य सः तथोक्तः, श्रान्तवाहनो दूरोपगमनात् क्लान्तयुग्यः। महिष्याः सखा महिषीसखः। 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः। सहायान्तरनिरपेक्ष इति भावः। स राजा सायं सायंकाले संयमिनो नियमवतस्तस्य महर्षेर्वशिष्ठस्य आश्रमं प्रापत् प्राप। पुषादित्वादङ्।

৪৮। যশস্বী দিলীপের বাহনসমূহ সাতিশয় পরিশ্রান্ত হইয়া পড়িল। অনন্তর, সায়ংসময়ে তিনি মহিষী সমভিব্যাহারে সেই সংযমী মহর্ষি বশিষ্ঠের আশ্রমে সমুপস্থিত হইলেন।

वनान्तरादुपावृत्तैः समित्कुशफलाहरैः।
पूर्य्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः॥ ४९

৪৯ অ:। (आश्रमं किम्भूतम्) वनान्तरात् उपावृत्तैः समित्कुशफलाहरैः अदृश्याग्निप्रत्युद्यातैः तपस्विभिः पूर्य्यमाणम्॥ वाच्य—पूर्य्यमाणः (आश्रमः)।

४९। तमाश्रमं विशिनष्टि—वनान्तरादन्यस्माद्वनादुपावृत्तैः प्रत्यावृत्तैः समिधश्च कुशांश्च फलानि च आहर्तुं शीलं येषामिति समित्कुशफलाहराः तैः। 'आङि ताच्छील्ये' इति हरतेराङ्पूर्वादच्प्रत्ययः। अदृश्यैर्दर्शनायोग्यैरग्निभिर्वैतानिकैः प्रत्युद्याताः प्रत्युद्गताः तैस्तपस्विभिः पूर्य्यमाणम्। 'प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति' इति श्रुतेः। यथाह— 'कामं पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति। एवमेतमग्नयः प्रत्याधावन्ति सशकलान्दारूनिवाहरन्' इति।

৪৯। তপস্বিগণ সমিৎ, কুশ ও ফলাহরণ করিয়া বনান্তর হইতে প্রত্যাবৃত্ত হওয়াতে সেই আশ্রম পরিপূর্ণ হইয়া উঠিল। যজ্ঞীয় হুতাশন অদৃশ্যভাবে থাকিয়া তাহাদিগের প্রত্যুদ্গমন করিতে লাগিল।

आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः॥ ५०

৫০ অ:। (पुनः कथम्भूतम्)—नीवारभागधेयोचितैः उटजद्वाररोधिभिः (अत एव) ऋषिपत्नीनाम् अपत्यैः इव मृगैः आकीर्णम्॥ वाच्य—आकीर्णः (आश्रमः)।

५०। नीवाराणां भाग एव भागधेयः अंशः। 'रूपनामभागेभ्यो

ধেয়ঃ' ইতি বল্লাদ্যসূত্রাৎ স্বাভিধেয়ে ধেয়প্রত্যয়ঃ। তস্যোচিতৈঃ, অতএব উটজানাং পর্ণশালানাং দ্বাররোধিভির্দ্বাররোধকৈর্মৃগৈঃ ঋষিপত্নীনামপত্যৈরিব আকীর্ণং ব্যাপ্তম্ ।

৫০। যে আশ্রম ঋষিপত্নীদিগের সন্তানতুল্য নীবারধান্যের অংশভাগী, কুটীরদ্বার-প্রতিরোধী মৃগগণ কর্ত্তৃক আকীর্ণ ছিল ॥

**সেকান্তে মুনিকন্যাভিস্তৎক্ষণোজ্ঝিতবৃক্ষকম্ ।**
**বিশ্বাসায় বিহঙ্গানামালবালাম্বুপায়িনাম্ ॥ ৫১**

৫১ অঃ। (পুনঃ কিংবিধম্)—আলবালাম্বুপায়িনাং বিহঙ্গানাং বিশ্বাসায় মুনিকন্যাভিঃ সেকান্তে তৎক্ষণোজ্ঝিতবৃক্ষকম্ ॥ বাচ্য—তৎক্ষণোজ্ঝিতবৃক্ষকঃ (আশ্রমঃ)।

৫১। সেকান্তে বৃক্ষমূলসেচনাবসানে মুনিকন্যাভিঃ সেক্ত্রীভিঃ আলবালেষু জলাধারপ্রদেশেষু যদম্বু তৎপায়িনাম্। 'স্যাদালবালমাবালমাবাপঃ' ইত্যমরঃ। বিহঙ্গানাং পক্ষিণাং বিশ্বাসায় বিস্রম্ভায়। 'সমৌ বিশ্বাসবিস্রম্ভৌ' ইত্যমরঃ। তৎক্ষণে সেকক্ষণে উজ্ঝিতা বৃক্ষকা হ্রস্ববৃক্ষা যস্মিন্ তম্। হ্রস্বার্থে কপ্রত্যয়ঃ।

৫১। যে আশ্রমে আলবালজলপায়ী পক্ষিগণের বিশ্বাসের নিমিত্ত ঋষিকন্যাগণ বৃক্ষমূলে জলসেচন করিয়াই তৎক্ষণাৎ স্থানান্তরে গমন করিতেছিলেন ॥

**আতপাত্যয়সংক্ষিপ্তনীবারাসু নিষাদিভিঃ ।**
**মৃগৈর্বর্ত্তিতরোমন্থমুটজাঙ্গনভূমিষু ॥ ৫২**

৫২ অঃ। (পুনঃ কীদৃশম্)—আতপাত্যয়সংক্ষিপ্তনীবারাসু উটজাঙ্গনভূমিষু নিষাদিভির্মৃগৈঃ বর্ত্তিতরোমন্থম্ ॥ বাচ্য—বর্ত্তিতরোমন্থঃ (আশ্রমঃ)।

৫২। আতপস্যাত্যয়ে অপগমে সতি সংক্ষিপ্তা রাশীকৃতা নীবারাস্তৃণধান্যানি যাসু তাসু। 'নীবারাস্তৃণধান্যানি' ইত্যমরঃ। উটজানাং পর্ণশালানামঙ্গনভূমিষু চত্বরভাগেষু। 'পর্ণশালোটজোঽস্ত্রিয়াম্' ইতি চামরঃ। নিষাদিভিরুপবিষ্টৈর্মৃগৈর্বর্ত্তিতো নিষ্পাদিতো রোমন্থশ্চর্বিতচর্বণং যস্মিন্নাশ্রমে তম্।

৫২। যে আশ্রমের অঙ্গন-ভূমিতে রৌদ্রশোষিত নীবার-শস্য বেলাবসানে রাশীকৃত হইয়া পড়িয়া রহিয়াছে এবং তৎপার্শ্বে সুখশয়ান মৃগগণ রোমন্থ (চর্ব্বিত-চর্ব্বণ) করিতেছে ॥

**অভ্যুত্থিতাগ্নিপিশুনৈরতিথীনাশ্রমোন্মুখান্ ।**
**পুনানং পবনোদ্ধূতৈর্ধূমৈরাহুতিগন্ধিভিঃ ॥ ৫৩**

५३ अ: । (पुनः किम्भूतम्) -अभ्युत्थिताग्निपिशुनैः आहुतिगन्धिभिः पवनोद्धूतैः धूमैः आश्रमोन्मुखान् अतिथीन् पुनानम् ॥ वाच्य—पुनानः ( आश्रमः ) ।

५३ । अभ्युत्थिताः प्रज्वलिताः होमयोग्या इत्यर्थः । 'समिद्धेऽग्नावाहुतीर्जुहोति' इति वचनात् । तेषामग्नीनां पिशुनैः सूचकैः पवनोद्धूतैः आहुतिगन्धो येषामस्तीत्याहुतिगन्धिनः तैर्धूमैराश्रमोन्मुखानतिथीन् पुनानं पवित्रीकुर्वाणम् । कुलकम् ।

৫৩। যে আশ্রম, প্রজ্বলিত হোম-হুতাশনসূচক, আহুতিগন্ধপূর্ণ, পবনপরিচালিত ধূমরাশি দ্বারা আগমনোন্মুখ অতিথিদিগকে পবিত্র করিতেছে ॥

अथ यन्तारमादिश्य धुर्य्यान् विश्रामयेति सः ।
तामवारोहयत् पत्नीं रथादवततार च ॥ ५४

५४ अ: । अथ सः 'धुर्य्यान् विश्रामय" इति यन्तारं आदिश्य तां पत्नीं रथात् अवारोहयत् (स्वयं) अवततार च ॥ वाच्य—तेन सा पत्नी अवारोह्यत, अवतेरे ।

५४ । अथाश्रमप्राप्त्यनन्तरं स राजा यन्तारं सारथिम्, धुरं वहन्तीति धुर्य्याः युग्याः । 'धुरो यड्ढकौ' इति यत्प्रत्ययः । 'धूर्वहे धुर्य्य धौरेयधुरीणाः सधुरन्धराः' इत्यमरः । धुर्य्यान् रथाश्वान् विश्रामय विनीतश्रमान् कुरु इत्यादिश्य आज्ञाप्य तां पत्नीं रथादवारोहयत् अवतारितवान्, स्वयं च अवततार । 'विश्रमय' इति ह्रस्वपाठे 'जनीजॄष्—' इति मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वः । दीर्घपाठे 'मितां ह्रस्वः' इति सूत्रे 'वा चित्तविरागे' इत्यतो 'वा' इत्यनुवर्त्त्य व्यवस्थितविभाषाश्रयणाद्ध्रस्वाभाव इति वृत्तिकारः ।

৫৪। অনন্তর রাজা দিলীপ, অশ্বগণকে বিশ্রাম করাইবার নিমিত্ত সারথিকে আদেশ প্রদানপূর্ব্বক মহিষীকে রথ হইতে অবতারিত করিলেন ; আপনিও অবতীর্ণ হইলেন ॥

तस्मै सभ्याः सभार्य्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५

५५ अ: । सभ्याः गुप्ततमेन्द्रियाः मुनयः गोप्त्रे अर्हते नयचक्षुषे सभार्य्याय तस्मै अर्हणां चक्रुः ॥ वाच्य—सभ्यैः गुप्ततमेन्द्रियैः मुनिभिः अर्हणा चक्रे ॥

५५ । सभायां साधवः सभ्याः । 'सभाया यः' इति यप्रत्ययः । गुप्ततमेन्द्रिया अत्यन्तनियमितेन्द्रिया मुनयः सभार्य्याय गोप्त्रे रक्षकाय, नयः शास्त्रमेव चक्षुस्तत्त्वावेदकं प्रमाणं यस्य तस्मै नयचक्षुषे, अतएव अर्हते प्रशस्ताय पूज्यायेत्यर्थः । "अर्हः प्रशंसायाम्" इति शतृप्रत्ययः ।

तस्मै राज्ञेऽर्हणां पूजां चक्रुः । "पूजा नमस्यापचितिः सपर्य्यार्चार्हणाः समाः" इत्यमरः ।

৫৫ । শিষ্টাচারকুশল জিতেন্দ্রিয় তাপসগণ, লোকরক্ষক শাস্ত্রতত্ত্বজ্ঞ সস্ত্রীক নরপতি দিলীপের যথোচিত অভ্যর্থনা করিলেন ॥

विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५६

৫৬ অঃ । स सायन्तनस्य विधेरन्ते स्वाहया हविर्भुजमिव अरुन्धत्या अन्वासितं तपोनिधिं ददर्श ॥ वाच्य—तेन हविर्भुक् इव अन्वासितः तपोनिधिः ददृशे ।

৫৬ । स राजा सायन्तनस्य सायम्भवस्य । "सायंचिरम्''—'' इत्यादिना ट्युल्प्रत्ययः । विधेर्जपहोमाद्यनुष्ठानस्य अन्ते अवसाने, अरुन्धत्या अन्वासितं पश्चादुपवेशनेन उपसेवितम् । कर्म्मणि क्तः, उपसर्गवशात् सकर्म्मकत्वम्, 'अन्वास्यैनाम्' इत्यादिवदुपपद्यते । तपोनिधिं वशिष्ठम्, स्वाहया स्वाहादेव्या । 'अथाग्नायी स्वाहा च हुतभुक्प्रिया' इत्यमरः । अन्वासितं हविर्भुजमिव ददर्श । 'समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिकः । जपं होमं च कुर्व्वाणो नाभिवाद्यो द्विजो भवेत् ।' इत्यनुष्ठानस्य मध्ये अभिवादननिषेधाद्विधेरन्ते ददर्शेत्युक्तम् । अन्वासनं चात्र पतिव्रताधर्म्मत्वेनोक्तं न तु कर्माङ्गत्वेन विधेरन्त इति कर्म्मणः समाप्त्यभिधानात्

৫৬ । অনন্তর মহর্ষির সায়ংকালোচিত জপহোমাদি সমাপ্ত হইলে, মহীপতি দিলীপ, স্বাহাযুক্ত বহ্নির ন্যায় অরুন্ধতীর সহিত একাসনোপবিষ্ট তপোধন বশিষ্ঠদেবকে সন্দর্শন করিলেন ॥

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५७

৫৭ অঃ । राजा मागधी राज्ञी च (उभौ) तयोः पादान् जगृहतुः । गुरुर्गुरुपत्नी च प्रीत्या तौ प्रतिननन्दतुः ॥ वाच्य—राज्ञा मागध्या राज्ञ्या च पादा जगृहिरे । गुरुणा गुरुपत्न्या च तौ प्रतिननन्दाते ।

৫৭ । मागधी मगधराजपुत्री राज्ञी सुदक्षिणा राजा च तयोः अरुन्धतीवशिष्ठयोः पादाञ्जगृहतुः । 'पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । पादग्रहणमभिवादनम् । गुरुपत्नी गुरुश्च कर्त्तारौ । सा च स च तौ सुदक्षिणा दिलीपौ कर्म्मभूतौ । प्रीत्या हर्षेण प्रतिननन्दतुः । आशीर्वादादिभिः सम्भावयाञ्चक्रतुरित्यर्थः ।

৫৭ । অনন্তর মহীপতি দিলীপ এবং সেই মগধরাজ-দুহিতা রাজ্ঞী সুদক্ষিণা উভয়ে

গুরুপত্নীর চরণ বন্দনা করিলেন। বশিষ্ঠ এবং অরুন্ধতীও প্রীতমনে তাঁহাদিগকে আশীর্ব্বাদদ্বারা প্রত্যভিনন্দিত করিলেন ॥

**तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।**

**पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥ ५८**

५८ अः। मुनिः आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमं राज्याश्रममुनिं तं राज्ये कुशलं पप्रच्छ ॥ वाच्य—मुनिना···परिश्रमः···मुनिः सः पप्रच्छे।

५८। मुनिः, अतिथ्यर्थमातिथ्यम्। 'अतिथेर्ञ्यः' इति ञ्यप्रत्ययः। आतिथ्यस्य क्रिया, तया शान्तो रथक्षोभेण यः परिश्रमः स यस्य स तं तथोक्तम् राज्यमेवाश्रमस्तत्र मुनिम्, मुनितुल्यमित्यर्थः। तं दिलीपं राज्ये कुशलं पप्रच्छ। पृच्छतेस्तु द्विकर्म्मकत्वमित्युक्तम्। यद्यपि राज्यशब्दः पुरोहितादिष्वन्तर्गतत्वाद्राजकर्म्मवचनः, तथाप्यत्र सप्ताङ्गवचनः। 'उपपन्नं ननु शिवं सप्तस्वङ्गेषु' (१।६०) इत्युत्तरविरोधात्। तथाह मनुः—'स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत्। सप्तैतानि समस्तानि लोकेऽस्मिन् राज्यमुच्यते' इति। तत्र 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्। वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च'॥ इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वाद्ब्राह्मणोचितः कुशलप्रश्न एव कृत इत्यनुसन्धेयम्। अतएवोक्तम् 'राज्याश्रममुनिम्' इति।

৫৮। আতিথ্য-সৎকার দ্বারা তাঁহাদিগের রথারোহণজনিত পথ-পর্য্যটন-ক্লেশ অপনোদিত হইলে মহর্ষি বশিষ্ঠ রাজর্ষি দিলীপকে রাজ্যের কুশল জিজ্ঞাসা করিলেন ॥

**अथाथर्व्वनिधेस्तस्य विजितारिपुरः पुरः ।**

**अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ५९**

५९ अः। अथ विजितारिपुरः वदतां वरः अर्थपतिः अथर्व्वनिधेः तस्य पुरः अर्थ्यां वाचम् आददे ॥ वाच्य—पुरेण···वरेण अर्थपतिना अर्थ्या वाक्।

५९। अथ प्रश्नानन्तरं विजितारिपुरो विजितशत्रुनगरो वदतां वक्तॄणां वरः श्रेष्ठः। 'यतश्च निर्धारणम्' इति षष्ठी। अर्थपतिः राजा, अथर्वणोऽथर्ववेदस्य निधेस्तस्य मुनेः पुरः अग्रे, अर्थ्याम् अर्थादनपेताम्। 'धर्म्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः। वाचमाददे वक्तुमुपक्रान्तवानित्यर्थः। अथर्व्वनिधेरित्यनेन पुरोहितकृत्याभिज्ञत्वात् तत्कर्म्मनिर्वाहकत्वं मुनेरस्तीति सूच्यते। यथाह कामन्दकः;—'त्रय्यां च दण्डनीत्यां च कुशलः स्यात् पुरोहितः। अथर्व्वविहितं कुर्य्यान्नित्यं शान्तिकपौष्टिकम्।' इति।

৫৯। অনন্তর সেই শত্রুপুরবিজয়ী বাগ্মিশ্রেষ্ঠ রাজা, অথর্ব্ববেদবেত্তা বশিষ্ঠদেবের নিকট অর্থযুক্ত বক্ষ্যমাণ বাক্য প্রয়োগ করিলেন ॥

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे।
दैवीनां मानुषीणाञ्च प्रतिहर्त्ता त्वमापदाम्॥ ६०

६० अः। मम सप्तसु अङ्गेषु शिवम् उपपन्नं ननु, यस्य मे त्वं दैवीनां मानुषीणाञ्च आपदां प्रतिहर्त्ता॥ वाच्य—शिवेन उपपन्नेन। त्वया प्रतिहर्त्रा (भूयते)।

६०। हे गुरो, सप्तस्वङ्गेषु स्वाम्यमात्यादिषु। 'स्वाम्यमात्यसुहृत् कोशराष्ट्रदुर्गबलानि च। सप्ताङ्गानि' इत्यमरः। शिवं कुशलमुपपन्नं ननु युक्तमेव नन्ववधारणे। 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः। कथमित्यत्राह यस्य मे दैवीनां देवेभ्य आगतानां दुर्भिक्षादीनां मानुषीणां मनुष्येभ्य आगतानां चोरभयादीनाम्। उभयत्रापि 'तत आगतः' इत्यण्। 'टिड्ढाणञ्'—इत्यादिना ङीप्। आपदां व्यसनानां त्वं प्रतिहर्त्ता वारयितासि। अत्राह कामन्दकः—'हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा। इति पञ्चविधं दैवं मानुषं व्यसनं ततः। आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम्' इति।

৬০। (হে ভগবন্!) যখন আপনি আমার দৈবী এবং মানুষী এই উভয়বিধ বিপদের প্রতিকারকর্ত্তা, তখন আমার সপ্তাঙ্গ রাজ্যের সর্ব্বাঙ্গীন মঙ্গল অবধারিত॥

तव मन्त्रकृतो मन्त्रैर्दूरात् प्रशमितारिभिः।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः॥ ६१

६१ अः। मन्त्रकृतस्तव दूरात् प्रशमितारिभिः मन्त्रैः मे दृष्टलक्ष्यभिदः शराः प्रत्यादिश्यन्ते इव॥ वाच्य—लक्ष्यभिद्भिः शरैः प्रत्यादिश्यते।

६१। तत्र मानुषापत्प्रतीकारमाह—दूरात्परोक्ष एव प्रशमितारिभिः। मन्त्रान् कृतवान्मन्त्रकृत्। 'सुकर्म्मपापमन्त्रपुण्येषु कृञः' इति क्विप्। तस्य मन्त्रकृता मन्त्राणां स्रष्टुः प्रयोक्तुर्वा तव मन्त्रैः कर्त्तृभिः दृष्टं प्रत्यक्षं यल्लक्ष्यं तन्मात्रं भिन्दन्तीति दृष्टलक्ष्यभिदो मे शराः प्रत्यादिश्यन्त इव। वयमेव समर्थाः किमेभिः पिष्टपेषकैरिति निराक्रियन्त इवेत्युत्प्रेक्षा। 'प्रत्यादेशो निराकृतिः' इत्यमरः। त्वन्मन्त्रसामर्थ्यादेव नः पौरुषं फलतीति भावः।

৬১। আমার শরনিকর কেবল প্রত্যক্ষ লক্ষ্যভেদী, কিন্তু আপনার উদ্ভাবিত মন্ত্রসকল পরোক্ষেও শত্রু জয় করিয়া থাকে, অতএব আমার শরসমূহ যেন স্বকার্য্যের অবসর না পাইয়াই এক প্রকার নিষ্ক্রিয় হইয়া রহিয়াছে॥

हविरावर्जितं होतस्त्वया विधिवदग्निषु।
वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम्॥ ६२

६१ अ: । हे होतः, त्वया अग्निषु विधिवत् आवर्जितं हविः अवग्रहविशोषिणां शस्यानां वृष्टिर्भवति ॥ वाच्य—आवर्जितेन हविषा वृष्ट्या भूयते ।

६२। सम्प्रति दैविकापत्प्रतीकारमाह—हे होतः, त्वया विधिवदग्निष्वावर्जितं प्रक्षिप्तं हविराज्यादिकं कर्तृ अवग्रहो वर्षप्रतिबन्धः। 'अवे ग्रहो वर्षप्रतिबन्धे' इत्यप्प्रत्ययः। 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः। तेन विशोषिणां विशुष्यतां शस्यानां वृष्टिर्भवति। वृष्टिरूपेण शस्यान्युपजीवयतीति भावः। अत्र मनुः—'अग्नौ दत्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति।

৬২। হে ভগবন্! আপনি বেদোক্তবিধানে অগ্নিতে যে ঘৃতাদির আহুতি প্রদান করিয়া থাকেন, তাহাই জলধারায় পরিণত হইয়া, আমার রাজ্যে অনাবৃষ্টি নিবন্ধন পরিশুষ্ক শস্যের পুনর্জ্জীবন সম্পাদন করে ॥

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६३

६३ अः। मदीयाः प्रजा निरातङ्काः निरीतयः (सत्यः) यत् पुरुषायुषजीविन्यः भवन्ति त्वद्ब्रह्मवर्चसं तस्य हेतुः॥ वाच्य—मदीयाभिः प्रजाभिः निरातङ्काभिः निरीतिभिः पुरुषायुषजीविनीभिः, त्वद्ब्रह्मवर्चसेन हेतुना भूयते।

६३। मदीयाः प्रजाः। आयुर्जीवितकालः, पुरुषस्यायुः पुरुषायुषम्, वर्षशतमित्यर्थः। 'शतायुर्वै पुरुषः' इति श्रुतेः। 'अचतुर'—इत्यादिसूत्रेणाच्प्रत्ययान्तो निपातः। पुरुषायुषं जीवन्तीति पुरुषायुषजीविन्यः। निरातङ्का निर्भयाः। 'आतङ्को भयमाशङ्का' इति हलायुधः। निरीतयोऽतिवृष्ट्यादिरहिता इति यत्, तस्य सर्वस्य त्वद्ब्रह्मवर्चसं तव व्रताध्ययनसम्पत्तिरेव हेतुः। 'व्रताध्ययनसम्पत्तिरित्येतद्ब्रह्मवर्चसम्' इति हलायुधः। ब्रह्मणो वर्चो ब्रह्मवर्चसम्। 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच्प्रत्ययः 'अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः। अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः'॥ इति कामन्दकः।

৬৩। (হে ভগবন্!) আমার প্রজারা যে নিরাতঙ্ক হইয়া অনাবৃষ্টি ও অতিবৃষ্টি প্রভৃতি দৈব-উপদ্রবে পীড়িত না হইয়া শতবর্ষ জীবিত আছে, আপনার ব্রহ্মতেজই তাহার একমাত্র কারণ।

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः सम्पदो मे निरापदः ॥ ६४

६४ अः। ब्रह्मयोनिना गुरुणा त्वया एवं चिन्त्यमानस्य अतएव निरापदः मे सम्पदः कथं सानुबन्धाः न स्युः॥ वाच्य—सम्पद्भिः सानुबन्धाभिः भूयेत।

६४। ब्रह्मा योनिः कारणं यस्य तेन ब्रह्मपुत्रेण गुरुणा त्वया एवमुक्तप्रकारेण चिन्त्यमानस्य अनुध्यायमानस्य अतएव निरापदो व्यसनहीनस्य, मे मम सम्पदः सानुबन्धाः सानुस्यूतयः अविच्छिन्ना इति यावत्, कथं न स्युः स्युरेवेत्यर्थः।

৬৪। ভবাদৃশ ব্রহ্মযোনি গুরু যখন এইরূপে নিয়ত আমার কুশল চিন্তা করিতেছেন, তখন আমি কেনই বা নিরাপদ না থাকিব? এবং আমার সম্পদ কেনই বা ব্যসনশূন্য না হইবে?

**किन्तु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।**
**न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५**

६५ अ:। किन्तु तव एतस्यां वध्वाम् अदृष्टसदृशप्रजं मां सद्वीपा रत्नसूरपि मेदिनी न अवति॥ वाच्य—रत्नस्वा अपि सद्वीपया मेदिन्या न अहम् अव्ये।

६५। सम्प्रत्यागमनप्रयोजनमाह—किन्तु तवैतस्यां वध्वां स्नुषायाम्। 'वधूर्जाया स्नुषा चैव' इत्यमरः। अदृष्टा सदृशी अनुरूपा प्रजा येन तं मां, सद्वीपापि, रत्नानि सूयत इति रत्नसूरपि। 'सत्सूद्विष'—इत्यादिना क्विप्। मेदिनी नावति न प्रीणाति। अवधातुः रक्षणगतिप्रीत्याद्यर्थेषूपदेशादत्र प्रीणने। रत्नसूरपीत्यनेन सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाघ्यमिति सूचितम्।

৬৫। কিন্তু আপনার এই বধূ সুদক্ষিণার গর্ভে অনুরূপ পুত্ররত্ন লাভ করিতে পারিতেছি না বলিয়াই এই সদ্বীপা ধরিত্রী বিবিধ রত্নপ্রদা হইয়াও আমাকে পরিতুষ্ট করিতে পারিতেছে না॥

**नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।**
**न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ ६६**

६६ अ:। मत्तः परं पिण्डविच्छेददर्शिनः वंश्याः स्वधासंग्रहतत्पराः श्राद्धे न प्रकामभुजः नूनम्॥ वाच्य—दर्शिभिः वंश्यैः तत्परैः प्रकामभुग्भिः (भूयते)।

६६। तदेव प्रतिपादयति—मत्तः परं मदनन्तरम्। 'पञ्चम्यास्तसिल्'। पिण्डविच्छेददर्शिनः पिण्डदानविच्छेदमुत्प्रेक्षमाणाः। वंशे भवा वंश्याः पितरः। स्वधेत्यव्ययं पितृभोज्ये वर्त्तते, तस्याः संग्रहे तत्परा आसक्ताः सन्तः श्राद्धे पितृकर्म्मणि। 'पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म्म शास्त्रतः' इत्यमरः। प्रकामभुजः पर्य्याप्तभोजिनो न भवन्ति नूनं सत्यम्। 'कामं प्रकामं पर्य्याप्तम्' इत्यमरः। निर्धना आपद्धनं कियदपि संगृह्णन्तीति भावः।

विशेषे स्यात् गुप्ताकारे युधिष्ठिरे' इति विश्वः । 'कङ्कस्तु कर्कटः' इति यादवः । सायकस्य पुङ्खे एव कर्त्तर्य्याख्ये मूलप्रदेशे । 'कर्त्तरी :पुङ्खे' इति यादवः । सक्ताङ्गुलिः सन् चित्रार्पितारम्भः चित्रलिखितशरोद्धरणोद्योग इव अवतस्थे ।

৩১। নরপতি, বাণক্ষেপণ-মানসে যেমন তূণীর হইতে বাণ উত্তোলন করিতে প্রবৃত্ত হইলেন, অমনি তাহার দক্ষিণ হস্তের অঙ্গুলি, বাণের মূলদেশে সংলগ্ন হইয়া গেল, দক্ষিণ হস্ত, চিত্রলিখিত বাণোত্তোলনে প্রবৃত্ত হস্তের ন্যায় অচলাবস্থায় রহিল। কঙ্কপত্র তাহার নখকিরণে ভূষিত হইল মাত্র।

बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्य्यः ॥३२

३२ अः । बाहुप्रतिष्टम्भविवृद्धमन्युः राजा मन्त्रौषधिरुद्धवीर्य्यः भोगीव अभ्यर्णम् आगस्कृतम् अस्पृशद्भिः स्वतेजोभिः अन्तः अदह्यत ॥ वाच्य— मन्युं राजानं वीर्य्यं भोगिनमिव अस्पृशन्ति स्वतेजांसि अदहन् ।

३२। बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन । 'प्रतिबन्धः प्रतिष्टम्भः' इत्यमरः । विवृद्धमन्युः प्रवृद्धरोषः राजा, मन्त्रौषधिभ्यां रुद्धवीर्य्यः प्रतिबद्धशक्तिः भोगी सर्प इव । 'भोगी राजभुजङ्गयोः' इति शाश्वतः । अभ्यर्णम् अन्तिकम् । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः । आगस्कृतम् अपराधकारिणम् अस्पृशद्भिः स्वतेजोभिः अन्तः अदह्यत । 'अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि' इति यादवः ।

৩২। মহারাজ (এইরূপে) বাহু প্রতিবদ্ধ হওয়ায় অত্যন্ত ক্রুদ্ধ হইয়া উঠিলেন এবং সমীপাগত অপরাধীর গাত্র পর্য্যন্ত স্পর্শ করিতে পারিলেন না বলিয়া মন্ত্রৌষধি-রুদ্ধবীর্য্য সর্পের ন্যায় স্বীয় বিক্রমরূপ অগ্নিতে দগ্ধ হইতে লাগিলেন।

तमार्य्यगृह्यं निगृहीतधेनु-
र्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन् विस्मितमात्मवृत्तौ
सिंहोरुसत्त्वं निजगाद सिंहः ॥३३

३३ अः । निगृहीतधेनुः सिंहः आर्य्यगृह्यं मनुवंशकेतुं सिंहोरुसत्त्वम् आत्मवृत्तौ विस्मितं मनुष्यवाचा विस्माययन् निजगाद ॥ वाच्य—निगृहीतधेनुना सिंहेन विस्माययता सः …केतुः विस्मितः …सत्त्वः …गृह्यः निजगदे ।

३३। निगृहीता पीड़िता धेनुर्येन सः सिंहः आर्य्याणां सतां गृह्यं पक्ष्यम् । 'पदास्वैरिबाह्यापक्ष्येषु च' इति क्यप् । मनुवंशस्य केतुं चिह्नं

केतुवत् व्यावर्त्तकम् । सिंह इव उरुसत्त्वं महाबलम् तम्, आत्मनः वृत्तौ बाहुस्तम्भरूपे व्यापारे, अभूतपूर्व्वत्वात् विस्मितम्, कर्त्तरि क्तः । तं दिलीपं मनुष्यवाचा करणेन पुनः विस्माययन् विस्मयमाश्चर्य्यं प्रापयन् निजगाद । 'स्मिङ् ईषद्धसने' इति धातोर्णिनि वृद्धौ आयादेशे शप्प्रत्यये च सति विस्माययन्निति रूपं सिद्धम् । 'विस्मापयन्' इति पाठे पुगागम-मात्रं वक्तव्यं तच्च 'नित्यं स्मयतेः' इति हेतुभयविवक्षायामेवेति । 'भीस्म्योर्हेतुभये' इत्यात्मनेपदे विस्मापयमान इति स्यात्, तस्मात् मनुष्यवाचा विस्माययन्निति रूपं सिद्धम्, करणविवक्षायां न कश्चिद्दोषः ।

৩৩ নন্দিনীর নিগ্রহকারী সেই কেশরী, বাহুপ্রতিষ্টম্ভরূপ অভূতপূর্ব্ব ব্যাপার দর্শনে বিস্মিতচিত্ত সাধুজনপূজিত সিংহবিক্রম মনুবংশকেতু মহীপতি দিলীপকে মনুষ্য-বাক্যে অধিকতর বিস্মিত করিয়া বলিতে লাগিল ।

अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥ ३४

३४ अः । हे महीपाल ! तव श्रमेण अलम्, इतः प्रयुक्तमपि अस्त्रं वृथा स्यात्, मारुतस्य पादपोन्मूलनशक्ति रंहः शिलोच्चये न मूर्च्छति ॥ वाच्य—प्रयुक्तेनापि अस्त्रेण भूयते,…शक्तिना रंहसा न मूर्च्छ्यते ।

३४ । हे महीपाल ! तव श्रमेण अलं, साध्याभावात् श्रमो न कर्त्तव्य इत्यर्थः । अत्र गम्यमानसाधनक्रियापेक्षया श्रमस्य करणत्वात् तृतीया । उक्तञ्च—'न्यासोद्द्योते न केवलं श्रूयमाणैव क्रियानिमित्तं करणभावस्य, अपि तर्हि गम्यमानापि' इति । 'अलं भूषणपर्य्याप्तिशक्तिवारणवाचकम्' इत्यमरः । इतः अस्मिन् मयि । सार्वविभक्तिकस्तसिः । प्रयुक्तमपि अस्त्रं वृथा स्यात् । तथाहि पादपोन्मूलने शक्तिर्यस्य तत् तथोक्तं मारुतस्य रंहः वेगः शिलोच्चये पर्व्वते न मूर्च्छति न प्रसरति ।

৩৪ ! সিংহ মনুষ্যের মত বলিল, হে মহীপাল ! বৃথা কেন ক্লেশ স্বীকার কর ! আমার উপর অস্ত্র নিক্ষেপ করিলেও তাহা ব্যর্থ হইবে, কেন না, বায়ু বৃক্ষ উন্মূলনে সমর্থ হয় বটে, কিন্তু পর্ব্বত উৎপাটনে কৃতকার্য্য হয় না ।

कैलासगौरं वृषमारुरुक्षोः
पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्त्तेः
कुम्भोदरं नाम निकुम्भमित्रम् ॥ ३५

३५ अः। कैलासगौरं वृषम् आरुरुक्षोः अष्टमूर्त्तेः पादार्पणानुग्रहपूतपृष्ठं कुम्भोदरं नाम निकुम्भमित्रं किङ्करं माम् अवेहि॥ वाच्य—अहं...पृष्ठः कुम्भोदरो नाम निकुम्भमित्रम् अष्टमूर्त्तेः किङ्करः अवेयै।

३५। कैलास इव गौरः शुभ्रः तम्। 'चामीकरस्य शुभ्रस्य गौरमाहुर्मनीषिणः' इति शाश्वतः। वृषं वृषभम् आरुरुक्षोः आरोढुमिच्छोः, स्वस्योपरि पदं निक्षिप्य वृषमारोहतीत्यर्थः, अष्टौ मूर्त्तयो यस्य सः तस्य अष्टमूर्त्तेः शिवस्य, पादार्पणं पादन्यासः तदेव अनुग्रहः प्रसादः तेन पूतं पृष्ठं यस्य तं तथोक्तं निकुम्भमित्रं कुम्भोदरं नाम किङ्करं माम् अवेहि विद्धि। 'पृथिवी सलिलं तेजो वायुराकाशमेव च। सूर्य्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्त्तयः॥' इति यादवः।

৩৫। জানিও,—আমি অষ্টমূর্ত্তি ভগবান্ শঙ্করের কিঙ্কর এবং নিকুম্ভের মিত্র, আমার নাম কুম্ভোদর। ভগবান্ শঙ্কর কৃপা করিয়া মদীয় পৃষ্ঠকে পাদক্ষেপ দ্বারা পবিত্র করিয়া কৈলাস পর্ব্বতের ন্যায় ধবলবর্ণ বৃষে আরোহণ করিয়া থাকেন।

अमुं पुरः पश्यसि देवदारुं
पुत्रीकृतोऽसौ वृषभध्वजेन।
यो हेमकुम्भस्तननिःसृतानां
स्कन्दस्य मातुः पयसां रसज्ञः॥ ३६

३६ अः। पुरः अमुं देवदारुं पश्यसि? असौ वृषभध्वजेन पुत्रीकृतः, यः स्कन्दस्य मातुः हेमकुम्भस्तननिःसृतानां पयसां रसज्ञः॥ वाच्य—असौ देवदारुर्दृश्यते, वृषभध्वजः अमुं पुत्रीकृतवान्, येन रसज्ञेन भूयते।

३६। पुरः अग्रतः अमुं देवदारुं पश्यसि? इति काकुः। असौ देवदारुः वृषभो ध्वजो यस्य सः तेन शिवेन पुत्रीकृतः पुत्रत्वेन स्वीकृतः। अभूततद्भावे च्विः। यो देवदारुः स्कन्दस्य मातुः गौर्य्याः हेम्नः कुम्भः एव स्तनः तस्मात् निःसृतानां पयसामम्बूनां रसज्ञः स्वादज्ञः, स्कन्दपक्षे हेमकुम्भ इव स्तन इति विग्रहः पयसां क्षीराणाम्। 'पयः क्षीरं पयोऽम्बु च' इत्यमरः। स्कन्दसमानप्रेमास्पदमिति भावः।

৩৬। সম্মুখে ঐ দেবদারু বৃক্ষ দেখিতেছ? স্বয়ং বৃষধ্বজ মহাদেব উহাকে পুত্ররূপে গ্রহণ করিয়াছেন; ঐ বৃক্ষ, স্কন্দজননী ভবানীর স্তনসদৃশ স্বর্ণকুম্ভ হইতে বিনিঃসৃত দুগ্ধসদৃশ জলধারার আস্বাদ উপভোগ করিয়া থাকে।

कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः॥ ३७

३७ अः। कदाचित् कटं कण्डूयमानेन वन्यद्विपेन अस्य त्वक् उन्मथिता, अथ अद्रेस्तनया असुरास्त्रैः आलीढ़ं सेनान्यमिव एनं शुशोच॥ वाच्य—कण्डूयमानः वन्यद्विपः अस्य त्वचम् उन्मथितवान्, तनयया आलीढ़ः सेनानीः इव एष शुशुचे।

३७। कदाचित् कटं कपोलं कण्डूयमानेन कर्षता। 'कण्ड्वादिभ्यो यक्' इति यक्, ततः शानच्। वन्यद्विपेन अस्य देवदारोः त्वक् उन्मथिता। अथ अद्रेस्तनया गौरी असुरास्त्रैः आलीढ़ं क्षतं, सेनां नयतीति सेनानीः स्कन्दः। 'पार्व्वतीनन्दनः स्कन्दः सेनानीः' इत्यमरः। 'सत्सूद्विष' इत्यादिना क्विप्। तमिव एनं देवदारुं शुशोच।

৩৭। একদা এক বন্য হস্তী গণ্ডস্থল ঘর্ষণ করিয়া ঐ দেবদারু বৃক্ষের ছাল তুলিয়া ফেলিয়াছিল; তাহাতে নগেন্দ্রনন্দিনী দুর্গা, সেনাপতি কার্ত্তিকেয়কে অসুরশরে ক্ষত-বিক্ষত দেখিয়া যেরূপ শোক করেন, ঐ বৃক্ষের জন্যও সেইরূপ শোক করিয়াছিলেন।

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति॥३८

३८ अः। तदाप्रभृत्येव वनद्विपानां त्रासार्थं शूलभृता सिंहत्वम् अङ्कागतसत्त्ववृत्ति विधाय अहम् अस्मिन् अद्रिकुक्षौ व्यापारितः॥ वाच्य—शूलभृत् मां व्यापारितवान्।

३८। तदा तत्कालः प्रभृतिरादिर्यस्मिन् कर्म्मणि तत् तथा तदाप्रभृत्येव वनद्विपानां त्रासार्थं भयार्थं शूलभृता शिवेन अङ्कं समीपम् आगताः प्राप्ताः सत्त्वाः प्राणिनः वृत्तिर्यस्मिन् तत्। 'अङ्कः समीप उत्सङ्गे चिह्ने स्थानाप-राधयोः' इति केशवः। सिंहत्वं विधाय अस्मिन् अद्रिकुक्षौ गुहायाम् अहं व्यापारितः नियुक्तः।

৩৮। সেই সময় হইতেই ভগবান্ শূলপাণি বন্য গজগণকে ভয় প্রদর্শন করিবার নিমিত্ত এই পর্ব্বতগুহায় সিংহের আকারে আমায় নিযুক্ত করিয়াছেন; আমি তাঁহার আদেশে সম্মুখাগত প্রাণীদিগকে ভক্ষণ করিয়া জীবিকা নির্ব্বাহ করি।

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव॥३९

३९ अः। परमेश्वरेण प्रदिष्टकाला उपस्थिता एषा शोणितपारणा, चान्द्रमसी सुधा सुरद्विष इव, क्षुधितस्य मे तृप्त्यै अलम्॥ वाच्य—प्रदिष्टकालया उपस्थितया एतया शोणितपारणया चान्द्रमस्या सुधया इव अलं (भूयते)।

३९। परमेश्वरेण प्रदिष्टः निर्द्दिष्टः कालः भोजनवेला यस्याः सा उपस्थिता प्राप्ता एषा गोरूपा शोणितपारणा रुधिरस्य व्रतान्तभोजनं, सुरद्विषः राहोः चन्द्रमसः इयं चान्द्रमसी सुधा इव, क्षुधितस्य बुभुक्षितस्य

তস্য অঙ্কাগতসত্ত্ববৃত্তেঃ মে মম সিংহস্য তৃপ্ত্যৈ অলং পর্য্যাপ্তা। 'নমঃ স্বস্তি' ইত্যাদিনা চতুর্থী।

৩৯। পরমেশ্বর শঙ্করের ইচ্ছায় এ সময় এই ধেনু আমারই ভোজনার্থ উপস্থিত হইয়াছে। রাহু যেমন সুধাকরের সুধা পান করিয়া তৃপ্তিলাভ করে, আমিও তেমনি এই ক্ষুধার সময় ইহার শোণিত পান করিয়া তৃপ্তিলাভ করিব।

স ত্বং নিবর্তস্ব বিহায় লজ্জাং
গুরোর্ভবান্ দর্শিতশিষ্যভক্তিঃ।
শস্ত্রেণ রক্ষ্যং যদশক্যরক্ষং
ন তদ্যশঃ শস্ত্রভৃতাং ক্ষিণোতি ॥ ৪০

৪০ অঃ। স ত্বং লজ্জাং বিহায় নিবর্ত্তস্ব, ভবান্ গুরোঃ দর্শিতশিষ্যভক্তিঃ, যত্ রক্ষ্যং শস্ত্রেণ অশক্যরক্ষং তত্ শস্ত্রভৃতাং যশঃ ন ক্ষিণোতি॥ বাচ্য—তেন ত্বয়া নিবৃত্যতাং, ভবতা…শিষ্যভক্ত্যা, যেন রক্ষ্যেণ অশক্যরক্ষেণ (ভূয়তে) তেন ন ক্ষীয়তে।

৪০। সঃ এবমুপায়শূন্যঃ ত্বং লজ্জাং বিহায় নিবর্ত্তস্ব। ভবান্ ত্বং গুরোঃ দর্শিতা প্রকাশিতা শিষ্যস্য কর্ত্তব্যা ভক্তির্যেন সঃ তথোক্তঃ অসি। ননু গুরুধনং বিনাশ্য কথং তৎসমীপং গচ্ছেয়ম্, অত আহ—শস্ত্রেণেতি। যত্ রক্ষ্যং ধনং শস্ত্রেণ আয়ুধেন। 'শস্ত্রমায়ুধলোহয়োঃ' ইত্যমরঃ। অশক্যা রক্ষা যস্য তত্ অশক্যরক্ষং রক্ষিতুমশক্যমিত্যর্থঃ, তত্ রক্ষ্যং নষ্টমপি শস্ত্রভৃতাং যশঃ ন ক্ষিণোতি ন হিনস্তি। অশক্যার্থেষ্বপ্রতিবিধানং ন দোষায় ইতি ভাবঃ।

৪০। তুমি নিরুপায়; অতএব লজ্জা পরিত্যাগ করিয়া প্রতিনিবৃত্ত হও। তুমি তোমার গুরুর প্রতি শিষ্যজন সমুচিত ভক্তি দেখাইয়াছ; যাহা শস্ত্র দ্বারা রক্ষা করিবার যোগ্য নহে, তাহা রক্ষা করিতে না পারিলে শস্ত্রধারীর যশোহানি হয় না।

ইতি প্রগল্ভং পুরুষাধিরাজো মৃগাধিরাজস্য বচো নিশম্য
প্রত্যাহতাস্ত্রো গিরিশপ্রভাবাদাত্মন্যবজ্ঞাং শিথিলীচকার॥ ৪১

৪১ অঃ। পুরুষাধিরাজঃ মৃগাধিরাজস্য ইতি প্রগল্ভং বচঃ নিশম্য গিরিশপ্রভাবাত্ প্রত্যাহতাস্ত্রঃ আত্মনি অবজ্ঞাং শিথিলীচকার॥ বাচ্য—পুরুষাধিরাজেন প্রত্যাহতাস্ত্রেণ আত্মন্যবজ্ঞা শিথিলীচক্রে।

৪১। পুরুষাণামধিরাজঃ নৃপঃ ইতি প্রগল্ভং মৃগাধিরাজস্য বচো নিশম্য শ্রুত্বা গিরিশস্য ঈশ্বরস্য প্রভাবাত্ প্রত্যাহতাস্ত্রঃ কুণ্ঠিতাস্ত্রঃ সন্ আত্মনি বিষয়ে অবজ্ঞাম্ অপমানং শিথিলীচকার তত্যাজ ইত্যর্থঃ।

अवज्ञातोऽहमिति निर्वेदं न प्राप इत्यर्थः। समानेषु हि क्षत्रियाणामभिमानो, न सर्वेश्वरं प्रति इति भावः

४१। महারাজ দিলীপ, সিংহের এরূপ সাহঙ্কার বাক্য শ্রবণ করিয়া যখন বুঝিলেন,—শিবেরই প্রভাবে তাঁহার অস্ত্র প্রতিহত হইয়াছে, তখন তাঁহার আত্মাভিমান শিথিল হইয়া আসিল।

**प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः।**
**जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः॥४२**

४२ अः। तत्पूर्व्वभङ्गे इषुप्रयोगे वितथप्रयत्नः वज्रं मुमुक्षन् त्र्यम्बकवीक्षणेन जडीकृतः वज्रपाणिरिव स्थितः सन् एनं प्रत्यब्रवीत्॥ वाच्य—वितथप्रयत्नेन मुमुक्षता—जडीकृतेन वज्रपाणिना इव, प्रत्यूच्यत एषः।

४२। स एव पूर्व्वः प्रथमः भङ्गः प्रतिबन्धः यस्य तस्मिन् तत्पूर्वभङ्गे इषुप्रयोगे वितथप्रयत्नः विफलप्रयासः अतएव वज्रं कुलिशं मुमुक्षन् मोक्तुमिच्छन्। अम्बकं लोचनम्। 'दृग्दृष्टिर्नेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि' इति हलायुधः। त्रीणि अम्बकानि यस्य सः त्र्यम्बको हरः तस्य वीक्षणेन जडीकृतः निस्पन्दीकृतः, वज्रं पाणौ यस्य सः वज्रपाणिः इन्द्रः। 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्' इति पाणेः सप्तम्यन्तस्योत्तरनिपातः। स इव स्थितो नृपः एनं सिंहं प्रत्यब्रवीच्च। 'बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत् प्रभुः इति महाभारते॥

पौराणिकीवार्त्ता।—पुरा किल सत्यभामया प्रार्थितो भगवान् वासुदेवः नन्दनकाननात् पारिजातं जिहीर्षुरिन्द्रेण सम युयुधे॥ तदानीं कृष्णं प्रति वज्रं मुमुक्षौ वासवे नारदेनोदितः पिनाकी तदन्तरमागत्य रोषारुणितदृक्‌पातेन सवज्रं वज्रपाणिमस्तम्भयत् इति।

৪২। নরপতি ইতঃপূর্ব্বে আর কখনও শরসন্ধানে অকৃতকার্য্য হন নাই; বজ্রপাণি ইন্দ্র বজ্রনিক্ষেপে উদ্যত হইয়া ত্রিলোচনের দৃষ্টিপাতে যেমন স্তম্ভিত হইয়াছিলেন, তিনিও তদবস্থ হইয়া সেই সিংহকে বলিতে লাগিলেন।

**संरुद्धचेष्टस्य मृगेन्द्र कामं हास्यं वचस्तद्यदहं विवक्षुः।**
**अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान् भावमतोऽभिधास्ये॥४३**

४३ अः। हे मृगेन्द्र! यत् वचः अहं विवक्षुः संरुद्धचेष्टस्य मे तत् वचः कामं हास्यम्, हि (यतः) भवान् प्राणभृताम् अन्तर्गतं सर्वं भावं वेद, (अतः) अहम् अभिधास्ये॥ वाच्य—तेन वचसा हास्येन विवक्षुणा मया (भूयते) भवता अन्तर्गतः सर्व्वो भावः विद्यते, मया अभिधास्यते।

४३। हे मृगेन्द्र! संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तत् वचः वाक्यं कामं हास्यं परिहसनीयम्। यद् वचः 'स त्वं मदीयेण' इत्यादिकम् अहं विवक्षुः वक्तुमिच्छुरस्मि। तर्हि तूष्णीं स्थीयतामित्याशङ्क्य ईश्वर-

किङ्करत्वात् सर्वज्ञं त्वां प्रति न हास्यमित्याह,—अन्तरिति। हि यतः भवान् प्राणभृतामन्तर्गतं हृद्गतं वागप्रवृत्त्या बहिरप्रकाशितमेव सर्वं भावं वेद वेत्ति। 'विदो लटो वा' इति णलादेशः। अतः अहम् अभिधास्ये वक्ष्यामि, वच इति प्रकृतं कर्म सम्बध्यते। अन्ये लौहस्वचनमाकर्ण्यासम्भावितार्थमेतदित्युपहसन्ति अतस्तु मौनमेव भूषणं, त्वं तु वाङ्मनसयोरैकविध एवायमिति जानासि, अतोऽभिधास्ये यद्वचोऽहं विवक्षुरित्यर्थः ॥

৪৩। হে মৃগেন্দ্র! আমার মনের কথা প্রকাশ করিলে নিতান্তই হাস্যজনক হইবে, কারণ আমি হতশক্তি বলিয়া গোরক্ষণে আজ অসমর্থ হইয়াছি, কিন্তু আপনি প্রাণিগণের সমস্ত মনোভাব জানিতে পারেন বলিয়াই আপনাকে তাহা বলিতেছি।

मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत् पुरस्तादनुपेक्षणीयम् ॥४४

४४। स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः स मे मान्यः, पुरस्तात् नश्यत् आहिताग्नेः गुरोः इदं धनम् अपि अनुपेक्षणीयम् ॥ वाच्य—हेतुना तेन मान्येन (भूयते) अनेन नश्यता धनेन अनुपेक्षणीयेन भूयते।

४४। प्रत्यवहारः प्रलयः। स्थावराणां तरुशैलादीनां जङ्गमानां मनुष्यादीनां, सर्गस्थितिप्रत्यवहारेषु हेतुः स ईश्वरः मे मम मान्यः पूज्यः अलङ्घ्यशासन इत्यर्थः। शासनञ्च—'सिंहत्वमङ्कागतसत्त्ववृत्ति' इत्युक्तरूपम्। तर्हि विसृज्य गम्यतां कथं नेत्याह—गुरोरपीति। पुरस्तात् अग्रे नश्यदिदमाहिताग्नेर्गुरोः धनमपि गोरूपम् अनुपेक्षणीयम्। आहिताग्नेरिति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति ॥

৪৪। সমস্ত বিশ্বের সৃষ্টি-স্থিতি-নাশকারী সেই মহাদেব আমার পূজ্য, তথাপি সাগ্নিক গুরুদেবের এই গোধনটীকে নয়ন সমক্ষে বিনষ্ট হইতে দেখিয়া তাহা আমার উপেক্ষা করা উচিত নয়।

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्त्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः॥४५

४५ अः। स त्वं मदीयेन देहेन शरीरवृत्तिं निर्वर्त्तयितुं प्रसीद, दिनावसानोत्सुकबालवत्सा महर्षेरियं धेनुः विसृज्यताम्। वाच्य—तेन त्वया प्रसद्यतां,—बालवत्साम् इमां धेनुं विसृज।

४५। सः अङ्कागतसत्त्ववृत्तिः त्वं, मदीयेन देहेन शरीरस्य वृत्तिं जीवनं [जीविकां] निर्वर्त्तयितुं सम्पादयितुं प्रसीद। दिनावसाने उत्सुकः 'माता समागमिष्यति' इत्युत्कण्ठितः बालवत्सो यस्याः सा महर्षेरियं धेनुः विसृज्यताम् ॥

৪৮। অতএব আপনি প্রসন্ন হইয়া আমার শরীর ভক্ষণদ্বারা (অন্ধকার) জীবিকা নির্ব্বাহ করুন এবং মহর্ষির এই ধেনুটীকে ছাড়িয়া দিউন ; দেখুন, যতই বেলাবসান হইবে ইঁহার শিশু বৎসটী ইঁহার নিমিত্ত ততই উৎকণ্ঠিত হইবে।

**अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन्।**
**भूयः स भूतेश्वरपार्श्ववर्त्ती किञ्चिद्विहस्यार्थपतिं बभाषे॥४६**

४६ अः। अथ भूतेश्वरपार्श्ववर्त्ती सः किञ्चित् विहस्य दंष्ट्रामयूखैः गिरिगह्वराणाम् अन्धकारं शकलानि कुर्व्वन् अर्थपतिं भूयो बभाषे॥ वाच्य—पार्श्ववर्त्तिना तेन कुर्व्वता अर्थपतिः भूयो बभाषे।

४६। अथ भूतेश्वरस्य पार्श्ववर्त्ती अनुचरः सः सिंहः गिरेर्गह्वराणां गुहानाम्। 'देवखातविले गुहा गह्वरम्' इत्यमरः। अन्धकारं ध्वान्तं दंष्ट्रामयूखैः शकलानि खण्डानि कुर्वन् निरस्यन् इत्यर्थः किञ्चित् विहस्य अर्थपतिं नृपं भूयो बभाषे। हासकारणम् 'अल्पस्य हेतोर्बहु हातुमिच्छन्' इति वक्ष्यमाणं द्रष्टव्यम्॥

৪৬। অনন্তর সেই সিংহরূপী ভূতনাথের পার্শ্বচর ঈষৎ হাস্য পূর্ব্বক দংষ্ট্রপ্রভায় গিরিগুহার অন্ধকার বিচ্ছিন্ন করিয়া রাজাকে পুনরায় কহিতে লাগিলেন।

**एकातपत्रं जगतः प्रभुत्वं**
**नवं वयः कान्तमिदं वपुश्च।**
**अल्पस्य हेतोर्बहु हातुमिच्छन्**
**विचारमूढः प्रतिभासि मे त्वम्॥ ४७**

४७ अः। एकातपत्रं जगतः प्रभुत्वं, नवं वयः, इदं कान्तं वपुश्च (इत्येवं) बहु अल्पस्य हेतोः हातुम् इच्छन् त्वं विचारमूढः प्रतिभासि॥ वाच्य—इच्छता त्वया विचारमूढेन प्रतिभायते।

४७। एकातपत्रम् एकच्छत्रं जगतः प्रभुत्वं स्वामित्वं नवं वयः यौवनम्, इदं कान्तं रम्यं वपुश्च इत्येवं बहु अल्पस्य हेतोः अल्पेन कारणेन अल्पफलाय इत्यर्थः। 'षष्ठी हेतुप्रयोगे' इति षष्ठी। हातुं त्यक्तुम् इच्छन् त्वं, विचारे कार्य्याकार्य्यविमर्शे, मूढः, मूर्खः मे मम प्रतिभासि॥

৪৭। মহারাজ! তুমি তুচ্ছ কারণে, তোমার সমস্ত পৃথিবীর উপর একাধিপত্য, নবীন যৌবন ও সুন্দর শরীর পরিত্যাগের ইচ্ছা করিয়া আমার নিকট নিতান্ত নির্ব্বোধের ন্যায় প্রতীয়মান হইতেছ।

**भूतानुकम्पा तव चेदियं गौ-**
**रेका भवेत् स्वस्तिमती त्वदन्ते।**

जीवन् पुनः शश्वदुपप्लवेभ्यः
प्रजाः प्रजानाथ पितेव पासि ॥ ४८

४८ अः । तव भूतानुकम्पा चेत्, त्वदन्ते इयम् एका गौः स्वस्तिमती भवेत्, हे प्रजानाथ ! त्वं जीवन् पुनः पितेव प्रजाः उपप्लवेभ्यः शश्वत् पासि ॥ वाच्य—भूतानुकम्पया अनया ( भूयते ) एकया गवा स्वस्तिमत्या भूयेत, जीवता पित्रा इव प्रजाः पाय्यन्ते ।

४८ । तव भूतेषु अनुकम्पा कृपा चेत् । 'कृपा दयानुकम्पा स्यात्' इत्यमरः । कृपैव वर्त्तते चेदित्यर्थः । तर्हि त्वदन्ते तव नाशे सति इयम् एका गौः, स्वस्ति क्षेमम् अस्या अस्तीति स्वस्तिमती, भवेत् जीवेदित्यर्थः । 'स्वस्त्याशीः क्षेमपुण्यादौ' इत्यमरः । हे प्रजानाथ ! जीवन् पुनः पिता इव प्रजाः उपप्लवेभ्यः विघ्नेभ्यः शश्वत् सदा । 'पुनः सदार्थयोः शश्वत्' इत्यमरः । पासि रक्षसि । स्वप्राणव्ययेनैकधेनुरक्षणादवरं जीवितेनैव शश्वदखिलजगत्त्राणमित्यर्थः ॥

४৮ । আর যদি তুমি জীবগণের প্রতি দয়াপরবশ হইয়া প্রাণ দিতে ইচ্ছা কর, তথাপি তোমার প্রাণনাশে একমাত্র ধেনুটীই রক্ষা পাইবে ; কিন্তু হে প্রজানাথ ! তোমার প্রাণরক্ষা হইলে প্রতিদিন ( অসংখ্য ) লোককে বিপদ্ হইতে উদ্ধার করিতে পারিবে ।

अथैकधेनोरपराधचण्डाद्-
गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं
गाः कोटिशः स्पर्शयता घटोध्नीः ॥ ४९

४९ अः । अथ एकधेनोः अपराधचण्डात् कृशानुप्रतिमात् गुरोः बिभेषि ? घटोध्नीः कोटिशः गाः स्पर्शयता भवता अस्य मन्युः विनेतुं शक्यः । वाच्य—भीयते ( त्वया )...स्पर्शयन् भवान् मन्युं शक्नुयात् ।

४९ । न धर्मलोपादियं प्रवृत्तिः, किन्तु गुरुभयादित्यत आह—अथेति । अथेति पक्षान्तरे अथवा एका एव धेनुर्यस्य तस्मात् । अयं कोपकारणोपन्यास इति ज्ञेयम् । तत एव अपराधे गवोपेक्षालक्षणे सति चण्डात् अतिकोपनात् । 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । अतएव कृशानुः प्रतिमा उपमा यस्य तस्मात् अग्निकल्पात् गुरोः बिभेषि इति काकुः । 'भीत्रार्थानां भयहेतुः' इत्यपादानात् पञ्चमी । अल्पवित्तस्य धनहानिरतिदुःसहा इति भावः । अस्य गुरोः मन्युः क्रोधः । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । घटा इव ऊधांसि यासां ताः घटोध्नीः । 'ऊधसो-

ऽनङ्' इत्यनङादेशः, 'बहुव्रीहेरूधसो ङीष्' इति ङीष्। कोटिशः गाः स्पर्शयता प्रतिपादयता। 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः। भवता विनेतुम् अपनेतुं शक्यः॥

४९। তোমার গুরুদেবের এই একমাত্র ধেনু বিনষ্ট হইলে, সেই অপরাধে তিনি অত্যন্ত ক্রোধে অগ্নিতুল্য হইয়া উঠিবেন; যদি তজ্জন্যই ভীত হইয়া থাক, তাহা হইলে অতি পীবর স্তনশালিনী কোটি কোটি ধেনু দান করিয়া তুমি তাঁহার কোপ শান্তি করিতে পারিবে।

तदूरक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम्।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः॥५०

५० अ:। तत् कल्याणपरम्पराणां भोक्तारम् ऊर्जस्वलम् आत्मदेहं रक्ष, ऋद्धं तव राज्यं महीतलस्पर्शनमात्रभिन्नम् ऐन्द्रं पदम् आहुः॥ वाच्य—भोक्ता ऊर्जस्वलः आत्मदेहः रक्ष्यतां (त्वया) उच्यते।

५०। तत् तस्मात् कारणात् कल्याणपरम्पराणां भोक्तारम्। कर्मणि षष्ठी। ऊर्जो बलमस्यास्तीति ऊर्जस्वलम्। 'ज्योत्स्नातमिस्रा' इत्यादिना वलच्प्रत्ययान्तो निपातः। आत्मदेहं रक्ष। ननु गामुपेक्ष्य आत्मदेहरक्षणे स्वर्गहानिः स्यात् नेत्याह—महीतलेति। ऋद्धं समृद्धं राज्यं महीतलस्पर्शनमात्रेण भूतलसम्बन्धमात्रेण भिन्नम् ऐन्द्रम् इन्द्रसम्बन्धि पदं स्थानम् आहुः, स्वर्गान्न भिद्यते इत्यर्थः॥

৫০। অতএব, তোমার বিবিধ সুখভোগের কারণ বলিষ্ঠ এই নূতন শরীর রক্ষা কর। দেখ, তোমার এই সমৃদ্ধ রাজ্য ইন্দ্রপদতুল্য, ইন্দ্র স্বর্গে, আর তুমি মহীতলে, কেবল এই মাত্র বিভিন্ন।

एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन।
शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ५१

५१। मृगेन्द्रे एतावत् उक्त्वा विरते सति शिलोच्चयोऽपि अस्य गुहागतेन प्रतिस्वनेन प्रीत्या क्षितिपालम् तमेवार्थम् उच्चैः अभाषत इव॥ वाच्य—शिलोच्चयेनापि स एवार्थः अभाष्यत।

५१। मृगेन्द्रे एतावत् उक्त्वा विरते सति, गुहागतेन अस्य सिंहस्य प्रतिस्वनेन शिलोच्चयः शैलोऽपि प्रीत्या तमेव अर्थं क्षितिपालं उच्चैरभाषत इव इत्युत्प्रेक्षा। भाषिरयं ब्रुविसमानार्थत्वात् द्विकर्मकः ब्रुविस्तु द्विकर्मकेषु पठितः। तदुक्तम्—'दुह्याचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ब्रुविशासिगुणेन च यत् सचते तदकीर्त्तितमाचरितं कविना' इति॥

৫১। মৃগেন্দ্র এই পর্য্যন্ত বলিয়া ক্ষান্ত হইলে, পর্ব্বতও যেন তদনুমোদন করিয়া গুহাগত প্রতিধ্বনি দ্বারা উচ্চ শব্দে ক্ষিতিপতিকে সেই বাক্য শুনাইল।

निशम्य देवानुचरस्य वाचं
मनुष्यदेवः पुनरप्युवाच ।
धेन्वा तदध्यासितकातराक्ष्या
निरीक्ष्यमाणः सुतरां दयालुः ॥ ५२

५२ अः। मनुष्यदेवः देवानुचरस्य वाचं निशम्य तदध्यासितकातराक्ष्या धेन्वा निरीक्ष्यमाणः (अतएव) सुतरां दयालुः सन् पुनरपि उवाच ॥ वाच्य—मनुष्यदेवेन...निरीक्ष्यमाणेन...दयालुना (सता) ऊचे।

५२। देवानुचरस्य ईश्वरकिङ्करस्य सिंहस्य वाचं निशम्य मनुष्यदेवः राजा पुनरपि उवाच। किम्भूतः सन्? तेन सिंहेन यत् अध्यासितं व्याक्रमणम्। नपुंसके भावे क्तः। तेन कातरे अक्षिणी यस्याः तया। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्'—इति षच्। 'षिद्‌गौरादिभ्यश्च' इति ङीष्। किंवा वध्यतीति भीत्यैवं स्थितया इत्यर्थः। धेन्वा निरीक्ष्यमाणः अतएव सुतरां दयालुः सन्। सुतरामित्यत्र 'द्विवचनविभज्य' इत्यादिना सुशब्दात् तरप् "किमेत्तिङव्यय' इत्यादिना आम्प्रत्ययः 'तद्धितश्चासर्व-विभक्तिः' इत्यव्ययसंज्ञा ॥

৫২। সিংহ কর্ত্তৃক আক্রান্তা সেই ধেনু নন্দিনী, মহারাজ দিলীপের প্রতি কাতরদৃষ্টিপাত করিতে লাগিলেন, মহারাজ তাহাতে অতিমাত্র দয়ার্দ্র হইলেন এবং সেই দেবানুচর সিংহের বাক্য শ্রবণ করিয়া, পুনরায় বলিলেন।

क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढ़ः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥५३

५३ अः। क्षतात् त्रायते किल इति उदग्रः क्षत्रस्य शब्दः भुवनेषु रूढ़ः, तद्विपरीतवृत्तेः राज्येन उपक्रोशमलीमसैः प्राणैर्वा किम्? । वाच्य—उदग्रेण+शब्देन रूढ़ेन, कीन, (भूयते)।

५३। किमुवाचेत्याह—क्षतादिति। क्षणु हिंसायामिति धातोः सम्पदादित्वात् क्विप्, 'गमादीनाम्' इति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धम्, क्षतः नाशात् त्रायते इति क्षत्रः। सुपीति योग-विभागात् कः। तामेतां व्युत्पत्तिं कविरर्थतोऽनुक्रामति—क्षतादित्या-दिना। उदग्रः उन्नतः क्षत्रस्य क्षत्रवर्णस्य शब्दः वाचकः क्षत्रशब्द इत्यर्थः, क्षतात् त्रायते इति व्युत्पत्तया भुवनेषु रूढ़ः किल प्रसिद्धः खलु, नाम्न-

कर्णादिवत् केवलरूढ़ः किन्तु पङ्कजादिवत् योगरूढ़ इत्यर्थः। ततः किमित्यत आह—तस्य क्षत्रशब्दस्य विपरीतवृत्तेः विरुद्धव्यापारस्य क्षतत्राणमकुर्व्वत; पुंसः राज्येन किम्? उपक्रोशमलीमसैः; निन्दामलिनैः। 'उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे' इत्यमरः। 'ज्योत्स्ना तमिस्रा' इत्यादिना मलीमसशब्दो निपातितः। 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः। तैः प्राणैर्वा किम्! निन्दितस्य सर्वं व्यर्थमित्यर्थः। एतेन 'एकातपत्रम्' इत्यादिना श्लोकद्वयेनोक्तं प्रत्युक्तमिति वेदितव्यम्॥

৫৩। বিপদ্ হইতে যে পরিত্রাণ করে তাহাকেই 'ক্ষত্রিয়' বলে; এই অর্থেই 'ক্ষত্রিয়' নাম জগতে বিখ্যাত; আমি যদি সেই 'ক্ষত্রিয়' নামেরই বিপরীত কার্য্য করি, তবে আমার রাজ্যেই বা কি কাজ? আর এই কলুষিত জীবনেই বা কি কাজ?

**कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम्।**
**इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम्॥५४**

५४ अ:। महर्षेः अनुनयश्च अन्यपयस्विनीनां विश्राणनात् कथं नु शक्यः, इमां सुरभेः अनूनाम् अवेहि, तु त्वया रुद्रौजसा अस्यां प्रहृतम्॥ वाच्य—अनुनयेन च शक्येन (भूयते) एषा अनूना अवेयतां, त्वं प्रहृतवती।

५४। 'अथैकधेनोः' इत्यत्रोत्तरमाह—कथमिति। अनुनयः क्रोधापनयः। चकारो वाकारार्थः। महर्षेरनुनयो वा। अन्यासां पयस्विनीनां दोग्ध्रीणां गवां विश्राणनात् दानात्। 'त्यागो वितरणं दानमुत्सर्जनविसर्ज्जने। विश्राणनं वितरणम्' इत्यमरः। कथं नु शक्यः? न शक्य इत्यर्थः। अत्र हेतुमाह—इमां गां सुरभेः कामधेनोः। 'पञ्चमी विभक्ते' इति पञ्चमी। अनूनाम् अन्यूनाम् अवेहि जानीहि। तर्हि कथमस्याः परिभवोऽभूदित्याह—रुद्रौजसेति। अस्यां गवि त्वया कर्त्रा प्रहृतं, तु प्रहारस्तु। नपुंसके भावे क्तः। रुद्रौजसा ईश्वरसामर्थ्येन, न तु स्वयमित्यर्थः। 'सप्तम्यधिकरणे च' इति सप्तमी॥

৫৪। আর পয়স্বিনী অন্য ধেনু সকল দান করিয়াই বা কিরূপে মহর্ষির কোপশান্তি করিতে পারিব? আপনি জানিবেন—এই ধেনু সুরভি অপেক্ষা ন্যূনা নহেন; আপনি কেবল শিবের প্রভাবেই ইঁহাকে আক্রমণ করিতে সমর্থ হইয়াছেন।

**सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः।**
**न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः॥५५**

५५ अ: । मया स्वदेहार्पणनिष्क्रयेण सा इयं भवतो मोचयितुं न्याय्या, एवं सति तव पारणा विहता न स्यात्, मुनेः क्रियार्थः अलुप्तश्च भवेत् । वाच्य—तया अनया न्याय्यया (भूयते) पारणया विहतया न भूयेत । क्रियार्थेन अलुप्तेन भूयेत ।

५५ । तर्हि किं चिकीर्षितमित्याह—सेयमिति । सा इयम् गौः, मया । निष्क्रीयते प्रत्याक्रियते अनेन परगृहीतमिति निष्क्रयः प्रतिशीर्षकम् । 'एरच्' इति अच्प्रत्ययः । स्वदेहार्पणमेव निष्क्रयः तेन भवतः त्वत्तः । पञ्चम्यास्तसिल् । मोचयितुं न्याय्या न्यायादनपेता युक्तेत्यर्थः । 'धर्म्मपथ्यर्थ' इत्यादिना यत्प्रत्ययः । एवं सति तव पारणा भोजनं विहता न स्यात् । मुनेः क्रिया होमादिः स एव अर्थः प्रयोजनं, स च अलुप्तः भवेत् । स्वप्राणव्ययेनापि स्वामिगुरुधनं संरक्ष्यमिति भावः ॥

৫৫ । অতএব দেহরূপ মূল্য দিয়া আপনার নিকট হইতে ইহাকে মোচন করা আমার কর্ত্তব্য ; ইহাতে আপনার পারণারও ব্যাঘাত হইবে না, মহর্ষির ধর্ম্মকর্ম্মও অব্যাহত থাকিবে ।

**भवानपीदं परवानवैति महान् हि यत्नस्तव देवदारौ ।**
**स्थातुं नियोक्तुर्न हि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥ ५६**

५६ अ: । परवान् भवानपि इदम् अवैति, हि (यतः) तव देवदारौ महान् यत्नः, रक्ष्यं विनाश्य स्वयम् अक्षतेन, (सता) नियोक्तुः अग्रे स्थातुं न हि शक्यम् ॥ वाच्य- परवता भवता इदम् अवेयतां, महता यत्नेन (भूयते)...अक्षतः शक्नुयात् ।

५६ । अत्र भवानेव प्रमाणमित्याह—भवानिति । परवान् स्वामिपरतन्त्रः भवान् अपि । 'परतन्त्रः पराधीनः परवान् नाथवानपि' इत्यमरः । इदं वक्ष्यमाणम् अवैति, भवता अनुभूयते एव इत्यर्थः । 'शेषे प्रथमः' इति प्रथमपुरुषः । किमित्यत आह—हि यस्मात् हेतोः । 'हि हेताववधारणे' इत्यमरः । तव देवदारौ विषये महान् यत्नः महता यत्नेन रक्ष्यते इत्यर्थः । इदं शब्दोक्तमर्थं दर्शयति—स्थातुमिति । रक्ष्यं वस्तु विनाश्य विनाशं गमयित्वा स्वयम् अक्षतेन अव्रणेन नियुक्तेन इति शेषः नियोक्तुः स्वामिनः अग्रे स्थातुं शक्यं न हि ॥

৫৬ । আর, আপনিও পরের অধীন বলিয়াই ত গুরুতর যত্নে এই দেবদারু রক্ষা করিতেছেন ; অতএব আপনি নিজেই ত বুঝিতে পারিতেছেন যে,—ভৃত্য প্রভুর রক্ষণীয় বস্তুটী বিনষ্ট করিয়া স্বয়ং অক্ষত শরীরে তাঁহার নিকট উপস্থিত হইতে পারে না ।

**किमप्यहिंस्यस्तव चेन्मतोऽहं**
**यशःशरीरे भव मे दयालुः ।**

एकान्तविध्वंसिषु मद्विधानां
पिण्डेष्वनास्था खलु भौतिकेषु ॥ ५७

५७ अः। किमपि अहं तव अहिंस्यः मतश्चेत् तर्हि मे यशःशरीरे दयालुर्भव, मद्विधानाम् एकान्त-विध्वंसिषु भौतिकेषु पिण्डेषु अनास्था खलु ॥ वाच्य—मया अहिंस्येन मतेन (भूयते), दयालुना भूयताम्, अनास्थया (भूयते)।

५७। सर्व्वथा चैतदप्रतिहार्य्यमित्याह,—किमिति। किमपि किंवा अहं तव अहिंस्यः अवध्यः मतः चेत् तर्हि मे यश एव शरीरं तस्मिन् दयालुः कारुणिकः भव। 'स्याद् दयालुः कारुणिकः' इत्यमरः। ननु मुख्यमुपेक्ष्या-मुख्यशरीरे कोऽभिनिवेशः अत आह—एकान्तेति। मद्विधानां मादृशानां विवेकिनाम् एकान्तविध्वंसिषु अवश्यविनाशिषु भौतिकेषु पृथिव्यादिभूत-विकारेषु पिण्डेषु शरीरेषु अनास्था खलु अनपेक्षा एव। 'आस्थात्वालम्बनास्था-नयत्नापेक्षासु कथ्यते' इति विश्वः॥

৫৭। অথবা আমি আপনার অবধ্য যদি ইহাই আপনি ঠিক করিয়া থাকেন, তবে কৃপাপূর্ব্বক এই ভৌতিক দেহের পরিবর্ত্তে আমার যশঃস্বরূপ শরীর রক্ষা করুন, যাদৃশ ব্যক্তিরা অবশ্য বিনশ্বর পঞ্চভূতাত্মক এই দেহপিণ্ড নিতান্তই অকিঞ্চিৎকর মনে করিয়া থাকে।

सम्बन्धमाभाषणपूर्वमाहु-
र्वृत्तः स नौ सङ्गतयोर्वनान्ते।
तद्भूतनाथानुग नार्हसि त्वं
सम्बन्धिनो मे प्रणयं विहन्तुम् ॥ ५८

५८ अः। सम्बन्धम् आभाषणपूर्व्वम् आहुः वनान्ते सङ्गतयोः नौ स वृत्तः, तत् हे भूतनाथानुग! त्वं सम्बन्धिनो मे प्रणयं विहन्तुं नार्हसि॥ वाच्य—सम्बन्धः आभाषणपूर्व्वः, तेन वृत्तं, त्वया न अर्ह्यते।

५८। सौहार्दादहमनुसरणीयोऽस्मीत्याह—सम्बन्धमिति। सम्बन्धं सख्यम् आभाषणम् आलापः पूर्व्वं कारणं यस्य तम् आहुः। 'स्यादा-भाषणमालापः' इत्यमरः। सः तादृक् सम्बन्धः वनान्ते सङ्गतयोः नौ आवयोः वृत्तः जातः तत् ततः हेतोः हे भूतनाथानुग! शिवानुचर! एतेन तस्य महत्त्वं सूचयति, अतएव सम्बन्धिनः मित्रस्य मे प्रणयं याच्ञाम्। 'प्रणया-स्त्वमी विस्रम्भयाच्ञाप्रेमाणः' इत्यमरः। विहन्तुं न अर्हसि॥

৫৮। পরস্পর আলাপের পরই বন্ধুত্ব-সম্বন্ধ জন্মে, ইহা পণ্ডিতেরা বলিয়া থাকেন;

এই বনমধ্যে আমরা উভয়ে মিলিত হইয়া আলাপ করায় আমাদের মধ্যে যে বন্ধুত্ব ঘটিয়াছে ; অতএব, হে শিবানুচর ! বন্ধুর প্রার্থনা বিফল করা আপনার উচিত হয় না।

**तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।**
**स न्यस्तशस्त्रो हरये स्वदेहमुपानयत् पिण्डमिवामिषस्य ॥५९**

५९ अः। तथेति गाम् उक्तवते हरये सद्यः प्रतिष्टम्भविमुक्तबाहुः स दिलीपः न्यस्तशस्त्रः सन् स्वदेहम् आमिषस्य पिण्डमिव उपानयत् ॥ वाच्य—प्रतिष्टम्भविमुक्तबाहुना तेन दिलीपेन न्यस्तशस्त्रेण स्वदेहः पिण्ड इव उपानीयत।

५९। तथा इति गाम् उक्तवते हरये सिंहाय। 'कपौ सिंहे सुवर्णे च वर्णे विष्णौ हरिं विदुः' इति शाश्वतः। सद्यः तत्क्षणे प्रतिष्टम्भात् प्रतिबन्धात् विमुक्तौ बाहू यस्य सः दिलीपः, न्यस्तशस्त्रः त्यक्तायुधः सन्, स्वदेहम् आमिषस्य मांसस्य। 'पललं क्रव्यमामिषम्' इत्यमरः। 'पिण्डं' कवलम् इव उपानयत् समर्पितवान्। एतेन निर्म्ममत्वमुक्तम् ॥

৫৯। সিংহ 'তথাস্তু' বলিয়া স্বীকার করিবামাত্র রাজার অবরুদ্ধ বাহু অবষ্টম্ভমুক্ত হইল এবং রাজা শস্ত্র পরিত্যাগপূর্ব্বক নিজদেহ তুচ্ছ মাংসপিণ্ডের ন্যায় অবলীলাক্রমে সিংহকে সমর্পণ করিতে উদ্যত হইলেন।

**तस्मिन् क्षणे पालयितुः प्रजाना-**
**मुत्पश्यतः सिंहनिपातमुग्रम् ।**
**अवाङ्मुखस्योपरि पुष्पवृष्टिः**
**पपात विद्याधरहस्तमुक्ता ॥ ६०**

६० अः। तस्मिन् क्षणे उग्रं सिंहनिपातम् उत्पश्यतः अवाङ्मुखस्य प्रजानां पालयितुः उपरि विद्याधरहस्तमुक्ता पुष्पवृष्टिः पपात ॥ वाच्य—हस्तमुक्तया पुष्पवृष्ट्या पेते।

६०। तस्मिन् क्षणे उग्रं सिंहनिपातम् उत्पश्यतः उत्प्रेक्षमाणस्य तर्कयतः अवाङ्मुखस्य अधोमुखस्य। 'स्यादवाङप्यधोमुखः' इत्यमरः। प्रजानां पालयितुः राज्ञः उपरि उपरिष्टात्। 'उपर्य्युपरिष्टात्' इति निपातः। विद्याधराणां देवयोनिविशेषाणां हस्तैः मुक्ता पुष्पवृष्टिः पपात ॥

৬০। সিংহ প্রচণ্ড লম্ফপ্রদানপূর্ব্বক তাঁহার উপরে পতিত হইবে, রাজা এই ভাবিয়া এক একবার সিংহের প্রতি দৃষ্টিপাতপূর্ব্বক যেমন অধোমুখ হইয়া উপবিষ্ট হইলেন, অমনি বিদ্যাধরগণ তাঁহার মস্তকে পুষ্পবৃষ্টি করিলেন।

उत्तिष्ठ वत्सेत्यमृतायमानं
वचो निशम्योत्थितमुत्थितः सन् ।
ददर्श राजा जननीमिव स्वां
गामग्रतः प्रस्रविणीं न सिंहम् ॥ ६१

६१ अ: । राजा अमृतायमानम् उत्थितं 'हे वत्स उत्तिष्ठ' इति वचः निशम्य उत्थितः सन् अग्रतः प्रस्रविणीं गां स्वां जननीमिव ददर्श, सिंहं न (ददर्श) ॥ वाच्य—राज्ञा 'उत्थीयता' उत्थितेन सता प्रस्रविणी गौः सजननी इव ददृशे, सिंहः न ।

६१ । राजा, अमृतमिव आचरतीति अमृतायमानं तत् । 'उपमानादाचारे' इति क्यच्, ततः शानच् । उत्थितम् उत्पन्नं हे वत्स ! 'उत्तिष्ठ' इति वचः निशम्य श्रुत्वा उत्थितः सन् । अस्तेः शतृप्रत्ययः । अग्रतः अग्रे प्रस्रवः क्षीरस्रावः अस्ति यस्याः सा तां प्रस्रविणीं गां स्वां जननीम् इव ददर्श, न सिंहं ददर्श ॥

৬১ । অনন্তর 'উঠ বৎস !' এই অমৃততুল্যবাক্য উচ্চারিত হইতে শুনিয়া রাজা উঠিলেন, এবং দেখিলেন,—সেই সিংহ নাই, আপনার জননীর ন্যায় সেই নন্দিনী ধেনু তাঁহার সম্মুখে দাঁড়াইয়া দুগ্ধধারা ক্ষরণ করিতেছেন ।

तं विस्मितं धेनुरुवाच साधो
मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि
प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥ ६२

६२ अ: । विस्मितं तं धेनुः उवाच हे साधो । मया मायाम् उद्भाव्य परीक्षितोऽसि, ऋषिप्रभावात् मयि अन्तकोऽपि प्रहर्तुं न प्रभुः, अन्यहिंस्राः किमुत ? ॥ वाच्य—विस्मितः स धेन्वा ऊचे, परीक्षितेन भूयते, अन्तकेनापि न प्रभुणा अन्यहिंस्रैः किं (भूयते)

६२ । विस्मितम् आश्चर्यं गतम् । कर्त्तरि क्तः । तं दिलीपं धेनुः उवाच । किमित्यत्राह—साधो ! मया मायाम् उद्भाव्य कल्पयित्वा परीक्षितः असि । ऋषिप्रभावात् मयि अन्तकः यमः अपि प्रहर्तुं न प्रभुः न समर्थः अन्ये हिंस्राः घातुकाः । 'शरारुर्घातुको हिंस्रः' इत्यमरः । 'नमिकम्पि' इत्यादिना रप्रत्ययः । किमुत ? सुतरां न प्रभवः इति योज्यम् । 'बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरः' इत्यमरः ॥

৬২ । রাজাকে বিস্ময়াপন্ন দেখিয়া নন্দিনী কহিলেন, হে সাধো ! আমি মায়াদ্বারা

তোমাকে পরীক্ষা করিলাম ; মহর্ষির প্রভাবে স্বয়ং যমও আমাকে হিংসা করিতে পারে না, সামান্য হিংস্র জন্তুর কথা আর কি বলিব।

भक्त्या गुरौ मय्यनुकम्पया च
प्रीतास्मि ते पुत्त्र वरं वृणीष्व।
न केवलानां पयसां प्रसूति-
मवेहि मां कामदुघां प्रसन्नाम् ॥ ६३

६३ अः। हे पुत्त्र! गुरोः भक्त्या मयि अनुकम्पया च ते प्रीतास्मि, वरं वृणीष्व, मां पयसां प्रसूतिं न अवेहि, किन्तु प्रसन्नां कामदुघाम् अवेहि ॥ ॥ वाच्य—प्रीतया (भूयते) वरः व्रियतां अहं प्रसूतिः न प्रसन्ना कामदुघा अवेयै।

६३। हे पुत्र! गुरौ भक्त्या मयि अनुकम्पया च ते तुभ्यं प्रीता अस्मि। 'क्रियाग्रहणमपि कर्त्तव्यम् इति चतुर्थी। वरं देवेभ्यो वरणीयम् अर्थम्! 'देवाहृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये' इत्यमरः। वृणीष्व स्वीकुरु। तथाहि मां केवलानां पयसां प्रसूतिं न अवेहि न विद्धि, किन्तु प्रसन्नां मां कामानां दोग्धीति कामदुघा, ताम् अवेहि। 'दुहःकप् घश्च' इति कप्‌प्रत्ययः॥

৬৩। তোমার গুরুভক্তি ও আমার প্রতি অনুকম্পা দর্শনে আমি তোমার প্রতি প্রসন্না হইয়াছি ; বৎস! বর প্রার্থনা কর ; জানিও—আমি কেবল দুগ্ধ প্রসবিনী নহি, প্রসন্না হইলে মনোবাঞ্ছাও পূর্ণ করিয়া থাকি।

ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः।
वंशस्य कर्त्तारमनन्तकीर्त्तिं सुदक्षिणायां तनयं ययाचे ॥६४

६४ अः। ततः मानितार्थी स्वहस्तार्ज्जितवीरशब्दः स हस्तौ समानीय वंशस्य कर्त्तारम् अनन्तकीर्त्तिं तनयं सुदक्षिणायां ययाचे॥ वाच्य—मानितार्थिना स्वहस्तार्ज्जितवीरशब्देन...तेन कर्त्ता अनन्तकीर्त्तिः तनयः ययाचे।

६४। ततः मानितार्थी स्वहस्तार्जितो वीर इति शब्दो येन सः। एतेनास्य दातृत्वं दैन्यराहित्यं चोक्तम्। सः राजा, हस्तौ समानीय सन्धाय अञ्जलिं बद्ध्वा इत्यर्थः, वंशस्य कर्त्तारं प्रवर्त्तयितारम्, अतएव रघुकुलमिति प्रसिद्धिः। अनन्तकीर्त्तिं स्थिरयशसं तनयं सुदक्षिणायां ययाचे॥

৬৪। যিনি প্রার্থনা পূরণ করিয়া অর্থিগণকে সম্মানিত করিয়া থাকেন, যিনি নিজ ভুজবলে 'বীর' বলিয়া বিখ্যাত হইয়াছেন, সেই রাজা দিলীপ কৃতাঞ্জলিপুটে এই প্রার্থনা করিলেন যে,—'সুদক্ষিণার গর্ভে যেন বংশরক্ষক অনন্তকীর্ত্তি পুত্র জন্মগ্রহণ করে"।

**सन्तानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा ।**
**दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५**

६५ अ: । सा पयस्विनी सन्तानकामाय राज्ञे कामं तथेति प्रतिश्रुत्य, हे पुत्र ! पत्रपुटे मदीयं पयो दुग्ध्वा उपभुङ्क्ष्व इति तम् आदिदेश ॥ वाच्य—तया पयस्विन्या "उपभुज्यताम्" इति आदिदिशे ।

६५ । सा पयस्विनी गौः, सन्तानं कामयते इति सन्तानकामः । 'कर्मण्यण्' । तस्मै राज्ञे, तथेति, काम्यते इति कामो वरः । कर्मणि घञ् प्रत्ययः । . प्रतिश्रुत्य प्रतिज्ञाय 'हे पुत्र ! मदीयं पयः पत्रपुटे पत्रनिर्मिते पात्रे दुग्ध्वा उपभुङ्क्ष्व पिब । 'उपयुङ्क्ष्व' इति वा पाठः । इति तम् आदिदेश आज्ञापितवती ॥

৬৫ । পুত্রপ্রার্থী রাজাকে অভিলষিত বরদানে প্রতিশ্রুত হইয়া, সেই পয়স্বিনী ধেনু নন্দিনী তাহাকে আদেশ করিলেন ;—হে পুত্র ! তুমি পত্রপুটে আমার দুগ্ধ দোহন করিয়া পান কর ।

**वत्सस्य होमार्थविधेश्च शेष-**
**मृषेरनुज्ञामधिगम्य मातः ! ।**
**औधस्यमिच्छामि तवोपभोक्तुं**
**षष्ठांशमुर्व्या इव रक्षितायाः ॥ ६६**

६६ अ: । हे मातः ! ऋषेः अनुज्ञाम् अधिगम्य वत्सस्य होमार्थविधेश्च शेषं तव औधस्यं रक्षितायाः उर्व्याः षष्ठांशमिव उपभोक्तुम् इच्छामि ॥ वाच्य—इष्यते ( मया ) ।

६६ । हे मातः । वत्सस्य वत्सपीतस्य शेषं वत्सपीतावशिष्टमित्यर्थः होम एव अर्थः तस्य विधिः अनुष्ठानं तस्य शेषं होमावशिष्टमित्यर्थः । तव ऊधसि भवम् औधस्यम् क्षीरं । 'शरीरावयवाच्च' इति यत्प्रत्ययः । रक्षिताया उर्व्याः षष्ठांशं षष्ठभागम् इव ऋषेरनुज्ञामधिगम्य उपभोक्तुमिच्छामि ॥

৬৬ । রাজা কহিলেন,—অয়ি জননি ! আপনার দুগ্ধ অগ্রে বৎস পান করিলে এবং তদ্দ্বারা মহর্ষির হোমকার্য্য অনুষ্ঠিত হইলে, যাহা অবশিষ্ট থাকিবে, মহর্ষির আজ্ঞা ক্রমে মৎপালিত পৃথিবীর ষষ্ঠাংশের ন্যায় আমি তাহাই ভক্ষণ করিতে ইচ্ছা করি ।

**इत्थं क्षितीशेन वशिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव ।**
**तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रममश्रमेण ॥ ६७**

६७ अ: । क्षितीशेन इत्थं विज्ञापिता वशिष्ठधेनुः प्रीततरा बभूव, तदन्विता च हैमवतात् कुक्षेः

अश्रमेव आश्रमं प्रत्याययौ ॥ वाच्य—विज्ञापितया वशिष्ठधेन्वा प्रीततरया बभूवे । तदन्वितया प्रत्यायये ।

६८ । इत्थं क्षितीशेन विज्ञापिता वशिष्ठस्य धेनुः प्रीततरा पूर्वं शुश्रूषया प्रीता सम्प्रति एतया विज्ञापनया प्रीततरा अतिसन्तुष्टा बभूव, तदन्विता तेन दिलीपेन अन्विता हैमवतात् हिमवत्सम्बन्धिनः कुक्षेः गुहायाः सकाशात् अश्रमेण अनायासेन आश्रमं प्रत्याययौ आगता च ॥

৬৭ । পৃথ্বীশ্বর এইরূপ নিবেদন করিলে, বশিষ্ঠধেনু নন্দিনী অধিকতর প্রীত হইলেন এবং হিমালয়গহ্বর হইতে বহির্গত হইয়া, রাজার অগ্রে অগ্রে সুখে তপোবনে প্রত্যাগমন করিলেন ।

**तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ।**
**प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ॥ ६८ ॥**

६८ अः । प्रसन्नेन्दुमुखः नृपाणां गुरुः प्रहर्षचिह्नानुमितं तस्याः प्रसादं पुनरुक्तयेव वाचा गुरवे निवेद्य प्रियायै शशंस ॥ वाच्य—प्रसन्नेन्दुमुखेन—गुरुणा—शशंसे ।

६८ । प्रसन्नेन्दुरिव मुखं यस्य सः नृपाणां गुरुः दिलीपः, प्रहर्षचिह्नैः मुखरागादिभिः अनुमितम् ऊहितं तस्याः धेनोः प्रसादम् अनुग्रहं प्रहर्षचिह्नैरेव ज्ञातत्वात्, पुनरुक्तया एव वाचा गुरवे निवेद्य विज्ञाप्य, पश्चात् प्रियायै शशंस । कथितस्यैव कथनं पुनरुक्तिः, न चेह तदस्ति, किन्तु चिह्नैः कथितप्रायत्वात् पुनरुक्तयेव स्थितया इत्युत्प्रेक्षा ॥

৬৮ । আনন্দে রাজেন্দ্রের মুখশ্রী নির্ম্মল শশাঙ্কের ন্যায় উজ্জ্বল হইয়াছিল ; তিনি গুরুদেবকে ও তৎপরে প্রিয়তমাপত্নী সুদক্ষিণাকে নন্দিনীর সেই অনুগ্রহের কথা বলিয়া যেন তাহার পুনরুক্তি করিলেন ; কেন না তাঁহার আনন্দচিহ্ন দেখিয়াই তাঁহারা সকল বুঝিতে পারিয়াছিলেন ।

**स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम् ।**
**पपौ वशिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्त्तमिवातितृष्णः ॥ ६९**

६९ अः । अनिन्दितात्मा सद्वत्सलः सः वशिष्ठेन कृताभ्यनुज्ञः वत्सहुतावशेषं नन्दिनीस्तन्यं शुभ्रं मूर्त्तं यशः इव अतितृष्णः सन् पपौ ॥ वाच्य—अनिन्दितात्मना सद्वत्सलेन तेन कृताभ्यनुज्ञेन अतितृष्णेन पपे ।

६९ । अनिन्दितात्मा अगर्हितस्वभावः सत्सु वत्सलः प्रेमवान् सद्वत्सलः । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । वशिष्ठेन कृताभ्यनुज्ञः कृतानुमतिः सः राजा, वत्सस्य हुतस्य च अवशेषं पीतहुतावशिष्टं नन्दिन्याः स्तन्यं क्षीरं शुभ्रं मूर्त्तं परिच्छिन्नं यश इव, अतितृष्णः सन् पपौ ॥

৬৯। নির্মলস্বভাব সাধুজনবৎসল রাজা, মহর্ষির আদেশে বৎসের পানাবশিষ্ট ও মহর্ষির হোমাবশিষ্ট নন্দিনীর শুভ্র দুগ্ধ নিতান্ত আগ্রহের সহিত পান করিলেন ; বোধ হইল যেন তিনি দুগ্ধরূপে মূর্তিমান স্বকীয় শুভ্র যশ উপভোগ করিলেন।

प्रातर्यथोक्तव्रतपारणान्ते
प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।
तौ दम्पती स्वां प्रति राजधानीं
प्रस्थापयामास वशी वशिष्ठः ॥ ७०

७० अः। वशी वशिष्ठः प्रातः यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य तौ दम्पती स्वां राजधानीं प्रति प्रस्थापयामास ॥ वाच्य—वशिना वशिष्ठेन तौ दम्पती प्रस्थापयामासाते।

७०। वशी वशिष्ठः प्रातः यथोक्तस्य पूर्वोक्तस्य व्रतस्य गोसेवारूपस्य अङ्गभूता या पारणा तस्या अन्ते प्रास्थानिकं प्रस्थानकाले भवं तत्कालो-चितमित्यर्थः। 'कालाट्ठञ्' इति ठञ् प्रत्ययः। 'यथाकथञ्चित् गुणे वृत्त्यापि काले वर्त्तमानात् तत्तत्प्रत्यय इष्यते इति वृत्तिकारः। ईयते प्राप्यते अनेनेति अयनं स्वस्त्ययनं शुभावहम् आशीर्व्वादं प्रयुज्य तौ दम्पती स्वां राजधानीं पुरीं प्रति प्रस्थापयामास॥

৭০। এইরূপে ব্রতপারণা সমাপন হইলে পরদিন প্রাতঃকালে সংযতেন্দ্রিয় মহর্ষি বশিষ্ঠ, প্রস্থান কালোপযোগী আশীর্ব্বচন প্রয়োগ করিয়া সেই রাজদম্পতিকে আপনা-দের রাজধানীতে প্রত্যাগমন জন্য অনুমতি দিয়াছিলেন।

प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीञ्च ।
धेनुं सवत्साञ्च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥ ७१

७१ अः। नृपः हुतं हुताशं, भर्त्तुः अनन्तरम् अरुन्धतीञ्च, सवत्सां धेनुञ्च प्रदक्षिणीकृत्य सन्मङ्ग-लोदग्रतरप्रभावः सन् प्रतस्थे ॥ वाच्य—नृपेन...प्रभावेण प्रतस्थे।

७१। नृपः हुतं तर्पितम्। हुतमश्नातीति हुताशः अग्निः। 'कर्म्मण्यण्' तं भर्त्तुः मुनेः अनन्तरं प्रदक्षिणानन्तरमित्यर्थः। अरुन्धतीञ्च सवत्सां धेनुञ्च प्रदक्षिणीकृत्य। प्रगतो दक्षिणं प्रदक्षिणम्। 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावः, ततः च्विः अप्रदक्षिणं सम्पाद्यमानं कृत्वा प्रदक्षिणीकृत्य, सद्भिः मङ्गलैः प्रदक्षिणादिभिः मङ्गलाचारैः उदग्रतरप्रभावः सन् प्रतस्थे ॥

৭১। হোমাগ্নি, বশিষ্ঠদেব, অরুন্ধতী এবং সবৎসা নন্দিনীকে প্রদক্ষিণ করিয়া, মঙ্গলাচারে সংবর্দ্ধিতপ্রভাবসম্পন্ন হইয়া মহারাজ দিলীপ, নিজ রাজ্যের দিকে গমন করিয়াছিলেন।

श्रोत्राभिरामध्वनिना रथेन स धर्म्मपत्नीसहितः सहिष्णुः ।
ययावनुद्घातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥ ৭২

৭২ अ: । धर्म्मपत्नीसहित: सहिष्णु: स: श्रोत्राभिरामध्वनिना अनुद्घातसुखेन रथेन ( तादृशेन ) पूर्णेन स्वेन मनोरथेनेव मार्गं ययौ । वाच्य—धर्म्मपत्नीसहितेन सहिष्णुना तेन मार्ग: यये ।

৭২ । धर्म्मपत्नीसहित: सहिष्णु: व्रतादिदु:खसहनशील: स: नृप:, श्रोत्राभिरामध्वनिना कर्णाह्लादकरस्वनेन, अनुद्घात: पाषाणादिप्रतिघातरहित: अतएव सुखयतीति सुख: तेन रथेन, स्वेन पूर्णेन सफलेन, मनोरथेन इव, मार्गम् अध्वानं ययौ । मनोरथपक्षे—ध्वनि: श्रुति:, अनुद्घात: प्रतिबन्धनिवृत्ति: ॥

৭২ । শ্রমসহিষ্ণু, সেই রাজা ধর্ম্মপত্নীর সহিত রথে আরোহণ করিয়া চলিলেন, রথ, শ্রুতিমধুর শব্দে চলিতে লাগিল; বোধ হইল যেন তিনি আপনারই পূর্ণ মনোরথে চড়িয়া যাইতেছেন ; পথিমধ্যে রথ আঘাতাদি রহিত গতিতে সঞ্চালিত হওয়ায় তাঁহারা অতি সুখে গমন করিলেন ।

तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम् ।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥৭৩॥

৭৩ अ: । प्रजास्तृप्तिम् अनाप्नुवद्भि: नेत्रै: अदर्शनेन आहितौत्सुक्यं प्रजार्थव्रतकर्शिताङ्गं नवोदयम् ओषधीनां नाथमिव तं पपु: ॥ वाच्य—आहितौत्सुक्य:...कर्शिताङ्ग: नवोदय:...नाथ इव स: प्रजाभि: पपे ।

৭৩ । अदर्शनेन प्रवासनिमित्तेन आहितौत्सुक्यं जनितदर्शनोत्कण्ठं प्रजार्थेन सन्तानार्थेन व्रतेन नियमेन कर्शितं कृशीकृतम् अङ्गं यस्य तं नवोदयं नवाभ्युदयं प्रजा: तृप्तिम् अनाप्नुवद्भि: अतितृष्णुभि: नेत्रै: ओषधीनां नाथं सोमम् इव तं राजानं पपु: अत्यास्थया ददृशुरित्यर्थ: । चन्द्रपक्षे—अदर्शनं कलाक्षयनिमित्तं, प्रजार्थं लोकहितार्थं व्रतं देवताभ्य: कलादाननियम: । 'तञ्च सोमं पपुर्देवा: पर्य्यायेणानुपूर्व्वश:' इति व्यास: । उदय: आविर्भाव:, अन्यत् समानम् ॥

৭৩ । প্রজারা এত দিন তাঁহাকে না দেখিয়া দেখিবার জন্ম নিতান্ত উৎসুক ছিল, এক্ষণে তাহারা, পুত্রার্থে ব্রতপালনক্লেশে ক্ষীণাঙ্গ সেই রাজাকে নবোদিত (ক্ষীণ) চন্দ্রমার ন্যায় বারংবার সতৃষ্ণভাবে নিরীক্ষণ করিয়াও নয়নের তৃপ্তিসাধন করিতে পারিল না ।

पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः ।
भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ ৭৪

৭৪ अ:। पुरन्दरश्रीः सः पौरैः अभिनन्द्यमानः उत्पताकं पुरं प्रविश्य भुजङ्गेन्द्रसमानसारे भुजे भूमेर्धुरं भूयः आससञ्ज॥ वाच्य—पुरन्दरश्रिया तेन अभिनन्द्यमानेन धूः भूयः आससञ्जे।

৭৪। पुरः पुरीः असुराणां दारयतीति पुरन्दरः शक्रः। 'पूःसर्वयोर्दारिसहोः' इति खच्प्रत्ययः, 'वाचंयमपुरन्दरौ च' इति मुमागमो निपातितः। तस्य श्रीरिव श्रीर्यस्य सः नृपः, पौरैरभिनन्द्यमानः, उत्पताकम् उच्छ्रितध्वजम्। 'पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्' इत्यमरः। पुरं प्रविश्य भुजङ्गेन्द्रेण समानसारे तुल्यबले। 'सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु' इत्यमरः। भुजे भूयः भूमेर्धुरम् आससञ्ज स्थापितवान्॥

৭৪। ইন্দ্রতুল্য ঐশ্বর্য্যশালী সেই রাজা, উদ্গতপতাকাশ্রেণীদ্বারা পরিশোভিত নগরমধ্যে প্রবেশপূর্ব্বক পুরবাসীগণের অভিনন্দন লাভ করিয়া, বাসুকির তুল্য শক্তি-সম্পন্ন নিজ ভুজযুগলে পুনরায় ধরাভার গ্রহণ করিলেন।

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम्।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः॥ ৭৫

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ वशिष्ठाश्रमाभिगमनो
नाम द्वितीयः सर्गः॥ २

৭৫ अ:। अथ द्यौः अत्रेर्नयनसमुत्थं ज्योतिरिव, सुरसरित् वह्निनिष्ठ्यूतम् ऐशं तेजः इव, राज्ञी नरपतिकुलभूत्यै गुरुभिः लोकपालानुभावैः अभिनिविष्टं गर्भम् आधत्त॥ वाच्य...दिवा, सुरसरिता राज्ञ्या अभिनिविष्टः गर्भः आधीयत।

৭৫। अथ द्यौः सुरवर्त्म। 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः। अत्रेः महर्षेः नयनयोः समुत्थम् उत्पन्नं नयनसमुत्थम्। 'आतश्चोपसर्गे' इति कप्रत्ययः। ज्योतिरिव चन्द्रमिव इत्यर्थः। 'अत्रिनेत्रप्रसूतः' इति हलायुधः। चन्द्रस्यात्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे—नेत्राभ्यां वारि सुस्राव दशधा द्योतयद् दिशः। तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा। समेत्य धारयामासुर्न च ताः समशक्नुवन्। स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः। पपात भासयन् लोकान् शीतांशुः सर्वभावनः' इति। सुरसरित् गङ्गा वह्निना निष्ठ्यूतं विक्षिप्तम्। 'ष्ठिवोः शुक्ष्युनासिके च' इत्यनेन निष्ठ्यूतात् ठीवतेर्वकारस्य ऊठ्। 'शुकगुप्ताश्चनिष्ठ्यूताविक्षिप्ते-

रिताः समाः' इत्यमरः। ऐशं तेजः स्कान्दमिव। अत्र रामायणम्,—'ते गत्वा पर्वतं राम! कैलासं धातुमण्डितम्। अग्निं नियोजयामासुः पुत्रार्थं सर्व्वदेवताः। देवकार्य्यमिदं देव! समाधत्स्व हुताशन! शैल-पुत्र्यां महातेजो गङ्गायां तेज उत्सृज। देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः। गर्भं धारय वै देवि! देवतानामिदं प्रियम्। इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत्। स तस्या महिमां दृष्ट्वा समन्तादवकीर्य्य च। समन्ततस्तु तां देवीमभ्यषिञ्चत पावकः। सर्व्वस्रोतांसि पूर्णानि गङ्गया रघुनन्दन!' इति। राज्ञी सुदक्षिणा नरपतेर्दिलीपस्य कुलभूत्यै सन्तति-लक्षणायै गुरुभिः महद्भिः लोकपालानाम् अनुभावैः तेजोभिः अभि-निविष्टम् अनुप्रविष्टं गर्भम् आधत्त दधौ इत्यर्थः। अत्र मनुः—'अष्टानां लोकपालानां वपुर्धारयते नृपः' इति। अत्र आधत्तेत्यनेन स्त्रीकर्तृक-धारणमात्रमुच्यते, तथा मन्त्रे च दृश्यते,—'यथेयं पृथिवी मह्युत्तानगर्भ-मादधे। एवं तं गर्भमाधेहि दशमे मासि सूतये' इत्याश्वलायनानां सीमन्तमन्त्रे स्त्रीव्यापारधारणे आधानशब्दप्रयोगदर्शनादिति। मालिनी-वृत्तमेतत्। तदुक्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात्॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनी-समाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये नन्दिनीवरप्रदानो नाम द्वितीयः सर्गः॥ २

৭৫। দিক্ সকল যেরূপ অত্রিমুনির নেত্রবিনির্গত জ্যোতিকে (চন্দ্রমাকে) ধারণ করিয়াছিল, গঙ্গা যেরূপ অগ্নি-পরিত্যক্ত শিবতেজকে ধারণ করিয়াছিলেন, মহিষীও সেইরূপ অষ্ট লোকপালেরও দুর্ব্বহ তেজে তেজোময় রাজকুলের মঙ্গলনিদান গর্ভ ধারণ করিলেন।

দ্বিতীয় সর্গ সমাপ্ত॥

## तृतीयः सर्गः ।



अथेप्सितं भर्तुरुपस्थितोदयं
सखीजनोद्वीक्षणकौमुदीमुखम् ।
निदानमिक्ष्वाकुकुलस्य सन्ततेः
सुदक्षिणा दौर्हृदलक्षणं दधौ ॥ १

१ अः। अथ सुदक्षिणा उपस्थितोदयं भर्तुः ईप्सितं सखीजनोद्वीक्षणकौमुदीमुखम् इक्ष्वाकुकुलस्य सन्ततेः निदानं दौर्हृदलक्षणं दधौ ॥ वाच्य—सुदक्षिणया दधे ।

उपाधिगम्योऽप्यनुपाधिगम्यः समावलोक्योऽप्यसमावलोक्यः ।
भवोऽपि योऽभूदभवः शिवोऽयं जगत्यपायादपि नः स पायात् ॥

१। 'राज्ञो गर्भमाधत्त' इत्युक्तं, सम्प्रति गर्भलक्षणानि वर्णयितुं प्रस्तौति, अथेति। अथ गर्भधारणानन्तरं सुदक्षिणा उपस्थितोदयं प्राप्तकालं भर्तुः दिलीपस्य ईप्सितं मनोरथम्। भावे क्तः। पुनः सखीजनस्य उद्वीक्षणानां दृष्टीनां कौमुदीमुखं चन्द्रिकाप्रादुर्भावम्। यद्वा, कौमुदी नाम दीपोत्सवतिथिः। तदुक्तं भविष्योत्तरे,—'कौ मोदन्ते जना यस्यां तेनासौ कौमुदी मता' इति। तस्याः मुखं प्रारम्भम्। अतएव केचित् 'कौमुदीमहम्' इति पाठं पठन्ति। इक्ष्वाकुकुलस्य सन्ततेः अविच्छेदस्य निदानं मूलकारणम्। 'निदानन्त्वादिकारणम्' इत्यमरः। एवंविधं दौर्हृदलक्षणं गर्भचिह्नं वक्ष्यमाणं दधौ। स्वहृदयेन गर्भहृदयेन च द्विहृदया गर्भिणी। यथाह वाग्भटः—'मातृजञ्चास्य हृदयं मातुश्च हृदयेन तत्। सम्बद्धं तेन गर्भिण्याः श्रेष्ठं श्रद्धाभिमाननम्।' इति। तत्सम्बन्धित्वाद्गर्भो दौर्हृदमित्युच्यते, सा च तद्योगात् दौर्हृदिनीति तदुक्तम् संग्रहे, 'द्विहृदयां नारीं दौर्हृदिनीमाचक्षते' इति। अत्र दौर्हृदलक्षणस्येप्सितत्वेन कौमुदीमुखत्वेन च निरूपणात् रूपकालङ्कारः। अस्मिन् सर्गे वंशस्थं वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥

১। অনন্তর সুদক্ষিণা পতির ফলোন্মুখ মনোরথ-স্বরূপ, ইক্ষ্বাকুবংশের নিদানভূত, সখীগণের নয়নানন্দ-বিধায়ক প্রকাশোন্মুখ চন্দ্রালোক অথবা দীপোৎসবের তুল্য গর্ভলক্ষণ ধারণ করিলেন।

शरीरसादादसमग्रभूषणा
मुखेन सालक्ष्यत लोध्रपाण्डुना ।
तनुप्रकाशेन विचेयतारका
प्रभातकल्पा शशिनेव शर्व्वरी ॥ २

२ अः। शरीरसादात् असमग्रभूषणा लोध्रपाण्डुना मुखेन (उपलक्षिता) सा प्रभातकल्पा विचेयतारका तनुप्रकाशेन शशिना (उपलक्षिता) शर्वरी इव (जनैः) अलक्ष्यत॥ वाच्य—असमग्रभूषणां तां प्रभातकल्पां विचेयतारकां शर्व्वरीम् इव (जनाः) अलक्षयन्।

२। सम्प्रति क्षामताख्यं गर्भलक्षणं वर्णयति—शरीरेति। शरीरस्य सादात् कार्श्यात् असमग्रभूषणा परिमिताभरणा लोध्रपुष्पमिव पाण्डुना मुखेन उपलक्षिता सा सुदक्षिणा, विचेयाः मृग्याः तारकाः यस्यां सा तथोक्ता विरलनक्षत्रा इत्यर्थः। तनुप्रकाशेन अल्पकान्तिना शशिना उपलक्षिता ईषदसमाप्तप्रभाता प्रभातकल्पा प्रभातादीषदूना इत्यर्थः। 'तसिलादिष्वाकृत्वसुचः' इति प्रभातशब्दस्य पुंवद्भावः। शर्व्वरी रात्रिरिव अलक्ष्यत, जनैरिति शेषः। शरीरसादादिगर्भलक्षणमाह वाग्भटः—'क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचकम्। जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम्' इति॥

২। শরীরের কৃশতাবশতঃ রাজ্ঞী সুদক্ষিণা অঙ্গে সমস্ত আভরণ রাখিতে পারিলেন না, তাঁহার মুখমণ্ডল লোধ্রপুষ্পের ন্যায় পাণ্ডুবর্ণ হইল; তিনি কতিপয়মাত্র নক্ষত্রে ও ক্ষীণপ্রভ শশাঙ্কে শোভিতা প্রভাতোন্মুখী রাত্রির ন্যায় শোভা পাইতে লাগিলেন।

तदाननं मृत्सुरभि क्षितीश्वरो
रहस्युपाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां
शुचिव्यपाये वनराजिपल्वलम् ॥ ३

३ अः। क्षितीश्वरः रहसि मृत्सुरभि तदाननम् उपाघ्राय तृप्तिं न आययौ, (क इव) शुचिव्यपाये पयोमुचां पृषतैः सिक्तं वनराजिपल्वलम् उपाघ्राय करीव॥ वाच्य—क्षितीश्वरेण तृप्तिः न आपे, करिणा इव।

३। क्षितीश्वरः, रहसि मृत्सुरभि मृदा सुगन्धि तस्याः आननं तदाननं सुदक्षिणामुखम् उपाघ्राय, तृप्तिं न आययौ। कः कमिव? शुचिव्यपाये ग्रीष्मावसाने। 'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते। ग्रीष्मे हुतवहे-

ऽपि स्यात् उपधाप्ययनमिति।' इति विश्वः। पयोमुचां मेघानां पृषतैः बिन्दुभिः। 'पृषन्ति बिन्दुपृषताः' इत्यमरः। सिक्तम् उक्षितं वनराज्याः पल्वलम् उपाघ्राय, करी गजः इव। अत्र करिवनराजिपल्वलानां कान्त-कामिनीवदनसमाधिरनुसन्धेयः। गर्भिणीनां मृद्भक्षणं लोकप्रसिद्धमेव। अतएव दोहदलक्षणं गर्भलक्षणमुच्यते॥

৩। গ্রীষ্মাবসানে মেঘধারাসিক্ত বনমধ্যবর্ত্তী পল্বলের নূতন জলে মৃদ্‌গন্ধ অনুভব করিয়া হস্তীর যেরূপ তৃপ্তির অবসান হয় না, রাজাও সেইরূপ নির্জ্জনে রাজ্ঞীর মৃত্তিকা-গন্ধপূর্ণ মুখ আঘ্রাণ করিয়া তৃপ্তির অবসান করিতে পারেন নাই।

दिवं मरुत्वानिव भोक्ष्यते भुवं
दिगन्तविश्रान्तरथो हि तत्सुतः।
अतोऽभिलाषे प्रथमं तथाविधे
मनो बबन्धान्यरसान् विलङ्घ्य सा॥ ४

४ अः। तत्सुतो हि दिगन्तविश्रान्तरथः सन् मरुत्वान् दिवमिव भुवं भोक्ष्यते, अतः सा अन्य-रसान् विलङ्घ्य प्रथमं तथाविधे अभिलाषे मनो बबन्ध॥ वाच्य......तत्सुतेन विश्रान्तरथेन, मरुत्वता द्यौः इव भूः भोक्ष्यते, तया मनः बबन्धे।

४। दोहदलक्षणे मृद्भक्षणे हेत्वन्तरमुत्प्रेक्षते,—दिवमिति। हि यस्मात् दिगन्तविश्रान्तरथः चक्रवर्त्ती तस्याः सुतः तत्सुतः मरुत्वान् इन्द्रः। 'इन्द्रो मरुत्वान् मघवा' इत्यमरः। दिवं स्वर्गम् इव, भुवं भोक्ष्यते। 'भुजोऽनवने' इत्यात्मनेपदम्। अतः प्रथमं सा सुदक्षिणा तथाविधे भू-विकारे मृद्रूपे अभिलष्यते इति अभिलाषः भोग्यवस्तु तस्मिन्। कर्मणि घञ्प्रत्ययः। रस्यन्ते स्वाद्यन्ते इति रसाः भोग्यार्थाः। अन्ये च ते रसाश्च तान् विलङ्घ्य विहाय मनः बबन्ध विदधावित्यर्थः। दोहदहेतुकस्य मृद्-भक्षणस्य पुत्रभूभोगसूचनार्थत्वमुत्प्रेक्ष्यते॥

৪। ইন্দ্র যেমন স্বর্গরাজ্য ভোগ করেন, তাঁহার পুত্রও সেইরূপ দিক্‌সকলের প্রান্তভাগ পর্য্যন্ত রথসঞ্চালন করিয়া সমস্ত পৃথিবী ভোগ করিবে, এই নিমিত্ত রাজ্ঞী যেন প্রথমেই অন্যান্য রসের আস্বাদ পরিত্যাগ করিয়া মৃত্তিকা ভক্ষণে নিরতা হইয়াছিলেন।

न मे ह्रिया शंसति किञ्चिदीप्सितं
स्पृहावती वस्तुषु केषु मागधी।
इति स्म पृच्छत्यनुवेलमादृतः
प्रियासखीरुत्तरकोसलेश्वरः॥ ५

५ अ:। 'मागधी प्रिया किञ्चित् ईप्सितं मे न शंसति, केषु वस्तुषु स्पृहावती' इति अनुवेलम् आदृतः उत्तरकोशलेश्वरः प्रियासखीः पृच्छति स्म ॥ वाच्य—मागध्या ईप्सितं न शस्यते। स्पृहावत्या (भूयते) आदृतेन...ईश्वरेण...सख्यः पृच्छ्यन्ते ।

५। मगधस्य राज्ञः अपत्यं स्त्री मागधी सुदक्षिणा। 'द्व्यञ्मगधकलिङ्गसूरमसादण्' इत्यण्प्रत्ययः। प्रिया किञ्चित् किमपि ईप्सितम् इष्टं मे मह्यं न शंसति न आचष्टे, केषु वस्तुषु स्पृहावती इति अनुवेलम् अनुक्षणम् आदृतः आदरवान्, कर्त्तरि क्तः। 'आदृतौ सादरार्चितौ' इत्यमरः। प्रियायाः सखीः सहचरीः उत्तरकोशलेश्वरः दिलीपः पृच्छति स्म पप्रच्छ। 'लट् स्मे' इत्यनेन भूतार्थे लट्। सखीनां विश्रम्भभूमित्वात् इति भावः॥

৫। "মগধরাজনন্দিনী লজ্জায় আমাকে মনের কথা কিছুই বলেন না; ইহাঁর কি কি দ্রব্যে অভিরুচি?" কোশলাধিপতি রাজ্ঞীর সখীগণের নিকট সর্ব্বদাই ইহা জিজ্ঞাসা করিতেন।

उपेत्य सा दोहददुःखशीलतां
यदेव वव्रे तदपश्यदाहृतम् ।
न हीष्टमस्य त्रिदिवेऽपि भूपते-
रभूदनासाद्यमधिज्यधन्वनः ॥ ६

६ अ:। सा दोहददुःखशीलताम् उपेत्य यदेव वव्रे, तत् आहृतम् अपश्यत्, अधिज्यधन्वनः अस्य भूपतेस्त्रिदिवेऽपि इष्टम् अनासाद्यं न अभूत्॥ वाच्य—तया वव्रे....अदृश्यत, इष्टेन अनासाद्येन अभावि ।

६। दोहदं गर्भिणीमनोरथः। 'दोहदं दौहृदं श्रद्धा लालसञ्च समं स्मृतम्' इति हलायुधः। सा सुदक्षिणा, दोहदेन गर्भिणीमनोरथेन दुःखशीलतां दुःखस्वभावताम् उपेत्य प्राप्य यत् वस्तु वव्रे आचकाङ्क्ष, तत् आहृतम् आनीतं भर्त्रा इति शेषः, अपश्यत् एव अलभत इत्यर्थः। कुतः? हि यस्मात् अस्य भूपतेः त्रिदिवे अपि स्वर्गे अपि इष्टं वस्तु अनासाद्यम् अनवाप्यं न अभूत्। किं याच्ञया? नेत्याह—अधिज्यधन्वन इति। न हि वीरपत्नीनामलभ्यं नाम किञ्चिदस्ति इति भावः। अत्र वाग्भटः— 'पादशोथो विदाहोऽन्ते श्रद्धा च विविधात्मिका' इति। एतच्च पत्नीमनोरथपूरणाकरणे दुष्टदोषसम्भवात् न तु राज्ञः प्रीतिलौल्यात्। तदुक्तम्— 'देयमप्यहितं तस्यै हिताय हितमल्पकम्। श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव वा॥' अन्यत्र च, 'दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्' इति॥

৬। রাজ্ঞী গর্ভনিবন্ধন কষ্টকর অবস্থা প্রাপ্ত হইয়া যে দ্রব্যের আকাঙ্ক্ষা করিতেন, তখনি তাহা সম্মুখে দেখিতে পাইতেন। কেননা জ্যা-যুক্তধনুর্দ্ধারী রাজা স্বর্গ হইতেও অভীষ্ট বস্তু আনিতে না পারিতেন, এমন নয়।

क्रमेण निस्तीर्य्य च दोहदव्यथां
प्रचीयमानावयवा रराज सा।
पुराणपत्रापगमादनन्तरं
लतेव सन्नद्धमनोज्ञपल्लवा॥ ৭

৭ अः। सा क्रमेण दोहदव्यथां निस्तीर्य्यं च प्रचीयमानावयवा पुराणपत्रापगमात् अनन्तरं सन्नद्धमनोज्ञपल्लवा लतेव रराज॥ वाच्य—तया...अवयवया...पल्लवया लतया इव रेजे।

৭। सा सुदक्षिणा क्रमेण दोहदव्यथाञ्च निस्तीर्य्य प्रचीयमानावयवा पुष्यमाणावयवा सती पुराणपत्राणाम् अपगमात् नाशात् अनन्तरं सन्नद्धाः सञ्जाताः प्रत्यग्रत्वात् मनोज्ञाः पल्लवा यस्याः सा लता इव रराज॥

৭। পুরাতন পত্র পরিত্যাগের পর অভিনব মনোজ্ঞ পল্লবযুক্তা লতার ন্যায় রাজ্ঞী সুদক্ষিণা, গর্ভব্যথা অতিক্রান্ত হইলে পরিপুষ্টশরীরা হইয়া শোভিতা হইয়াছিলেন।

दिनेषु गच्छत्सु नितान्तपीवरं
तदीयमानीलमुखं स्तनद्वयम्।
तिरश्चकार भ्रमराभिलीनयोः
सुजातयोः पङ्कजकोशयोः श्रियम्॥ ৮

৮ अः। दिनेषु गच्छत्सु नितान्तपीवरम् आनीलमुखं तदीयं स्तनद्वयम् भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियं तिरश्चकार॥ वाच्य—तदीयेन पीवरेण...मुखेन स्तनद्वयेन श्रीः तिरश्चक्रे।

৮। लक्षणान्तरं वर्णयति—दिनेष्विति। दिनेषु दोहददिवसेषु गच्छत्सु, नितान्तपीवरम् अतिस्थूलम् आ समन्तात् नीले मुखे चूचुके यस्य तत् तदीयं स्तनद्वयं, भ्रमरैरभिलीनयोः अभिव्याप्तयोः सुजातयोः सुन्दरयोः पङ्कजकोशयोः पद्ममुकुलयोः श्रियं तिरश्चकार। अत्र वाग्भटः—'अङ्के ष्टता स्तनौ पीनौ श्वेतान्तौ कृष्णचूचुकौ' इति॥

৮। কিছুদিন অতিক্রান্ত হইলে তাহার স্থূল স্তনদুইটীর অগ্রভাগ কৃষ্ণবর্ণ হইয়া ভ্রমরযুক্ত সুজাত পঙ্কজকোরকের শোভাকে পরাভব করিয়াছিল।

निधानगर्भामिव सागराम्बरां
शमीमिवाभ्यन्तरलीनपावकाम् ।
नदीमिवान्तःसलिलां सरस्वतीं
नृपः ससत्त्वां महिषीममन्यत ॥ ९

९ अः। नृपः ससत्त्वां महिषीं निधानगर्भां सागराम्बरामिव, अभ्यन्तरलीनपावकां शमीमिव, अन्तःसलिलाम् सरस्वतीम् नदीम् इव अमन्यत ॥ वाच्य—नृपेण ससत्त्वा महिषी निधानगर्भा सागराम्बरा...पावका शमी···अन्तःसलिला सरस्वती नदी इव अमन्यत ।

९। नृपः ससत्त्वाम् आपन्नसत्त्वां गर्भिणीमित्यर्थः। 'आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः। महिषीं निधानं निधिः गर्भे यस्याः तां सागराम्बरां समुद्रवसनां भूमिमिव इत्यर्थः। 'भूतधात्री रत्नगर्भा विपुला सागराम्बरा' इति कोषः। अभ्यन्तरे लीनः पावकः यस्याः तां शमीम् इव। शमीतरौ वह्निरस्ति इत्यत्र लिङ्गं शमीगर्भादग्निं जनयतीति। अन्तःसलिलाम् अन्तर्गतजलां सरस्वतीं नदीं इव अमन्यत। एतेन गर्भस्य भाग्यवत्त्वतेजस्वित्वपावनत्वानि विवक्षितानि ॥

৯। মহারাজ দিলীপ, গর্ভবতী মহিষীকে দেখিয়া,—সাগরবসনা বসুমতী যেন নিজগর্ভে রত্নধারণ করিয়াছেন—সরস্বতী নদী যেন অভ্যন্তরে নির্ম্মলজলপ্রবাহ ধারণ করিয়াছেন—শমীলতা যেন অভ্যন্তরে গূঢ় অগ্নি ধারণ করিয়াছে—এইরূপ জ্ঞান করিলেন।

प्रियानुरागस्य मनः समुन्नते-
र्भुजार्जितानाञ्च दिगन्तसम्पदाम् ।
यथाक्रमं पुंसवनादिकाः क्रिया
धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥ १०

१० अः। धीरः सः प्रियानुरागस्य, मनःसमुन्नतेः, भुजार्जितानां दिगन्तसम्पदाञ्च, धृतेश्च सदृशीः पुंसवनादिकाः क्रियाः यथाक्रमं व्यधत्त ॥ वाच्य—धीरेण तेन सदृश्यः व्यधीयन्त ।

१०। धीरः सः राजा, प्रियायाम् अनुरागस्य स्नेहस्य, मनसः समुन्नतेः औदार्यस्य, भुजेन भुजबलेन करेण वा अर्जितानां, न तु कापिक्याद्धिना, दिगन्तेषु सम्पदां, धृतेः 'पुत्रो मे भविष्यति' इति सन्तोषस्य। 'धृतिर्योगान्तरे धैर्य्ये धारणाध्वरतुष्टिषु' इति विश्वः। सदृशीः अनुरूपाः, पुमान् सूयते अनेनेति पुंसवनं तत् आदि यासां ताः क्रियाः यथाक्रमं क्रममनतिक्रम्य व्यधत्त कृतवान्। आदिशब्देन अनवलोभनसीमन्तोन्नयने गृह्येते।

অত্র মাসি দ্বিতীয়ে তৃতীয়ে বা পুংসবনম্। যদাহ—'পুংসা নক্ষত্রেণ চন্দ্রমা যুক্তঃ স্যাৎ' ইতি পারস্করঃ। 'চতুর্থেঽনবলোভনম্' ইতি আশ্বলায়নঃ। 'ষষ্ঠেঽষ্টমে বা সীমন্তঃ' ইতি যাজ্ঞবল্ক্যঃ॥

১০। প্রিয়তমার প্রতি তাঁহার যতদূর অনুরাগ ছিল, হৃদয়ের যতদূর উদারতা ছিল, নিজ ভুজবলে তিনি দিগ্‌দিগন্তের যত সম্পদ্ অধিকার করিয়াছিলেন এবং পুত্র হইয়াছে বলিয়া তাঁহার মনে যতদূর আহ্লাদ হইয়াছিল, সে সকলের অনুরূপ সমারোহ করিয়া ধীর মহারাজ দিলীপ মহিষীর পুংসবনাদি ক্রিয়া সকল সম্পন্ন করিলেন।

সুরেন্দ্রমাত্রাশ্রিতগর্ভগৌরবাৎ
প্রযত্নমুক্তাসনয়া গৃহাগতঃ।
তয়োপচারাঞ্জলিখিন্নহস্তয়া
ননন্দ পারিপ্লবনেত্রয়া নৃপঃ॥ ১১

১১ অঃ। গৃহাগতো নৃপঃ সুরেন্দ্রমাত্রাশ্রিতগর্ভগৌরবাৎ প্রযত্নমুক্তাসনয়া উপচারাঞ্জলিখিন্নহস্তয়া পারিপ্লবনেত্রয়া তয়া ননন্দ॥ বাচ্য—গৃহাগতেন নৃপেণ ননন্দে।

১১। গৃহাগতঃ নৃপঃ সুরেন্দ্রাণাং লোকপালানাং মাত্রাভিঃ অংশৈঃ আশ্রিতস্য অনুপ্রবিষ্টস্য গর্ভস্য গৌরবাৎ প্রযত্নেন মুক্তাসনয়া আসনাদুত্থিতয়া ইত্যর্থঃ। উপচারস্য অঞ্জলৌ অঞ্জলীকরণে খিন্নহস্তয়া, পারিপ্লবনেত্রয়া তরলাক্ষ্যা। 'চঞ্চলং তরলং চৈব পারিপ্লবপরিপ্লবে' ইত্যমরঃ। তয়া সুদক্ষিণয়া ননন্দ। 'সুরেন্দ্রমাত্রাশ্রিত' ইত্যত্র মনুঃ,—'অষ্টাভিশ্চ সুরেন্দ্রাণাং মাত্রাভির্নির্মিতো নৃপঃ' ইতি॥

১১। মহারাজ রাজ্ঞীর মন্দিরে উপস্থিত হইলে, লোকপালগণের অংশসম্ভূত গর্ভের গুরুতর ভারবশতঃ আসন ছাড়িয়া উঠিতে রাজ্ঞীর কষ্ট বোধ হইত, অভ্যর্থনার জন্য অঞ্জলিবন্ধন করিতে হস্ত দুইখানি অবশ হইয়া পড়িত, চক্ষু দুইটি ছল ছল করিত, তদ্দর্শনে (শীঘ্র পুত্র জন্মিবার আশায়) রাজা অতীব আনন্দিত হইতেন।

কুমারভৃত্যাকুশলৈরনুষ্ঠিতে
ভিষগ্‌ভিরাপ্তৈরথ গর্ভভর্মণি।
পতিঃ প্রতীতঃ প্রসবোন্মুখীং প্রিয়াং
দদর্শ কালে দিবমভ্রিতামিব॥ ১২

১২ অঃ। কুমারভৃত্যাকুশলৈঃ আপ্তৈঃ ভিষগ্‌ভিঃ গর্ভভর্মণি অনুষ্ঠিতে (সতি) পতিঃ প্রতীতঃ কালে প্রসবোন্মুখীং প্রিয়াম্ অভ্রিতাং দিবমিব দদর্শ॥ বাচ্য—পত্যা প্রতীতেন...উন্মুখী প্রিয়া অভ্রিতা দ্যৌঃ ইব দদৃশে।

१२। अथ कुमारभृत्या बालचिकित्सा। 'संज्ञायां समजनीषद' इत्यादिना क्यप्। तस्यां कुशलैः कृतिभिः 'कृती कुशलः' इत्यमरः। आप्तैः हितैः भिषग्भिः वैद्यैः। 'भिषग्वैद्यौ चिकित्सके' इत्यमरः। गर्भस्य भर्म्मणि भरणे। 'भरणे पोषणे भर्म्म' इति हैमः। 'भृतिर्भर्म्म' इति शाश्वतः। भृञो मनिच्प्रत्ययः। गर्भकर्म्मणीति पाठे गर्भाधानप्रतीता-वौचित्यभङ्गः। अनुष्ठिते कृते सति, काले दशमे मासि, अन्यत्र शोभा-वसाने, प्रसवस्य गर्भमोचनस्य, उन्मुखीम् आसन्नप्रसवामित्यर्थः। 'स्यादुत्-पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः। प्रियां भार्य्याम्। अब्भ्राणि अस्याः सञ्जातानि अब्भ्रिता ताम्। तदस्य सञ्जातं 'तारकादिभ्य इतच्' इति इतच्प्रत्ययः। दिवमिव, पतिः भर्त्ता प्रतीतः हृष्टः सन्। 'ख्याते हृष्टे प्रतीतः' इत्यमरः। ददर्श दृष्टवान्।

১২। বিশ্বস্ত শিশুচিকিৎসানিপুণ চিকিৎসকগণ কর্ত্তৃক গর্ভপোষণব্যাপার সম্পাদিত হইলে, রাজা সন্তুষ্টহৃদয়ে ধারাপতনোন্মুখ মেঘসংযুক্ত আকাশের ন্যায় মহিষীকে আসন্ন-প্রসবা বুঝিতে পারিলেন।

ग्रहैस्ततः पञ्चभिरुच्चसंश्रयै-
रसूर्य्यगैः सूचितभाग्यसम्पदम् ।
असूत पुत्त्रं समये शचीसमा
त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ १३

१३ अः। ततः शचीसमा (राज्ञी), समये उच्चसंश्रयैः असूर्य्यगैः पञ्चभिः ग्रहैः सूचितभाग्य-सम्पदं पुत्रं त्रिसाधना शक्तिः अक्षयम् अर्थमिव असूत। वाच्य—शचीसमया...भाग्यसम्पत् पुत्रः त्रिसाधनया शक्त्या अक्षयः अर्थः इव असूयत।

१३। ततः शच्या इन्द्राण्या समा। 'पुलोमजा शचीन्द्राणी' इत्यमरः। सा सुदक्षिणा, समये प्रसूतिकाले सति, दशमे मासि इत्यर्थः। 'दशमे मासि जायते' इति श्रुतेः। उच्चसंश्रयैः उच्चसंस्थैः तुङ्गस्थानगैः, असूर्य्यगैः अन-स्तमितैः कैश्चित् यथासम्भवं पञ्चभिः ग्रहैः सूचिता भाग्यसम्पद् यस्य तं, त्रीणि प्रभावमन्त्रोत्साहात्मकानि साधनानि उत्पादकानि यस्याः सा त्रि-साधना शक्तिः। 'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इत्यमरः। अक्षयम् अर्थम् इव असूत। षूङ्प्राणिगर्भविमोचने इत्यात्मनेपदिषु पठ्यते तस्माद्धातोः कर्त्तरि लङ्। अत्रेदमनुसन्धेयम्,—'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः। दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवक-विंशतिभिश्च तेऽस्तनीचाः' इति। सूर्य्यादीनां सप्तानां ग्रहाणां मेषवृषभादयो

राशयः श्लोकोक्तक्रमविशिष्टाः उच्चस्थानानि, स्वस्वतुङ्गापेक्षया सप्तमस्थानानि च नीचानि, तत्रोच्चेष्वपि दशमादयो राशित्रिंशांशाः यथाक्रमम् उच्चेषु परमोच्चा नीचेषु परमनीचा इति जातकश्लोकार्थः । अत्रांशस्त्रिंशो भागः । यथाह नारदः—'त्रिंशद्भागात्मकं लग्नम्' इति । सूर्य्यप्रत्यासत्तिर्ग्रहाणामस्तमयो नाम । तदुक्तं लघुजातके—'रविणास्तमयो योगो वियोगस्तूदयो भवेत्' इति । ते च स्वोच्चस्थाः फलन्ति नास्तगा नापि नीचगाः । तदुक्तं राजमृगाङ्के—'स्वोच्चे पूर्णं स्वर्क्षकेऽर्द्धं सुहृद्भे पादं द्विड्भेऽल्पं शुभं खेचरेन्द्रः । नीचस्थायी नास्तगो वा न किञ्चित् पादं नूनं स्वत्रिकोणे ददाति' इति । तदिदमाह कविः—उच्चसंश्रयैरसूर्य्यगैरिति च । एवं सति यस्य जन्मकाले रविप्रभृतयः पञ्चग्रहाः स्वोच्चस्थाः स एव तुङ्गी भवति । तदुक्तं कूटस्थीये—सुखिनः प्रकृष्टकार्य्या राजप्रतिरूपकाश्च राजानः । एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्या' इति तदिदमाह पञ्चभिरिति ॥

১৩। যেরূপ প্রভাব, উৎসাহ ও মন্ত্র—এই ত্রিসাধনা শক্তি অক্ষয়সম্পদ্ প্রসব করে, শচীসদৃশী রাজমহিষীও সেইরূপ যথাকালে পুত্র প্রসব করিলেন; জন্মকালে পাঁচটী গ্রহ, উচ্চস্থানে ও সূর্য্য হইতে সুদূরে উদিত থাকায় ঐ পুত্রের ভাবী সৌভাগ্য-সম্পৎ সূচিত হইয়াছিল। [ রাশিচক্র দেখ ]।

दिशः प्रसेदुर्मरुतो ववुः सुखाः
प्रदक्षिणार्च्चिर्हविरग्निराददे ।
बभूव सर्व्वं शुभशंसि तत्क्षणं
भवो हि लोकाभ्युदयाय तादृशाम् ॥ १४

१४ अः । तत्क्षणं दिशः प्रसेदुः, मरुतः सुखाः ववुः, अग्निः प्रदक्षिणार्च्चिः हविः आददे, इत्थं सर्व्वं शुभशंसि बभूव, तथाहि तादृशां भवः लोकाभ्युदयाय ( भवति )॥ वाच्य—दिग्भिः प्रसेदे, मरुद्भिः सुखैः ववे, अग्निना आददे सर्व्वेण शुभशंसिना बभूवे, भवेन ( भूयते )।

१४ । तत्क्षणं तस्मिन् क्षणे । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । दिशः प्रसेदुः प्रसन्ना बभूवुः मरुतो वाताः सुखाः मनोहराः ववुः । अग्निः प्रदक्षिणार्च्चिः सन्, हविः आददे स्वीचकार । इत्थं सर्वं शुभशंसि शुभसूचकं बभूव । तथाहि,—तादृशां रघुप्रकाराणाम्, भवः जन्म, लोकाभ्युदयाय भवति इति शेषः, ततो देवा अपि सन्तुष्टा इत्यर्थः ॥

১৪। কুমারের জন্মমাত্রেই দিক্ সকল নির্ম্মল হইল, সুমধুর বায়ু বহিতে লাগিল, হোমাগ্নি দক্ষিণমুখগামিনী শিখা দ্বারা ঘৃতাহুতি গ্রহণ করিলেন; এইরূপে সকলই শুভসূচক লক্ষণ দৃষ্ট হইল, যেহেতু তাদৃশ ব্যক্তির জন্মলাভ পৃথিবীর হিতের জন্যই হইয়া থাকে।

अरिष्टशय्यां परितो विसारिणा
सुजन्मनस्तस्य निजेन तेजसा ।
निशीथदीपाः सहसा हतत्विषो
बभूवुरालेख्यसमर्पिता इव ॥ १५

१५ अः । अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा सहसा हतत्विषो निशीथ-दीपाः आलेख्यसमर्पिता इव बभूवुः ॥ वाच्य—हतत्विड्भिः निशीथदीपैः—समर्पितैः इव बभूवे ।

१५ । 'अरिष्टं सूतिकागृहम्' इत्यमरः । अरिष्टे सूतिकागृहे शय्यां तल्पं परितः अभितः । 'अभितःपरितःसमयानिकषाहाप्रतियोगेषु दृश्यते' इति द्वितीया । विसारिणा, सुजन्मनः शोभनोत्पत्तेः 'जनुर्जनन-

জন্মানি জনিরুৎপত্তিরুদ্ভবঃ' ইত্যমরঃ। তস্য শিশোঃ নিজেন নৈসর্গিকেণ তেজসা সহসা হৃতত্বিষঃ ক্ষীণকান্তয়ঃ। নিশীথদীপা অর্দ্ধরাত্রপ্রদীপাঃ 'অর্দ্ধরাত্রনিশীথৌ দ্বৌ' ইত্যমরঃ। আলেখ্যসমর্পিতাঃ চিত্রার্পিতাঃ ইব বভূবুঃ। নিশীথশব্দো দীপানাং প্রভাধিক্যসম্ভাবনার্থঃ॥

১৫। সেই সুন্দর শিশুর স্বাভাবিক তেজোরাশি সূতিকাগৃহস্থিত শয্যার চারিদিকে বিস্তৃত হইয়া পড়ায় নিশীথকালের নিশ্চল দীপাবলী, তদীয় তেজে সহসা ক্ষীণপ্রভ হইয়া যেন চিত্রার্পিতের ন্যায় দেখাইতে লাগিল।

**জনায় শুদ্ধান্তচরায় শংসতে কুমারজন্মামৃতসম্মিতাক্ষরম্।**
**অদেয়মাসীৎ ত্রয়মেব ভূপতেঃ শশিপ্রভং ছত্রমুভে চ চামরে ১৬**

১৬ অঃ। ভূপতেঃ অমৃতসম্মিতাক্ষরং কুমারজন্ম শংসতে, শুদ্ধান্তচরায় জনায় শশিপ্রভং ছত্রম্ উভে চামরে চ ত্রয়মেব অদেয়ম্ আসীৎ,। বাচ্য—ত্রয়েণ এব অদেয়েন অভূয়ত, শশিপ্রভেণ ছত্রেণ উভাভ্যাং চামরাভ্যাং (অভূয়ত)।

১৬। ভূপতেঃ দিলীপস্য অমৃতসম্মিতাক্ষরম্ অমৃতসমানাক্ষরম্। 'সরূপসমসম্মিতাঃ' ইত্যাহ দণ্ডী। কুমারজন্ম পুত্রোৎপত্তিং শংসতে কথয়তে শুদ্ধান্তচরায় অন্তঃপুরচারিণে জনায় ত্রয়ম্ এব অদেয়ম্ আসীৎ। কিং তৎ? শশিপ্রভম্ উজ্জ্বলং ছত্রম্, উভে চামরে চ ছত্রাদীনাং রাজ্ঞঃ প্রধানাঙ্গত্বাৎ ইতি ভাবঃ॥

১৬। অন্তঃপুরচারী যে ব্যক্তি রাজাকে সেই অমৃতমধুর পুত্রজন্মসংবাদ শুনাইল, তাহাকে কেবল চন্দ্রের ন্যায় অত্যুজ্জ্বল রাজচ্ছত্র এবং চামরদ্বয় এই তিন বস্তু ভিন্ন রাজার আর কিছুই অদেয় ছিল না।

**নিবাতপদ্মস্তিমিতেন চক্ষুষা**
**নৃপস্য কান্তং পিবতঃ সুতাননম্।**
**মহোদধেঃ পূর ইবেন্দুদর্শনাদ্-**
**গুরুঃ প্রহর্ষঃ প্রবভূব নাত্মনি ॥ ১৭**

১৭ অঃ। নিবাতপদ্মস্তিমিতেন চক্ষুষা কান্তং সুতাননং পিবতো নৃপস্য গুরুঃ প্রহর্ষঃ ইন্দুদর্শনাৎ। মহোদধেঃ পূর ইব আত্মনি ন প্রবভূব। বাচ্য—গুরুণা প্রহর্ষেণ পূরেণ ইব ন প্রবভূবে।

১৭। নিবাতঃ নির্বাতপ্রদেশঃ। 'নিবাতাবাশ্রয়াবাতৌ' ইত্যমরঃ। তত্র যৎ পদ্মং তদ্বৎ স্তিমিতেন নিঃস্পন্দেন চক্ষুষা নেত্রেণ, কান্তং সুন্দরং সুতাননং পুত্রমুখং পিবতঃ তৃষ্ণয়া পশ্যতঃ নৃপস্য গুরুঃ উৎকটঃ প্রহর্ষঃ কর্ত্তা ইন্দুদর্শনাদ্ গুরুঃ মহোদধেঃ পূরঃ জলৌঘ ইব আত্মনি শরীরে ন প্রবভূব

স্থাতুং ন শশাক, অন্তর্ন মাতি স্ম ইতি যাবৎ । ন হ্যল্পাধারে অধিকং মীয়তে ইতি ভাবঃ । যদ্বা হর্ষঃ আত্মনি স্বস্মিন্ বিষয়ে ন প্রবভূব, আত্মানং নিয়ন্তুং ন শশাক, কিন্তু বহির্নির্জগাম ইত্যর্থঃ ॥

১৭। রাজা বায়ুশূন্য প্রদেশস্থিত পদ্মের ন্যায় নিশ্চলনেত্রে সেই পুত্রমুখ দর্শন করিতে লাগিলেন ; চন্দ্রদর্শনে জলধির প্রবাহ যেরূপ কূল ছাপাইয়া উঠে, তাঁহার অসীম আনন্দও সেইরূপ হৃদয় ছাপাইয়া উঠিল ।

স জাতকর্ম্মণ্যখিলে তপস্বিনা তপোবনাদেত্য পুরোধসা কৃতে ।
দিলীপসূনুর্মণিরাকরোদ্ভবঃ প্রযুক্তসংস্কার ইবাধিকং বভৌ ॥ ১৮

১৮। সঃ দিলীপসূনুঃ তপস্বিনা পুরোধসা তপোবনাৎ এত্য অখিলে জাতকর্ম্মণি কৃতে ( সতি ) প্রযুক্তসংস্কারঃ আকরোদ্ভবঃ মণিরিব অধিকং বভৌ ॥ বাচ্য—তেন দিলীপসূনুনা—সংস্কারেণ—ভবেন মণিনা ইব বভে ।

১৮। সঃ দিলীপসূনুঃ, তপস্বিনা পুরোধসা পুরোহিতেন । 'পুরোধাস্তু পুরোহিতঃ' ইত্যমরঃ । বশিষ্ঠেন । তপস্বিত্বাৎ তদনুষ্ঠিতং কর্ম্ম সবীর্য্যং স্যাৎ ইতি ভাবঃ । তপোবনাৎ এত্য আগত্য অখিলে সমগ্রে জাতকর্ম্মণি জাতস্য কর্ত্তব্যসংস্কারবিশেষে কৃতে সতি, প্রযুক্তঃ সংস্কারঃ শাণোল্লেখনাদিঃ যস্য সঃ তথোক্তঃ আকরোদ্ভবঃ খনিপ্রভবঃ । 'খনিঃ স্ত্রিয়ামাকরঃ স্যাৎ' ইত্যমরঃ । মণিঃ ইব অধিকং বভৌ বশিষ্ঠমন্ত্রপ্রভাবাৎ তেজিষ্ঠোঽভূৎ ইত্যর্থঃ । অত্র মনুঃ—'প্রাঙ্নাভিবর্দ্ধনাৎ পুংসো জাতকর্ম্ম বিধীয়তে' ইতি ॥

১৮। তপোবনাগত পুরোহিত বশিষ্ঠদেব কর্তৃক সমস্ত জাতকর্ম্ম সম্পন্ন হইলে, সেই দিলীপকুমার, শাণযন্ত্র দ্বারা পরিষ্কৃত খনিজাত মণির মত অধিকতর শোভা পাইতে লাগিলেন ।

সুখশ্রবা মঙ্গলতূর্য্যনিস্বনাঃ
প্রমোদনৃত্যৈঃ সহ বারযোষিতাম্ ।
ন কেবলং সদ্মনি মাগধীপতেঃ
পথি ব্যজৃম্ভন্ত দিবৌকসামপি ॥ ১৯

১৯। সুখশ্রবাঃ মঙ্গলতূর্য্যনিস্বনাঃ বারযোষিতাং প্রমোদনৃত্যৈঃ সহ মাগধীপতেঃ সদ্মনি কেবলং ন, দিবৌকসাং পথ্যপি ব্যজৃম্ভন্ত । বাচ্য—সুখশ্রবৈঃ—নিস্বনৈঃ ব্যজৃম্ভ্যত ।

১৯। সুখঃ সুখকরঃ শ্রবঃ শ্রবণং যেষাং তে সুখশ্রবাঃ শ্রুতিসুখা ইত্যর্থঃ । মঙ্গলতূর্য্যনিস্বনাঃ মঙ্গলবাদ্যধ্বনয়ঃ, বারযোষিতাং বেশ্যানাম্ । 'বারস্ত্রী গণিকা বেশ্যা রূপাজীবা' ইত্যমরঃ । প্রমোদনৃত্যৈঃ হর্ষনর্ত্তনৈঃ

सह मागधीपतेः दिलीपस्य सद्मनि केवलं गृहे एव न व्यजृम्भन्त, किन्तु द्यौः ओकः येषां ते दिवौकसः, देवाः पृषोदरादित्वात् साधुः। तेषां पथि आकाशेऽपि व्यजृम्भन्त। तस्य देवांशत्वात् देवोपकारित्वाच्च देवदुन्दुभयोऽपि नेदुरिति भावः।

১৯। কেবল সুদক্ষিণাপতি দিলীপের ভবনেই যে শ্রুতিমধুর মঙ্গলবাদ্য ও তাহার সঙ্গে সঙ্গে বারাঙ্গণাগণের আনন্দনৃত্য হইতেছিল এমন নহে, এ সকলের অনুষ্ঠান আকাশপথেও প্রকাশ পাইয়াছিল।

न संयतस्तस्य बभूव रक्षितु-
र्विसर्ज्जयेद् य सुतजन्महर्षितः।
ऋणाभिधानात् स्वयमेव केवलं
तदा पितॄणां मुमुचे स बन्धनात्॥ २०

२० अ:। रक्षितुस्तस्य ( कश्चित् ) संयतो न बभूव, ( सः ) सुतजन्महर्षितः (सन्) यं विसर्ज्जयेत् स तदा पितॄणाम् ऋणाभिधानात् बन्धनात् केवलं स्वयमेव मुमुचे॥ वाच्य– संयतेन न बभूवे, सुतजन्महर्षितेन यः विसर्ज्जेत। तेन मुमुचे।

२०। रक्षितुः सम्यक्पालनशीलस्य तस्य दिलीपस्य, अतएव चौराद्यभावात् संयतः बद्धः न बभूव अभूत्। किं तेनात आह—विसर्जयेदिति। सुतजन्मना हर्षितः तोषितः सन् सः यं बद्धं विसर्जयेत् विमोचयेत्। किन्तु सः राजा तदा पितॄणाम् ऋणाभिधानात् बन्धनात् केवलम् एकं यथा तथा स्वयम् एव एक एव इत्यर्थः। 'केवलः कृत्स्न एकश्च केवलश्चावधीरितः' इति शाश्वतः। मुमुचे। कर्म्मकर्त्तरि लिट्। स्वयमेव मुक्त इत्यर्थः। अस्मिन्नर्थे—'एष वा अनृणो यः पुत्री' इति श्रुतिः प्रमाणम्॥

২০। প্রজাপালক রাজা দিলীপের রাজ্যে এমন কেহই কারারুদ্ধ ছিল না, যাহাকে তিনি পুত্রজন্মজনিত আনন্দে বন্ধন হইতে মোচন করিবেন; তিনি কেবল আপনিই আপনাকে পিতৃলোকের ঋণরূপ বন্ধন হইতে মুক্ত মনে করিলেন।

श्रुतस्य यायादयमन्तमर्भक-
स्तथा परेषां युधि चेति पार्थिवः।
अवेक्ष्य धातोर्गमनार्थमर्थवि-
च्चकार नाम्ना रघुमात्मसम्भवम्॥ २१

२१ अ:। अर्थवित् पार्थिवः अयम् अर्भकः श्रुतस्य अन्तं यायात्, तथा युधि परेषाम् अन्तं (यायात्) इति धातोः गमनार्थम् अवेक्ष्य आत्मसम्भवं नाम्ना रघुं चकार॥ वाच्य—अर्थविदा पार्थिवेन, अनेन अर्भकेण अन्तः यायेत इति आत्मसम्भवः रघुः चक्रे।

२१। अर्थवित् शब्दार्थज्ञः पार्थिवः पृथिवीश्वरः दिलीपः, अयम् अर्भकः बालकः श्रुतस्य शास्त्रस्य अन्तं पारं यायात्, तथा युधि परेषां शत्रूणाम् अन्तं पारञ्च यायात् यातु शक्नुयादित्यर्थः। 'शकि लिङ् च' इति शक्यार्थे लिङ्। इति हेतोः धातोः 'अघि वघि लघि गत्यर्थाः' इति लघिधातोः गमनाख्यम् अर्थम् अर्थवित्त्वात् अवेक्ष्य आलोच्य आत्मसम्भवं पुत्रं नाम्ना रघुं चकार। 'लङ्घिवंह्योर्नलोपश्च' इत्युप्रत्यये 'बालमूललघ्वल-मङ्गुलीनां वा लो रत्वमापद्यते' इति वैकल्पिके रेफादेशे रघुरिति रूपं सिद्धम्। अत्र शङ्खः—'अशौचे तु व्यतिक्रान्ते नामकर्म्म विधीयते' इति ॥

২১। এই বালক শাস্ত্রের ও অরাতি-সাগরের পারগামী হইবে বুঝিয়া ধাত্বর্থবিদ্ দিলীপ লঘধাতুর গমনার্থ জানিয়া পুত্রের নাম রঘু রাখিলেন।

**पितुः प्रयत्नात् स समग्रसम्पदः शुभैः शरीरावयवैर्दिने दिने।**
**पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥२२**

२२ अः। स समग्रसम्पदः पितुः प्रयत्नात् शुभैः शरीरावयवैः हरिदश्वदीधितेः अनुप्रवेशात् बाल-चन्द्रमा इव दिने दिने वृद्धिं पुपोष ॥ वाच्य—तेन...चन्द्रसमा इव वृद्धिः पुपुषे।

२२। सः रघुः समग्रसम्पदः पूर्णलक्ष्मीकस्य, पितुः दिलीपस्य प्रयत्नात्, शुभैः मनोहरैः शरीरावयवैः हरिदश्वदीधितेः सूर्य्यरश्मेः 'भास्वद्-विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः। अनुप्रवेशात् बालचन्द्रमाः इव दिने दिने प्रतिदिनम्। 'नित्यवीप्सयोः' इति द्विर्वचनम्। वृद्धिं पुपोष। अत्र वराहसंहितावचनम्,—'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिर-स्यान्तः।' इति।

২২। চন্দ্রমধ্যে সূর্য্যরশ্মির প্রবেশ হেতু শুক্লপক্ষের নূতন চন্দ্রমার কলেবর যেরূপ দিন দিন বৃদ্ধি পাইতে থাকে, তদ্রূপ সেই শিশুর মনোরম অঙ্গ সকলও সর্ব্বসম্পদ্‌যুক্ত পিতার প্রযত্নে দিন দিন বৃদ্ধি পাইতে লাগিল।

**उमावृषाङ्कौ शरजन्मना यथा**
**यथा जयन्तेन शचीपुरन्दरौ।**
**तथा नृपः सा च सुतेन मागधी**
**ननन्दतुस्तत्सदृशेन तत्समौ ॥ २३**

२३ अः। उमावृषाङ्कौ शरजन्मना यथा शचीपुरन्दरौ जयन्तेन यथा (ननन्दतुः) तथा तत्समौ सा मागधी नृपश्च उभौ तत्सदृशेन सुतेन ननन्दतुः ॥ वाच्य—उमावृषाङ्काभ्यां शचीपुरन्दराभ्यां तत्समाभ्यां मागध्या नृपतिना च उभाभ्यां ननन्दे।

२३। उमावृषाङ्कौ पार्वतीवृषभध्वजौ शरजन्मना कार्त्तिकेयेन। 'कार्त्तिकेयो महासेनः शरजन्मा षडाननः' इत्यमरः। यथा ननन्दतुः, शचीपुरन्दरौ जयन्तेन पाकशासनिना। 'जयन्तः पाकशासनिः' इत्यमरः। यथा ननन्दतुः, तथा तत्समौ ताभ्याम् उमावृषाङ्काभ्यां शचीपुरन्दराभ्यां च समौ समानौ सा मागधी नृपश्च तत्सदृशेन ताभ्यां कुमारजयन्ताभ्यां सदृशेन सुतेन ननन्दतुः। मागधी प्राक् व्याख्याता॥

पौराणिकी वार्त्ता। पुरा किल शैलसुता शिवतेजो वोढ़मक्षमा वह्नौ निचिक्षेप, अग्निरप्यसहमानस्तज्जो गङ्गायां निचिक्षेपवान्, सापि तथाऽशक्ता शरवणे निचिक्षेपवती, ततः षडाननो जन्म लेभे इति।

२३। দুর্গা ও শিব যেমন কার্ত্তিকেয়কে পাইয়া এবং শচী ও ইন্দ্র যেমন জয়ন্তকে পাইয়া, আনন্দিত হইয়াছিলেন; তত্তৎপ্রতিম সুদক্ষিণা ও দিলীপ, তাদৃশ সেই পুত্রকে পাইয়া তেমনি আনন্দিত হইলেন।

**रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत् प्रेम परस्पराश्रयम्।**
**विभक्तमप्येकसुतेन तत् तयोः परस्परस्योपरि पर्य्यचीयत॥२४**

२४ अः। रथाङ्गनाम्नोरिव तयोः भावबन्धनं यत् प्रेम बभूव तत् एकसुतेन विभक्तमपि परस्परस्योपरि पर्य्यचीयत॥ वाच्य—भावबन्धनेन अर्थेन येन प्रेम्णा बभूवे, तेन विभक्तेनापि पर्य्यचीयत।

२४। रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ चक्रवाकौ। 'पुमान् स्त्रियाम्' इत्येकशेषः। तयोरिव, तयोर्दम्पत्योः, भावबन्धनं हृदयाकर्षकं परस्पराश्रयम् अन्योन्यविषयं यत् प्रेम बभूव, तत् एकेन केवलेन ताभ्यां अन्येन वा। 'एके मुख्यान्यकेवलाः' इत्यमरः। सुतेन विभक्तमपि कृतविभागमपि परस्परस्योपरि पर्य्यचीयत ववृधे। कर्म्मकर्त्तरि लिट्। अकृत्रिमत्वात् स्वयमेव उपचितमित्यर्थः। यदेकाधारं वस्तु तदाधारद्वये विभज्यमानं क्षीयते, अत्र तु तयोः प्रागेकैककान्तृकमेकैकविषयं प्रेम, सम्प्रति द्वितीयविषयलाभेऽपि नाक्षीयत प्रत्युत उपचितमेव अभूदिति भावः॥

२४। চক্রবাকমিথুনের ন্যায় নৃপদম্পতির পরস্পরাশ্রিত হৃদয়াকর্ষক প্রেম, সেই একমাত্র পুত্র কর্ত্তৃক বিভক্ত হইলেও তাহা পরস্পরের প্রতি ন্যূন হয় নাই, প্রত্যুত বৃদ্ধি প্রাপ্ত হইয়াছিল।

**उवाच धात्र्या प्रथमोदितं वचो**
**ययौ तदीयामवलम्ब्य चाङ्गुलिम्।**
**अभूच्च नम्रः प्रणिपातशिक्षया**
**पितुर्मुदं तेन ततान सोऽर्भकः॥ २५**

२५ अ: । स: अर्भक: धात्र्या प्रथमोदितं वच: उवाच ( इति यत् ), तदीयाम् अङ्गुलिम् अवलम्ब्य ययौ ( इति यत् ) प्रणिपातशिक्षया नम्र: अभूत् ( इति च यत् ) तेन पितुर्मुदं ततान ॥ वाच्य—तेन अर्भकेण ऊचे, यये, नम्रेण अभावि, मुद् तेने ।

२५ । स: अर्भक: शिशु: । 'पोत: पाकोऽर्भको डिम्भ: पृथुक: शावक: शिशु:' इत्यमर: । धात्र्या उपमात्रा । 'धात्री जनन्यामलकी वसुमत्युपमातृषु' इति विश्व: । प्रथमम् उदितम् उपदिष्टं वच: उवाच, तदीयाम् अङ्गुलिम् अवलम्ब्य ययौ च, प्रणिपातस्य शिक्षया उपदेशेन नम्र: अभूत् च, इति यत्, तेन पितु: मुदं ततान ॥

२৫। দিলীপনন্দন সেই শিশু যখন ধাত্রীকর্তৃক প্রথমোচ্চারিত বাক্যের অনুকরণ করিয়া কথা বলিত; ধাত্রীর অঙ্গুলি অবলম্বন করিয়া হাঁটিত এবং তৎকৃত প্রণিপাতের অনুকরণ করিয়া প্রণত হইত, তখন তদীয় পিতা মহারাজ দিলীপের আনন্দ অতিমাত্র বর্দ্ধিত হইত।

तमङ्कमारोप्य शरीरयोगजै: सुखैर्निषिञ्चन्तमिवाऽमृतं त्वचि ।
उपान्तसम्मीलितलोचनो नृपश्चिरात् सुतस्पर्शरसज्ञतां ययौ ॥ २६

२६ अ: । शरीरयोगजै: सुखै: त्वचि अमृतं निषिञ्चन्तमिव तम् अङ्कम् आरोप्य उपान्तसम्मीलितलोचन: ( सन् ) नृप: चिरात् सुतस्पर्शरसज्ञतां ययौ ॥ वाच्य—लोचनेन नृपेण रसज्ञता यये ।

२६ । शरीरयोगजै: सुखै: त्वचि त्वगिन्द्रिये अमृतं निषिञ्चन्तं वर्षन्तम् इव, तं पुत्रम् अङ्कम् आरोप्य, मुदाविर्भावात् उपान्तयो: प्रान्तयो: सम्मीलितलोचन: सन् नृप:, चिरात् सुतस्पर्शरसज्ञतां ययौ । रस: स्वाद: ॥

২৬। রাজা যখন সেই শিশুকে ক্রোড়ে লইতেন, তদীয় গাত্রস্পর্শজনিত সুখে তাঁহার ত্বগিন্দ্রিয় যেন অমৃতরসে অভিষিক্ত হইত, নয়ন দুইটি মুদ্রিত হইয়া আসিত; এইরূপে তিনি বহুকালের পর পুত্রালিঙ্গন সুখ জানিতে পারিলেন।

अमंस्त चानेन परार्द्ध्यजन्मना
स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।
स्वमूर्त्तिभेदेन गुणाग्र्यवर्त्तिना
पति: प्रजानामिव सर्गमात्मन: ॥ २७

२७ अ: । स्थिते: अभेत्ता ( स: ) परार्द्ध्यजन्मना गुणाग्र्यवर्त्तिना स्वमूर्त्तिभेदेन अनेन आत्मन: अन्वयम् ( स्थिते: अभेत्ता ) प्रजानां पति: परार्द्ध्यजन्मना गुणाग्र्यवर्त्तिना स्वमूर्त्तिभेदेन ( विष्णुना ) आत्मन: सर्गमिव स्थितिमन्तम् अमंस्त ॥ वाच्य—अभेत्त्रा अन्वय: पत्या सर्ग इव स्थितिमान् अमानि ।

२७ । स्थिते: अभेत्ता मर्य्यादापालक: स: नृप:, परार्द्ध्यजन्मना उत्कृष्टजन्मना अनेन रघुणा, अन्वयं वंशं प्रजानां पति: ब्रह्मा, गुणा: सत्त्वा-

दयः तेषु अग्रेण मुख्येन सत्त्वेन वर्त्तते व्याप्रियते इति गुणाग्रवर्त्ती तेन, स्वस्य मूर्त्तिभेदेन अवतारविशेषेण विष्णुना, आत्मनः सर्गं सृष्टिम् इव स्थितिमन्तं प्रतिष्ठावन्तम् अमंस्त मन्यते स्म. मन्यतेरनुदात्तत्वात् इट्-प्रतिषेधः। अत्र उपमानोपमेययोरितरेतरविशेषणानीतरेतरत्र योज्यानि। तत्र, रघुपक्षे गुणाः विद्याविनयादयः। 'गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे। सम्बे सत्त्वादिसन्ध्यादिविद्यादि-हरितादिषु ॥' इति विश्वः। शेषं सुगमम् ॥

২৭। যেরূপ প্রজাপতি ব্রহ্মা, আপনার অপর মূর্ত্তি সত্ত্বগুণাধার বিষ্ণুকে পাইয়া স্বীয় সৃষ্টিকে স্থায়ী বলিয়া জ্ঞান করিয়াছিলেন, সেরূপ মর্য্যাদাপালক প্রজানাথ দিলীপও সেই অমূল্য পুত্ররত্ন লাভ করিয়া আপন বংশকে স্থায়ী বলিয়া জ্ঞান করিতে লাগিলেন।

स वृत्तचूलश्चलकाकपक्षकै-
रमात्यपुत्रैः सवयोभिरन्वितः ।
लिपेर्यथावद्ग्रहणेन वाङ्मयं
नदीमुखेनेव समुद्रमाविशत् ॥ २८

२८ अः। वृत्तचूलः सः चलकाकपक्षकैः सवयोभिः अमात्यपुत्रैः अन्वितः सन् लिपेः यथावत् ग्रहणेन वाङ्मयं (कश्चित् मकरादिः) नदीमुखेन समुद्रमिव आविशत् ॥ वाच्य—वृत्तचूलेन तेन अन्वितेन वाङ्मयः समुद्र इव आविश्यत।

२८। 'चूड़ा कार्य्या द्विजातीनां सर्वेषामेव धर्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्या श्रुतिचोदनात् ॥' इति मनुस्मरणात् तृतीये वर्षे वृत्तचूलः निष्पन्नचूड़ाकर्म्मा सन्। डलयोरभेदः। सः रघुः। 'प्राप्ते तु पञ्चमे वर्षे विद्यारम्भञ्च कारयेत्' इति वचनात् पञ्चमे वर्षे चलकाकपक्षकैः चञ्चल-शिखण्डकैः। 'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः' इति हलायुधः। सवयोभिः स्निग्धैः। 'स्निग्धो वयस्यः सवयाः' इत्यमरः। अमात्यपुत्रैः अन्वितः सन् लिपेः पञ्चाशद्वर्णात्मिकायाः मातृकायाः यथा-वद्ग्रहणेन सम्यक् बोधेन उपायभूतेन, वाङ्मयं शब्दजातं, तस्याः मुखं द्वारम्। 'मुखं तु वदने मुख्यारम्भे द्वाराभ्युपाययोः' इति यादवः। तेन कश्चित् मकरादिः समुद्रमिव, आविशत् प्रविष्टः ज्ञातवानित्यर्थः ॥

২৮। রাজকুমার রঘুর চূড়াকার্য্য সম্পাদিত হইলে, তিনি চঞ্চল শিখাধারী সমবয়স্ক অমাত্য পুত্রগণের সহিত মিলিত হইয়া, নদীমুখদ্বারা সাগরে প্রবেশের ন্যায় পঞ্চাশৎ বর্ণমালা শিক্ষা করিয়া, তাহারই যোগে সমস্তশাস্ত্ররূপ সমুদ্রে প্রবেশ করিয়াছিলেন।

अथोपनीतं विधिवद्विपश्चितो
विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते
क्रिया हि वस्तूपहिता प्रसीदति ॥ २८

२८ अ। अथ विपश्चितो गुरवः विधिवत् उपनीतं गुरुप्रियम् एनं विनिन्युः, ते अत्र अवन्ध्ययत्नाश्च बभूवुः, क्रिया हि वस्तूपहिता प्रसीदति ॥ वाच्य—विपश्चिद्भिः गुरुभिः उपनीतः गुरुप्रियः एषः विनिन्ये, तैः...यत्नैः, बभूवे, क्रियया वस्तूपहितया प्रसद्यते ॥

२८। 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः ॥' इति मनुस्मरणात् अथ गर्भैकादशे अब्दे विधिवत् उपनीतं गुरुप्रियम् एनं रघुं विपश्चितः विद्वांसः गुरवः विनिन्युः शिक्षितवन्तः । ते गुरवः, अत्र अस्मिन् रघौ, अवन्ध्ययत्नाश्च बभूवुः । तथाहि, क्रिया शिक्षा । 'क्रिया तु निष्कृतौ शिक्षा चिकित्सोपायकर्मसु' इति यादवः । वस्तुनि पात्रभूते उपहिता प्रयुक्ता प्रसीदति फलति । 'क्रिया हि द्रव्यं विनयति नाद्रव्यम्', इति कौटिल्यः ॥

२৮। অনন্তর রঘুর উপনয়ন সম্পন্ন হইলে সুপণ্ডিত আচার্য্যগণ সেই গুরুজনবৎসল রঘুকে যথাবিধি বেদাদি-বিদ্যা শিক্ষা দিতে লাগিলেন, রঘুরূপ পাত্রে তাঁহাদের যত্নও সফল হইল, যেহেতু সৎপাত্রে চেষ্টা প্রযুক্ত হইলে সে চেষ্টা ফলবতীই হইয়া থাকে ।

धियः समग्रैः स गुणैरुदारधीः
क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभि-
र्दिशो हरिद्भिर्हरितामिवेश्वरः ॥ ३०

३० अः। उदारधीः सः धियः समग्रैः गुणैः चतुरर्णवोपमाः चतस्रो विद्याः हरिताम् ईश्वरः पवनातिपातिभिः हरिद्भिः चतुरर्णवोपमाश्चतस्रो दिश इव क्रमात् ततार ॥ वाच्य—उदारधिया तेन...ईश्वरेण तेरे ।

३०। अत्र कामन्दकः—'शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः ॥' इति, 'आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती । एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः' ॥ इति च । उदारधीः उत्कृष्टबुद्धिः सः रघुः, समग्रैः धियो गुणैः, चत्वारः अर्णवाः उपमा यासां ताः चतुरर्णवोपमाः । 'तद्धितार्थोत्तरपदसमाहारे च' इति उत्तरपदसमासः । चतस्रः विद्याः हरितां दिशाम् ईश्वरः सूर्य्यः

पवनातिपातिभि: हरिद्भि: निजाश्वै:। 'हरित् ककुभि वर्णे च तृणवाजि-विशेषयो:' इति विश्व:। चतस्रो दिश इव, क्रमात् ततार। चतुरर्णवो-पमत्वं दिशामपि द्रष्टव्यम् ॥

৩০। যেমন, সূর্য্যদেব পবন হইতে অধিক বেগযুক্ত নিজ অশ্ব সকলের দ্বারা চারিটী দিক অতিক্রম করেন, তদ্রূপ প্রবল ধীশক্তি-সম্পন্ন রঘু স্বীয় সমগ্র বুদ্ধিশক্তিপ্রভাবে, চারিটী সাগরের তুল্য চারিটি বিদ্যা (আন্বীক্ষিকী, ত্রয়ী, বার্ত্তা ও দণ্ডনীতি) ক্রমে অধ্যয়ন করিলেন বলিয়া মনে হইল।

त्वचं स मेध्यां परिधाय रौरवी-
मशिक्षताऽस्त्रं पितुरेव मन्त्रवत्।
न केवलं तद्गुरुरेकपार्थिव:
क्षितावभूदेकधनुर्धरोऽपि स: ॥ ३१

३१ अ:। स मेध्याम् रौरवीं त्वचं परिधाय मन्त्रवत् अस्त्रं पितुरेव अशिक्षत, तद्गुरु: एक-पार्थिव: केवलं नाभूत्, किन्तु क्षितौ स: एकधनुर्धरोऽपि अभूत् ॥ वाच्य—तेन अशिक्ष्यत, तद्गुरुणा एकपार्थिवेन न तेन एकधनुर्द्धरेणापि अभावि।

३१। स: रघु: 'कार्ष्णरौरववास्तानि चर्म्माणि ब्रह्मचारिण:। वसी-रन्नानुपूर्व्व्येण शाणक्षौमादिकानि च ॥' इति मनुस्मरणात् मेध्यां शुद्धां रौरवीं रुरुसम्बन्धिनीम् 'रुरुर्महाकृष्णसार:' इति यादव:। त्वचं चर्म्म परिधाय वसित्वा, मन्त्रवत् समन्त्रकम् अस्त्रम् आग्नेयादिकं पितुरेव उपाध्यायात् अशिक्षत अभ्यस्तवान्। 'आख्यातोपयोगे' इत्यपादानसंज्ञा। पितुरेव इत्यवधारणमुपपादयति—नेति। तद्गुरु: एक: अद्वितीय: पार्थिव: केवलं पृथिवीश्वर: एव न अभूत्, किन्तु क्षितौ स: दिलीप: एक: धनुर्धर: अपि अभूत् ॥

৩১। তিনি পবিত্র রুরুমৃগের চর্ম্ম পরিধান করিয়া পিতার নিকটেই সমস্ত অস্ত্র সকল শিক্ষা করিতে লাগিলেন; কেননা, তাঁহার পিতা কেবল পৃথিবীর অদ্বিতীয় অধীশ্বর ছিলেন, এমন নহে; তিনি পৃথিবীতে অদ্বিতীয় ধনুর্দ্ধরও ছিলেন।

महोक्षतां वत्सतर: स्पृशन्निव
द्विपेन्द्रभावं कलभ: श्रयन्निव।
रघु: क्रमाद्यौवनभिन्नशैशव:
पुपोष गाम्भीर्य्यमनोहरं वपु: ॥ ३२

३२ अ:। रघु: क्रमात् यौवनभिन्नशैशव: महोक्षतां स्पृशन् वत्सतर इव, द्विपेन्द्रभावं श्रयन्

কলভ ইব, গাম্ভীর্য্যমনোহরং বপুঃ পুপোষ॥ বাচ্য—রঘুণা...শৈশবেন ব্যুহতা বৎসতরেণ ইব ব্যুহতা কলভেন ইব...পুপুষে।

৩২। রঘুঃ ক্রমাৎ যৌবনেন ভিন্নশৈশবঃ নিরস্তশিশুভাবঃ সন্, মহান্ উক্ষা মহোক্ষঃ মহর্ষভঃ। 'অচতুর:' আদিসূত্রেণ নিপাতনাৎ অকারান্তত্বম্। তস্য ভাবঃ তত্তা, তাং স্পৃশন্ গচ্ছন্ বৎসতরঃ দম্যঃ ইব। 'দম্যবৎসতরৌ সমৌ' ইত্যমরঃ। দ্বিপেন্দ্রভাবং মহাগজত্বং অয়ন্ ব্রজন্ কলভঃ করিপোতঃ ইব গাম্ভীর্য্যেণ অচাপল্যেন মনোহরং বপুঃ পুপোষ॥

৩২। বৎসতর (বাছুর) যেমন ক্রমে প্রকাণ্ড বৃষের আকারে পরিণত হয়, হস্তিশাবক যেমন ক্রমে প্রকাণ্ড হস্তীর আকারে পরিণত হয়, শৈশবকে ভেদ করিয়া রঘুর যৌবন উদ্গত হইলে, তাঁহার শরীরও তেমনি মনোহর গাম্ভীর্য্যপূর্ণ আকারে পরিণত হইল।

অথাস্য গোদানবিধেরনন্তরং
বিবাহদীক্ষাং নিরবর্ত্তয়দ্‌গুরুঃ।
নরেন্দ্রকন্যাস্তমবাপ্য সৎপতিং
তমোনুদং দক্ষসুতা ইবাবভুঃ॥ ৩৩

৩৩ অঃ। গুরুঃ অস্য গোদানবিধেঃ অনন্তরং বিবাহদীক্ষাং নিরবর্ত্তয়ৎ, নরেন্দ্রকন্যাঃ তং দক্ষসুতাঃ তমোনুদমিব সৎপতিম্ অবাপ্য আবভুঃ॥ বাচ্য—গুরুণা বিবাহদীক্ষা নিরবর্ত্ত্যত, নরেন্দ্রকন্যাভিঃ দক্ষসুতাভিঃ আবভে।

৩৩। গৌর্নাদিত্যে বলীবর্দ্দে ক্রতুভেদর্ষিভেদয়োঃ। স্ত্রী তু স্যাদ্দিশি ভারত্যাং ভূমৌ চ সুরভাবপি। পুংস্ত্রিয়োঃ স্বর্গবজ্রাম্বুরশ্মিদৃগ্‌বাণলোমসু॥' ইতি কেশবঃ। গাবঃ লোমানি কেশাঃ দায়ন্তে খণ্ড্যন্তে অস্মিন্ ইতি ব্যুৎপত্ত্যা গোদানং নাম ব্রাহ্মণাদীনাং ষোড়শাদিষু বর্ষেষু কর্ত্তব্যং কেশান্তাখ্যং কর্ম্মোচ্যতে। তদুক্তং মনুনা—'কেশান্তঃ ষোড়শে বর্ষে ব্রাহ্মণস্য বিধীয়তে। রাজন্যবন্ধোর্দ্বাবিংশে বৈশ্যস্য দ্ব্যধিকে ততঃ।' ইতি। অথ গুরুঃ পিতা। 'গুরুর্গীষ্পতিপিত্রাদৌ' ইত্যমরঃ। অস্য গোদানবিধেঃ অনন্তরং বিবাহদীক্ষাং নিরবর্ত্তয়ৎ কৃতবানিত্যর্থঃ। অথ নরেন্দ্রকন্যাঃ তং রঘুং, দক্ষস্য সুতাঃ রোহিণ্যাদয়ঃ তমোনুদং চন্দ্রম্ ইব। 'তমোনুদোঽগ্নিচন্দ্রার্কাঃ' ইতি বিশ্বঃ। সৎপতিম্ অবাপ্য আবভুঃ। রঘুরপি তমোনুৎ। অত্র মনুঃ—'বেদানধীত্য বেদৌ বা বেদং বাপি যথাক্রমম্। অবিপ্লুতব্রহ্মচর্য্যো গৃহস্থাশ্রমমাবিশেৎ' ইতি॥

৩৩। অনন্তর তাঁহার গোদান (অর্থাৎ কেশান্ত-সংস্কার) সম্পন্ন হইলে নরপতি তাঁহার বিবাহ কার্য্য

সম্পন্ন করিলেন ; রাজকন্যা তাদৃশ লোকদুঃখাপহারী সৎপতি লাভ করিলে, বোধ হইল যেন রোহিণী প্রভৃতি নক্ষত্রগণ, অন্ধকারহারী চন্দ্রমাকে পতি লাভ করিয়া শোভা পাইতেছেন।

युवा युगव्यायतबाहुरंसलः
कपाटवक्षाः परिणद्धकन्धरः।
वपुःप्रकर्षादजयद्गुरुं रघु-
स्तथापि नीचैर्विनयाददृश्यत ॥ ३४

३४ अः। युवा युगव्यायतबाहुः अंसलः कपाटवक्षाः परिणद्धकन्धरः रघुः वपुःप्रकर्षात् गुरुम् अजयत्, तथापि विनयात् ( सः ) नीचैः अदृश्यत ( लोकैः )। वाच्य—यूना...बाहुना अंसलेन... वक्षसा...कन्धरेण रघुणा गुरुः अजीयत, तथापि नीचैरपश्यन् ( लोकाः )।

३४। सम्प्रति यौवराज्ययोग्यतामाह—युवेति। युवा, युगो नाम धुर्यस्कन्धगः सच्छिद्रप्रान्तो यानाङ्गभूतो दारुविशेषः। 'यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु' इत्यमरः। युगवत् आयतौ दीर्घौ बाहू यस्य सः, अंसौ अस्य स्तः इति अंसलः बलवान्। मांसलश्चेति वृत्तिकारः। 'बलवान् मांसलोऽसलः' इत्यमरः। 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः। कपाटवक्षाः परिणद्धकन्धरः। विशालग्रीवः। 'परिणाहो विशालता' इत्यमरः। रघुः वपुषः प्रकर्षात् आधिक्यात् यौवनकृतात् गुरुं पितरम् अजयत्, तथापि विनयात् नम्रत्वेन नीचैः अल्पकः अदृश्यत। अनौद्धत्यमत्र विवक्षितम् ॥

৩৪। যুবক রঘুর বাহুযুগল যুগদণ্ডের ( জোয়ালের ) ন্যায় সুদীর্ঘ, স্কন্ধদ্বয় সুঘটিত, বক্ষঃস্থল কপাটের ন্যায় সুপ্রশস্ত, এবং গ্রীবাদেশে পূর্ণায়তন ; তিনি এই সকল শারীরিক উৎকর্ষে পিতাকেও পরাস্ত করিলেন, তথাপি বিনয়গুণে তাঁহাকে ছোটই দেখাইত।

ततः प्रजानां चिरमात्मना धृतां
नितान्तगुर्वीं लघयिष्यता धुरम्।
निसर्गसंस्कारविनीत इत्यसौ
नृपेण चक्रे युवराजशब्दभाक् ॥ ३५

३५ अः। ततः आत्मना चिरं धृतां नितान्तगुर्वीं प्रजानां धुरं लघयिष्यता नृपेण असौ निसर्ग-संस्कारविनीत इति युवराजशब्दभाक् चक्रे ॥ वाच्य—लघयिष्यन् नृपः अमुं...विनीतं...भाजं चकार।

३५। सम्प्रति तस्य यौवराज्यमाह—तत इति। ततः आत्मना चिरं

भूतां नितान्तगुर्वीम् 'वोतो गुणवचनात्' इति ङीप्। प्रजानां धुरं पालनप्रयासं लघयिष्यता लघुं करिष्यता। 'तत् करोति तदाचष्टे' इति लघुशब्दात् णिच, ततो 'लृट: सद्वा' इति शतृप्रत्यय:। नृपेण दिलीपेन, असौ रघु: निसर्गेण स्वभावेन संस्कारेण शास्त्राभ्यासजनितवासनया च विनीत: नम्र: इति हेतो:' युवराज:' इति शब्दं भजतीति तथोक्त:। 'भजोण्वि:' इति ण्विप्रत्यय:। चक्रे कृत:। द्विविधो विनय: स्वाभाविक: कृत्रिमश्च' इति कौटिल्य:। तदुभयसम्पन्नत्वात् पुत्रं युवराजं चकार इत्यर्थ:। अत्र कामन्दक:,—'विनयोपपन्नान् भृत्यै कुर्वीत नृपति: सुतान्। अविनीतकुमारं हि कुलमाशु विशीर्य्यते। विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत्।' इति॥

৩৫। অনন্তর মহারাজ দিলীপ, বহুকাল ধরিয়া যে গুরুতর প্রজাপালনভার বহন করিতেছিলেন, তাহা লাঘব করিবার ইচ্ছায় রঘুকে যুবরাজপদে অভিষিক্ত করিলেন ; কেননা রঘু তখন আপনার স্বভাব ও শাস্ত্রাভ্যাসজনিত সুশিক্ষার গুণে চরিত্রের পূর্ণ উৎকর্ষ লাভ করিয়াছিলেন।

नरेन्द्रमूलायतनादनन्तरं
तदास्पदं श्रीर्युवराजसंज्ञितम् ।
अगच्छदंशेन गुणाभिलाषिणी
नवावतारं कमलादिवोत्पलम् ॥ ३६

३६ अ:। गुणाभिलाषिणी (राजाश्रया) श्री: नरेन्द्रमूलायतनात् अनन्तरं युवराजसंज्ञितं तदास्पदं (पद्माश्रया श्री:) कमलात् नवावतारम् उत्पलमिव अंशेन अगच्छत्॥ वाच्य—लाषिण्या श्रिया...संज्ञित: तदास्पदं अगम्यत।

३६। गुणान् विनयादीन् सौरभ्यादींश्च अभिलष्यतीति गुणाभिलाषिणी श्री: राजलक्ष्मी: पद्माश्रया च नरेन्द्र: दिलीप एव मूलायतनं प्रधानस्थानं तस्मात् अपादानात् अनन्तरं सन्निहितं, युवराज: इति संज्ञा अस्य सञ्जाता युवराजसंज्ञितम्। तारकादित्वात् इतच्प्रत्यय:। आत्मन: पदं स्थानम् आस्पदम् 'आस्पदं प्रतिष्ठायाम्' इति निपात:। स: रघु: इति आस्पदं तदास्पदं, कमलात् चिरोत्पन्नात् नवावतारम् अचिरोत्पन्नम् उत्पलम् इव, अंशेन अगच्छत्। स्त्रियो हि यूनि रज्यन्ते इति भाव:॥

৩৬। লক্ষ্মী (শোভা) যেরূপ পূর্ববিকসিত পদ্ম হইতে ক্রমে ক্রমে তৎসন্নিহিত নব বিকসিত পদ্ম আশ্রয় করেন, গুণানুরাগিণী রাজলক্ষ্মীও সেইপ্রকার দিলীপরূপ মূল আলয় হইতে তৎসন্নিহিত সেই যুবরাজ রঘুতে ক্রমে ক্রমে গমন করিতে লাগিলেন।

विभावसुः सारथिनेव वायुना
घनव्यपायेन गभस्तिमानिव।
बभूव तेनातितरां सुदुःसहः
कटप्रभेदेन करीव पार्थिवः ॥३७

३७ अः। सारथिना वायुना विभावसुरिव, सारथिना घनव्यपायेन गभस्तिमानिव, सारथिना कटप्रभेदेन करीव, पार्थिवः सारथिना तेन (सुतेन) अतितरां सुदुःसहो बभूव॥ वाच्य—विभावसुना...गभस्तिमता करिणा इव पार्थिवेन सुदुःसहेन ब[भो]भूवे।

३७। सारथिना सहायभूतेन। एतद्विशेषणमुत्तरवाक्येष्वपि अनुषञ्जनीयम्। वायुना विभावसुः वह्निः इव। 'सूर्य्यवह्नी विभावसू' इत्यमरः। घनव्यपायेन शरत्समयेन सारथिना गभस्तिमान् सूर्य्य इव, कटः गण्डः। 'गण्डः कटो मदो दानम्' इत्यमरः। तस्य प्रभेदः स्फुटनं मदोदय इत्यर्थः। तेन करी इव, पार्थिवः दिलीपः तेन रघुणा अतितराम् अत्यन्तं सुदुःसहः सुष्ठु असह्यः बभूव॥

৩৭। অগ্নি যেরূপ বায়ুর সাহায্যে, সূর্য্য যেরূপ শরৎকালের সাহায্যে, মাতঙ্গ যেরূপ গণ্ডস্থল হইতে ক্ষরিত মদধারার সাহায্যে, নিতান্ত দুঃসহ তেজ ধারণ করে, রাজাও সেইরূপ নিজ আত্মজ রঘুর সাহায্যে অতীব দুঃসহ তেজ ধারণ করিলেন।

नियुज्य तं होमतुरङ्गरक्षणे धनुर्धरं राजसुतैरनुद्रुतम्।
अपूर्णमेकेन शतक्रतूपमः शतं क्रतूनामपविघ्नमाप सः ॥३८

३८ अः। शतक्रतूपमः सः राजसुतैः अनुद्रुतं धनुर्धरं तं होमतुरङ्गरक्षणे नियुज्य एकेन अपूर्णं क्रतूनां शतम् अपविघ्नम् आप॥ वाच्य—शतक्रतूपमेन तेन आपे।

३८। शतक्रतुः इन्द्रः उपमा यस्य सः शतक्रतूपमः सः दिलीपः, 'शतं वै तुल्या राजपुत्त्रा देवा आशापालाः' इत्यादिश्रुत्या। राजसुतैः अनुद्रुतम् अनुगतं धनुर्धरं तं रघुं, होमतुरङ्गाणां रक्षणे नियुज्य, एकेन क्रतुना अपूर्णम् एकोनं क्रतूनाम् अश्वमेधानां शतम् अपविघ्नम् अपगतविघ्नं यथा तथा आप॥

৩৮। দেবরাজসদৃশ রাজা দিলীপ, রাজকুমার কর্ত্তৃক অনুসৃত ধনুর্দ্ধারী রঘুকে যজ্ঞাশ্ব রক্ষণে নিযুক্ত করিয়া নির্ব্বিঘ্নে একোনশত অশ্বমেধ যজ্ঞ সম্পাদন করিলেন।

ततः परं तेन मखाय यज्वना तुरङ्गमुत्सृष्टमनर्गलं पुनः।
धनुर्भृतामग्रत एव रक्षिणां जहार शक्रः किल गूढविग्रहः॥३९

३९ अ: । ततः परं यज्वना तेन मखाय पुनः उत्सृष्टम् अनर्गलं तुरङ्गं शक्रः गूढ़विग्रहः सन् धनुर्भृतां रक्षिणाम् अग्रत एव जहार किल ॥ वाच्य—गूढ़विग्रहेण शक्रेण उत्सृष्टः अनर्गलः तुरङ्गः जह्रे ।

**३९ । ततः परम् एकोनशतक्रतुप्राप्त्यनन्तरं यज्वना विधिनेष्टवता तेन दिलीपेन पुनःपुनरपि मखाय मखं कर्त्तुम् । 'क्रियार्थोपपदस्य' इत्यादिना चतुर्थी । उत्सृष्टं मुक्तम् अनर्गलम् अप्रतिबन्धम् अव्याहतस्वैरगतिमित्यर्थः, 'अपर्य्यावर्त्तयन्तोऽश्वमनुचरन्ति' इति आपस्तम्बस्मरणात् । तुरङ्गं धनुर्भृतां रक्षिणां रक्षकाणाम् अग्रत एव शक्रः गूढ़विग्रहः सन् जहार किल । किल इति ऐतिह्ये ॥**

৩৯। তদনন্তর, যজ্ঞকার্য্যে ব্রতী সেই রাজা, পুনরায় যজ্ঞ করিবার জন্য যজ্ঞীয় অশ্ব মোচন করিলেন, অশ্ব অবাধে চলিলে, ধনুর্দ্ধারী রক্ষকগণের সম্মুখ হইতেই ইন্দ্র, অদৃশ্যরূপে সেই অশ্ব হরণ করিলেন।

**विषादलुप्तप्रतिपत्ति विस्मितं**
**कुमारसैन्यं सपदि स्थितञ्च तत् ।**
**वशिष्ठधेनुश्च यदृच्छयागता**
**श्रुतप्रभावा ददृशेऽथ नन्दिनी ॥४०**

४० अ: । तत् कुमारसैन्यं सपदि विषादलुप्तप्रतिपत्ति विस्मितं ( सत् ) स्थितञ्च, अथ यदृच्छया आगता श्रुतप्रभावा नन्दिनी नाम वशिष्ठधेनुः ददृशे च ॥ वाच्य—कुमारसैन्येन = प्रतिपत्तिना विस्मितेन स्थितेन । श्रुतप्रभावाम् आगतां वशिष्ठधेनुं नन्दिनीं ददर्श ( सैन्यः ) ।

**४० । तत् कुमारसैन्यं सेना सपदि । विषाद इष्टनाशकृतो मनोभङ्गः, तदुक्तम्,—'विषादश्चेतसो भङ्ग उपायाभावनाशयोः' इति । तेन लुप्ता प्रतिपत्तिः कर्त्तव्यज्ञानं यस्य तत् यथोक्तं, विस्मितम् अश्वनाशस्य आकस्मिकत्वात् आश्चर्य्याविष्टं सत् स्थितं तस्थौ । अथ श्रुतप्रभावा यदृच्छया स्वेच्छया आगता, रघोः स्वप्रसादलब्धत्वात् अनुजिघृक्षया इति भावः । नन्दिनी नाम वशिष्ठधेनुश्च ददृशे । द्वौ चकारावविलम्बसूचकौ" ॥**

४० । রাজকুমার রঘুর সৈন্য বিষাদে হতবুদ্ধি ও বিস্মিত হইয়া রহিল ; তৎক্ষণাৎ সেই বিখ্যাতপ্রভাবা বশিষ্ঠধেনু নন্দিনী যদৃচ্ছাক্রমে তথায় আসিয়া উপস্থিত হইলেন।

**तदङ्गनिस्यन्दजलेन लोचने प्रमृज्य पुण्येन पुरस्कृतः सताम्**
**अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः ॥ ४१**

४१ अ: । सतां पुरस्कृतः दिलीपनन्दनः पुण्येन तदङ्गनिस्यन्दजलेन लोचने प्रमृज्य अतीन्द्रियेषु भावेषु उपपन्नदर्शनो बभूव ॥ वाच्य—पुरस्कृतेन...नन्दनेन उपपन्नदर्शनेन ब[बो]भूवे ।

४१। सतां पुरस्कृतः पूजितः दिलीपनन्दनः रघुः, पुण्येन तस्याः नन्दिन्याः यत् अङ्गं तस्य निस्यन्दः द्रव एव जलं मूत्रमित्यर्थः। तेन लोचने प्रमृज्य शोधयित्वा, अतीन्द्रियेषु इन्द्रियाणि अतिक्रान्तेषु। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः, द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधात् विशेष्यनिघ्नत्वम्। भावेषु अपि वस्तुषु उपपन्नदर्शनः सम्पन्नसाक्षात्कारशक्तिः बभूव॥

৪১। সাধুজনপূজিত দিলীপনন্দন রঘু, সেই নন্দিনীর অঙ্গনিঃসৃত জলে নিজ-চক্ষু মার্জ্জিত করিবামাত্র, ইন্দ্রিয়ের অগোচর পদার্থসকলও দর্শনে সমর্থ হইলেন।

स पूर्वतः पर्वतपक्षशातनं
ददर्श देवं नरदेवसम्भवः।
पुनः पुनः सूतनिषिद्धचापलं
हरन्तमश्वं रथरश्मिसंयतम्॥ ४२

४२ अः। सः नरदेवसम्भवः रथरश्मिसंयतं पुनः पुनः सूतनिषिद्धचापलम् अश्वं हरन्तं पर्वतपक्षशातनं देवं पूर्वतः ददर्श॥ वाच्य—सम्भवेन, तेन हरन्...शातनः देवः ददृशे।

पौराणिकी वार्त्ता।—अथ कृतयुगे पर्वताः पक्षिण इव सपक्षा आसन्, विचरन्ति स्म च यथाकामं सर्वतो दिशम्, ततस्तेषां विपुलविग्रहाणां शरीरवायुना यथेच्छं पतनेन च नितान्तमुपद्रुताः महर्षयः सुरसङ्घाश्च शचीपतेः शरणमुपजग्मुः, ततस्तेषां प्रियचिकीर्षुरिन्द्रः कुलिशेन शैलानां पक्षमशातयदिति।

४२। नरदेवसम्भवः सः रघुः पुनः पुनः सूतेन निषिद्धचापलं निवारितौद्धत्यं रथस्य रश्मिभिः प्रग्रहैः। 'किरणप्रग्रहौ रश्मी' इत्यमरः। संयतं बद्धम् अश्वं हरन्तं पर्वतपक्षाणां छेदकं देवम् इन्द्रं पूर्वतः पूर्वस्यां दिशि ददर्श॥

৪২। সেই সময়ে নৃপতিপুত্র রঘু, পর্ব্বতপক্ষচ্ছেদকারী দেব পুরন্দরকে, রথরশ্মি-সংবদ্ধ সারথি কর্ত্তৃক বার বার নিবারিত চাঞ্চল্য সেই যজ্ঞীয় ঘোটক লইয়া পূর্ব্বদিকে প্রস্থান করিতে দেখিলেন।

शतैस्तमक्ष्णामनिमेषवृत्तिभि-
र्हरिं विदित्वा हरिभिश्च वाजिभिः।
अवोचदेनं गगनस्पृशा रघुः
स्वरेण धीरेण निवर्त्तयन्निव॥४३

४३। रघुः अनिमेषवृत्तिभिः अक्ष्णां शतैः, हरिभिः वाजिभिश्च तं हरिं विदित्वा एनं गगनस्पृशा धीरेण स्वरेण निवर्त्तयन्निव अवोचत्॥ वाच्य—रघुणा निवर्त्तयता इव अवाचि।

४३। रघुः तम् अश्वहर्त्तारम् अनिमेषवृत्तिभिः निमेषव्यापारशून्यैः अक्ष्णां शतैः हरिभिः हरिद्वर्णैः। 'हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः' इति विश्वः। वाजिभिः अश्वैश्च हरिम् इन्द्रं विदित्वा। 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु' इति विश्वः। एनम् इन्द्रं गगनस्पृशा व्योमव्यापिना धीरेण गभीरेण स्वरेण ध्वनिना एव निवर्त्तयन् इव अवोचत् ॥

৪৩। রঘু সেই অশ্বাপহারীর স্পন্দহীন শত শত চক্ষু এবং তাঁহার রথের অশ্ব-সকল হরিদ্বর্ণ দেখিয়া, তাঁহাকে ইন্দ্র বলিয়া চিনিতে পারিলেন এবং গগনভেদী গভীর স্বরে তাঁহার গমনের বাধা জন্মাইয়া চমকিত করিয়াই যেন এই কথা বলিলেন।

मखांशभाजां प्रथमो मनीषिभि-
स्त्वमेव देवेन्द्र ! सदा निगद्यसे ।
अजस्रदीक्षाप्रयतस्य मद्गुरोः
क्रियाविघाताय कथं प्रवर्त्तसे ॥४४

४४ अः। हे देवेन्द्र ! मनीषिभिस्त्वमेव मखांशभाजां प्रथमः सदा निगद्यसे, तथापि ( त्वम् ) अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्त्तसे ? ॥ वाच्य—मनीषिणः त्वामेव प्रथमं निगदन्ति, प्रवर्त्यते ( त्वया ) ।

४४। हे देवेन्द्र ! मनीषिभिः त्वमेव मखांशभाजां प्रथमः सदा निगद्यसे कथ्यसे, तथापि अजस्रदीक्षायां नित्यदीक्षायां, प्रयतस्य मद्गुरोः क्रियाविघाताय क्रतुविघाताय, क्रियां विहन्तुमित्यर्थः। 'तुमर्थाच्च भाववचनात्' इति चतुर्थी। कथं प्रवर्त्तसे ॥

৪৪। বুধগণ আপনাকে যজ্ঞাংশভোক্তাদিগের অগ্রগণ্য বলিয়া নির্দ্দেশ করিয়াছেন, আমার পিতা নিরন্তর যাগনিরত, আপনি কি জন্য তাঁহার যজ্ঞকার্য্যে বিঘ্ন জন্মাইতে প্রবৃত্ত হইয়াছেন।

त्रिलोकनाथेन सदा मखद्विष-
स्त्वया नियम्या ननु दिव्यचक्षुषा ।
स चेत् स्वयं कर्म्मसु धर्म्मचारिणां
त्वमन्तरायो भवसि च्युतो विधिः ॥ ४५

४५ अः। त्रिलोकनाथेन दिव्यचक्षुषा त्वया मखद्विषः सदा नियम्याः ननु, स त्वं धर्म्मचारिणां कर्म्मसु स्वयम् अन्तरायो भवसि चेत्, विधिश्च्युतः ॥ वाच्य—त्रिलोकनाथः दिव्यचक्षुः त्वं मखद्विषः नियच्छेः तेन त्वया अन्तरायेण भूयते, विधिना च्युतं ( च्युतेन वा भूयते ) ।

४५। त्रयाणां लोकानां नाथः त्रिलोकनाथः। 'तद्धितार्थ:' इत्यादिना उत्तरपदसमासः। तेन त्रैलोक्यनियामकेन दिव्यचक्षुषा अतीन्द्रियार्थदर्शिना त्वया मखद्विषः क्रतुविघातकाः सदा नियम्या ननु शिक्ष्याः खलु, स त्वं धर्म्मचारिणां कर्म्मसु क्रतुषु स्वयम् अन्तरायः विघ्नः भवसि चेत् विधिः अनुष्ठानं च्युतः अतः, लोके सत्कर्म्मकथैवास्तमियादित्यर्थः॥

४৫। আপনি ত্রিলোকের নাথ ও দিব্যদৃষ্টিসম্পন্ন; অন্য কেহ যজ্ঞের ব্যাঘাত করিলে আপনিই তাহাকে শাসন করিবেন; কিন্তু আপনিই যদি ধার্ম্মিকগণের ধর্ম্ম-কর্ম্মের ব্যাঘাত করেন, তবে ধর্ম্মের বিধান বিলুপ্ত হইবে।

तदङ्गमग्र्यं मघवन् महाक्रतो-
रमुं तुरङ्गं प्रतिमोक्तुमर्हसि।
पथः श्रुतेर्दर्शयितार ईश्वरा
मलीमसामाददते न पद्धतिम्॥ ४६

४६ अः। हे मघवन्! महाक्रतोः अग्र्यम् अङ्गम् अमुं तुरङ्गं प्रतिमोक्तुम् अर्हसि, श्रुतेः पथः दर्शयितारः ईश्वराः मलीमसां पद्धतिं न आददते॥ वाच्य—असौ तुरङ्गः अर्ह्यते (त्वया), दर्शयितृभिः ईश्वरैः मलीमसा पद्धतिः आदीयते।

४६। हे मघवन्! तत् तस्मात् कारणात् महाक्रतोः अश्वमेधस्य अग्र्यं श्रेष्ठम् अङ्गं साधनम् अमुं तुरङ्गं प्रतिमोक्तुं प्रतिदातुम् अर्हसि। तथाहि—श्रुतेः पथः दर्शयितारः सन्मार्गप्रदर्शकाः ईश्वरा महान्तः मलीमसां मलिनां पद्धतिं मार्गं न आददते न स्वीकुर्वते, असन्मार्गं नावलम्बन्ते इत्यर्थः। 'मलीमसन्तु मलिनं कच्चरं मलदूषितम्' इत्यमरः॥

৪৬। অতএব, হে দেবেন্দ্র! মহাযজ্ঞের প্রধান অঙ্গ এই অশ্বটি প্রত্যর্পণ করা আপনার উচিত; বেদমার্গপ্রদর্শক (ভবাদৃশ) মহাত্মারা কদাচ কলঙ্কিত পথে পদার্পণ করেন না।

इति प्रगल्भं रघुणा समीरितं
वचो निशम्याधिपतिर्दिवौकसाम्।
निवर्त्तयामास रथं सविस्मयः
प्रचक्रमे च प्रतिवक्तुमुत्तरम्॥४७

४७ अः। दिवौकसाम् अधिपतिः रघुणा समीरितम् इति प्रगल्भं वचः निशम्य सविस्मयः (सन्) रथं निवर्त्तयामास, उत्तरं प्रतिवक्तुं प्रचक्रमे च॥ वाच्य—अधिपतिना, सविस्मयेन रथः निवर्त्तयामासे।

४७। इति रघुणा समीरितं प्रगल्भं वचः निशम्य आकर्ण्य,

दिवौकसः स्वर्गौकसः। 'दिवं स्वर्गेऽन्तरीक्षे च' इति विश्वः। तेषाम् अधिपतिः देवेन्द्रः रघुप्रभावात् सविस्मयः सन् रथं निवर्त्तयामास, उत्तरं प्रतिवक्तुं प्रचक्रमे च ॥

৪৭। দেবরাজ ইন্দ্র, রঘুর মুখে সেই সগর্ব্ববাক্য শ্রবণ করিয়া, সবিস্ময়ে রথ প্রতি-নিবৃত্ত করিলেন এবং তাঁহার কথার প্রত্যুত্তর করিতে প্রবৃত্ত হইলেন।

यदात्थ राजन्यकुमार तत्तथा
यशस्तु रक्ष्यं परतो यशोधनैः ।
जगत्प्रकाशं तदशेषमिज्यया
भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥४८.

४८ अः। हे राजन्यकुमार ! त्वम् यत् आत्थ, तत् तथा, तु ( किन्तु ) यशोधनैः यशः परतः रक्ष्यम्, भवद्गुरुः जगत्प्रकाशम् अशेषं मम तत् ( यशः ) इज्यया लङ्घयितुम् उद्यतः ॥ वाच्य— त्वया उच्यते, तेन तथा, यशोधनाः रक्षेयुः, भवद्गुरुणा उद्यतम् ।

४८। हे राजन्यकुमार ! क्षत्रियकुमार ! 'मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' इत्यमरः। यत् वाक्यम् आत्थ ब्रवीषि। 'ब्रुवः पञ्चानाम्' इत्यादिना आहादेशः। तत् तथा सत्यं, किन्तु यशोधनैः अस्मादृशैः परतः शत्रुतः यशः रक्ष्यम्। ततः किमत आह—भवद्गुरुः त्वत्पिता जगत्प्रकाशं लोकप्रसिद्धम् अशेषं सर्वं मम तत् यशः, इज्यया यागेन, लङ्घयितुं तिरस्कर्त्तुम् उद्यतः उद्युक्तः ॥

৪৮। হে ক্ষত্রিয়কুমার! তুমি যাহা বলিলে তাহা সত্য, কিন্তু যশই যাহাদের সর্ব্বস্ব, তাঁহারা সেই যশ শত্রু হইতে অবশ্য রক্ষা করিয়া থাকেন; আমার বিশ্ববিখ্যাত সমগ্র যশ তোমার পিতা যজ্ঞদ্বারা অতিক্রম করিতে প্রবৃত্ত হইয়াছেন।

हरिर्यथैकः पुरुषोत्तमः स्मृतो
महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्मां मुनयः शतक्रतुं
द्वितीयगामी न हि शब्द एष नः ॥ ४९

४९ अः। यथा हरिः एकः पुरुषोत्तमः स्मृतः, त्र्यम्बक एव महेश्वरः स्मृतः, अपरः न, तथा मुनयः मां शतक्रतुं विदुः, नः एषः शब्दः द्वितीयगामी न हि ॥ वाच्य—हरिणा एकेन पुरुषोत्तमेन स्मृतेन, त्र्यम्बकेण एव महेश्वरेण स्मृतेन ( भूयते ) अपरेण न, मुनिभिः अहं शतक्रतुः विद्ये, एतेन शब्देन द्वितीयगामिना न हि ( भूयते ) ॥

४९। किं तद्यश इत्याह—हरिरिति। पुरुषेषु उत्तमः इति

सप्तमीसमासः 'न निर्द्धारणे' इति षष्ठीसमासनिषेधात्, कर्म्मधारये तु 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति उत्तमपुरुष इति स्यात्। यथा हरिः विष्णुः एक एव पुरुषोत्तमः स्मृतः, यथाच त्र्यम्बकः शिव एव महेश्वरः स्मृतः, न अपरः अपरः, पुमान् न, तथा मां मुनयः शतक्रतुं विदुः विदन्ति। 'विदो लटो वा' इति मेर्णुसादेशः, नः अस्माकं हरिहरयोः मम च इत्यर्थः, एषः त्रितयः अपि शब्दः द्वितीयगामी न हि। द्वितीयाप्रकरणे गमिगम्यादीनामुपसंख्यानात् समासः॥

৪৯। যেমন একমাত্র নারায়ণই 'পুরুষোত্তম' নামে কীর্ত্তিত, যেমন ত্রিলোচনই 'মহেশ্বর' নামে বিখ্যাত, অপর কেহ নহে ; সেইরূপ কেবল আমিই একমাত্র শতক্রতু নামে অভিহিত হইয়া থাকি। আমাদের এ নাম আর দ্বিতীয় ব্যক্তি গ্রহণ করিতে পারে না।

अतोऽयमश्वः कपिलानुकारिणा
पितुस्त्वदीयस्य मयापहारितः।
अलं प्रयत्नेन तवात्र मा निधाः
पदं पदव्यां सगरस्य सन्ततेः॥५०

५० अः। अतः त्वदीयस्य पितुः अयम् अश्वः कपिलानुकारिणा मया अपहारितः, तव अत्र प्रयत्नेन अलम्, सगरस्य सन्ततेः पदव्यां पदं मा निधाः॥ वाच्य—इममश्वं कपिलानुकारी अहम् अपहारितवान्, मा निधायि (त्वया)।

५०। यतः अहमेव शतक्रतुः अतः त्वदीयस्य पितुः अयं शततमः अश्वः कपिलानुकारिणा कपिलमुनितुल्येन मया अपहारितः अपहृतः। अपहारित इति स्वार्थे णिच्। तव अत्र अश्वे प्रयत्नेन अलं प्रयत्नः माकारि इत्यर्थः। निषेध्यस्य निषेधं प्रति करणत्वात् तृतीया। सगरस्य राज्ञः सन्ततेः सन्तानस्य पदव्यां पदं मा निधाः न निधेहि। निपूर्वाद्धाञ्धातोर्लुङ्, 'न माङ्योगे' इत्यडागमप्रतिषेधः। महदास्कन्दनं ते विनाशमूलं भवेदिति भावः॥

पौराणिकी वार्त्ता :—पुरा किल शताश्वमेधेन यष्टुमिच्छता सूर्य्यवंशसम्भवेन प्रथितनाम्ना भूपतिना सगरेण यथाविधि यज्ञीयमश्वमुत्सृष्टमवलोक्य स्वाधिकारच्युतिशङ्कया यज्ञविघ्नमुत्पादयितुमिन्द्रश्छलेन तमश्वमपजहार। अपहृत्य च तं पातालतलवासिनो भगवदंशमूर्त्तस्तत्रभवतो ध्यानमग्नस्य कपिलस्वामिनः संररक्ष। इतस्तावदश्वरक्षकैः षष्टिसहस्रसंख्यकैः सगरसुतैः समन्तादन्विष्यान्वेषद्भिः क्रमेण पातालतलमुपतस्थे। तत्राश्वमवलोकयन्तः सन्निहिताश्रमं महर्षिं कपिलमेव मोहेनाश्वचौरोऽयमिति निश्चिन्वानाः क्रोधेन तं प्रहर्त्तुमुद्यतवन्तः। अथ भगवानमोघशक्तिः कपिलस्तानुद्धतान् प्रहर्त्तुमुद्यतान् दृष्ट्वा क्रोधकषायितनयनवह्निना भस्मीचकार इति।

৫০। অতএব আমি কপিলমুনির দৃষ্টান্তানুযায়ী হইয়া তোমার পিতার এই অশ্বটী হরণ করিয়াছি; তুমি এই অশ্ব মোচন করিতে চেষ্টা করিয়া সগর-সন্তানগণের পথে পদার্পণ করিও না।

ततः प्रहस्यापभयः पुरन्दरं
पुनर्बभाषे तुरगस्य रक्षिता।
गृहाण शस्त्रं यदि सर्ग एष ते
न खल्वनिर्ज्जित्य रघुं कृती भवान् ॥५१

५१ अः। ततस्तुरगस्य रक्षिता प्रहस्य अपभयः (सन्) पुरन्दरं पुनर्बभाषे, यदि ते एषः सर्गः तदा शस्त्रं गृहाण, भवान् रघुम् अनिर्जित्य कृती न खलु॥ वाच्य—रक्षिता अपभयेन पुरन्दरः बभाषे, एतेन सर्गेण (भूयते), गृह्यतां (त्वया), भवता कृतिना न (भूयते)।

५१। ततः तुरगस्य रक्षिता रघुः प्रहस्य प्रहासं कृत्वा, अपभयः निर्भीकः सन्, पुनः पुरन्दरं बभाषे। किमिति—हे देवेन्द्र! यदि एषः अश्वामोचनरूपः ते तव सर्गः निश्चयः। 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः। तर्हि शस्त्रं गृहाण, भवान् रघुं माम् अनिर्जित्य, कृतमनेनेति कृती कृतकृत्यः न खलु। 'इष्टादिभ्यश्च' इति इनिप्रत्ययः। रघुमित्यनेन आत्मनो दुर्जयत्वं सूचितम्॥

৫১। অনন্তর সেই অশ্বরক্ষক নির্ভীক রঘু, হাস্য করিয়া পুনরায় ইন্দ্রকে কহিলেন, আপনার যদি এরূপই সঙ্কল্প হয়, তবে অস্ত্র গ্রহণ করুন, রঘুকে জয় না করিয়া আপনি কদাচ কৃতকার্য্য হইতে পারিবেন না।

स एवमुक्त्वा मघवन्तमुन्मुखः
करिष्यमाणः सशरं शरासनम्।
अतिष्ठदालीढविशेषशोभिना
वपुःप्रकर्षेण विडम्बितेश्वरः ॥५२

५२ अः। सः उन्मुखः (सन्) मघवन्तम् एवम् उक्त्वा शरासनं सशरं करिष्यमाणः आलीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः (सन्) अतिष्ठत्॥ वाच्य—तेन उन्मुखेन करिष्यमाणेन...विडम्बितेश्वरेण अस्थीयत।

५२। सः रघुः उन्मुखः सन् मघवन्तम् इन्द्रम् एवम् उक्त्वा शरासनं चापं सशरं करिष्यमाणः, आलीढेन आलीढाख्येन स्थानभेदेन विशेषशोभिना अतिशयशोभिना वपुःप्रकर्षेण देहोन्नत्येन, विडम्बितेश्वरः अनुकृतपिनाकी सन् अतिष्ठत्। आलीढलक्षणमाह यादवः—'स्थानानि

धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति। अन्वर्थं स्यात् समपदमालीढन्तु ततोऽग्रतः। दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्य्ययः' इति॥

৫২। তিনি ইন্দ্রকে এই কথা বলিয়া, ঊর্দ্ধমুখে শরাসনে শর-সন্ধানে প্রবৃত্ত হইলেন; তাঁহার দক্ষিণপদ সম্মুখে প্রসারিত এবং বামপদ পশ্চাতে আকুঞ্চিত ও বিশাল দেহ আয়ত হইলে, মনে হইল যেন স্বয়ং মহাদেব বিপুল দেহ আয়ত করিয়া দাঁড়াইয়াছেন।

रघोरवष्टम्भमयेन पत्त्रिणा<br>
हृदि क्षतो गोत्रभिदप्यमर्षणः।<br>
नवाम्बुदानीकमुहूर्त्तलाञ्छने<br>
धनुष्यमोघं समधत्त सायकम्॥ ५३

५३ अ:। अवष्टम्भमयेन पत्त्रिणा हृदि क्षतः अमर्षणः गोत्रभिदपि नवाम्बुदानीकमुहूर्त्तलाञ्छने धनुषि अमोघं सायकं समधत्त॥ वाच्य—क्षतेन अमर्षणेन गोत्रभिदा अमोघः सायकः समधीयत।

५३। रघोः अवष्टम्भमयेन स्तम्भरूपेण। 'अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि' इति विश्वः। पत्त्रिणा बाणेन हृदि हृदये क्षतः विद्धः अतएव अमर्षणः असहनः क्रुद्ध इत्यर्थः। गोत्रभित् इन्द्रः अपि। 'सम्भावनीये चौरेऽपि गोत्रः क्षौणीधरे मतः' इति विश्वः। नवाम्बुदानाम् अनीकस्य वृन्दस्य मुहूर्त्तं क्षणमात्रं लाञ्छने चिह्नभूते धनुषि, दिव्ये धनुषीत्यर्थः। अमोघम् अवन्ध्यं सायकं बाणं समधत्त संहितवान्॥

৫৩। শৈলভেদকারী ইন্দ্রও রঘুর স্তম্ভসদৃশ বাণদ্বারা হৃদয়ে আহত হইয়া ক্রোধে অধীর হইলেন, এবং নবীন মেঘমালার ক্ষণকাল চমকায়মান স্বীয় শরাসনে অব্যর্থ শর সন্ধান করিলেন।

दिलीपसूनोः स बृहद्भुजान्तरं<br>
प्रविश्य भीमासुरशोणितोचितः।<br>
पपावनास्वादितपूर्वमाशुगः<br>
कुतूहलेनेव मनुष्यशोणितम्॥ ५४

५४ अ:। भीमासुरशोणितोचितः आशुगः दिलीपसूनोः बृहत् भुजान्तरं प्रविश्य अनास्वादितपूर्व्वं मनुष्यशोणितं कुतूहलेनेव पपौ॥ वाच्य—शोणितोचितेन आशुगेन तेन पपे।

५४। भीमानां भयङ्कराणाम् असुराणां शोणिते रुधिरे उचितः

परिचितः सः इन्द्रमुक्तः आशुगः सायकः दिलीपसूनोः रघोः बृहत् विशालं भुजान्तरं वक्षः प्रविश्य, अनास्वादितपूर्व्वं पूर्व्वम् अनास्वादितम्। सुप्सुपेति समासः । मनुष्यशोणितं कुतूहलेन इव पपौ ॥

৫৪। তখন ভয়ঙ্কর অসুরগণের রুধিরপানে চিরাভ্যস্ত, সেই দেবরাজ-সায়ক, দিলীপনন্দনের বিশাল বক্ষঃস্থলে প্রবেশ করিয়া যেন কুতূহল বশতঃ অনাস্বাদিতপূর্ব্ব নররুধির পান করিতে লাগিল।

हरेः कुमारोऽपि कुमारविक्रमः
सुरद्विपास्फालनकर्कशाङ्गुलौ ।
भुजे शचीपत्रविशेषकाङ्किते
स्वनामचिह्नं निचखान सायकम् ॥ ५५

५५ अः। कुमारविक्रमः कुमारोऽपि सुरद्विपास्फालनकर्कशाङ्गुलौ शचीपत्रविशेषकाङ्किते हरेर्भुजे स्वनामचिह्नं सायकं निचखान ॥ वाच्य—कुमारविक्रमेण कुमारेणापि स्वनामचिह्नः सायकः निचख्ने।

५५। कुमारस्य स्कन्दस्य विक्रम इव विक्रमो यस्य सः तथोक्तः। 'सप्तम्युपमानपूर्व्वस्य' इत्यादिना समासः। कुमारः रघुरपि, सुरद्विपस्य ऐरावतस्य आस्फालनेन कर्कशा अङ्गुलयो यस्य सः तस्मिन्, शच्याः पत्रविशेषकैः अङ्किते शचीपत्रविशेषकाङ्किते हरेः इन्द्रस्य भुजे, स्वनामचिह्नं स्वनामाङ्कितं सायकं, निचखान निखातवान्। निष्कण्टकराज्यमासस्यायं * महानभिभव इति भावः ॥

৫৫। দেবহস্তী ঐরাবতকে আঘাত করিয়া যাহার অঙ্গুলি সকলে কড়াপড়িয়াছে, এবং শচীদেবী যাহাতে লতা পাতা আঁকিয়া দিয়াছেন, ইন্দ্রের সেই হস্তে, কার্ত্তিকেয়ের ন্যায় পরাক্রান্ত রঘুও স্বনামাঙ্কিত একটী বাণ বিদ্ধ করিলেন।

जहार चान्येन मयूरपत्त्रिणा शरेण शक्रस्य महाशनिध्वजम् ।
चुकोप तस्मै स भृशं सुरश्रियःप्रसह्य केशव्यपरोपणादिव ५६

५६ अः। सः (रघुः) अन्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजं जहार च, सः इन्द्रः सुरश्रियः प्रसह्य केशव्यपरोपणादिव तस्मै भृशं चुकोप ॥ वाच्य—महाशनिध्वजः जह्रे, (रघुणा) तेन इन्द्रेण चुकुपे।

५६। अन्येन मयूरपत्रिणा मयूरपत्रवता शरेण शक्रस्य इन्द्रस्य महाशनिध्वजं महान्तम् अशनिरूपं ध्वजं जहार विच्छेद च। सः शक्रः, सुरश्रियः प्रसह्य बलात्कृत्य केशानां व्यपरोपणात् अवतारणात् छेदनात्

---

* "निष्कण्टकराज्यं तस्यायं महानभिभवः" इत्यपि पाठो दृश्यते।

इव तस्मै रघवे भृशम् अत्यर्थं चुकोप, तं हन्तुमियेष इत्यर्थः। 'क्रुध-द्रुह' इत्यादिना सम्प्रदानात् चतुर्थी ॥

৫৬। রঘু ময়ূরপত্রে শোভিত আর একটী বাণদ্বারা ইন্দ্রের রথস্থ বজ্রচিহ্নিত প্রকাণ্ড ধ্বজ কাটিয়া ফেলিলেন ; বলপূর্ব্বক দেবকুলরাজলক্ষ্মীর কেশচ্ছেদন করিলে ইন্দ্রের যেরূপ ক্রোধ হয়, রথের ধ্বজচ্ছেদন করায় রঘুর উপর সেইরূপ ক্রোধ জন্মিল।

तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीमदर्शनैः।
बभूव युद्धं तुमुलं जयैषिणो रधोमुखैरूर्द्धमुखैश्च पत्रिभिः ॥ ५७

५७ अः। जयैषिणोः तयोः गरुत्मदाशीविषभीमदर्शनैः अधोमुखैः ऊर्द्धमुखैः च पत्रिभिः उपान्तस्थितसिद्धसैनिकं तुमुलं युद्धं बभूव ॥ वाच्य—सैनिकेन तुमुलेन युद्धेन बभूवे।

५७। जयैषिणोः अन्योन्यजयाकाङ्क्षिणोः तयोः इन्द्ररघ्वोः गरुत्मन्तः पक्षवन्तः। 'गरुत्पक्षच्छदाः पत्रम्' इत्यमरः। आशीविषाः आशिषि दंष्ट्रायां विषं येषां ते आशीविषाः सर्पाः। पृषोदरादित्वात् साधुः। स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः, इत्यमरः। ते इव भीमदर्शनाः सपक्षाः सर्पाः इव द्रष्टॄणां भयावहा इत्यर्थः। तैः अधोमुखैः ऊर्द्ध्वमुखैश्च, धान्विनो रुपर्य्यधोदेशावस्थितत्वादिति भावः। पत्रिभिः बाणैः, उपान्तस्थिताः तटस्थाः सिद्धाः देवाः इन्द्रस्य, सैनिकाश्च रघोः यस्मिन् तत् तथोक्तं तुमुलं सङ्कुलं युद्धं बभूव ॥

৫৭। উভয়েই পরস্পরকে জয় করিতে কৃতসংকল্প হওয়ায় তাঁহাদের মধ্যে তুমুল সংগ্রাম উপস্থিত হইল ; পক্ষযুক্ত শরসমূহ যেন পক্ষধর সর্পনিকরের ন্যায় ভীষণ আকারে উর্দ্ধে ও নিম্নে ছুটিতে লাগিল ; ইন্দ্রপক্ষীয় সিদ্ধগণ ও রঘুপক্ষীয় সৈনিকেরা বিস্ময়াপন্ন হইয়া, দেখিতে লাগিলেন।

अतिप्रबन्धप्रहितास्त्रवृष्टिभि-
स्तमाश्रयं दुष्प्रसहस्य तेजसः।
शशाक निर्वापयितुं न वासवः
स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ॥ ५८

५८ अः। वासवः अतिप्रबन्धप्रहितास्त्रवृष्टिभिः दुष्प्रसहस्य तेजसः आश्रयं स्वतश्च्युतं तम् अम्बुदः (अतिप्रबन्धप्रहिताभिः) अद्भिः दुष्प्रसहस्य तेजसः आश्रयं स्वतश्च्युतं वह्निमिव निर्वापयितुं न शशाक वाच्य—वासवेन अम्बुदेन इव न शेके।

५८। वासवः अतिप्रबन्धेन अतिसातत्येन प्रहिताभिः प्रयुक्ताभिः अस्त्रवृष्टिभिः, दुष्प्रसहस्य दुःखेन प्रसह्यते इति दुष्प्रसहम्, तस्य दुःखेन

अप्यसह्यस्य इत्यर्थः । तेजसः प्रतापस्य आश्रयं तं रघुम् । अम्बुदः अद्भिः स्वतः च्युतं निर्गतं वह्निम् इव निर्व्वापयितुं न शशाक । रघोरपि लोकपालात्मकस्य इन्द्रांशसम्भवत्वादिति भावः ॥

৫৮। মেঘ, অবিশ্রান্ত বারি বৃষ্টি করিয়াও যেমন মেঘ হইতে নিঃসৃত বজ্রাগ্নিকে নির্ব্বাপিত করিতে পারেনা, সেইরূপ ইন্দ্র অবিশ্রান্ত অস্ত্রবৃষ্টি করিয়াও স্বীয় অংশ হইতে উৎপন্ন দুঃসহ তেজের আধার রঘুকে নিরস্ত করিতে পারিলেন না।

ततः प्रकोष्ठे हरिचन्दनाङ्किते
प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्द्धमुखेन पत्रिणा
शरासनज्यामलुनाद्विडौजसः ॥ ५९

५९ अः। ततः रघुः हरिचन्दनाङ्किते प्रकोष्ठे प्रमथ्यमानार्णवधीरनादिनीम् विडौजसः शरासनज्यां शशाङ्कार्द्धमुखेन पत्रिणा अलुनात् ॥ वाच्य—रघुणा नादिनी शरासनज्या अलूयत ।

५९। ततो रघुः, हरिचन्दनाङ्किते प्रकोष्ठे मणिबन्धे प्रमथ्यमानार्णवधीरनादिनीं प्रमथ्यमानार्णव इव धीरं गम्भीरं नदतीति तां तथोक्ताम्। वेवेष्टि व्याप्नोतीति विट् व्यापकम् ओजो यस्य सः विडौजसः इन्द्रस्य। पृषोदरादित्वात् साधु। शरासनज्यां धनुर्मौर्व्वीं, शशाङ्कस्य अर्द्धः खण्डः इव मुखं फलं यस्य तेन पत्रिणा, अलुनात् अच्छिनत् ॥

৫৯। অনন্তর রঘু, ইন্দ্রের হরিচন্দন চর্চ্চিত মণিবন্ধস্থানে অর্দ্ধচন্দ্রাকৃতি বাণ নিক্ষেপ করিয়া মন্থন-কালে আলোড়িত সমুদ্র সদৃশ গভীরনাদী তদীয় ধনুকের গুণ ছেদন করিয়া দিলেন।

स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रबलस्य विद्विषः ।
महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे ॥६०

६० अः। विवृद्धमत्सरः स चापम् उत्सृज्य प्रबलस्य विद्विषः प्रणाशनाय महीध्रपक्षव्यपरोपणोचितम् स्फुरत्प्रभामण्डलम् अस्त्रम् आददे ॥ वाच्य—विवृद्धमत्सरेण तेन आददे ।

६०। विवृद्धमत्सरः प्रवृद्धवैरः सः इन्द्रः चापम् उत्सृज्य प्रबलस्य विद्विषः शत्रोः प्रणाशनाय वधाय, महीं धारयन्तीति महीध्राः पर्व्वताः। मूलविभुजादित्वात् कप्रत्ययः। तेषां पक्षव्यपरोपणे पक्षच्छेदे उचितं, स्फुरत्प्रभामण्डलम् अस्त्रं वज्रायुधम् आददे जग्राह ॥

৬০। ইন্দ্র অধিকতর ক্রোধে ধনু পরিত্যাগ করিলেন এবং যদ্দ্বারা পর্ব্বতগণের পক্ষ চূর্ণ করিয়াছিলেন প্রবল শত্রুর সংহারের জন্য সেই উদ্দীপ্তপ্রভা-সমুদ্ভাসিত বজ্র গ্রহণ করিলেন।

रघुर्भृशं वक्षसि तेन ताड़ितः
पपात भूमौ सह सैनिकाश्रुभिः।
निमेषमात्रादवधूय तद्व्यथां
सहोत्थितः सैनिकहर्षनिःस्वनैः॥ ६१

६१ अः। रघुस्तेन भृशं वक्षसि ताड़ितः सन् सैनिकाश्रुभिः सह भूमौ पपात, निमेषमात्रात् तद्व्यथाम् अवधूय सैनिकहर्षनिःस्वनैः सह उत्थितः॥ वाच्य—रघुणा ताड़ितेन पेते, उत्थितम्।

६१। रघुः तेन वज्रेण भृशम् अत्यर्थं वक्षसि ताड़ितः आहतः सन्, सैनिकानाम् अश्रुभिः सह भूमौ पपात, तस्मिन् पतिते ते रुरुदुरित्यर्थः। निमेषमात्रात् तद्व्यथां दुःखम् अवधूय तिरस्कृत्य, सैनिकानां हर्षेण ये निस्वनाः क्ष्वेड़ाः तैः सह उत्थितश्च, तस्मिन् उत्थिते हर्षात् सिंहनादान् चक्रुः इत्यर्थः॥

৬১। রঘু, ইন্দ্রনিক্ষিপ্ত বজ্র বিষম বেগে বক্ষে পতিত হওয়ায়, সৈন্যগণের অশ্রুধারার সহিত ভূতলে পতিত হইলেন, তিনি আবার নিমেষমাত্রেই সেই বজ্রাঘাতের বেদনা দূর করিয়া উঠিয়া দাঁড়াইলেন, সঙ্গে সঙ্গে তাঁহার সৈন্যেরাও আনন্দে জয়ধ্বনি করিয়া উঠিল।

तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः।
तुतोष वीर्य्यातिशयेन वृत्रहा पदं हि सर्व्वत्र गुणैर्निधीयते॥ ६२

६२ अः। तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरं तस्थुषः अस्य वीर्य्यातिशयेन वृत्रहा तुतोष, तथाहि गुणैः सर्व्वत्र पदं निधीयते॥ वाच्य—वृत्रघ्ना तुतुषे गुणाः पदं निदधति।

६२। तथापि वज्रपातेऽपि शस्त्राणाम् आयुधानां व्यवहारेण व्यापारेण निष्ठुरे क्रूरे विपक्षभावे शात्रवे चिरं तस्थुषः स्थितवतः अस्य रघोः वीर्य्यातिशयेन, वृत्रं हतवान् इति वृत्रहा। 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति क्विप्। तुतोष। स्वयं वीर एव वीरं जानातीति भावः। कथं शत्रोः सन्तोषः? अत आह—गुणैः सर्व्वत्र शत्रुमित्रोदासीनेषु पदम् अङ्घ्रिः निधीयते, गुणैः सर्व्वत्र संक्रम्यते इत्यर्थः। गुणाः शत्रून् अपि आवर्जयन्तीति भावः॥

৬২। রঘু, সুরপতির ঐরূপ ভীষণ শস্ত্রনিক্ষেপ নিবন্ধন অতি নিদারুণ শত্রুতা প্রকাশেও বিচলিত হইলেন না, ইন্দ্র তাঁহার এতাদৃশ অসাধারণ বীর্য্য দর্শনে সন্তুষ্ট হইলেন কেন না, গুণ সর্ব্বত্রই আপন প্রতিষ্ঠা স্থাপন করিয়া থাকে।

असङ्गमद्रिष्वपि सारवत्तया
न मे त्वदन्येन विसोढ़मायुधम् ।
अवेहि मां प्रीतमृते तुरङ्गमात्
किमिच्छसीति स्फुटमाह वासवः ॥ ६३

६३ अ: । सारवत्तया अद्रिष्वपि असङ्गं मे आयुधं त्वदन्येन न विसोढ़म्, मां प्रीतम् अवेहि, तुरङ्गमात् ऋते किम् इच्छसि इति वासवः स्फुटम् आह ॥ वाच्य—त्वदन्यः न विसोढ़वान् अहं प्रीतः अवेये ( त्वया ) इष्यते इति वासवेन उच्यते ।

६३ । सारवत्तया अद्रिषु अपि असङ्गम् अप्रतिबन्धं मे आयुधं वज्रं त्वदन्येन न विसोढ़म्, अतः मां प्रीतं सन्तुष्टम् अवेहि, तुरङ्गमात् ऋते तुरङ्गं वर्जयित्वा । 'अन्यारादितरर्त्ते' इति पञ्चमी । किम् इच्छसि, इति स्फुटं वासवः आह, तुरङ्गमात् अन्यत् अदेयं नास्तीति भावः ॥

৬৩ । "যাহার তেজ, পর্ব্বতেও প্রতিহত হয় না আমার সেই বজ্র তুমি ভিন্ন আর কেহ সহ্য করিতে সমর্থ হয় নাই, আমি ইহাতে নিতান্ত সন্তুষ্ট হইলাম । তুমি আমার নিকট তুরঙ্গম ভিন্ন অন্য কোন অভীষ্টবস্তু প্রার্থনা কর, ইন্দ্র এই কথা রঘুকে স্পষ্টাক্ষরে বলিলেন ।

ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् ।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदः प्रत्यवदत् सुरेश्वरम् ६४

६४ अः । ततः नरेन्द्रसूनुः निषङ्गात् असमग्रम् उद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् इषुं प्रतिसंहरन् प्रियंवदं सुरेश्वरं प्रत्यवदत् ॥ वाच्य—नरेन्द्रसूनुना प्रतिसंहरता प्रियंवदः सुरेश्वरः प्रत्यौच्यत ।

६४ । ततः निषङ्गात् तूणीरात् असमग्रं यथा तथा उद्धृतं सुवर्ण-पुङ्खद्युतिभिः रञ्जिताः अङ्गुलयः येन तम् इषुं प्रतिसंहरन् निवर्त्तयन्, 'नाप्रहरन्तं प्रहरेत्' इति निषेधादिति भावः । प्रियं वदतीति प्रियंवदः । 'प्रियवशे वदः खच्' इति खच्प्रत्ययः' 'अरुर्द्विष' इत्यादिना मुमागमः । नरेन्द्रसूनुः रघुः सुरेश्वरं प्रत्यवदत् न तु प्राहरदिति भावः ॥

৬৪ । রাজকুমার রঘু, তূণীর হইতে একটী বাণ বাহির করিতেছিলেন তাঁহার স্বর্ণময়পুঙ্খের প্রভায় তদীয় অঙ্গুলি রঞ্জিত হইতেছিল ; তিনি সেই বাণ পুনরায় তূণীরে স্থাপন করিয়া মিষ্ট বাক্যে দেবরাজকে কহিলেন ।

अमोच्यमश्वं यदि मन्यसे प्रभो !
ततः समाप्ते विधिनैव कर्म्मणि ।

अजस्रदीक्षाप्रयतः स मद्गुरुः
क्रतोरशेषेण फलेन युज्यताम् ॥ ६५

६५ अ:। हे प्रभो ! यदि अश्वम् अमोच्यं मन्यसे ततः अजस्रदीक्षाप्रयतः सः मद्गुरुः विधिनैव कर्म्मणि समाप्ते क्रतोः अशेषेण फलेन युज्यताम् ॥ वाच्य—अश्वः अमोच्यः—मन्यते (त्वया) प्रयतं तं मद्गुरुं युङ्क्तु।

६५। हे प्रभो ! इन्द्र ! अश्वम् अमोच्यं मन्यसे यदि, ततः तर्हि अजस्रदीक्षायां प्रयतः सः मद्गुरुः मम पिता विधिना एव कर्म्मणि समाप्ते सति क्रतोः यत् फलं तेन फलेन अशेषेण कृत्स्नेन युज्यतां युक्तः अस्तु। अश्वमेधफललाभे किमश्वेन इति भावः ॥

৬৫। হে প্রভো ! যদি যজ্ঞীয় অশ্বটী একান্তই আপনার পরিত্যাজ্য না হয়, তাহা হইলে অজস্রযজ্ঞ-কার্য্যে দীক্ষিত মদীয়পিতৃদেব যথাবিধি এই যজ্ঞ সমাপন করিলে যে সম্পূর্ণ ফল পাইতেন, তাঁহাকে সেই ফল প্রদান করুন।

यथा च वृत्तान्तमिमं सदोगत-
स्त्रिलोचनैकांशतया दुरासदः।
तवैव सन्देशहराद्विशाम्पतिः
शृणोति लोकेश ! तथा विधीयताम् ॥ ६६

६६ अ:। सदोगतः त्रिलोचनैकांशतया दुरासदः सः विशांपतिः यथा इमं वृत्तान्तं तव एव सन्देशहरात् शृणोति च हे लोकेश ! तथा विधीयताम् ॥ वाच्य—सदोगतेन दुरासदेन तेन विशाम्पतिना यथा एषः वृत्तान्तः श्रूयते तथा विदधातु।

६६। सदोगतः सदोगृहं गतः त्रिलोचनस्य ईश्वरस्य एकांशतया अष्टानाम् अन्यतममूर्त्तित्वात् दुरासदः अस्मादृशैः दुष्प्रापः विशाम्पतिः, यथा इमं वृत्तान्तं तव सन्देशहरात् वार्त्ताहरात् एव शृणोति च, लोकेश ! इन्द्र ! तथा विधीयताम् ॥ ६६

৬৬। পরিষৎপরিবেষ্টিত মদীয় পিতৃদেব যজ্ঞে ব্রতী হওয়ায় অষ্টমূর্ত্তির অন্যতম মূর্ত্তি গ্রহণ করাতে সাধারণ লোকের অনভিগম্য হইয়াছেন, আপনার নিজের বার্ত্তাবহমুখে যাহাতে তিনি এই সংবাদ জানিতে পারেন, তাহারও উপায় বিধান করুন।

तथेति कामं प्रतिशुश्रुवान् रघोर्यथागतं मातलिसारथिर्ययौ॥
नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्त्तत ६७

६७ अ:। मातलिसारथिः रघोः कामं तथेति प्रतिशुश्रुवान् यथागतं ययौ। सुदक्षिणासूनुरपि

नातिप्रमना: सन् नृपस्य सदोगृहं ( प्रति ) न्यवर्त्तत ॥ वाच्य—मातलिसारथिना प्रतिशुश्रुवता, ययौ, नातिप्रमनसा सुदक्षिणासूनुना न्यवर्त्यत ।

६७। मातलिसारथि: इन्द्र: रघो: सम्बन्धिनं कामं मनोरथं तथेति तथास्त्विति प्रतिशुश्रुवान् । 'भाषायां सदवसश्रुव:, इति क्वसुप्रत्यय: । यथागतं ययौ, सुदक्षिणासूनु: रघु: अपि नातिप्रमना: विजयलाभे अपि अश्वनाशात् न अतीव तुष्ट: सन् । नञर्थस्य नशब्दस्य सुप्सुपेति समास: । नृपस्य सदो गृहं प्रति न्यवर्त्तत ॥

৬৭। মাতলিসারথি সেই ইন্দ্র 'তথাস্তু' বলিয়া রঘুর প্রার্থনায় প্রতিশ্রুত হইয়া যথাস্থানে প্রস্থান করিলেন ; এদিকে সুদক্ষিণার পুত্র রঘুও অনতিপ্রফুল্লচিত্তে রাজসভায় প্রত্যাগমন করিলেন।

तमभ्यनन्दत् प्रथमं प्रबोधित:
प्रजेश्वर: शासनहारिणा हरे: ।
परामृशन् हर्षजडेन पाणिना
तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८

६८ अ: । हरे: शासनहारिणा प्रथमं प्रबोधित: प्रजेश्वर: हर्षजडेन पाणिना कुलिशव्रणाङ्कितं तदीयम् अङ्गं परामृशन् तम् अभ्यनन्दत् ॥ वाच्य—प्रबोधितेन प्रजेश्वरेण परामृशता स: अभ्यनन्द्यत ।

६८। हरेरिन्द्रस्य शासनहारिणा पुरुषेण प्रथमं प्रबोधित: ज्ञापित:, वृत्तान्तमिति शेष: । प्रजेश्वर: दिलीप: हर्षजडेन हर्षशिशिरेण पाणिना, कुलिशव्रणाङ्कितं तस्य रघो: इदं तदीयम् अङ्गं शरीरं, परामृशन् सन् तं रघुम् अभ्यनन्दत् ॥

৬৮। প্রজানাথ দিলীপ ইতিপূর্ব্বেই ইন্দ্রপ্রেরিত বার্তাবহের মুখে সমস্ত বৃত্তান্ত অবগত হইয়াছিলেন ; তিনি পুত্রকে অভিনন্দিত করিয়া তাহার বজ্রক্ষত শরীরে হাত বুলাইতে লাগিলেন আনন্দে তদীয় হস্ত অবশ হইল।

इति क्षितीशो नवतिं नवाधिकां
महाक्रतूनां महनीयशासन: ।
समारुरुक्षुर्दिवमायुष: क्षये
ततान सोपानपरम्परामिव ॥ ६९

६९ अ: । महनीयशासन: क्षितीश: आयुष: क्षये दिवम् आरुरुक्षु: सन् इति नवाधिकां महाक्रतूनां नवतिं सोपानपरम्परामिव ततान ॥ वाच्य—शासनेन क्षितीशेन आरुरुक्षुणा नवाधिका नवति: ...परम्परा इव तेने ।

६९। महनीयशासनः पूजनीयाज्ञः क्षितीशः, इति अनेन प्रकारेण। 'इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु' इत्यमरः, महाक्रतूनाम् अश्वमेधानां नवभिरधिकां नवतिम् एकोनशतम्, आयुषः क्षये सति, दिवं स्वर्गम् समारुरुक्षुः आरोढुमिच्छुः, सोपानानां परम्परां पङ्क्तिम् इव ततान॥

৬৯। যাঁহার আজ্ঞা সর্ব্বত্রই পূজিত, সেই পৃথ্বীশ্বর দিলীপ, এইরূপে নবনবতি মহাযজ্ঞ সম্পাদন করিলেন, যেন তিনি জীবনান্তে স্বর্গে আরোহণ করিবার জন্য ( সেই যজ্ঞপরম্পরারূপ ) সোপানপঙ্ক্তি নির্ম্মাণ করিয়াছিলেন।

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम्।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्॥ ७०

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ रघुराज्याभिषेको नाम तृतीयः सर्गः॥

७० अ:। अथ विषयव्यावृत्तात्मा सः यूने सूनवे नृपतिककुदं सितातपवारणं यथाविधि दत्त्वा तया देव्या सह मुनिवनतरुच्छायां शिश्रिये, तथाहि गलितवयसाम् इक्ष्वाकूणाम् इदं कुलव्रतम्॥ वाच्य— विषयव्यावृत्तात्मना तेन...तरुच्छाया शिश्रिये, अनेन कुलव्रतेन ( भूयते )।

७०। अथ विषयेभ्यः व्यावृत्तात्मा निवृत्तचित्तः सः दिलीपः, यथाविधि यथाशास्त्रं यूने सूनवे नृपतिककुदं राजचिह्नम्। 'ककुद्मत् ककुदं श्रेष्ठे वृषाङ्गे राजलक्ष्मणि' इति विश्वः। सितातपवारणं श्वेतच्छत्रं दत्त्वा तया देव्या सुदक्षिणया सह मुनिवनतरोः छायां शिश्रिये श्रितवान्, वानप्रस्थाश्रमं स्वीकृतवानित्यर्थः। तथाहि गलितवयसां वृद्धानाम्, इक्ष्वाकूणाम् इक्ष्वाकोर्गोत्रापत्यानाम् तद्राजसंज्ञकत्वादणो लुक्। इदं वनगमनं कुलव्रतम्। देव्या सहेत्यनेन सपत्नीकवानप्रस्थाश्रमपक्ष उक्तः। तथाच याज्ञवल्क्यः—'सुतविन्यस्तपत्नीकः तया वानुगतो वनम्। वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्॥' इति। हरिणीवृत्तमेतत्। तदुक्तम्— 'नसमरसला गः षड्वेदैर्हयैर्हरिणी मता'। इति॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये रघुराज्याभिषेको नाम तृतीयः सर्गः॥३॥

৭০। অনন্তর তিনি সাংসারিক বিষয় হইতে সম্পূর্ণরূপে নিবৃত্ত হইয়া, যুবা পুত্র রঘুকে যথাবিধি রাজচিহ্ন শ্বেতচ্ছত্র প্রদান করিয়া, মহিষীর সহিত তপোবন-তরুর ছায়া আশ্রয় করিলেন; কেননা, ইক্ষ্বাকুবংশীয় বৃদ্ধ নৃপতিগণের ইহাই কুলব্রত।

তৃতীয় সর্গ সমাপ্ত॥

# चतुर्थः सर्गः ।

—(*)—

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १

१ अः । स गुरुणा दत्तं राज्यं प्रतिपद्य दिनान्ते सवित्रा निहितं तेजः ( प्रतिपद्य ) हुताशनः इव अधिकं बभौ ॥ वाच्य—तेन हुताशनेन इव बभे ।

शारदा शारदाम्भोज-वदना वदनाम्बुजे ।
सर्व्वदा सर्व्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥

१ । सः रघुः, गुरुणा पित्रा दत्तं राज्यं राज्ञः कर्म्म प्रजा-परिपालनात्मकम् । पुरोहितादित्वाद्यक् । प्रतिपद्य प्राप्य, दिनान्ते सायंकाले सवित्रा सूर्य्येण निहितं तेजः प्रतिपद्य, हुताशनः अग्निः इव अधिकं बभौ 'सौरं तेजः सायमग्निं संक्रमते । आदित्यो वा अस्तं यन् अग्निमनुप्रविशति । अग्निं वा आदित्यः सायं प्रविशति' इत्यादिस्मृतिः प्रमाणम् ॥

১। অগ্নি যেমন সায়ংকালে সূর্য্য কর্ত্তৃক স্থাপিত তেজঃ প্রাপ্ত হইয়া অধিকতর প্রদীপ্ত হয়, তেমনি রঘুও পিতা কর্ত্তৃক প্রদত্ত সাম্রাজ্য প্রাপ্ত হইয়া অধিকতর প্রদীপ্ত হইলেন। ( শাস্ত্রে কথিত আছে যে,—সূর্য্যদেব অস্ত যাইবার সময় নিজ তেজ অগ্নি মধ্যে রাখিয়া যান )।

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्व्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥२

२ अः । दिलीपानन्तरं तं राज्ये प्रतिष्ठितं निशम्य राज्ञां हृदये पूर्व्वं प्रधूमितः अग्निः उत्थितः इव । वाच्य -प्रधूमितेन अग्निना उत्थितम् ।

२ । दिलीपानन्तरं, राज्ये प्रतिष्ठितम् अवस्थितं तं रघुं निशम्य, आकर्ण्य पूर्वं दिलीपशासनकाले राज्ञां हृदये प्रकर्षेण धूमोऽस्य सञ्जातः प्रधूमितः अग्निः सन्तापाग्निः उत्थितः इव प्रज्वलितः इव पूर्वेभ्योऽधिकसन्तापोऽभूत् इत्यर्थः । राजकर्त्तृकस्यापि निशमनस्याग्नौ उपचारात् समानकर्त्तृकत्वविरोध इति ॥

২। পূর্ব্ব হইতে বিপক্ষ রাজমণ্ডলের হৃদয়ে যে সন্তাপাগ্নি ধূমরাশি উদ্গিরণ করিতেছিল, দিলীপের পর রঘু সিংহাসনে বসিয়াছেন শুনিয়া, সেই সন্তাপাগ্নি ধূ ধূ করিয়া জ্বলিয়া উঠিল।

**পুরুহূতধ্বজস্যেব তস্যোন্নয়নপঙ্‌ক্তয়ঃ।**
**নবাভ্যুত্থানদর্শিন্যো ননন্দুঃ সপ্রজাঃ প্রজাঃ ॥৩**

৩ অঃ। পুরুহূতধ্বজস্যেব তস্য নবাভ্যুত্থানদর্শিন্যঃ উন্নয়নপঙ্‌ক্তয়ঃ সপ্রজাঃ প্রজাঃ ননন্দুঃ ॥ বাচ্য—...দর্শিনীভিঃ উন্নয়নপঙ্‌ক্তিভিঃ সপ্রজাভিঃ ননন্দে।

৩। পুরুহূতধ্বজঃ ইন্দ্রধ্বজঃ। স কিল রাজভির্বৃষ্ট্যর্থং পূজ্যতে ইত্যুক্তং ভবিষ্যোত্তরে—"এবং যঃ কুরুতে যাত্রামিন্দ্রকেতোর্যুধিষ্ঠির। পর্জ্জন্যঃ কামবর্ষী স্যাৎ তস্য রাজ্যে ন সংশয়ঃ ॥" ইতি। "চতুরস্রং ধ্বজাকারং রাজদ্বারে প্রতিষ্ঠিতম্। আহুঃ শক্রধ্বজং নাম পৌরলোকসুখাবহম্ ॥" পুরুহূতধ্বজস্য ইব তস্য রঘোঃ নবম্ অভ্যুত্থানম্ অভ্যুন্নতিম্ অভ্যুদয়ঞ্চ পশ্যন্তীতি নবাভ্যুত্থানদর্শিন্যঃ উৎ ঊর্দ্ধং প্রস্থিতাঃ উল্লসিতাশ্চ নয়নপঙ্‌ক্তয়ঃ যাসাং তাঃ সপ্রজাঃ সসন্তানাঃ প্রজাঃ জনাঃ। 'প্রজা স্যাৎ সন্ততৌ জনে' ইত্যুভয়ত্র অপ্যমরঃ। ননন্দুঃ ॥

৩। যেমন লোক সকল ঊর্দ্ধনেত্রে ইন্দ্রধ্বজের অভ্যুত্থান দর্শন করিয়া পুলকিত হয়, তেমনি প্রজাগণ সন্তান সন্ততির সহিত রঘুর অভিনব অভ্যুদয় দর্শন করিয়া মহোল্লাসে পুলকিত হইল।

**সমমেব সমাক্রান্তং দ্বয়ং দ্বিরদগামিনা।**
**তেন সিংহাসনং পিত্র্যমখিলঞ্চারিমণ্ডলম্ ॥ ৪**

৪ অঃ। দ্বিরদগামিনা তেন সমমেব দ্বয়ং সমাক্রান্তম্, পিত্র্যং সিংহাসনম্ অখিলম্ অরিমণ্ডলঞ্চ ॥ বাচ্য—দ্বিরদগামী সঃ সমাক্রান্তবান্।

৪। দ্বিরদ ইব দ্বিরদৈর্বা গচ্ছতীতি দ্বিরদগামিনা। 'কর্ত্তর্যুপমানে' ইতি 'সুপ্যজাতৌ' ইতি চ ণিনিঃ। তেন রঘুণা সমং যুগপৎ এব দ্বয়ং সমাক্রান্তম্ অধিষ্ঠিতম্। কিং তৎ দ্বয়ম্? পিতুরাগতং পিত্র্যম্। 'পিতুর্যৎ' ইতি যৎপ্রত্যয়ঃ। সিংহাসনম্, অখিলম্ অরীণাম্ মণ্ডলং রাষ্ট্রঞ্চ ॥

৪। গজগামী (হস্তীর ন্যায় ধীর ও উদ্ধত পদক্ষেপপূর্ব্বক যিনি গমন করেন, অথবা অভিষেককালে গজে আরোহণ করিয়া যিনি নগর প্রদক্ষিণ করিয়াছেন) সেই রঘু, এক সময়েই পৈতৃক সিংহাসন ও রিপুমণ্ডল আক্রমণ করিলেন।

**ছায়ামণ্ডললক্ষ্যেণ তমদৃশ্যা কিল স্বয়ম্।**
**পদ্মা পদ্মাতপত্রেণ ভেজে সাম্রাজ্যদীক্ষিতম্ ॥ ৫**

৫ অঃ। পদ্মা স্বয়ম্ অদৃশ্যা কিল ছায়ামণ্ডললক্ষ্যেণ পদ্মাতপত্রেণ সাম্রাজ্যদীক্ষিতং তং ভেজে। বাচ্য—অদৃশ্যয়া...দীক্ষিতঃ স ভেজে।

৫। সিংহাসনারোহণানন্তরং তস্য লক্ষ্মীসন্নিধানমাহ, ছায়েতি। অত্র রঘোস্তেজোবিশেষেণ স্বয়ং সন্নিহিতয়া লক্ষ্ম্যা ছত্রধারণং কৃতমিত্যুৎপ্রেক্ষ্যতে। পদ্মা লক্ষ্মীঃ। 'লক্ষ্মীঃ পদ্মালয়া পদ্মা কমলা শ্রীর্হরিপ্রিয়া' ইত্যমরঃ। স্বয়ম্‌ অদৃশ্যা কিল। কিলেতি সম্ভাবনায়াম্‌। সতী, ছায়ামণ্ডললক্ষ্যেণ কান্তিপুঞ্জানুমেয়েন ন তু স্বরূপতো দৃশ্যেন। ছায়ামণ্ডলমিত্যনেন অনাতপত্বানং লক্ষ্যতে। 'ছায়া সূর্য্যপ্রিয়া কান্তিঃ প্রতিবিম্বমনাতপঃ' ইত্যুভয়ত্রাপ্যমরঃ। পদ্মাতপত্রেণ পদ্মমেব আতপত্রং তেন কারণভূতেন, সাম্রাজ্যদীক্ষিতং সাম্রাজ্যে সাম্রাজ্যকর্ম্মণি মণ্ডলাধিপত্যে দীক্ষিতম্‌, অভিষিক্তং তং ভেজে। অন্যথা কথমেতাদৃশী কান্তিসম্পত্তিরিতি ভাবঃ॥

৫। সিংহাসনারূঢ় রঘুর প্রভাপুঞ্জ দেখিয়া জ্ঞান হইতে লাগিল, যেন লক্ষ্মীদেবী স্বয়ং অদৃশ্যভাবে থাকিয়া সার্ব্বভৌমপদে অভিষিক্ত সেই রঘুর মস্তকে পদ্ম ছত্র ধারণ করিয়া তাঁহার ভজনা করিতেছেন।

**পরিকল্পিতসান্নিধ্যা কালে কালে চ বন্দিষু।**
**স্তুত্যং স্তুতিভিরর্থ্যাভিরুপতস্থে সরস্বতী॥ ৬**

৬ অঃ। সরস্বতী চ কালে কালে বন্দিষু পরিকল্পিতসান্নিধ্যা সতী অর্থ্যাভিঃ স্তুতিভিঃ স্তুত্যং তম্‌ উপতস্থে॥ বাচ্য—সরস্বত্যা...সান্নিধ্যয়া স্তুত্যঃ স উপতস্থে।

৬। সম্প্রতি সরস্বতীসান্নিধ্যমাহ—পরিকল্পিতেতি। সরস্বতী চ কালে কালে সর্বেষু অপি যোগ্যকালেষু। নিত্যবীপ্সয়োঃ' ইতি বীপ্সায়াং দ্বির্বচনম্‌। বন্দিষু পরিকল্পিতসান্নিধ্যা কৃতসন্নিধানা সতী, স্তুত্যং স্তোত্রার্হং তং রঘুম্‌ অর্থ্যাভিঃ অর্থাৎ অনপেতাভিঃ। 'ধর্মপথ্যর্থন্যায়াদনপেতে' ইতি যৎপ্রত্যয়ঃ। স্তুতিভিঃ স্তোত্রৈঃ উপতস্থে দেবতাবুদ্ধ্যা পূজিতবতী ইত্যর্থঃ। দেবতাত্বঞ্চ 'না বিষ্ণুঃ পৃথিবীপতিঃ' ইতি বা লোকপালাত্মকত্বাদিত্যনুসন্ধেয়ম্‌। এবঞ্চ সতি 'উপাদ্দেবপূজাসঙ্গতিকরণমিত্রকরণপথিষু' ইতি বক্তব্যাদাত্মনেপদং সিধ্যতি॥

৬। সরস্বতীও যথাসময়ে বৈতালিকগণের কণ্ঠে আবির্ভূতা হইয়া সদর্থযুক্ত স্তবে সেই প্রশংসনীয় রাজা রঘুর গুণগান করিতেন।

**মনুপ্রভৃতিভির্মান্যৈর্ভুক্তা যদ্যপি রাজভিঃ।**
**তথাপ্যনন্যপূর্ব্বেব তস্মিন্নাসীদ্বসুন্ধরা॥ ৭**

৭ অঃ। বসুন্ধরা মান্যৈঃ মনুপ্রভৃতিভিঃ রাজভিঃ ভুক্তা যদ্যপি, তথাপি তস্মিন্‌ অনন্যপূর্ব্বেব আসীৎ॥ বাচ্য—বসুন্ধরয়া ভুক্তয়া অনন্যপূর্ব্বয়া অভূয়ত।

७। वसुन्धरा, मनुप्रभृतिभिः मन्वादिभिः मान्यैः पूज्यैः राजभिः भुक्ता यद्यपि भुक्तैव इत्यर्थः। यद्यपि इत्यवधारणे। 'अप्यर्थे यदि वार्थे स्यात् यद्यपीति केशवः। तथापि तस्मिन् राज्ञि, अन्यः पूर्व्वः यस्याः सा अन्यपूर्व्वा, अन्यपूर्व्वा न भवतीति अनन्यपूर्व्वा अनन्योपभुक्तेव आसीत् तत्प्रथमपतिकेवानुरक्तवतीत्यर्थः ॥

৭। যদিও বসুমতী, মনুপ্রভৃতি মাননীয় রাজগণকর্ত্তৃক উপভুক্ত হইয়াছিলেন, তথাপি এক্ষণ অনন্যোপভুক্তার ন্যায় অনুরক্তা হইয়া ঐকান্তিক মনে রঘুর সেবায় প্রবৃত্ত হইলেন।

स हि सर्व्वस्य लोकस्य युक्तदण्डतया मनः।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥ ८

८ अः। हि (यस्मात्) स युक्तदण्डतया सर्व्वस्य लोकस्य मनः आददे, कथमिव नातिशीतोष्णः दक्षिणः नभस्वानिव ॥ वाच्य—तेन आददे, ...शीतोष्णेन न दक्षिणेन नभस्वता इव।

८। अत्र कारणमाह—स हीति। हि यस्मात् कारणात् स रघुः युक्तदण्डतया यथापराधदण्डतया सर्व्वस्य लोकस्य मन आददे जहार। क इव? अतिशीतः अत्युष्णो वा न भवतीति नातिशीतोष्णः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। दक्षिणः दक्षिणदिग्भवः नभस्वान् वायुः इव मलयानिलः इव इत्यर्थः। युक्तदण्डतयेत्यत्र कामन्दकः,—'उद्वेजयति तीक्ष्णेन मृदुना परिभूयते। दण्डेन नृपतिस्तस्मात् युक्तदण्डः प्रशस्यते।' इति ॥

৮। যেমন বসন্তের বায়ু, অত্যন্ত শীতল বা অত্যন্ত উষ্ণ না হওয়ায়, সকলের চিত্ত হরণ করে, তেমনি তিনিও অত্যন্ত উগ্র বা অত্যন্ত মৃদু না হইয়া যথাযোগ্য দণ্ডদান করায়, সকলের চিত্ত হরণ করিলেন।

मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ९

९ अः। तेन प्रजाः गुरौ सहकारस्य फलेन पुष्पोद्गमे इव तस्मै गुणाधिकतया मन्दोत्कण्ठाः कृताः। वाच्य—सः प्रजाः फलं...कृतवान्।

९। तेन रघुणा, प्रजाः, गुरौ दिलीपविषये, सहकारः अतिसौरभः चूतः। 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः। तस्य फलेन पुष्पोद्गमे पुष्पोदये इव, ततोऽपि गुणाधिकतया हेतुना मन्दोत्कण्ठाः अल्पोत्कण्ठाः कृताः। 'गुणोत्तरश्च उत्तरो विषयः पूर्व्वं विस्मारयतीति भावः ॥

৯। চূততরুর ফল উৎপন্ন হইয়া যেমন লোকের মন হইতে মুকুলের অদর্শন-জনিত দুঃখের লাঘব করে, তেমনি রঘু, পিতা হইতেও অধিকতর গুণশালী হওয়ায় প্রজাবৃন্দের হৃদয় হইতে দিলীপের অদর্শন জনিত শোকের লাঘব করিলেন।

**नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम् ।**
**पूर्व्व एवाभवत् पक्षस्तस्मिन्नाभवदुत्तरः ॥ १०**

१० अः। नयविद्भिः नवे राज्ञि सत् असच्च उपदर्शितम्, तस्मिन् पूर्ब्ब एव पक्षः अभवत्, उत्तरो न अभवत्। वाच्य—नयविद्‌भिः सत् असच्च उपदर्शितवन्तः, पूर्ब्बेण पक्षेण अभूयत, उत्तरेण न अभूयत।

१०। नयविद्भिः नीतिशास्त्रज्ञैः नवे तस्मिन् राज्ञि विषये तमधिकृत्य इत्यर्थः, सत् धर्म्मयुद्धादिकम् असत् कूटयुद्धादिकञ्च उपदर्शितं तस्मिन् राज्ञि पूर्व्वः पक्षः एव अभवत् संक्रान्त इत्यर्थः। उत्तरः पक्षः न अभवत् न संक्रान्त इत्यर्थः। तत्र सदसतोर्मध्ये सदेवाभिमतं, नासत्, तदुद्भावनन्तु ज्ञानार्थमेव इत्यर्थः। पक्षः साधनयोग्यार्थः। 'पक्षः पार्श्वगरुत्साध्य-सहायबलभित्तिषु' इति केशवः ॥

১০। নীতিজ্ঞ সচিবগণ সেই নূতন নৃপতিকে, সরল ও কুটিল এই উভয়বিধ রাজ-নীতিরই উপদেশ দিতেন, কিন্তু তিনি প্রথম পক্ষই অবলম্বন করিতেন, দ্বিতীয় পক্ষ অবলম্বন করিতেন না।

**पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः ।**
**नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् ॥ ११**

११ अः। पञ्चानामपि भूतानां गुणाः उत्कर्षं पुपुषुः तस्मिन् नवे महीपाले सति सर्वं नवमिव अभवत् ॥ वाच्य—गुणैः उत्कर्षः पुपुषे, सर्व्वेण नवेन इव अभूयत।

११। पृथिव्यादीनां पञ्चानां भूतानाम् अपि गुणाः गन्धादयः उत्कर्षम् अतिशयं पुपुषुः। अत्रोत्प्रेक्ष्यते—तस्मिन् रघौ नाम नवे महीपाले सति, सर्वं वस्तुजातं नवम् इव अभवत्। तदेव भूतजातमिदानीमपूर्व-गुणयोगादपूर्वमिवाभवदिति भावः ॥

১১। রঘু রাজ্যে অভিষিক্ত হইলে পৃথিব্যাদি পঞ্চভূতের গুণসমূহ উৎকর্ষলাভ করিয়াছিল, অতএব নূতন রাজার সময়ে সকল বস্তুই অভিনব বলিয়া বোধ হইতে লাগিল।

**यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।**
**तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥ १२**

१२ अ:। यथा चन्द्रः प्रह्लादनात् अन्वर्थः, यथा तपनः प्रतापात् अन्वर्थः, तथैव च राजा प्रकृतिरञ्जनात् अन्वर्थः अभूत्॥ वाच्य—यथा चन्द्रेण, तपनेन तथैव तेन राज्ञा अन्वर्थेन अभावि।

१२। यथा चन्दयति आह्लादयतीति चन्द्रः इन्दुः। चदिधातोरौणादिको रप्रत्ययः। प्रह्लादनात् आह्लादकरणात् अन्वर्थः अनुगतार्थनामकः अभूत्। यथा च तपतीति तपनः सूर्य्यः। नन्द्यादित्वात् ल्यु प्रत्ययः। प्रतापात् सन्तापजननादित्यर्थः। तथैव सः राजा प्रकृतिरञ्जनात् अन्वर्थः सार्थकराजशब्दः अभूत्। यद्यपि राजशब्दो राजतेर्दीप्त्यर्थात् कनिन्-प्रत्ययान्तो न तु रञ्जेः, तथापि धातूनामनेकार्थत्वाद्रञ्जनाद्राजेत्युक्तं कविना॥

১২। আহ্লাদ বিতরণ করায় চন্দ্রের যেমন 'চন্দ্র' নাম সার্থক হইয়াছে; প্রখর তাপ বিতরণ করায় যেরূপ তপনের 'তপন' নাম সার্থক হইয়াছে, তেমনি প্রজারঞ্জন করায় তাঁহার 'রাজা' এই নাম সার্থক হইল।

**कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने।**
**चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्य्यार्थदर्शिना॥ १३**

१३ अ:। तस्य विशाले लोचने कामं कर्णान्तविश्रान्ते, चक्षुष्मत्ता तु सूक्ष्मकार्य्यार्थदर्शिना शास्त्रेण (अभूत्)॥ वाच्य—विशालाभ्यां लोचनाभ्यां कर्णान्तविश्रान्ताभ्यां भूयते, चक्षुष्मत्तया अभावि।

१३। विशाले तस्य रघोः लोचने कामं कर्णान्तयोः विश्रान्ते कर्ण-प्रान्तगते। चक्षुष्मत्ता तु चक्षुःफलं तु इत्यर्थः, सूक्ष्मान् कार्य्यार्थान् कर्त्तव्यार्थान् दर्शयति प्रकाशयतीति सूक्ष्मकार्य्यार्थदर्शिना शास्त्रेण एव। शास्त्रं दृष्टिर्विवेकिनामिति भावः॥

১৩। তাঁহার আকর্ণবিস্তৃত সুবিশাল লোচনযুগল ছিল বটে, কিন্তু সূক্ষ্মকার্য্যার্থদর্শী শাস্ত্রজ্ঞান দ্বারাই তাঁহার প্রকৃত দর্শনেন্দ্রিয়ের কার্য্য সম্পন্ন হইত।

**लब्धप्रशमनस्वस्थमथैनं समुपस्थिता।**
**पार्थिवश्रीर्द्वितीयेव शरत् पङ्कजलक्षणा॥ १४**

१४ अ:। अथ लब्धप्रशमनस्वस्थम् एनं पङ्कजलक्षणा शरत् (पङ्कजलक्षणा) द्वितीया पार्थिवश्रीरिव समुपस्थिता। वाच्य—पङ्कजलक्षणया शरदा—स्वस्थः एष द्वितीयया पार्थिवश्रिया इव समुपस्थितः।

१४। अथ लब्धस्य राज्यस्य प्रशमनेन परिपन्थिनाम् अनुरञ्जनप्रतीकाराभ्यां स्थिरीकरणेन स्वस्थं समाहितचित्तम् एनं रघुं पङ्कजलक्षणा पद्मचिह्ना। श्रियोऽपि विशेषणमेतत्। शरत्, द्वितीया पार्थिवश्रीः राजलक्ष्मीः इव, समुपस्थिता प्राप्ता। 'रक्षा पौरजनस्य देशनगरग्रामेषु गुप्ति-

स्तथा योधानामपि संग्रहोऽपि तुलया मानव्यवस्थापनम् । साम्यं लिङ्गिषु दानम्युञ्जिकरणं त्यागः समानेऽस्त्विनं कार्य्याण्येव महीभुजां प्रथमनाम्येतानि राज्ये मयि' ॥

১৪। সর্ব্বত্র শান্তি বিরাজমান থাকায় তিনি সুস্থচিত্তে অবস্থান করিতেছেন, এমন সময় শরৎকাল, পদ্মশোভায় সজ্জিত হইয়া দ্বিতীয় রাজলক্ষ্মীর ন্যায় তাঁহার সেবার জন্য উপস্থিত হইল।

निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः ।
प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः ॥ १५

१५ अः निर्वृष्टलघुभिर्मेघैः मुक्तवर्त्मा सुदुःसहः तस्य भानोश्च प्रतापः युगपत् दिशः व्यानशे ॥ वाच्य—मुक्तवर्त्मना सुदुःसहेन प्रतापेन व्यानशिरे ।

१५। निःशेषं वृष्टाः निर्वृष्टाः, कर्त्तरि क्तः । अतएव लघवः तैः मेघैः मुक्तवर्त्मा त्यक्तमार्गः अतएव सुदुःसहः तस्य रघोः भानोश्च प्रतापः पौरुषम् आतपश्च । 'प्रतापौ पौरुषातपौ' इति यादवः । युगपत् दिशः व्यानशे व्याप ॥

১৫। তৎকালে নিঃশেষিতবৃষ্টি সুতরাং একান্ত লঘু জলদজাল কর্ত্তৃক পথ উন্মুক্ত হওয়াতে, সূর্য্যের এবং রঘুর অপ্রতিহত প্রখর সুদুঃসহ প্রতাপ দিঙ্মণ্ডল পরিব্যাপ্ত হইল।

वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्य्यायोद्यतकार्मुकौ ॥१६

१६ अः। इन्द्रः वार्षिकं धनुः संजहार, रघुः जैत्रं धनुः दधौ, हि ( यस्मात् ) तौ प्रजार्थसाधने पर्य्यायोद्यतकार्मुकौ (बभूवतुः)। वाच्य—इन्द्रेण संजह्रे रघुणा दधे, ताभ्यां—कार्मुकाभ्यां (बभूवे)।

१६। इन्द्रः वर्षासु भवं वार्षिकं वर्षानिमित्तमित्यर्थः। 'वर्षाभ्यष्ठक्' इति ठक् प्रत्ययः। धनुः संजहार। रघुः, जैत्रं जयशीलम्। जेतृशब्दात् तृजन्तात् 'प्रज्ञादिभ्यश्च' इति स्वार्थे अण् प्रत्ययः। धनुः दधौ, हि यस्मात् तौ इन्द्ररघू प्रजानाम् अर्थस्य प्रयोजनस्य वृष्टिविजयलक्षणस्य साधनविषये पर्य्यायेण उद्यते कार्मुके याभ्यां तौ पर्य्यायोद्यतकार्मुकौ। पर्य्यायोद्यम-विश्रमौ इति पाठान्तरे पर्य्यायेण उद्यमः विश्रमश्च ययोः तौ पर्य्यायोद्यम-विश्रमौ। द्वयोः पर्य्यायकरणादक्लेश इति भावः ॥

১৬। ইন্দ্রদেব, বর্ষাকালীন নিজ ধনু অপসারিত করিলেন এদিকে রঘুও জয়শীল ধনু ধারণ করিলেন ; কেননা, তাঁহারা উভয়েই প্রজাগণের হিতসাধনের জন্য পর্য্যায়-ক্রমে নিজ নিজ ধনু ধারণ করিয়া থাকেন।

पुण्डरीकातपत्रस्तं विकसत्काशचामरः ।
ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥ १७

१७ अ: । पुण्डरीकातपत्रः विकसत्काशचामरः ऋतुः ( पुण्डरीकातपत्रं विकसत्काशचामरं ) तं विडम्बयामास, तच्छ्रियं पुनः न प्राप ॥ वाच्य...पत्रेण—चामरेण ऋतुना स विडम्बयामासे, तच्छ्रीः न प्रापे ।

१७ । पुण्डरीकं सिताम्भोजम् एव आतपत्रं यस्य सः तथोक्तः । विकसन्ति काशानि काशाख्यतृणकुसुमानि एव चामराणि यस्य सः । तथोक्तः ऋतुः शरदृतुः पुण्डरीकनिभातपत्रं काशनिभचामरं तं रघुं विडम्बयामास अनुचकार, तस्य रघोः श्रियं पुनः शोभां तु न प्राप । 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते' इति शाश्वतः ॥

১৭। শ্বেতপদ্মরূপ ছত্র এবং প্রফুল্ল কাশপুষ্পরূপ চামর দ্বারা সুশোভিত শরৎ ঋতু, শ্বেতপদ্মের ন্যায় রাজচ্ছত্রে এবং প্রফুল্ল কাশপুষ্পসদৃশ চামরে সুশোভিত রঘুর অনুকরণ করিল বটে, কিন্তু তাঁহার রাজলক্ষ্মী লাভ করিতে পারিল না।

प्रसादसुमुखे तस्मिन् चन्द्रे च विशदप्रभे ।
तदा चक्षुष्मतां प्रीतिरासीत् समरसा द्वयोः ॥ १८

१८ अ: । प्रसादसुमुखे तस्मिन् (रघौ) विशदप्रभे चन्द्रे च द्वयोः तदा चक्षुष्मतां प्रीतिः समरसा आसीत् ॥ वाच्य—प्रीत्या समरसया अभूयत ।

१८ । प्रसादेन सुमुखे तस्मिन् रघौ, विशदप्रभे निर्म्मलकान्तौ चन्द्रे च, द्वयोर्विषये तदा चक्षुष्मतां प्रीतिः अनुरागः समरसा समस्वादा तुल्यभोगा इति यावत् । 'रसो गन्धे रसः स्वादे' इति विश्वः । आसीत् ॥

১৮। প্রশস্তনয়নবিশিষ্ট ব্যক্তিমাত্রেই তৎকালে রঘুর সুপ্রসন্ন মুখকান্তি ও শারদীয় শশাঙ্কের সুনির্ম্মল শোভা দর্শন করিয়া তুল্যরূপ আনন্দরস উপভোগ করিয়াছিল।

हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु ।
विभूतयस्तदीयानां पर्य्यस्ता यशसामिव ॥ १९

१९ अ: । हंसश्रेणीषु तारासु कुमुद्वत्सु वारिषु च तदीयानां यशसां विभूतयः पर्य्यस्ता इव ॥ वाच्य—विभूतिभिः पर्य्यस्ताभिः इव ( भूयते ) ।

१९ । हंसानां श्रेणीषु पङ्क्तिषु तारासु, नक्षत्रेषु, कुमुदानि सन्ति येषु इति कुमुद्वन्ति । 'कुमुद्वान् कुमुदप्रायः' इत्यमरः । 'कुमुदनड्वेतसेभ्यो ड्मतुप्' इति मतुप् । तेषु कुमुदप्रायेषु इत्यर्थः, वारिषु च तदीयानां रघुसम्बन्धिनां यशसां विभूतयः सम्पदः पर्य्यस्ता इव प्रसारिताः किम् ? इति उत्प्रेक्षा । अन्यथा कथमेषां धवलिमेति भावः ॥

১৯। তাঁহার যশঃপ্রভা হংসমালায়, নক্ষত্রপুঞ্জে ও কুমুদশোভিত সলিলে যেন বিস্তৃত হইয়া পড়িল।

**ইক্ষুচ্ছায়নিষাদিন্যস্তস্য গোপ্তুর্গুণোদয়ম্ ।**
**আকুমারকথোদ্ঘাতং শালিগোপ্যো জগুর্যশঃ ॥ ২০**

২০ অঃ। ইক্ষুচ্ছায়নিষাদিন্যঃ শালিগোপ্যঃ গোপ্তুঃ তস্য গুণোদয়ম্ আকুমারকথোদ্ঘাতং যশঃ জগুঃ ॥ বাচ্য—ইক্ষুচ্ছায়নিষাদিনীভিঃ জগে।

২০। ইক্ষুণাং ছায়া ইক্ষুচ্ছায়ম্। 'ছায়া বাহুল্যে' ইতি নপুংসকত্বম্। তত্র নিষণ্ণাঃ ইক্ষুচ্ছায়নিষাদিন্যঃ। স্ত্রীলিঙ্গপাঠে ইক্ষোঃ ছায়া ইতি বিগ্রহঃ, অন্যথা বহুত্বে নপুংসকত্বপ্রসঙ্গাৎ। শালীন্ গোপায়ন্তি রক্ষন্তীতি শালিগোপ্যঃ শস্যপালিকাঃ স্ত্রিয়ঃ। কর্ম্মণ্যণ্ 'টিড্ঢাণঞ' ইত্যাদিনা ঙীপ্। গোপ্তুঃ রক্ষকস্য তস্য রঘোঃ গুণেভ্যঃ উদয়ঃ যস্য তৎ গুণোদয়ং গুণোৎপন্নম্ আকুমারং কুমারাৎ আরভ্য কথোদ্ঘাতঃ কথারম্ভঃ যস্য তৎ কুমারৈরপি স্তূয়মানমিত্যর্থঃ যশঃ জগুঃ গায়ন্তি স্ম। অথবা কুমারস্য সতঃ রঘোঃ যাঃ কথাঃ ইন্দ্রবিজয়াদয়ঃ তত আরভ্য আকুমারকথম্। তত্র অপি অভিবিধৌ অব্যয়ীভাবঃ। আকুমারকথম্ উদ্ঘাতঃ যস্মিন্ কর্ম্মণি, গানক্রিয়াবিশেষণমিতৎ। 'স্যাদভ্যাদানমুদ্ঘাত আরম্ভঃ' ইত্যমরঃ। আকুমারকথোদ্ভূতমিতি পাঠে কুমারস্য সতঃ তস্য কথাভিঃ চরিতৈঃ উদ্ভূতং যৎ যশঃ তৎ যশঃ আরভ্য যশো জগুরিতি ব্যাখ্যেয়ম্ ॥

২০। শালিধান্যরক্ষণে নিযুক্ত কৃষককামিনীরা ইক্ষুবৃক্ষ সকলের ছায়ায় বসিয়া, সেই প্রজাপালক রঘুর বাল্যকাল হইতে কৃত ইন্দ্রবিজয়াদি কার্য্য সমূহের গুণগান করিতে লাগিল।

**প্রসসাদোদয়াদম্ভঃ কুম্ভযোনের্মহৌজসঃ ।**
**রঘোরভিভবাশঙ্কি চুক্ষুভে দ্বিষতাং মনঃ ॥ ২১**

২১ অঃ। মহৌজসঃ কুম্ভযোনেঃ উদয়াৎ অম্ভঃ প্রসসাদ, মহৌজসো রঘোঃ উদয়াৎ অভিভবাশঙ্কি দ্বিষতাং মনঃ চুক্ষুভে ॥ বাচ্য—অম্ভসা প্রসেদে, অভিভবাশঙ্কিনা মনসা চুক্ষুভে।

২১। মহৌজসঃ কুম্ভযোনেঃ অগস্ত্যস্য। 'অগস্ত্যঃ কুম্ভসম্ভবঃ' ইত্যমরঃ। উদয়াৎ অম্ভঃ প্রসসাদ প্রসন্নং বভূব, মহৌজসঃ রঘোঃ উদয়াৎ অভিভবাশঙ্কি দ্বিষতাং মনঃ চুক্ষুভে কালুষ্যং প্রাপ। 'অগস্ত্যোদয়ে জলানি প্রসীদন্তি' ইত্যাগমঃ ॥

পৌরাণিকী বার্ত্তা—কদাচিদুর্ব্বশীং পশ্যতোর্মিত্রাবরুণয়োর্নিষিক্তং তেজঃ কুম্ভে ন্যপতৎ, ততশ্চ অগস্ত্যঃ সমুৎপন্ন ইত্যস্য কুম্ভযোনিত্বম্। ইতি।

২১। মহাপ্রভাব অগস্ত্য নক্ষত্রের উদয় হওয়ায় জল সকল নির্ম্মল হইল; এদিকে প্রবলপ্রতাপশালী রঘুর নিকট পরাভবাশঙ্কায় তদীয় শত্রুমণ্ডলের মন কলুষিত হইল।

मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः।
लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ २२

२२ अ:। महोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः महोक्षाः तस्य लीलाखेलं विक्रमम् अनुप्रापुः॥ वाच्य—मदोदग्रैः ककुद्मद्भिः कूलमुद्रुजैः महोक्षैः लीलाखेलः विक्रमः अनुप्रापे।

२२। मदोदग्राः मदोद्धताः ककुदेषामस्तीति ककुद्मन्तः महाककुद इत्यर्थः। यवादित्वात् मकारस्य वत्वाभावः। सरितां कूलानि उद्रुजन्तीति कूलमुद्रुजाः। 'उदि कूले रुजिवहोः' इति खश्प्रत्ययः 'अरुर्द्विष—' इत्यादिना मुमागमः। महान्तः उक्षाणः महोक्षाः। 'अचतुर—'इत्यादिना निपातनात् अकारान्तः; लीलाखेलं विलाससुभगं तस्य रघोः उत्साहवतः वपुष्मतः परभञ्जकस्य विक्रमं शौर्य्यम् अनुप्रापुः अनुचक्रुः॥

২২। মদোদ্ধত প্রশস্ত-ককুদ্‌শালী প্রকাণ্ড বৃষসকল, নদীতট উৎপাটিত করিয়া রঘুর চিত্তাকর্ষক বিক্রমলীলার অনুকরণ করিতে লাগিল।

प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः॥ २३

२३ अ:। मदगन्धिभिः सप्तपर्णानां प्रसवैः आहतास्तन्नागाः असूययेव सप्तधैव प्रसुस्रुवुः॥ वाच्य—आहतैः तन्नागैः प्रसुस्रुवे।

२३। मदस्येव गन्धो येषां तैः मदगन्धिभिः। 'उपमानाच्च' इतीकारः समासान्तः। सप्तपर्णानां वृक्षविशेषाणाम्। 'सप्तपर्णो विशालत्वक् शारदो विषमच्छदः' इत्यमरः। प्रसवैः पुष्पैः आहताः तस्य रघोः नागाः गजाः। 'गजेऽपि नागमातङ्गौ' इत्यमरः। असूयया इव आहतिनिमित्तया स्पर्द्धया इव सप्तधा एव प्रसुस्रुवुः मदं ववृषुः, प्रतिगजगन्धाभिमानादिति भावः। 'करात् कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदस्रुतिः' इति पालकाव्ये। करात् नासारन्ध्राभ्यामित्यर्थः॥

২৩। মদের ন্যায় উগ্র গন্ধবিশিষ্ট সপ্তপর্ণপুষ্পের (ছাতিম ফুলের) গন্ধে (অন্য কোনও মদস্রাবী বন্য গজ হইতে সেই গন্ধ বাহির হইতেছে ভাবিয়া) রঘুর হস্তী সকল মাতিয়া উঠিয়া, যেন অসূয়াপ্রযুক্তই শরীরের সাতটী (দুই নাসারন্ধ্র, দুই গণ্ড, দুই নেত্র এবং মেঢ্র) স্থান হইতে মদধারা ক্ষরণ করিতে লাগিল।

सरितः कुर्वती गाधाः पथश्चाश्यानकर्द्दमान्।
यात्रायै नोदयामास तं शक्तेः प्रथमं शरत्॥ २४

२४ अ:। सरित: गाधा: पथश्च आश्यानकर्द्दमान् कुर्व्वती शरत् शक्तेः प्रथमं तं यात्रायै नोदयामास॥ वाच्य—कुर्व्वत्या शरदा स: नोदयामासे।

२४। सरित: गाधा: सुप्रतरा: कुर्व्वती। पथ: मार्गांश्च आश्यानकर्द्दमान् शुष्कपङ्कान् कुर्व्वती। 'संयोगादेरातो धातोर्यण्वत:' इति श्यतेर्निष्ठातस्य नत्वम्। शरत् शरदृतुः तं रघुं शक्तेः उत्साहशक्तेः प्रथमं प्राक् यात्रायै दण्डयात्रायै नोदयामास प्रेरयामास। प्रभावमन्त्रशक्तिसम्पन्नस्य रघोः शरत् स्वयमुत्साहमुत्पादयामास इत्यर्थ:॥

২৪। শরৎকাল, নদী সকলকে অল্প জল-বিশিষ্ট ও পথ সকলকে কর্দ্দমশূন্য করিয়া উৎসাহশক্তি দ্বারা উত্তেজিত হইবার পূর্ব্বেই রঘুকে যুদ্ধযাত্রায় প্রবৃত্ত করিল।

तस्मै सम्यक् हुतो वह्निर्वाजिनीराजनाविधौ।
प्रदक्षिणार्च्चिर्व्याजेन हस्तेनेव जयं ददौ॥ २५

२५ अ:। वाजिनीराजनाविधौ सम्यक् हुतो वह्निः प्रदक्षिणार्च्चिर्व्याजेन हस्तेनेव तस्मै जयं ददौ॥ वाच्य—हुतेन वह्निना जय: ददे।

२५। वाजिनाम् अश्वानां नीराजनाविधौ नीराजनाख्ये शान्तिकर्म्मणि, सम्यक् विधिवत् हुत: होमसमिद्ध: वह्निः प्रगता दक्षिणं प्रदक्षिणम्। तिष्ठद्गुप्रभृतित्वादव्ययीभाव:। प्रदक्षिणं या अर्च्चि: ज्वाला तस्या व्याजेन छलेन हस्तेन इव तस्मै जयं ददौ। उक्तमाहवयात्रायाम्—'इद्ध: प्रदक्षिणगतो हुतभुङ्नृपस्य धात्रीं समुद्ररशनां वशगां करोति' इति। वाजिग्रहणं गजादीनामपि उपलक्षणं तेषामपि नीराजनाविधानात्॥

২৫। তিনি অশ্বগণের নীরাজনারূপ মাঙ্গলিক কার্য্যে বিধিপূর্ব্বক অগ্নিতে আহুতি প্রদান করিলে হোমাগ্নি দক্ষিণাভিমুখী শিখাবিস্তার পূর্ব্বক ঐ আহুতি গ্রহণ করায় মনে হইল যেন অগ্নিদেব শিখারূপ হস্ত দ্বারাই তাঁহাকে জয় প্রদান করিলেন।

स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वित:।
षड्‌विधं बलमादाय प्रतस्थे दिग्जिगीषया॥ २६

२६ अ:। गुप्तमूलप्रत्यन्त: शुद्धपार्ष्णि: अयान्वित: स: षड्‌विधं बलम् आदाय दिग्जिगीषया प्रतस्थे॥ वाच्य—गुप्तमूलप्रत्यन्तेन शुद्धपार्ष्णिना अयान्वितेन तेन प्रतस्थे।

२६। गुप्तौ मूलं स्वनिवासस्थानं प्रत्यन्त: प्रान्तदुर्गञ्च येन स: गुप्तमूलप्रत्यन्त:। शुद्धपार्ष्णि: उद्धृतपृष्ठशत्रु:, सेनया रक्षितपृष्ठदेशो वा। अयान्वित: शुभदैवान्वित:। 'अय: शुभावहो विधि:' इत्यमर:। स रघु:, षड्‌विधं मौलभृत्यादिरूपं बलं सैन्यम्। 'मौलं भृत्य: सुहृच्छ्रेणी द्विषदाटविकं बलम्' इति कोष:। आदाय, दिशां जिगीषया जेतुमिच्छया, प्रतस्थे चचाल॥

२৬। রাজা রঘু নিবাসদুর্গ ও প্রান্তদুর্গ সকল রক্ষা করিয়া পৃষ্ঠ শত্রু হইতে আপনাকে নিরাপদ্ করতঃ অনুকূল দৈবযুক্ত হইয়া বহুবিধ সৈন্য সমভিব্যাহারে দিগ্বিজয় বাসনায় প্রস্থান করিলেন।

अवाकिरन् वयोवृद्धास्तं लाजैः पौरयोषितः।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्म्मय इवाच्युतम्॥ २७

२७ अः। वयोवृद्धा पौरयोषितः लाजैः तं क्षीरोर्म्मयः मन्दरोद्धूतैः पृषतैः अच्युतमिव अवाकिरन्। वाच्य—वयोवृद्धाभिः पौरयोषिद्भिः क्षीरोर्म्मिभिः अच्युत इव सः अवाकीर्यत।

२७। वयोवृद्धाः पौरयोषितः तं रघुं प्रयान्तम् लाजैः आचारलाजैः, मन्दरोद्धूतैः पृषतैः विन्दुभिः क्षीरोर्म्मयः क्षीरसमुद्रोर्म्मयः अच्युतं विष्णुम् इव अवाकिरन् पर्य्यक्षिपन्।

२१। প্রবীণা পৌরকামিনীরা, (যাত্রাকালে) তাঁহার উপর লাজ (খৈ) বর্ষণ করিতে লাগিলেন, তখন বোধ হইল—যেন ক্ষীরসাগরের তরঙ্গমালা, মন্দরগিরির ঘর্ষণ দ্বারা উৎক্ষিপ্ত জলকণাসকল বিষ্ণুর উপর বর্ষণ করিতেছে।

स ययौ प्रथमं प्राचीं तुल्यः प्राचीनवर्हिषा।
अहितावनिलोद्धूतैस्तर्ज्जयन्निव केतुभिः॥२८

२८। प्राचीनवर्हिषा तुल्यः स अनिलोद्धूतैः केतुभिः अहितान् तर्जयन्निव प्रथमं प्राचीं ययौ॥ वाच्य—तुल्येन तेन तर्ज्जयता प्राची यये।

२८। प्राचीनवर्हिर्नाम कश्चिन्महाराज इति केचित्। प्राचीनवर्हिः इन्द्रः 'पर्ज्जन्यो मघवा वृषा हरिहयः प्राचीनवर्हिस्तथा' इति इन्द्रपर्य्यायेषु हलायुधाभिधानात्। तेन तुल्यः सः रघुः अनिलेन अनुकूलवातेन उद्धूतैः केतुभिः ध्वजैः अहितान् रिपून् तर्जयन् इव भर्त्सयन् इव। तर्जिभर्त्सी-रुदात्तेत्त्वेऽपि चक्षिङो ङित्करणेनानुदात्तेत्त्वनिमित्तस्यात्मनेपदस्य अनित्यत्वज्ञापनात् परस्मैपदमिति वामनः। प्रथमं प्राचीं दिशं ययौ॥

২৮। শক্রতুল্য বিক্রমশালী রঘু প্রথমেই পূর্ব্বদিকে যাত্রা করিলেন; অনুকূল বায়ুভরে তাঁহার রথ-পতাকা সকল কম্পিত হওয়ায় বোধ হইল—যেন তিনি সেই পতাকাদ্বারা শত্রুগণকে তর্জ্জন করিতে করিতে চলিয়াছেন।

रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम्॥ २९

२९ अः। (किं कुर्वन्?) स्यन्दनोद्धूतैः रजोभिः घनसन्निभैः गजैश्च (यथाक्रमम्) व्योम भूतलमिव भूतलञ्च व्योमेव कुर्वन्॥ वाच्य—कुर्वता।

२८ । किं कुर्व्वन् ? स्यन्दनोद्भूतैः रजोभिः घनसन्निभैः वर्षितः क्रियाभिः परिमाणतश्च मेघतुल्यैः गजैश्च यथाक्रमं व्योम आकाशं भुवः तलम् इव भूतलञ्च व्योम इव कुर्व्वन् ययौ इति पूर्व्वेण सम्बन्धः ॥

২৯। তিনি রথসঞ্চালনে উত্থিত ধূলিরাশি দ্বারা আকাশমণ্ডল সমাচ্ছন্ন করিয়া যেন আকাশকে ভূতলে এবং মেঘমালার ন্যায় গজবৃন্দে ভূতল সমাবৃত করিয়া যেন ভূতলকে আকাশে পরিণত করিলেন।

प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीति चतुस्कन्धेव सा चमूः ॥ ३०

३० अः। अग्रे प्रतापः, ततः शब्दः, तदनन्तरं परागः, पश्चात् रथादि इति सा चमूः चतुस्कन्धेव ययौ ॥ वाच्य—प्रतापेन, शब्देन, परागेण रथादिना, तया चम्वा चतुःस्कन्धया इव ययौ ।

३०। अग्रे प्रतापः तेजोविशेषः। 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः। ततः शब्दः सेनाकलकलः, तदनन्तरं परागः धूलिः, 'परागः पुष्परजसि धूलिस्नानीययोरपि' इति विश्वः। पश्चात् रथादि रथाश्वादिकं चतुरङ्गबलम्। रथानीकमिति पाठे इतिशब्दाध्याहारेण योज्यमिति इत्थं चतुःस्कन्धा इव चतुर्व्यूहा इव। 'स्कन्धः प्रकाण्डे कायांशे विज्ञानादिषु पञ्चसु। नृपे समूहे व्यूहे च' इति हेमः। सा चमूः ययौ ॥

৩০। সর্ব্বাগ্রে প্রতাপ, তৎপশ্চাৎ সৈন্যকোলাহল, তদনন্তর ধূলিরাশি এবং তৎপশ্চাৎ রথাদি চতুরঙ্গ বল; এইরূপে তাঁহার সেই সেনা যেন চারিভাগে বিভক্ত হইয়াই চলিল।

मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ ३१

३१ अः। सः शक्तिमत्त्वात् मरुपृष्ठानि उदम्भांसि, नाव्याः नदीः सुप्रतराः, विपिनानि प्रकाशानि चकार ॥ वाच्य=तेन नद्यः चक्रिरे।

३१। सः रघुः शक्तिमत्त्वात् समर्थत्वात् मरुपृष्ठानि निर्जलस्थानानि। 'समानौ मरुधन्वानौ' इत्यमरः। उदम्भांसि उद्भूतजलानि चकार। नाव्याः नौभिस्तार्य्याः नदीः। 'नाव्यं त्रिलिङ्गं नौतार्य्ये' इत्यमरः। 'नौवयोधर्म्मविषमूल' इत्यादिना यत्प्रत्ययः। सुप्रतराः सुखेन तार्य्याश्चकार, विपिनानि अरण्यानि। 'अटव्यरण्यं विपिनम्' इत्यमरः। प्रकाशानि निर्वृक्षाणि चकार। शक्त्युत्कर्षात् तस्यागम्यं किमपि नासीदिति भावः ॥

৩১। তিনি স্বীয় শক্তি প্রভাবে, মরুভূমি হইতে জল উত্থিত করিলেন;

নৌকা ভিন্ন যে সকল নদী পার হওয়া যাইত না, সে সকল সুখে তরণযোগ্য এবং অরণ্য সকল বৃক্ষশূন্য করিলেন।

**स सेनां महतीं कर्षन् पूर्वसागरगामिनीम् ।**
**बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ ३२**

३२ अः। महतीं सेनां पूर्वसागरगामिनीं कर्षन् सः हरजटाभ्रष्टां गङ्गां (पूर्वसागरगामिनीं कर्षन्) भगीरथ इव बभौ ॥ वाच्य—कर्षता तेन भगीरथेन इव बभे।

३२। महतीं सेनां पूर्वसागरगामिनीं कर्षन् सः रघुः, हरस्य जटाभ्यः भ्रष्टां गङ्गां कर्षन्। सापि पूर्वसागरगामिनी। भगीरथः इव बभौ। भगीरथो नाम कश्चित् कपिलदग्धानां सागराणां नप्ता तत्पावनाय हरकिरीटात् गङ्गा प्रवर्त्तयिता राजा, यत्सम्बन्धाद् गङ्गा च भागीरथीति गीयते ॥

৩২। তিনি সেই বিশাল সৈন্যপ্রবাহ পূর্ব্বসাগরের দিকে পরিচালিত করায় বোধ হইতে লাগিল যেন, হর-জটা হইতে পতিত গঙ্গাকে লইয়া ভগীরথ পূর্ব্ব সাগরের অভিমুখে চলিয়াছেন।

**त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ।**
**तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥ ३३**

३३ अः। फलं त्याजितैः उत्खातैः बहुधा भग्नैश्च नृपैः पादपैः दन्तिन इव तस्य मार्गः उल्बण आसीत् ॥ वाच्य—मार्गेण उल्बणेन अभूयत।

३३। फलं 'फलं धने बीजे निष्पत्तौ भोगलाभयोः' इति केशवः। फलं लाभं वृक्षपक्षे प्रसवञ्च, त्याजितैः। त्यजेर्ण्यन्तात् द्विकर्म्मकात् अप्रधाने कर्म्मणि क्तः। उत्खातैः स्वपदात् त्याजितैः, अन्यत्र उत्पाटितैः। बहुधा भग्नैः रणे जितैः अन्यत्र छिन्नैः। नृपैः, पादपैः दन्तिनः गजस्य इव, तस्य रघोः, मार्गः उल्बणः प्रकाशः आसीत्। प्रकाशं प्रकटं स्पष्टम् उल्बनं विशदं स्फुटम्' इति यादवः ॥

৩৩। যেমন হস্তী কোন বৃক্ষকে ফলহীন, কোনটীকে উন্মূলিত এবং কোনও বৃক্ষকে ছিন্ন ভিন্ন করায় তাহার গমনপথ নিষ্কণ্টক হয়, তেমনি রঘু কোনও রাজাকে ধনহীন, কাহাকেও রাজ্যচ্যুতি এবং কাহাকেও ছিন্ন ভিন্ন করায়, তাঁহার গমন পথ নিষ্কণ্টক হইল।

**पौरस्त्यानेवमाक्रामन् तांस्तान् जनपदान् जयी ।**
**प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३४**

৩৪ অ:। জয়ী (সঃ) পৌরস্ত্যান্ তাংস্তান্ জনপদান্ এবম্ আক্রামন্ তালীবনশ্যামং মহোদধেঃ উপকণ্ঠং প্রাপ॥ বাচ্য—জয়িনা আক্রামতা প্রাপে।

৩৪। জয়ী জয়নশীলঃ। 'জিদৃক্ষিবিশ্রি' ইত্যাদিনা ইনিপ্রত্যয়ঃ। সঃ রঘুঃ এবং পুরো ভবান্ পৌরস্ত্যান্ প্রাচ্যান্। 'দক্ষিণাপশ্চাৎপুরসস্ত্যক' ইতি ত্যক্প্রত্যয়ঃ। তান্ তান্ সর্বানিত্যর্থঃ। বীপ্সায়াং দ্বিরুক্তিঃ। জনপদান্ দেশান্ আক্রামন্ তালীবনৈঃ শ্যামং মহোদধেঃ উপকণ্ঠম্ অন্তিকং প্রাপ॥

৩৪। রণজয়ী রঘু, এইরূপে পূর্ব্বদিকের সমস্ত রাজাকে পরাজিত করিয়া, মহাসমুদ্রের তালবন শ্যামল উপকূলে আসিয়া উপস্থিত হইলেন।

**অনম্রাণাং সমুদ্ধর্তুস্তস্মাৎ সিন্ধুরয়াদিব।**
**আত্মা সংরক্ষিতঃ সুহ্মৈর্বৃত্তিমাশ্রিত্য বৈতসীম্॥ ৩৫**

৩৫ অ:। অনম্রাণাং সমুদ্ধর্তুঃ তস্মাৎ সিন্ধুরয়াদিব সুহ্মৈঃ বৈতসীং বৃত্তিম্ আশ্রিত্য আত্মা সংরক্ষিতঃ॥ বাচ্য—সুহ্মা আত্মানং সংরক্ষিতবন্তঃ।

৩৫। অনম্রাণাম্। কর্ম্মণি ষষ্ঠী। সমুদ্ধর্তুঃ উন্মূলয়িতুঃ তস্মাৎ রঘোঃ সকাশাৎ। 'ভীত্রার্থানাং ভয়হেতুঃ' ইত্যপাদানত্বাৎ পঞ্চমী। সিন্ধুরয়াৎ নদীবেগাৎ ইব সুহ্মৈঃ সুহ্মদেশীয়ৈঃ। সুহ্মাদয়ঃ শব্দাঃ জনপদবচনাঃ ক্ষত্রিয়মাচক্ষতে। বৈতসীং বেতসসম্বন্ধিনীং বৃত্তিং প্রণতিমিত্যর্থঃ। আশ্রিত্য, আত্মা সংরক্ষিতঃ। অত্র কৌটিল্য—'বলীয়সাভিযুক্তো দুর্ব্বলঃ সর্ব্বত্রানুপ্রণতো বেতসধর্ম্মমাতিষ্ঠেৎ' ইতি॥

৩৫। যেমন বেতসলতা সকল অবনত হইয়া নদীর বেগ হইতে আত্মরক্ষা করে, সেইরূপ সুহ্মদেশীয় রাজারা অবনত হইয়া উদ্ধত রাজগণের উচ্ছেদকারী সেই রঘুর হস্ত হইতে আত্মরক্ষা করিল।

**বঙ্গানুৎখায় তরসা নেতা নৌসাধনোদ্যতান্।**
**নিচখান জয়স্তম্ভান্ গঙ্গাস্রোতোঽন্তরেষু সঃ॥ ৩৬**

৩৬ অ:। নেতা সঃ নৌসাধনোদ্যতান্ বঙ্গান্ তরসা উৎখায় গঙ্গাস্রোতোঽন্তরেষু জয়স্তম্ভান্ নিচখান॥ বাচ্য—নেত্রা তেন জয়স্তম্ভাঃ নিচখ্নিরে।

৩৬। নেতা নায়কঃ সঃ রঘুঃ, নৌভিঃ সাধনৈঃ উদ্যতান্ সন্নদ্ধান্ বঙ্গান্ রাজ্ঞঃ, তরসা বলেন। 'তরসী বলরংহসী' ইতি যাদবঃ। উৎখায় উন্মূল্য গঙ্গায়াঃ স্রোতসাং প্রবাহাণাম্ অন্তরেষু দ্বীপেষু জয়স্তম্ভান্ নিচখান স্থাপিতবানিত্যর্থঃ॥

৩৬। বঙ্গীয় রাজগণ রণতরী সজ্জিত করিয়া যুদ্ধে প্রবৃত্ত হইলে, সেনানায়ক রঘু নিজ বলে তাহাদিগকে উন্মূলিত করিয়া গঙ্গাপ্রবাহমধ্যবর্ত্তী দ্বীপ সকলে জয়স্তম্ভসমূহ স্থাপিত করিলেন।

**आपादपद्मप्रणताः कलमा इव ते रघुम्।**
**फलैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः॥ ३७**

३७ अः। उत्खातप्रतिरोपिताः आपादपद्मप्रणतास्ते कलमा इव रघुं फलैः संवर्द्धयामासुः॥ वाच्य—प्रतिरोपितैः...प्रणतैः तैः कलमैरिव रघुः संवर्द्धयामासे।

३७। आपादपद्मम् अङ्घ्रिपद्मपर्य्यन्तं प्रणताः अत एव उत्खाताः पूर्वमुद्धृता अपि प्रतिरोपिताः पश्चात् स्थापिताः ते वङ्गाः, कलमा इव शालिविशेषा इव। 'शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी' इत्यमरः। तेऽपि आपादपद्मं पादपद्ममूलपर्य्यन्तं प्रणताः। 'पादो ब्रध्नतुरीयांशशैलप्रत्यन्तपर्वताः' इति विश्वः। उत्खातप्रतिरोपिताश्च। रघुं, फलैः धनैः, अन्यत्र शस्यैः, संवर्द्धयामासुः। 'फलं फले धने बीजे निष्पत्तौ भोगलाभयोः। शस्ये' इति केशवः॥

৩৭। ধান্তের চারাগুলিকে উঠাইয়া পুনরায় রোপণ করিলে, সেগুলি যেমন ফলভরে মূলদেশ পর্য্যন্ত নত হইয়া শস্তদান করে, তেমনি বঙ্গীয় রাজারা রঘু কর্ত্তৃক প্রথমে উন্মূলিত এবং পশ্চাৎ স্ব স্ব পদে স্থাপিত হওয়ায়, রঘুর পাদপদ্মে নত হইয়া প্রচুর ধনদানে তাঁহার সংবর্দ্ধনা করিল।

**स तीर्त्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः।**
**उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ॥ ३८**

३८ अः। सः बद्धद्विरदसेतुभिः सैन्यैः कपिशां तीर्त्वा उत्कलादर्शितपथः कलिङ्गाभिमुखः सन् ययौ॥ वाच्य—तेन—दर्शितपथेन कलिङ्गाभिमुखेन ययौ।

३८। सः रघुः, बद्धा द्विरदा एव सेतवो यैः तैः सैन्यैः, कपिशां नाम नदीम् 'करभाम्' इति केचित् पठन्ति। तीर्त्वा, उत्कलैः राजभिः आदर्शितपथः सन्दर्शितमार्गः सन् कलिङ्गाभिमुखः ययौ॥

৩৮। সসৈন্ত রঘু, সেতুর আকারে স্থাপিত নিজ হস্তিশ্রেণীর উপর দিয়া কপিশা নদী পার হইয়া উৎকলবাসীদিগের দর্শিতপথে কলিঙ্গদেশাভিমুখে চলিলেন।

**स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत्।**
**अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः॥ ३९**

३९ अः। सः महेन्द्रस्य मूर्ध्नि तीक्ष्णं प्रतापं यन्ता गम्भीरवेदिनो द्विरदस्य (मूर्ध्नि) तीक्ष्णमङ्कुशमिव न्यवेशयत्॥ वाच्य—तेन तीक्ष्णः प्रतापः यन्त्रा अङ्कुश इव न्यवेश्यत।

३९। सः रघुः, महेन्द्रस्य कुलपर्वतविशेषस्य। 'महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः।' इति विष्णुपुराणात्। मूर्ध्नि तीक्ष्णं दुःसहं प्रतापं यन्ता सारथिः गम्भीरवेदिनः द्विरदस्य गजविशेषस्य मूर्ध्नि तीक्ष्णं निशितम् अङ्कुशम् इव, न्यवेशयत् निक्षिप्तवान्। 'त्वग्भेदाच्छोणितस्रावान्मांसस्य क्रथनादपि। आत्मानं यो न जानाति तस्य गम्भीरवेदिता।' इति राजपुत्रीये। 'चिरकालेन यो वेत्ति शिक्षां परिचितामपि। गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः॥' इति मृगचर्म्मीये॥

৩৯। মাহুত যেমন গম্ভীরবেদী হস্তীর মস্তকে অঙ্কুশ ( লোহার ডাঙ্গশ ) প্রবেশিত করে, সেইরূপ তিনিও মহেন্দ্র পর্ব্বতের মস্তকে নিজ সুতীক্ষ্ণ প্রতাপ নিবেশিত করিলেন।

प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः॥ ४०

४० अः। गजसाधनः सन् कालिङ्गः अस्त्रैस्तं पक्षच्छेदोद्यतं शक्रं शिलावर्षी पर्व्वत इव प्रतिजग्राह॥ वाच्य—गजसाधनेन कालिङ्गेन सः पक्षच्छेदोद्यतः शक्रः शिलावर्षिणा पर्वतेन इव प्रतिजगृहे।

४०। गजसाधनः सन् कालिङ्गः कलिङ्गानां राजा। 'द्व्यञ्मगधकलिङ्ग' इत्यादिना अण्प्रत्ययः। अस्त्रैः आयुधैः तं रघुं, पक्षाणां छेदे उद्यतम् उद्युक्तं शक्रम् शिलावर्षी पर्वत इव प्रतिजग्राह प्रत्यभियुक्तवान्॥

৪০। কলিঙ্গরাজ গজারোহী সৈন্য লইয়া অস্ত্রবর্ষণপূর্ব্বক তদীয় আক্রমণের প্রতিরোধ করিলেন, তখন বোধ হইল যেন পর্ব্বত প্রস্তরবর্ষণপূর্ব্বক, পক্ষচ্ছেদে সমুদ্যত ইন্দ্রের প্রতিরোধ করিল।

द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम्।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम्॥ ४१

४१ अः। काकुत्स्थः तत्र द्विषां नाराचदुर्द्दिनं विषह्य सन्मङ्गलस्नात इव जयश्रियं प्रतिपेदे॥ वाच्य—काकुत्स्थेन सन्मङ्गलस्नातेन जयश्रीः प्रतिपेदे।

४१। काकुत्स्थः रघुः, तत्र महेन्द्राद्रौ द्विषां नाराचदुर्दिनं नाराचानां बाणविशेषाणां दुर्दिनं, लक्षणया वर्षमुच्यते, विषह्य सहित्वा सन् यथाशास्त्रं मङ्गलस्नात इव विजयमङ्गलार्थम् अभिषिक्त इव जयश्रियं प्रतिपेदे प्राप।
'यत्तु सर्वौषधिस्नानं तन्माङ्गल्यमरोचकम्' इति यादवः॥

৪১। কাকুৎস্থ রঘু, মহেন্দ্রপর্ব্বতবাসী শত্রুদিগের অস্ত্রবর্ষণ সহ্য করিয়া, যেন যথাশাস্ত্র পবিত্র জলধারায় মঙ্গলস্নাত হইয়াই জয়শ্রী লাভ করিয়াছেন।

**ताम्बूलीनां दलैस्तत्र रचितापानभूमयः।**
**नारिकेलासवं योधाः शात्रवञ्च पपुर्यशः॥ ४२**

४२ अः। तत्र योधाः रचितापानभूमयः ताम्बूलीनां दलैः नारिकेलासवं शात्रवं यशश्च पपुः॥ वाच्य—योधैः रचितापानभूमिभिः नारिकेलासवः पपे।

४२। तत्र महेन्द्राद्रौ युध्यन्ते इति योधाः। पचाद्यच्। रचिताः कल्पिताः आपानभूमयः पानयोग्यप्रदेशाः यैः ते तथोक्ताः सन्तः नारिकेलासवं नारिकेलमद्यं ताम्बूलीनां नागवल्लीनां दलैः पपुः तत्र विजह्रुरित्यर्थः। शात्रवं यशश्च पपुः जह्रुरित्यर्थः॥

शात्रवं वा यशः पपुः इत्यपि पाठः। अत्र पक्षे वा इति पदम् उपमाद्योतकं शात्रवं यश इव इत्यर्थः। आसवपानेन यथेच्छाचरणं तेन च प्रतिपेदे जयश्रियम् इत्यायातम्। यशःपानवर्णनात् कालिङ्गस्य कीर्त्तिः चिराय निलीनेति सुव्यक्तं प्रतीयते।

৪২। তাঁহার যোদ্ধারা সেস্থানে পানভূমি রচনা করিয়া তাম্বূলপত্রপুটে নারিকেল মদ্যচ্ছলে শত্রুর শুভ্র যশ পান করিল।

**गृहीतप्रतिमुक्तस्य स धर्म्मविजयी नृपः।**
**श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम्॥ ४३**

४३ अः। धर्म्मविजयी स नृपः गृहीतप्रतिमुक्तस्य महेन्द्रनाथस्य श्रियं जहार, मेदिनीन्तु न जहार॥ वाच्य—धर्म्मविजयिना तेन श्रीः जह्रे, मेदिनी तु न।

४३। धर्म्मविजयी धर्म्मार्थं विजयशीलः सः नृपः रघुः, गृहीतश्चासौ प्रतिमुक्तः तस्य महेन्द्रनाथस्य कालिङ्गस्य श्रियं जहार धर्म्मार्थमिति भावः। मेदिनीं तु न जहार शरणागतवात्सल्यादिति भावः॥

वल्लभ आह—राजा त्रिविधः, धर्म्मविजयी, लोभविजयी असुरविजयी चेति। यः शत्रुं जित्वा तदीयां नृपश्रियं नीत्वा तं तत्पदे स्थापयति स धर्म्मविजयी, रघुः तथाविधः। यः शत्रुं विजित्य तदीयां श्रियं मेदिनीञ्च नीत्वा तं प्राणैः न वियोजयति सः लोभविजयी। यश्च शत्रुं हत्वा तदीयां श्रियं मेदिनीञ्च गृह्णाति सः असुरविजयीति।

৪৩। ধর্ম্মবিজয়ী সেই রাজা রঘু, মহেন্দ্রনাথকে প্রথমে বন্দী করিয়াছিলেন, পশ্চাৎ (তাঁহার বশ্যতা স্বীকারে) তাঁহাকে বন্ধনমুক্ত করিলেন। তিনি তাঁহার রাজলক্ষ্মী (রাজগৌরব) হরণ করিলেন, কিন্তু তাঁহার অধিকৃত ভূমি হরণ করিলেন না।

**ततो वेलातटेनैव फलवत्पूगमालिना।**
**अगस्त्याचरितामाशामनाशास्यजयो ययौ॥ ४४**

৪৪ অ:। ततः अनायासजयः (सन्) फलवत्पूगमालिना वेलातटेनैव अगस्त्याचरिताम् आशाम् ययौ। वाच्य—अनायासजयेन अगस्त्याचरिता आशा ययौ।

৪৪। ततः प्राचीविजयानन्तरं फलवत्पूगमालिना फलितक्रमुक-श्रेणीमता। व्रीह्यादित्वात् इनिप्रत्ययः। वेलायाः समुद्रकूलस्य तटेन उपान्तेनैव अगस्त्येन आचरिताम् आशां दक्षिणां दिशम् अनायासजयः अयत्नसिद्धत्वात् अप्रार्थनीयजयः सन् ययौ। 'अगस्त्यो दक्षिणामाशा-माश्रित्य नभसि स्थितः। वरुणस्यात्मजो योगी विन्ध्यवातापिमर्दनः।' इति ब्रह्मपुराणे॥

৪৪। জয়লাভ অনায়াসলভ্য বলিয়া রঘু, জয়লাভের জন্য আর উৎসুক না হইয়া, ফলশালী পূগ (সুপারি) বৃক্ষশ্রেণী দ্বারা শোভিত সমুদ্রকূল দিয়া চলিলেন এবং যে দিকে অগস্ত্যনক্ষত্রের উদয় হয়, সেই দক্ষিণদিকে যাত্রা করিলেন।

स सैन्यपरिभोगेण गजदानसुगन्धिना।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत्॥४५

৪৫ অ:। सः गजदानसुगन्धिना सैन्यपरिभोगेण कावेरीं सरितां पत्युः शङ्कनीयामिव अकरोत्। वाच्य—तेन कावेरी शङ्कनीया इव अक्रियत।

৪৫। सः रघुः, गजानां दानेन मदेन, सुगन्धिना सुरभिगन्धिना। 'गन्धस्य' इत्यादिना इकारादेशः समासान्तः। यद्यपि गन्धस्येत्वे तदेकान्त-ग्रहणं कर्त्तव्यमिति नैसर्गिकगन्धविवक्षायामेव इकारादेशः, तथापि निरङ्कुशाः कवयः। तथा माघकाव्ये—"ववुरयुक्छदगुच्छसुगन्धयः सततगा-स्ततगानगिरोऽलिभिः।" नैषधे च—"अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा" इति। 'न कर्मधारयान्मत्वर्थीयः' इति निषेधा-दिनिप्रत्ययपक्षोऽपि जघन्य एव। सेनायां समवेताः सैन्याः। 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः। 'सेनायां वा' इति ण्य-प्रत्ययः। तेषां परिभोगेण कावेरीं नाम सरितं सरितां पत्युः समुद्रस्य शङ्कनीयां अविश्वसनीयामिव अकरोत्। सम्भोगलिङ्गदर्शनाद्भर्त्तुरविश्वासो भवतीति भावः॥

৪৫। মহারাজ রঘুর গমনকালে স্নাননিরত তদীয় হস্তিগণের সুগন্ধি মদধারা ও সেনাগণের গাত্রানুলেপনদ্রব্যে কাবেরীনদী সুবাসিত হওয়ায় সরিৎপতি সমুদ্রের মনে যেন 'স্বীয় বনিতা কাবেরী বোধ হয় ব্যভিচারিণী' এই আশঙ্কা জন্মাইয়াছিলেন।

बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः।
मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः॥४६

४६ अः । विजिगीषोः गताध्वनस्तस्य (रघोः) बलैः मारीचोद्भ्रान्तहारीताः मलयाद्रेः उपत्यकाः अध्युषिताः ॥ वाच्य—बलानि अध्युषितानि ।

४६ । विजिगीषोः विजेतुमिच्छोः गताध्वनः तस्य रघोः बलैः सैन्यैः । 'बलं शक्तिर्बलं सैन्यम्' इति यादवः । मारीचेषु मरीचवनेषु उद्भ्रान्ताः परिभ्रान्ताः हारीताः पक्षिविशेषाः यासु ताः । 'तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः' इत्यमरः । मलयाद्रेः उपत्यकाः आसन्नभूमयः । 'उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां त्यकन्' इत्यादिना त्यकन्प्रत्ययः । अध्युषिताः उपत्यकासूषितमित्यर्थः । 'उपान्वध्याङ्वसः' इति कर्म्मत्वम् ॥

৪। অনন্তর বিজয়েচ্ছু সেই রঘুর সেনাগণ কিয়ৎপথ অতিক্রম করিয়া মারীচবনে বিচরণকারী হারীতনামক বিহঙ্গপূর্ণ মলয়পর্ব্বতের উপত্যকায় আসিয়া কিছুকাল বাস করিয়াছিল।

ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ४७

४७ अः । अश्वक्षुण्णानाम् एलानाम् उत्पतिष्णवः फलरेणवः तुल्यगन्धिषु मत्तेभकटेषु ससञ्जुः ॥ वाच्य—उत्पतिष्णुभिः फलरेणुभिः ससञ्जे ।

४७ । अश्वैः क्षुण्णानाम् एलानाम् एलालतानाम् उत्पतिष्णवः उत्पतनशीलाः । 'अलं कृञ्' इत्यादिना इष्णुच्प्रत्ययः । फलरेणवः फलरजांसि तुल्यगन्धिषु समानगन्धिषु । सर्व्वधनीतिवदिन्यन्तो बहुव्रीहिः मत्तेभानां कटेषु ससञ्जुः सक्ताः । 'गजगण्डे कटौ कटौ' इति कोषः ॥

৪৭। তথায় এলা-লতা সকল অশ্বপদ দ্বারা বিদলিত হওয়ায়, ঐ ফলসমূহ ধূলির ন্যায় চূর্ণিত হইয়া বায়ুভরে উড়িয়া উড়িয়া তত্তুল্য গন্ধ-বিশিষ্ট মত্ত হস্তিগণের গণ্ডস্থলে গিয়া সংলগ্ন হইল।

भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ।
नास्रसत् करिणां ग्रैवं त्रिपदीच्छेदिनामपि ॥ ४८

४८ अः । चन्दनानां भोगिवेष्टनमार्गेषु समर्पितं त्रिपदीच्छेदिनामपि करिणां ग्रैवं नास्रसत् ॥ वाच्य—समर्पितेन ग्रैवेण अस्रंसिष्ट ।

४८ । चन्दनानां चन्दनद्रुमाणां भोगिवेष्टनमार्गेषु सर्पवेष्टनात् निम्नेषु समर्पितं सञ्जितं त्रिपदीच्छेदिनां पादशृङ्खलच्छेदकानामपि । 'त्रिपदी पादबन्धनम्' इति यादवः । करिणां, ग्रीवासु भवं ग्रैवं कण्ठबन्धनम् । 'ग्रीवाभ्योऽण्च' इति अण्प्रत्ययः । नास्रसत् न स्रस्तमभूत् । 'द्युद्भ्यो लुङि' इति परस्मैपदे पुषादित्वात् अङ्, 'अनिदिताम्' इति नकारलोपः ॥

भवति विरलभक्तिर्म्लानपुष्पोपहारः
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-
मनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थः॥ ७४

७४ अ:। म्लानपुष्पोपहारः विरलभक्तिः भवति, प्रदीपाः स्वकिरणपरिवेषोद्भेदशून्याः भवन्ति, अयं मञ्जुवाक् पञ्जरस्थः ते शुकः त्वत्प्रबोधप्रयुक्तां नः गिरम् अनुवदति च॥ वाच्य—म्लानपुष्पोपहारेण विरलभक्तिना भूयते, प्रदीपैः...शून्यैः भूयते, अनेन...पञ्जरस्थेन मञ्जुवाचा शुकेन...प्रयुक्ता गीः. अनूद्यते।

७४। म्लानः पुष्पोपहारः पुष्पपूजा म्लानत्वादेव विरलभक्तिः विरलरचनः भवति। प्रदीपाश्च स्वकिरणानां परिवेषस्य मण्डलस्य उद्भेदेन स्फुरणेन शून्या भवन्ति निस्तेजस्का भवन्तीत्यर्थः। अपि च अयं मञ्जुवाक् मधुरवचनः पञ्जरस्थः ते तव शुकः त्वत्प्रबोधनिमित्तं प्रयुक्ताम् उच्चारितां नः अस्माकं गिरं वाणीम् अनुवदति अनुकृत्य वदतीत्यर्थः। इत्थं प्रभातलिङ्गानि वर्त्तन्ते अतः प्रबोद्धव्यमिति॥

৭৪। উপহারলব্ধ পুষ্পহার সকল ম্লান ও তাহাদিগের গ্রন্থনপারিপাট্য শ্লথ হইয়াছে, প্রদীপ সকল নিস্তেজ হইয়া প্রভারহিত হইয়াছে, আর এই পিঞ্জরস্থিত মধুরভাষী আপনার শুক আপনাকে নিদ্রা হইতে প্রবুদ্ধ করিবার নিমিত্ত আমাদের উচ্চারিত বাক্যের প্রতিধ্বনি করিতেছে।

इति विरचितवाग्भिर्वन्दिपुत्त्रैः कुमारः
सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार।
मदपटु निनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः॥ ७५

७५ अ:। इति विरचितवाग्भिः वन्दिपुत्रैः विगतनिद्रः कुमारः सपदि तल्पम् उज्झाञ्चकार, (कथमिव?) मदपटु निनदद्भिः बोधितः राजहंसैः सुप्रतीकः सुरगजः गाङ्गं सैकतमिव॥ वाच्य—विगतनिद्रेण उज्झाञ्चक्रे, बोधितेन सुप्रतीकेन सुरगजेन।

७५। इति इत्थं विरचितवाग्भिः वन्दिपुत्रैः वैतालिकैः। पुत्त्रग्रहणं समानवयस्कत्वद्योतनार्थम्। सपदि विगतनिद्रः कुमारः। 'तल्पं शय्याट्टदारेषु' इत्यमरः। उज्झाञ्चकार विससर्ज। 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः। कथमिव? मदेन पटु मधुरं निनदद्भिः राजहंसैः बोधितः सुप्रतीकाख्यः सुरगजः ईशानदिग्गजः, गङ्गायाः इदं गाङ्गं

सैकतं पुलिनम् इव । 'तोयोत्थितं तत् पुलिनं सैकतं सिकतामयम्' इत्यमरः । 'सिकताशर्कराभ्यां च' इत्यण्प्रत्ययः । सुप्रतीकग्रहणं प्रायशः कैलासवासिनस्तस्य नित्यं गङ्गातटविहारसम्भवादित्यनुसन्धेयम् ॥

৭৫। যেরূপ সুপ্রতীক নামক দেবহস্তী প্রভাতে রাজহংসকুলের আনন্দমধুর কলরবে জাগরিত হইয়া গঙ্গার পুলিনদেশ হইতে উত্থিত হয়, সেইরূপ বন্দিপুত্রগণের সুরচিত স্তুতিবাক্যে জাগরিত হইয়া রাজকুমার অজ তৎক্ষণাৎ শয্যা ত্যাগ করিয়া উঠিলেন।

अथ विधिमवसाय्य शास्त्रदृष्टं
दिवसमुखोचितमञ्चिताक्षिपक्ष्मा ।
कुशलविरचितानुकूलवेशः
क्षितिपसमाजमगात् स्वयंवरस्थम् ॥ ७६

इति श्रीमहाकविकालिदासकृतौ रघुवंशे पञ्चमः सर्गः ।

७६ अः। अथ अञ्चिताक्षिपक्ष्मा (सः कुमारः) शास्त्रदृष्टं दिवसमुखोचितं विधिम् अवसाय्य कुशलविरचितानुकूलवेशः स्वयंवरस्थं क्षितिपसमाजम् अगात् ॥ वाच्य—...पक्ष्मणा...वेशेन स्वयंवरस्थः क्षितिपसमाजः अगायि ।

७६ । अथ उत्थानानन्तरम् अञ्चितानि चारूणि अक्षिपक्ष्माणि यस्य सः अजः शास्त्रे दृष्टम् अवगतं दिवसमुखोचितं प्रातःकालोचितं विधिम् अनुष्ठानम् अवसाय्य समाप्य । स्यतेर्ण्यन्तात् ल्यप् । कुशलैः प्रसाधनदक्षैः विरचितः अनुकूलः स्वयंवरोचितः वेषः नेपथ्यं यस्य सः तथोक्तः सन् स्वयंवरस्थं क्षितिपसमाजं राजसमूहम् अगात् अगमत् । 'इणो गा लुङि' इति गादेशः ॥ पुष्पिताग्रावृत्तमेतत् । तल्लक्षणं—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे
महाकाव्ये अजस्वयंवराभिगमनो नाम पञ्चमः सर्गः ॥ ५

৭৬। অনন্তর, সুন্দর নয়নপক্ষ্মে শোভিত রাজকুমার অজ, শাস্ত্রানুসারে প্রাতঃকৃত্য সমাপন করিয়া সুনিপুণ ভৃত্যগণের সাহায্যে অভিমত বেশবিন্যাসপূর্বক রাজকুলসমাকীর্ণ স্বয়ংবরসভায় গমন করিলেন।

পঞ্চম সর্গ সমাপ্ত ॥ ৫

## षष्ठः सर्गः ।

स तत्र मञ्चेषु मनोज्ञवेषान् सिंहासनस्थानुपचारवत्सु ।
वैमानिकानां मरुतामपश्यदाकृष्टलीलान्नरलोकपालान् ॥ १

१ अः । सः तत्र, उपचारवत्सु मञ्चेषु सिंहासनस्थान् मनोज्ञवेषान् वैमानिकानां मरुताम् आकृष्टलीलान् नरलोकपालान् अपश्यत् ॥

जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ ।
कामारिं कामतातं वा कञ्चिद्देवं भजामहे ॥

१ । सः अजः, तत्र स्थाने उपचारवत्सु राजोपचारवत्सु मञ्चेषु, सिंहासनस्थान् मनोज्ञवेषान् मनोहरनेपथ्यान् वैमानिकानां विमानैश्चरताम् । 'चरति' इति ठक्प्रत्ययः । मरुताम् अमराणाम् । 'मरुतौ पवनामरौ' इत्यमरः । आकृष्टलीलान् गृहीतसौभाग्यान् आकृष्टमरुल्लीलानित्यर्थः । सापेक्षत्वेऽपि गमकत्वात् समासः । नरलोकं पालयन्तीति नरलोकपालाः । कर्म्मण्यण्प्रत्ययः । तान् भूपालान् अपश्यत् । सर्गेऽस्मिन्नुपजातिः ॥

১। রঘুকুমার অজ, সেই স্বয়ংবরসভায় গিয়া দেখিলেন,—রাজযোগ্য উপকরণে সুসজ্জিত একটি একটি মঞ্চের উপর এক একখানি সিংহাসন স্থাপিত ; সেই সিংহাসনে মনোহর বেশধারী নৃপতিগণ উপবিষ্ট হইয়া, বিমানারূঢ় দেবগণের ন্যায় শোভা ধারণ করিয়াছেন।

रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण ।
काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतीनिराशम् ॥२

२ अः । रतेः गृहीतानुनयेन ईश्वरेण प्रत्यर्पितस्वाङ्गं कामम् इव काकुत्स्थम् आलोकयतां नृपाणां मनः इन्दुमतीनिराशं बभूव ॥

२ । 'रतिः स्मरप्रियायाञ्च रागे तु सुरते स्मृता' इति विश्वः । रतेः कामप्रियायाः गृहीतानुनयेन स्वीकृतप्रार्थनेन गृहीतरत्यनुनयेनेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात् समासः । ईश्वरेण हरेण, प्रत्यर्पितस्वाङ्गं कामम् इव स्थितं काकुत्स्थम् अजम्, आलोकयतां नृपाणां मनः इन्दुमतीनिराशं वदभीनिस्पृहं बभूव । इन्दुमती सत्पतिमेनम् विहाय नास्मान् वरिष्यतीति निश्चिक्युरित्यर्थः । सर्वातिशयसौन्दर्य्यमस्य इति भावः ॥

पौराणिकी वार्ता।—पुरा किल हिमालयशिखरे उग्रे तपसि स्थितस्य भगवतश्चन्द्रमौलेः समाधिभेदाय वासवेन कामः प्रेरितः, स च रत्या वसन्तेन च अनुगम्यमानः तत्र गत्वा उमासमक्षं हरवक्षलक्ष्याः धनुषि सम्मोहनं नाम सायकं समधत्त। ततस्तपोभङ्गात् जातकोपस्य पिनाकपाणेस्तृतीयनयनात् सहसा निःसृतेन वह्निना स भस्मीभूतः। अथ कदाचित् शङ्करः रतिप्रार्थनया पुनरनङ्गमङ्गिनं सम्पादितवानिति।

২। রতিদেবীর সকরুণ অনুনয়ে সন্তুষ্ট মহেশ্বর কর্তৃক প্রত্যর্পিতদেহ অনঙ্গতুল্য রূপবান্ সেই ককুৎস্থবংশধর কুমার অজকে নিরীক্ষণ করিয়া নৃপতিগণের মন ইন্দুমতীলাভবিষয়ে হতাশ হইল।

**वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम्।**
**शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह ॥ ३**

३ अः। असौ कुमारः वैदर्भनिर्दिष्टं मञ्चम्, क्लृप्तेन सोपानपथेन, शिलाविभङ्गैः मृगराजशावः तुङ्गं नगोत्सङ्गम् इव आरुरोह ॥

३। असौ कुमारः, वैदर्भेण भोजेन निर्दिष्टं प्रदर्शितं मञ्चं पर्य्यङ्कं, क्लृप्तेन सुविहितेन सोपानपथेन मृगराजशावः सिंहपोतः। 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः। शिलानां विभङ्गैः भङ्गीभिः तुङ्गम् उन्नतं नगोत्सङ्गं शैलाग्रम् इव आरुरोह ॥

৩। সিংহশাবক যেমন উপর্য্যুপরি শিলাপরম্পরায় পদক্ষেপ করিয়া উচ্চ গিরিশিখরে আরোহণ করে, তেমনি অজ সুরচিত সোপানপথে পদক্ষেপ পূর্ব্বক বিদর্ভরাজ-প্রদর্শিত মঞ্চে ( মঞ্চোপরিস্থিত সিংহাসনে ) আরোহণ করিলেন।

**परार्ध्यवर्णास्तरणोपपन्नमासेदिवान् रत्नवदासनं सः।**
**भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन ॥ ४**

४ अः। परार्ध्यवर्णास्तरणोपपन्नं रत्नवत् आसनम् आसेदिवान् सः मयूरपृष्ठाश्रयिणा गुहेन भूयिष्ठम् उपमेयकान्तिः आसीत् ॥

४। परार्ध्याः श्रेष्ठाः वर्णाः नीलपीतादयः यस्य तेन आस्तरणेन कम्बलादिना उपपन्नं सङ्गतं रत्नखचितम् आसनं सिंहासनम् आसेदिवान् अधिष्ठितवान् सः अजः, मयूरपृष्ठाश्रयिणा गुहेन सेनान्या सह। 'सेनानीरग्निभूर्गुहः' इत्यमरः। भूयिष्ठम् अत्यर्थम् उपमेयकान्तिः आसीत्। मयूरस्य विचित्ररूपत्वात् तत्साम्यं रत्नासनस्य तद्द्वारा च तदारूढयोरपीति भावः ॥

৪। অজ অত্যুৎকৃষ্ট নানাবর্ণরঞ্জিত আস্তরণে শোভিত রত্নখচিত সিংহাসনে উপবেশন করায়, তাঁহার শোভা, ( অত্যুৎকৃষ্ট বিচিত্রবর্ণে শোভিত ) ময়ূরপৃষ্ঠে উপবিষ্ট কার্ত্তিকেয়ের শোভার সহিত বহুলরূপে সাদৃশ্যলাভ করিল।

**तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्ष्यः।**
**सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥५**

५ अः। पयोमुचां पङ्क्तिषु विद्युता (सहस्रधा विभक्तः आत्मा इव) तासु राजपरम्परासु श्रिया सहस्रधा विभक्तः प्रभाविशेषोदयदुर्निरीक्ष्यः आत्मा व्यरुचत् ॥

५। तासु राजपरम्परासु, श्रिया लक्ष्म्या कर्त्र्या, पयोमुचां मेघानां पङ्क्तिषु विद्युता इव, सहस्रधा विभक्तः, तरङ्गेषु तरणिरिव स्वयमेक एव प्रत्येकं संक्रामित इत्यर्थः। प्रभाविशेषस्य उदयेन आविर्भावेण, दुर्निरीक्ष्यः दुर्दर्शनः आत्मा श्रियः स्वरूपं व्यरुचत् व्यद्योतिष्ट। 'द्युद्भ्यो लुङि' इति परस्मैपदं द्युतादित्वादङ्प्रत्ययः। तस्मिन् समये प्रत्येकं संक्रान्तलक्ष्मीकतया तेषां किमपि दुरासदं तेजः प्रादुरासीदित्यर्थः॥

৫। বিদ্যুৎ যেরূপ সহস্র সহস্র মেঘখণ্ডে সহস্র সহস্র ভাগে বিভক্ত হইয়া শোভা পায়, তদ্রূপ সৌন্দর্য্যের অধিষ্ঠাত্রী লক্ষ্মীদেবীর স্বরূপ (তৎকালে) প্রভাবিশেষের আবির্ভাবে দুর্নিরীক্ষ্য এবং সেই রাজমণ্ডলে সহস্রধা বিভক্ত হইয়া শোভা পাইতে লাগিল।

**तेषां महार्हासनसंस्थितानामुदारनेपथ्यभृतां स मध्ये।**
**रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः॥ ६**

६ अः। महार्हासनसंस्थितानाम् उदारनेपथ्यभृतां तेषां मध्ये, कल्पद्रुमाणां मध्ये पारिजात इव सः रघुसूनुः, एव, धाम्ना रराज ॥

६। महार्हासनसंस्थितानां श्रेष्ठसिंहासनस्थानाम् उदारनेपथ्यभृताम् उज्ज्वलवेषधारिणां तेषां राज्ञां मध्ये, कल्पद्रुमाणां मध्ये पारिजात इव सुरद्रुमविशेष इव। 'पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥' इत्यमरः। सः रघुसूनुः एव धाम्ना तेजसा रराज। भूम्नेति पाठे अतिशयेनेत्यर्थः। अत्र कल्पद्रुमशब्दः पञ्चान्यतमविशेषवचनः, उपकल्पयन्ति मनोरथानिति व्युत्पत्त्या सुरद्रुममात्रोपलक्षकतया प्रयुक्त इत्यनुसन्धेयम्। कल्पा इति द्रुमाः कल्पद्रुमा इति विग्रहः॥

৬। সুরতরুগণের মধ্যে যেমন পারিজাত অধিকতর শোভা পায়, মহার্হ সিংহাসনে উপবিষ্ট এবং উৎকৃষ্ট বেশভূষায় অলঙ্কৃত সেই অজও রাজবৃন্দের মধ্যে তেজঃপুঞ্জ দ্বারা অধিকতর শোভা পাইতে লাগিলেন।

**नेत्रव्रजाः पौरजनस्य तस्मिन्**
**विहाय सर्वान् नृपतीन् निपेतुः।**

मदोत्कटे रेचितपुष्पवृक्षा
गन्धद्विपे वन्य इव द्विरेफाः॥ ७

७ अ:। पौरजनस्य नेत्रव्रजाः सर्वान् नृपतीन् विहाय, रेचितपुष्पवृक्षाः द्विरेफाः वन्ये गन्धद्विपे इव तस्मिन् निपेतुः॥

७। पौरजनस्य नेत्रव्रजाः, सर्वान् नृपतीन् विहाय, तस्मिन् अजे निपेतुः, स एव सर्वोत्कर्षेण दद्दृशे इत्यर्थः। कथमिव? मदोत्कटे मदेन उद्भिन्नगण्डे निर्भरमदे वा वन्ये गन्धद्विपे गन्धप्रधाने द्विपे गजे, रेचिताः रिक्तीकृताः पुष्पाणां वृक्षाः यैः ते त्यक्तपुष्पवृक्षा इत्यर्थः। द्विरेफाः भृङ्गाः इव। द्विपस्य वन्यविशेषणं द्विरेफाणां पुष्पवृक्षत्यागसम्भावनार्थं कृतम्॥

৭। ভ্রমরশ্রেণী যেমন পুষ্পবৃক্ষ পরিত্যাগ করিয়া, মদস্রাবী বন্য হস্তীর উপর নিপতিত হয়, পৌরগণের নয়নপংক্তিও তদ্রূপ সকল নৃপতিকে পরিত্যাগ করিয়া কেবল সেই অজের উপর নিপতিত হইল।

अथ स्तुते वन्दिभिरन्वयज्ञैः सोमार्कवंश्ये नरदेवलोके।
सञ्चारिते चागुरुसारयोनौ धूपे समुत्सर्पति वैजयन्तीः॥ ८

८। अथेति, पुरेति, मनुष्येति च त्रिभिर्विशेषकम्। अथ अन्वयज्ञैः राजवंशाभिज्ञैः वन्दिभिः स्तुतिपाठकैः। 'वन्दिनः स्तुतिपाठकाः' इत्यमरः। सोमार्कवंश्ये सोमसूर्यवंशभवे नरदेवलोके राजसमूहे स्तुते सति, विवेशेत्युत्तरेण सम्बन्धः, एवमुत्तरत्रापि योज्यम्। सञ्चारिते समन्तात् प्रचारिते अगुरुसारः योनिः कारणं यस्य तस्मिन् धूपे च वैजयन्तीः पताकाः समुत्सर्पति सति अतिक्रम्य गच्छति सति॥

৮। অনন্তর, রাজগণের বংশবিবরণে অভিজ্ঞ বন্দিগণ, চন্দ্র ও সূর্য্যবংশীয় নরপতিগণের গুণগান করিতে আরম্ভ করিলে, অগুরুনির্য্যাস সমুৎপন্ন ধূপের ধূমরাশি চতুর্দ্দিকে সঞ্চারিত এবং পতাকা সকল উর্দ্ধে সমুত্থিত হইল।

पुरोपकण्ठोपवनाश्रयाणां कलापिनामुद्धतनृत्यहेतौ।
प्रध्मातशङ्खे परितो दिगन्तांस्तूर्य्यस्वने मूर्च्छति मङ्गलार्थे॥९

९। किञ्च, पुरस्य उपकण्ठे समीपे उपवनानि आश्रयो येषां तेषां कलापिनां बर्हिणाम् उद्धतनृत्यहेतौ मेघध्वनिसादृश्यात् ताण्डवकारणे प्रध्माताः पूरिताः शङ्खाः यत्र, तस्मिन् मङ्गलार्थे मङ्गलप्रयोजनके तूर्य्यस्वने वाद्यघोषे परितः सर्वतः दिगन्तान् मूर्च्छति व्याप्नुवति सति॥

৯। শঙ্খধ্বনির সহিত মাঙ্গলিক বাদ্যধ্বনি চতুর্দ্দিক্ পরিব্যাপ্ত করিলে সেই বাদ্যধ্বনি শুনিয়া মেঘধ্বনি ভ্রমে নগরপ্রান্তবর্ত্তী উদ্যানের ময়ূরগণ উন্মত্তভাবে নৃত্য করিতে আরম্ভ করিল।

मनुष्यवाह्यं चतुरस्रयानमध्यास्य कन्या परिवारशोभि।
विवेश मञ्चान्तरराजमार्गं पतिंवरा क्लृप्तविवाहवेषा॥ १०

८, ९, १० अ:। अथ अन्वयज्ञै: वन्दिभि: सोमार्कवंश्ये नरदेवलोके स्तुते (सति) वृत्तारिते अगुरुसारयोनौ धूपे वैजयन्तो: समुत्सर्पति (सति) पुरोपकण्ठोपवनाश्रयाणां कलापिनाम् उद्धत-नृत्यहेतौ प्रध्मातशङ्खे मङ्गलार्थे तूर्य्यस्वने परित: दिगन्तान् मूर्च्छति (सति) क्लृप्तविवाहवेषा पतिंवरा कन्या मनुष्यवाह्यं परिवारशोभि चतुरस्रयानम् अध्यास्य मञ्चान्तरराजमार्गं विवेश॥

१०। पतिं वृणोतीति पतिंवरा स्वयंवरा। 'अथ स्वयंवरा पतिंवरा च वर्य्या च' इत्यमर:। 'संज्ञायां भृतवृजि' इत्यादिना खच्प्रत्यय:। क्लृप्तविवाहवेषा कन्या इन्दुमती, मनुष्यै: वाह्यं परिवारेण परिजनेन शोभि चतुरस्रयानं चतुरस्रवाहनं शिविकाम् अध्यास्य आरुह्य मञ्चान्तरे मञ्चमध्ये य: राजमार्ग: तं विवेश॥

১০। স্বয়ংবরার্থিনী রাজকন্যা ইন্দুমতী বিবাহযোগ্য বেশে সুসজ্জিতা হইয়া, পরিজনবেষ্টিত মনুষ্যবাহ্য চতুষ্কোন শিবিকায় আরোহণ করিয়া, সেই সকল মঞ্চশ্রেণীর মধ্যস্থিত রাজপথে প্রবেশ করিলেন।

तस्मिन् विधानातिशये विधातु: कन्यामये नेत्रशतैकलक्ष्ये।
निपेतुरन्त:करणैर्नरेन्द्रा देहै: स्थिता: केवलमासनेषु॥ ११

११ अ:। नेत्रशतैकलक्ष्ये कन्यामये तस्मिन् विधातु: विधानातिशये नरेन्द्रा अन्त:करणै: निपेतु: आसनेषु केवलं देहै: स्थिता:॥

११। नेत्रशतानाम् एकलक्ष्ये एकदृश्ये कन्यामये कन्यारूपे तस्मिन् विधातु: विधानातिशये सृष्टिविशेषे नरेन्द्रा: अन्त:करणै: निपेतु:, आसनेषु देहै: केवलं देहैरेव स्थिता:, देहानपि विस्मृत्य तत्रैव दत्तचित्ता बभूवु: इत्यर्थ:। अन्त:करणकर्त्तृके निपतने नरेन्द्राणां कर्त्तृत्वव्यपदेश: आदरातिशयार्थ:॥

১১। ইন্দুমতী তখন শত শত নেত্রের একমাত্র লক্ষ্য হইলেন; বিধাতার অলৌকিকী সৃষ্টিস্বরূপা সেই কন্যার উপর রাজগণের সমস্ত অন্তঃকরণ নিপতিত হওয়ায়, তাঁহাদের শূন্য দেহমাত্র যেন সিংহাসনে অবস্থিত রহিল।

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्य:।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवु:॥ १२

१२ अः। तां प्रति अभिव्यक्तमनोरथानाम् महीपतीनां प्रणयाग्रदूत्यः विविधाः शृङ्गारचेष्टाः, पादपानां प्रवालशोभा इव बभूवुः॥

१२। ताम् इन्दुमतीं प्रति अभिव्यक्तमनोरथानां प्रकटाभिलाषाणां महीपतीनां राज्ञां, प्रणयाग्रदूत्यः। 'प्रणयः प्रार्थना प्रेम वा। प्रणयास्त्वमी। विस्रम्भयाच्ञाप्रेमाणः' इत्यमरः। प्रणयेषु अग्रदूत्यः प्रथमदूतिकाः। प्रणयप्रकाशकत्वसाम्यात् दूतीत्वव्यपदेशः। विविधाः शृङ्गारचेष्टाः शृङ्गारविकाराः पादपानां प्रवालशोभाः पल्लवसम्पद इव बभूवुः उत्पन्नाः। अत्र शृङ्गारलक्षणं रससुधाकरे—"विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः। नीता सदस्यरस्यत्वं रतिः शृङ्गार उच्यते॥" रतिः इच्छाविशेषः। तच्चोक्तं तत्रैव—'यूनोरन्योन्यविषयस्थायिनीच्छा रतिः स्मृता' इति। चेष्टाशब्देन तदनुभावविशेषा उच्यन्ते। तेऽपि तत्रैवोक्ताः—'भावं मनोगतं साक्षात् स्वहेतुं व्यञ्जयन्ति ये। तेऽनुभावा इति ख्याता भ्रूविक्षेपस्मितादयः। ते चतुर्धा चित्तगात्रवागबुद्ध्यारम्भसम्भवाः॥' इति। तत्र गात्रारम्भसम्भवान् चेष्टाशब्दोक्तानुभावान् कश्चिदित्यादिभिः श्लोकैर्वक्ष्यति शृङ्गाराभासश्चायम् एकत्रैव प्रतिपादनात्। तदुक्तम्—'एकत्रैवानुरागश्चेत्तिर्यक्‌शब्दगतोऽपि वा। योषितां बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः॥' इति॥

১২। সেই ইন্দুমতীর প্রতি আসক্তচিত্ত রাজাদিগের প্রণয়ের প্রথম দূতীস্বরূপ নানাবিধ বিলাস চেষ্টা, বৃক্ষ সকলের নবপল্লব-শোভার ন্যায় প্রকাশ পাইয়াছিল।

**कश्चित् कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम्।**
**रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार॥ १३**

१३ अः। कश्चित् कराभ्याम् उपगूढनालम् आलोलपत्राभिहतद्विरेफम् रजोभिः अन्तः परिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार॥

१३। 'शृङ्गारचेष्टा विविधा बभूवुः', इत्युक्तं ता एव दर्शयति—कश्चिदिति। कश्चित् राजा, कराभ्यां पाणिभ्याम् उपगूढनालं गृहीतनालम् आलोलैः चञ्चलैः पत्रैः अभिहताः ताड़िताः द्विरेफाः भ्रमराः येन तत् तथोक्तं रजोभिः परागैः अन्तः परिवेषं मण्डलं बध्नातीति अन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार। करस्थलीलारविन्दवत् त्वयाहं भ्रमयितव्य इति नृपाभिप्रायः। हस्तघूर्णकोऽयमपलक्षणक इति इन्दुमत्यभिप्रायः॥

১৩। কোনও রাজা হস্ত দ্বারা লীলা-পদ্মের মৃণালদণ্ড ধারণ করিয়া ঘুরাইতে

লাগিলেন; তখন চঞ্চল পদ্মপত্রের আঘাতে ভ্রমর সকল তাড়িত হইল এবং পদ্মের অভ্যন্তরস্থ পরাগসমূহ ঘুরিতে ঘুরিতে মণ্ডলাকার ধারণ করিল।

**বিস্রস্তমংসাদপরো বিলাসী রত্নানুবিদ্ধাঙ্গদকোটিলগ্নম্।**
**প্রালম্বমুৎকৃষ্য যথাবকাশং নিনায় সাচীকৃতচারুবক্ত্রঃ ১৪**

১৪ অ:। অপর: বিলাসী অংসাত্ বিস্রস্তং রত্নানুবিদ্ধাঙ্গদকোটিলগ্নং প্রালম্বম্ উৎকৃষ্য সাচীকৃতচারুবক্ত্র: (সন্) যথাবকাশং নিনায়॥

১৪। বিলাসী বিলসনশীল:। 'বৌ কষলসকত্থস্রম্ভ:' ইতি ঘিণুন্-প্রত্যয়:। অপর: রাজা, অংসাত্ বিস্রস্তং রত্নানুবিদ্ধম্ রত্নখচিতং যত্ অঙ্গদং কেয়ূরং তস্য কোটিলগ্নং প্রালম্বম্ ঋজুলম্বিনীং স্রজম্। 'প্রালম্ব-মৃজুলম্বি স্যাত্ কণ্ঠাত্' ইত্যমর:। 'প্রাবারম্' ইতি পাঠে তু উত্তরীয়-বস্ত্রম্। উৎকৃষ্য উদ্ধৃত্য সাচীকৃতং তির্য্যক্কৃতং চারু বক্ত্রং যেন স: তথোক্ত: সন্, যথাবকাশং স্বস্থানং নিনায় প্রাবারোত্ক্ষেপণচ্ছলেনাহং ত্বামেবং পরিরপ্স্যে ইতি নৃপাভিপ্রায়:। গোপনীয়ং কিঞ্চিদঙ্গেঽস্তি ততোঽয়ং প্রাবৃণুত ইতি ইন্দুমত্যভিপ্রায়:।

১৪। কোন বিলাস-পরায়ণ রাজা উত্তোলনপূর্ব্বক মুখমণ্ডল ঈষৎ বক্র করিয়া, স্কন্ধ হইতে স্খলিত কেয়ূরের প্রান্তলগ্ন মালা যথাস্থানে সন্নিবেশিত করিলেন।

**আকুঞ্চিতাগ্রাঙ্গুলিনা ততোঽন্য: কিঞ্চিৎসমাবর্জিতনেত্রশোভ:।**
**তির্য্যগ্বিসংসর্পিনখপ্রভেণ পাদেন হৈমং বিলিলেখ পীঠম্॥১৫**

১৫ অ:। তত: অন্য: কিঞ্চিৎসমাবর্জিতনেত্রশোভ: (সন্) আকুঞ্চিতাগ্রাঙ্গুলিনা তির্য্যগ্বিসংসর্পিনখপ্রভেণ পাদেন হৈমং পীঠম্ বিলিলেখ।

১৫। তত: পূর্ব্বোক্তাত্ অন্য: অপর: রাজা কিঞ্চিত্ সমাবর্জিতনেত্রশোভ: ঈষদর্বাক্পাতিতনেত্রশোভ: সন্, আকুঞ্চিতা: আভুগ্না: অগ্রাঙ্গুলয়ো যস্য তেন তির্য্যগ্বিসংসর্পিণ্য: নখপ্রভা: যস্য তেন চ পাদেন, হৈমং হিরণ্ময়ং পীঠং পাদপীঠং বিলিলেখ লিখিতবান্। পাদাঙ্গুলীনামাকুঞ্চনেন ত্বং মত্-সমীপমাগচ্ছ ইতি নৃপাভিপ্রায়:। ভূমিবিলেখকোঽয়মপলক্ষণক ইতি ইন্দুমত্যাশয়:। ভূমিবিলেখনন্তু লক্ষ্মীবিনাশহেতু:॥

১৫। অপর কোনও রাজা, নয়নযুগল ঈষৎ অবনত ও পদাঙ্গুলির অগ্রভাগ আকুঞ্চিত করিয়া, সেই পদাঙ্গুলির অগ্রভাগ দ্বারা স্বর্ণময় পাদপীঠ বিলিখন করিতে লাগিলেন এবং তদীয় পদাঙ্গুলির নখপ্রভা তির্য্যগ্ভাবে বিস্তৃত হইয়া পড়িল।

**নিবেশ্য বামং ভুজমাসনার্দ্ধে তৎসন্নিবেশাদধিকোন্নতাংস:।**
**কশ্চিদ্বিবৃত্তত্রিকভিন্নহার: সুহৃৎসমাভাষণতৎপরোঽভূত্॥১৬**

१६ अ:। कश्चित् आसनार्द्धे वामं भुजं निवेश्य, तत्सन्निवेशात् अधिकोन्नतांसः विवृत्तत्रिकभिन्नहारः (सन्) सुहृत्समाभाषणतत्परः अभूत् ॥

१६। कश्चित् राजा वामं भुजम् आसनार्द्धे सिंहासनैकदेशे निवेश्य संस्थाप्य तत्सन्निवेशात् तस्य वामभुजस्य सन्निवेशात् संस्थापनात् अधिकोन्नतः अंसः वामांस एव यस्य सः तथोक्तः सन्, विवृत्ते परावृत्ते त्रिके त्रिकप्रदेशे भिन्नहारः लुण्ठितहारः सन्। 'पृष्ठवंशाधारे त्रिकम्' इत्यमरः। सुहृत् समाभाषणतत्परः अभूत्, वामपार्श्ववर्त्तिनैव मित्रेण सम्भाषितुं प्रवृत्तः इत्यर्थः। अतएव विवृत्तत्रिकत्वं घटते। त्वया वामाङ्के निवेशितया सह एवं वार्त्तां करिष्ये इति नृपाभिप्रायः। परं दृष्ट्वा पराङ्मुखोऽयं न कार्य्यकर्त्ता इति इन्दुमत्यभिप्रायः॥

১৬। কোনও মহীপাল আসনার্দ্ধে বামবাহু স্থাপনপূর্ব্বক পার্শ্বস্থিত মিত্রের সহিত আলাপ করিতে লাগিলেন, বামবাহু ঐরূপ সংস্থাপিত হওয়াতে তাঁহার বামস্কন্ধ অপেক্ষাকৃত উন্নত হইল এবং বিবর্ত্তনবশতঃ (ঐরূপ ঘুরিয়া বসায়) তাঁহার হারছড়াটীও পৃষ্ঠবংশের অধোভাগে বিলুণ্ঠিত হইতে লাগিল।

विलासिनीविभ्रमदन्तपत्रमापाण्डुरं केतकबर्हमन्यः।
प्रियानितम्बोचितसन्निवेशैर्विपाटयामास युवा नखाग्रैः॥१७

१७ अ:। अन्यः युवा, प्रियानितम्बोचितसन्निवेशैः नखाग्रैः विलासिनीविभ्रमदन्तपत्रम् आपाण्डुरं केतकबर्हं विपाटयामास॥

१७। अन्यः युवा, विलासिन्याः प्रियायाः विभ्रमार्थं दन्तपत्रं दन्तपत्रभूतम् आपाण्डुरं केतकबर्हं केतकदलम्। 'दलेऽपि बर्हम्' इत्यमरः। प्रियानितम्बे उचितसन्निवेशैः अभ्यस्तनिक्षेपणैः नखाग्रैः विपाटयामास विदारयामास। अहं तव नितम्बे एवं नखव्रणादीन् दास्यामि इति नृपाशयः। तृणच्छेदकवत् पत्रपाटकोऽयमपलक्षणक इति इन्दुमत्याशयः॥

১৭। কোনও যুবা, প্রিয়তমার নিতম্বে স্থাপনযোগ্য নখাগ্র দ্বারা বিলাসিনীর বিলাসার্থ কর্ণভূষণস্থানীয় ঈষৎ পাণ্ডুবর্ণ কেতকপত্র ছিন্ন করিতে লাগিলেন।

कुशेशयाताम्रतलेन कश्चित् करेण रेखाध्वजलाञ्छनेन।
रत्नाङ्गुलीयप्रभयानुविद्धानुदीरयामास सलीलमक्षान्॥ १८

१८ अ:। कश्चित् कुशेशयाताम्रतलेन रेखाध्वजलाञ्छनेन करेण रत्नाङ्गुलीयप्रभया अनुविद्धान् अक्षान् सलीलम् उदीरयामास॥

१८। कश्चित् राजा, कुशेशयं शतपत्रम् इव आताम्रं तलं यस्य तेन

'शतपत्रं कुशेशयम्' इत्यमरः। रेखारूपः ध्वजः लाञ्छनं यस्य तेन करेण अङ्गुलिषु भवानि अङ्गुलीयानि ऊर्मिकाः। 'अङ्गुलीयकमूर्मिका' इत्यमरः। 'जिह्वामूलाङ्गुलेश्छः' इति छप्रत्ययः। रत्नानाम् अङ्गुलीयानि तेषां प्रभया अनुविद्धान् व्याप्तान् अक्षान् पाशान्। 'अक्षास्तु देवनाः पाशकाश्च ते' इत्यमरः। सलीलम् उदीरयामास उच्चिक्षेप। अहं त्वया सहैवं रंस्ये इति नृपाभिप्रायः। अक्षचातुर्य्येण कापुरुषोऽयम् इति इन्दुमत्यभिप्रायः। 'अक्षैर्मा दीव्येत्' इति श्रुतिनिषेधात्॥

১৮। কোনও রাজা, পদ্মের ন্যায় আরক্তিম ধ্বজরেখা-লাঞ্ছিত করতল দ্বারা রত্নাঙ্গুরীয় প্রভায় সমুদ্ভাসিত অক্ষ সকল লীলাসহকারে উৰ্দ্ধে নিক্ষেপ করিতে লাগিলেন।

कश्चिद्यथाभागमवस्थितेऽपि स्वसन्निवेशाद्व्यतिलङ्घिनीव।
वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं व्यापारयामास करं किरीटे॥ १९

१९ अः। कश्चित् यथाभागम् अवस्थिते अपि स्वसन्निवेशात् व्यतिलङ्घिनि इव किरीटे वज्रांशु-गर्भाङ्गुलिरन्ध्रम् एकं करं व्यापारयामास॥

१९। कश्चित् यथाभागं यथास्थानम्। अवस्थिते अपि स्वसन्निवेशात् व्यतिलङ्घिनि इव स्वस्थानात् चलिते इव किरीटे वज्राणां किरीटगतानाम् अंशवः गर्भे येषां तानि अङ्गुलिरन्ध्राणि यस्य तम् एकं करं व्यापारयामास। किरीटवन्मम शिरसि स्थितामपि त्वां भारं न मन्ये इति नृपाभिप्रायः; शिरसि न्यस्तहस्तोऽयमपलक्षणक इति इन्दुमत्यभिप्रायः॥

১৯। কোনও ভূপতি নিজ কিরীট যথাস্থানে সন্নিবিষ্ট থাকিলেও যেন তাহা স্বস্থান হইতে স্খলিত হইয়াছে এইরূপ ছল করিয়া মুকুটে হস্ত স্থাপন করিলেন; কিরীটস্থ হীরকপ্রভায় তাঁহার অঙ্গুলীরন্ধ্র সকল রঞ্জিত হইল।

ततो नृपाणां श्रुतवृत्तवंशा
पुंवत्-प्रगल्भा प्रतिहाररक्षी।
प्राक् सन्निकर्षं मगधेश्वरस्य
नीत्वा कुमारीमवदत् सुनन्दा॥ २०

२० अः। ततः नृपाणां श्रुतवृत्तवंशा प्रगल्भा प्रतिहाररक्षी सुनन्दा, प्राक् कुमारीं मगधेश्वरस्य सन्निकर्षं नीत्वा पुंवत् अवदत्॥

२०। ततः अनन्तरं नृपाणां श्रुतवृत्तवंशा श्रुतनृपवृत्तवंशेत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। प्रगल्भा वाग्मिनी सुनन्दा सुनन्दाख्या। प्रतिहारं रक्षतीति प्रतिहाररक्षी द्वारपालिका, कर्मण्यण्प्रत्ययः।

'टिड्ढाणञ्' इत्यादिना ङीप्। प्राक् प्रथमं कुमारीम् इन्दुमतीं मगधेश्वरस्य सन्निकर्षं समीपं नीत्वा, पुंवत् पुंसा तुल्यम्। "तेन तुल्यं क्रिया चेद्वतिः" इति वतिप्रत्ययः। अवदत्॥

২০। অনন্তর, রাজগণের কুলশীলাভিজ্ঞা প্রগল্‌ভা সুনন্দানাম্নী দ্বারপালিকা কুমারী ইন্দুমতীকে প্রথমে মগধরাজের সমীপে লইয়া গিয়া পুরুষের ন্যায় বলিতে লাগিল।

**असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः।**
**राजा प्रजारञ्जनलब्धवर्णः परन्तपो नाम यथार्थनामा॥ २१**

२१अ:। असौ शरणोन्मुखानां शरण्यः अगाधसत्त्वः, मगधप्रतिष्ठः प्रजारञ्जनलब्धवर्णः यथार्थनामा परन्तपः नाम राजा॥

२१। असौ राजा, असाविति पुरोवर्त्तिनो निर्द्देशः, एवमुत्तरत्रापि द्रष्टव्यम्। शरणोन्मुखानां शरणार्थिनां शरण्यः 'शरणे रक्षणे साधुः' 'तत्र साधौ' इति यत्प्रत्ययः। शरणं भवितुमर्हः शरण्य इति नाथनिरुक्तिर्निर्मूलैव। अगाधसत्त्वः गम्भीरस्वभावः 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति विश्वः। मगधाः जनपदाः, तेषु प्रतिष्ठा आस्पदम् यस्य सः मगधप्रतिष्ठः। 'प्रतिष्ठा कृत्यमास्पदम्' इत्यमरः। प्रजारञ्जने लब्धवर्णः विचक्षणः। यद्वा प्रजारञ्जनेन लब्धोत्कर्षः, परान् शत्रून् तापयतीति परन्तपः परन्तपाख्यः। 'द्विषत्परयोस्तापेः' इति खच्प्रत्ययः। 'खचि ह्रस्वः' इति ह्रस्वः, 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। नामेति प्रसिद्धौ, यथार्थनामा शत्रुसन्तापनादिति भावः॥

২১। ইনি শরণাগতের আশ্রয়দাতা, অতি গম্ভীরস্বভাব প্রজারঞ্জনে বিচক্ষণ এই রাজা মগধদেশের সিংহাসনে প্রতিষ্ঠিত, ইহার নাম পরন্তপ; 'পরন্তপ' (অর্থাৎ শত্রুদমনকারী) এ নামটী ইঁহার সার্থক।

**कामं नृपाः सन्तु सहस्रशोऽन्ये**
**राजन्वतीमाहुरनेन भूमिम्।**
**नक्षत्रताराग्रहसङ्कुलापि**
**ज्योतिष्मती चन्द्रमसैव रात्रिः॥ २२**

२२अ:। अन्ये सहस्रशः नृपाः कामं सन्तु, भूमिम् अनेन राजन्वतीम् आहुः। नक्षत्रताराग्रहसङ्कुला अपि रात्रिः चन्द्रमसा एव ज्योतिष्मती भवति॥

२२। अन्ये नृपाः, कामं सहस्रशः सन्तु, भूमिम् अनेन राजन्वतीं

शोभनराजवतीम् आहुः नैतादृक् कश्चिदस्तीत्यर्थः। 'सुराज्ञि देशे राजन्वान् स्यात् ततोऽन्यत्र राजवान्' इत्यमरः। 'राजन्वान् सौराज्ये' इति निपातनात् साधुः। तथाहि, नक्षत्रैः अश्विन्यादिभिः ताराभिः साधारणैः ज्योतिर्भिः ग्रहैः भौमादिभिश्च सङ्कुला अपि रात्रिः चन्द्रमसा एव ज्योतिरस्या अस्तीति ज्योतिष्मती, नान्येन ज्योतिषेत्यर्थः॥

২২। রজনী যেমন গ্রহ-তারকা-নক্ষত্রগণ-সমাকীর্ণা হইলেও একমাত্র চন্দ্রমা দ্বারাই জ্যোতিষ্মতী হয়, সেইরূপ অন্যান্য সহস্র সহস্র নরপতি থাকিলেও বসুমতী কেবল ইঁহা দ্বারাই রাজন্বতী বলিয়া কীর্ত্তিতা হইতেছেন।

क्रियाप्रबन्धादयमध्वराणा-
मजस्रमाहूतसहस्रनेत्रः।
शच्याश्चिरं पाण्डुकपोललम्बान्
मन्दारशून्यानलकांश्चकार॥ २३

২৩। अयम् अध्वराणां क्रियाप्रबन्धात् अजस्रम् आहूतसहस्रनेत्रः शच्याः अलकान् चिरं पाण्डु-कपोललम्बान् मन्दारशून्यान् चकार॥

২৩। अयं परन्तपः अध्वराणां क्रतूनां क्रियाप्रबन्धात् अनुष्ठानसातत्यात्, अविच्छिन्नादनुष्ठानादित्यर्थः। अजस्रं नित्यम् आहूतसहस्रनेत्रः सन्, चिरं शच्याः अलकान् पाण्डुकपोलयोः लम्बान् स्रस्तान्। पचाद्यच्। मन्दारैः कल्पद्रुमकुसुमैः शून्यान् चकार। प्रोषितभर्तृका हि केशसंस्कारं न कुर्वन्ति 'प्रोषिते मलिना कृशा' इति। "क्रीड़ां शरीरसंस्कारं समाजोत्सवदर्शनम्। हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका॥' इति च स्मरणात्॥

২৩। ইনি অবিশ্রান্ত যজ্ঞ সকল অনুষ্ঠান করিয়া প্রতিনিয়ত ইন্দ্রদেবকে আহ্বান করায় তদ্বিরহে শচীদেবীর গণ্ডযুগলে নিপতিত অলকাবলী মন্দারকুসুমশূন্য করিয়াছেন।

अनेन चेदिच्छसि गृह्यमाणं पाणिं वरेण्येन कुरु प्रवेशे।
प्रासादवातायनसंश्रितानां नेत्रोत्सवं पुष्पपुराङ्गनानाम्॥२४

২৪ অঃ। वरेण्येन अनेन गृह्यमाणं पाणिं चेत् इच्छसि प्रवेशे प्रासादवातायनसंश्रितानां पुष्प-पुराङ्गनानां नेत्रोत्सवं कुरु॥

২৪। वरेण्येन वरणीयेन। 'वृणोतेरौणादिक' इति एण्यप्रत्ययः। अनेन राज्ञा गृह्यमाणं पाणिम् इच्छसि चेत् पाणिग्रहणमिच्छसि चेदित्यर्थः। प्रवेशे प्रवेशकाले प्रासादवातायनसंश्रितानां राजभवनगवाक्षस्थितानां पुष्प-

पुराङ्गनानां पाटलीपुराङ्गनानां नेत्रोत्सवं कुरु। सर्वोत्तमानां तासामपि दर्शनीया भविष्यसीति भावः॥ २४॥

২৪। এই বরণীয় রাজা তোমার পাণিগ্রহণ করেন, যদি ইহা তুমি ইচ্ছা কর, তবে ইহাঁর রাজধানীতে প্রবেশকালে পুষ্পপুরবাসিনী রাজভবন-গবাক্ষ-স্থিতা কামিনীগণের নয়নানন্দ-বিধায়িনী হও।

एवं तयोक्ते तमवेक्ष्य किञ्चिद्विस्रंसिदूर्वाङ्कमधूकमाला।
ऋजुप्रणामक्रिययैव तन्वी प्रत्यादिदेशैनमभाषमाणा॥ २५

२५ अः। तया ( सुनन्दया ) एवम् उक्ते ( सति ), तन्वी तम् अवेक्ष्य, किञ्चिद्विस्रंसिदूर्वाङ्कमधूकमाला अभाषमाणा ( सती ) ऋजुप्रणामक्रियया एव एनं प्रत्यादिदेश॥

२५। एवं तया सुनन्दया उक्ते सति तं परन्तपम् अवेक्ष्य, किञ्चित् विस्रंसिनी दूर्वाङ्का दूर्वाचिह्ना मधूकमाला गुड़पुष्पमाला यस्याः सा। 'मधुके तु गुड़पुष्पमधुद्रुमौ' इत्यमरः। वरणे शिथिलप्रयत्ना इति भावः। तन्वी इन्दुमती, एनं नृपम् अभाषमाणा ऋज्वा भावशून्यया प्रणामक्रियया एव प्रत्यादिदेश परिजहार॥

২৫। সুনন্দা এই কথা বলিলে, কৃশাঙ্গী ইন্দুমতী সেই রাজার দিকে দৃষ্টিপাত করিয়া এবং কোনও কথা না বলিয়া, কেবল সরল ( ভাবশূন্য ) প্রণাম দ্বারাই তাঁহাকে প্রত্যাখ্যান করিলেন; প্রণামকালে তদীয় দূর্ব্বাদললাঞ্ছিত মধুকপুষ্পমালা ঈষৎ হেলিয়া পড়িল।

तां सैव वेत्रग्रहणे नियुक्ता राजान्तरं राजसुतां निनाय।
समीरणोत्थेव तरङ्गलेखा पद्मान्तरं मानसराजहंसीम्॥ २६

२६ अः। वेत्रग्रहणे नियुक्ता सा ( सुनन्दा ) एव समीरणोत्था तरङ्गलेखा मानसराजहंसीं पद्मान्तरम् इव, तां राजसुतां राजान्तरं निनाय॥

२६। सा एव न अन्या चित्तज्ञत्वादिति भावः। वेत्रग्रहणे नियुक्ता दौवारिकी सुनन्दा तां राजसुतां राजान्तरम् अन्यं राजानं निनाय। नयतिर्द्विकर्म्मकः। कथमिव? समीरणोत्था वातोत्पन्ना तरङ्गलेखा ऊर्म्मिपङ्क्तिः मानसे सरसि या राजहंसी तां पद्मान्तरमिव॥

২৬। পবনান্দোলিত তরঙ্গমালা যেরূপ মানসসরোবরস্থিত রাজহংসীকে এক পদ্ম হইতে অন্য পদ্মের নিকট লইয়া যায়; সেইরূপ সেই দ্বারপালিকা সুনন্দা, রাজকুমারীকে সেই রাজার নিকট হইতে অন্য রাজার নিকট লইয়া গেল।

जगाद चैनामयमङ्गनाथः
सुराङ्गनाप्रार्थितयौवनश्रीः।

विनीतनागः किल सूत्रकारै-
रैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ॥ २७

२७ অ:। (সুনন্দা) এনাম্ (ইন্দুমতীম্) জগাদ চ, সুরাঙ্গনাপ্রার্থিতযৌবনশ্রীঃ সূত্রকারৈঃ বিনীতনাগঃ কিল অয়ম্ অঙ্গনাথঃ ভূমিগতঃ (সন্) অপি ঐন্দ্রং পদং ভুঙ্ক্তে ॥

২৭। এনাম্ ইন্দুমতীং জগাদ। কিমিতি? অয়ম্ অঙ্গনাথঃ অঙ্গদেশাধীশ্বরঃ, সুরাঙ্গনাভিঃ প্রার্থিতা কামিতা যৌবনশ্রীর্যস্য সঃ তথোক্তঃ। পুরা কিল এনমিন্দ্রসাহায্যার্থমিন্দ্রপুরগামিনম্ অকামযন্ত অপ্সরস ইতি প্রসিদ্ধিঃ। কিঞ্চ সূত্রকারৈঃ গজশাস্ত্রকর্তৃভিঃ পালকাদিভির্মহর্ষিভিঃ বিনীতনাগঃ শিক্ষিতগজঃ। কিলেতি ঐতিহ্যে। অতএব ভূমিগতঃ অপি ঐন্দ্রং পদম্ ঐশ্বর্য্যং ভুঙ্ক্তে, ভূর্লোক এব স্বর্গসুখমনুভবতীত্যর্থঃ। গজাপ্সরোদেবর্ষিসেব্যত্বম্ ঐন্দ্রপদশব্দার্থঃ। পুরা কিল কুতশ্চিচ্ছাপকারণাৎ ভুবমবতীর্ণং দিগ্গজবর্গমালোক্য স্বয়মশক্তৈরিন্দ্রাভ্যনুজ্ঞয়া আনীতৈর্দেবর্ষিভিঃ প্রণীতেন শাস্ত্রেণ গজান্ বশীকৃত্য ভুবি সম্প্রদায়ং প্রাবর্ত্তয়দিতি কথা গীয়তে ॥

২৭। সুনন্দা ইন্দুমতীকে বলিল,—ইনি, অঙ্গদেশের অধীশ্বর, সুরকামিনীরাও ইঁহার যৌবনশ্রী প্রার্থনা করিয়া থাকেন; গজপালনশাস্ত্রকারী পালক প্রভৃতি দেবর্ষিগণ কর্ত্তৃক ইঁহার হস্তিসকল শিক্ষিত হইয়াছে, ইনি ভূলোকে থাকিয়াও ইন্দ্রের ঐশ্বর্য্য ভোগ করিতেছেন।

अनेन पर्य्यासयताश्रुबिन्दून्
मुक्ताफलस्थूलतमान् स्तनेषु।
प्रत्यर्पिताः शत्रुविलासिनीना-
मुन्मुच्य सूत्रेण विनैव हाराः ॥ २८

২৮ অ:। অনেন শত্রুবিলাসিনীনাং স্তনেষু মুক্তাফলস্থূলতমান্ অশ্রুবিন্দূন্ পর্য্যাসয়তা (সতা), উন্মুচ্য, সূত্রেণ বিনা হারাঃ প্রত্যর্পিতা ইব ॥

২৮। শত্রুবিলাসিনীনাং স্তনেষু মুক্তাফলস্থূলতমান্ অশ্রুবিন্দূন্। 'অস্রমশ্রুণি শোণিতে' ইতি বিশ্বঃ। পর্য্যাসয়তা প্রস্তারয়তা ভর্ত্তৃবধাদিতি ভাবঃ। অনেন অঙ্গনাথেন উন্মুচ্য আক্ষিপ্য সূত্রেণ বিনা হারা এব প্রত্যর্পিতাঃ। অবিচ্ছিন্নাশ্রুবিন্দুপ্রবর্ত্তনাদুৎসৃষ্টহারার্পণমিব কৃতমিত্যুৎপ্রেক্ষা গম্যতে ॥

২৮। এই রাজা (অঙ্গনাথ), শত্রুকামিনীগণের কণ্ঠহার উন্মোচনপূর্ব্বক, তাহাদের

স্তনে মুক্তার ন্যায় স্থূলতম অশ্রুবিন্দু সকল পাতিত করায়, যেন বিনা সূত্রে গ্রথিত মুক্তাহার পুনরায় অর্পণ করিয়াছেন।

निसर्गभिन्नास्पदमेकसंस्थ-
मस्मिन् द्वयं श्रीश्च सरस्वती च ।
कान्त्या गिरा सूनृतया च योग्या
त्वमेव कल्याणि तयोस्तृतीया ॥ २९

२९ अ:। श्रीः च सरस्वती च (एतत्) द्वयम् निसर्गभिन्नास्पदम् (अपि) अस्मिन् (नृपे) एकसंस्थं (भवति) हे कल्याणि ! कान्त्या सूनृतया गिरा च योग्या त्वम् एव तयोः तृतीया (भव) ॥

२९। निसर्गेति। निसर्गतः भिन्नास्पदं भिन्नाश्रयं सहानवस्थानविरोधीत्यर्थः। श्रीश्च सरस्वती च इति द्वयम् अस्मिन् अङ्गनाथे एकत्र संस्था स्थितिर्यस्य तत् एकसंस्थम्, उभयमिह सङ्गतमित्यर्थः। हे कल्याणि ! 'बह्वादिभ्यश्च' इति ङीष्। कान्त्या सूनृतया सत्यप्रियया गिरा च योग्या संसर्गार्हा त्वम् एव तयोः श्रीसरस्वत्योः तृतीया। समानगुणयोर्युवयोर्दाम्पत्यं युज्यत एव इति भावः। दक्षिणनायकत्वञ्चास्य ध्वन्यते। तदुक्तम्—'तुल्योऽनेकत्र दक्षिणः' इति ॥

২৯। লক্ষ্মী ও সরস্বতী স্বভাবতঃ ভিন্নস্থানবাসিনী হইলেও ইহাঁর নিকট একত্র বাস করিতেছেন; অয়ি কল্যাণি ! সৌন্দর্য্যে ও সূনৃতবাক্যে তুমিই এই রাজার যোগ্যা; অতএব তুমি (ইহাঁকে আশ্রয় করিয়া) লক্ষ্মী ও সরস্বতীর তৃতীয়া সপত্নী হও।

अथाङ्गराजादवतार्य्य चक्षु-
र्याहीति जन्यामवदत् कुमारी ।
नासौ न काम्यो न च वेद सम्यग्-
द्रष्टुं न सा भिन्नरुचिर्हि लोकः ॥ ३०

३० अ:। अथ कुमारी अङ्गराजात् चक्षुः अवतार्य्य, याहि इति जन्याम् अवदत्। असौ (अङ्गराजः) काम्यः न, (इति) सा इन्दुमती च द्रष्टुं सम्यक् न वेद इति न, (किन्तु) लोकः भिन्नरुचिः हि ॥

३०। अथ कुमारी अङ्गराजात् चक्षुः अवतार्य्य अपनीय इत्यर्थः। जन्यां मातृसखीं सुनन्दां याहि गच्छ इति अवदत्। 'यातेति जन्यानवदत्' इति पाठे जनीं वधूं वहन्तीति जन्याः वधूबन्धवः तान् यात गच्छत इति अवदत्। 'जन्या मातृसखीमुदोः।' 'जन्यो वरवधूज्ञातिप्रियतुल्यहितेऽपि च' इति पक्षद्वये विश्वः। अथवा जन्याः वधूभृत्याः।

'भृत्यस्यापि नवोढ़ायाः' इति केशवः। संज्ञायां जन्या इति यत्प्रत्ययान्तो निपातः। यदत्राह वृत्तिकारः—'जनीं वधूं वहन्तीति जन्याः जामातुर्वयस्याः' इति, यच्चामरः,—'जन्याः स्निग्धाः वरस्य ये' इति। तत्सर्वमुपलक्षणार्थमित्यविरोधः। न चायमङ्गराजनिषेधो हृद्यदोषानापि द्रष्टृदोषादित्याह—नेत्यादिना। असौ अङ्गराजः, काम्यः कमनीयः न इति न, किन्तु काम्य एवेत्यर्थः। सा कुमारी च सम्यक् द्रष्टुं न वेद इति न, वेद इत्यर्थः। किन्तु लोकः जनः भिन्नरुचिः हि, रुचिरमपि किञ्चित् कस्मैचिन्न रोचते किं कुर्मो न हीच्छा नियन्तुं शक्यत इति भावः॥

৩০। অনন্তর, রাজনন্দিনী অঙ্গরাজের দিক্ হইতে চক্ষু ফিরাইয়া মাতৃসখী সুনন্দাকে বলিলেন,—'চল'। সেই অঙ্গরাজ যে কমনীয় ছিলেন না, এমন নহে, ইন্দুমতীও যে সৌন্দর্য্য বুঝিতে পারিতেন না, তাহাও নহে; তবে লোক সকলের রুচি স্বভাবতই ভিন্ন ভিন্ন হইয়া থাকে।

**ततः परं दुष्प्रसहं द्विषद्भिर्नृपं नियुक्ता प्रतिहारभूमौ।**
**निदर्शयामास विशेषदृश्यमिन्दुं नवोत्थानमिवेन्दुमत्यै॥ ३१**

३१ अ:। ततः, प्रतिहारभूमौ नियुक्ता (सुनन्दा), द्विषद्भिः दुष्प्रसहं विशेषदृश्यं परं नृपं नवोत्थानम् इन्दुम् इव, इन्दुमत्यै निदर्शयामास॥

३१। ततः अनन्तरं प्रतिहारभूमौ द्वारदेशे नियुक्ता दौवारिकी। 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः। द्विषद्भिः शत्रुभिः दुष्प्रसहं दुःसहं शूरमित्यर्थः, विशेषेण दृश्यं दर्शनीयं रूपवन्तमित्यर्थः। परम् अन्यम् नृपं नवोत्थानं नवोदयम् इन्दुम् इव इन्दुमत्यै निदर्शयामास॥

৩১। অনন্তর, দ্বারপালিকা সুনন্দা ইন্দুমতীকে নবোদিত চন্দ্রের ন্যায় অতীব দর্শনীয় শত্রুবিমর্দ্দক অন্য এক ভূপাল দেখাইলেন।

**अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः।**
**आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति॥३२**

३२ अ:। उदग्रबाहुः विशालवक्षाः तनुवृत्तमध्यः अयम् अवन्तिनाथः, त्वष्ट्रा चक्रभ्रमम् आरोप्य यत्नोल्लिखितः उष्णतेजा इव विभाति॥

३२। उदग्रबाहुः दीर्घबाहुः विशालवक्षाः तनुवृत्तमध्यः कृशवर्तुलमध्यः अयं राजा अवन्तिनाथः अवन्तिदेशाधीश्वरः, त्वष्ट्रा विश्वकर्मणा। भर्त्तुस्तेजोवेगमसहमानया दुहित्रा संज्ञादेव्या प्रार्थितेन इति शेषः। चक्रभ्रमं चक्राकारम् शस्त्रोत्तेजनयन्त्रम्। 'भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दाख्ये शिल्पियन्त्रके' इति विश्वः। आरोप्य यत्नेन उल्लिखितः उष्णतेजाः

সূর্য্য ইব বিভাতি। অত্র মার্কণ্ডেয়ঃ, 'বিশ্বকর্ম্মা ত্বনুজ্ঞাতঃ শাকদ্বীপে বিবস্বতা। ভ্রমমারোপ্য তত্তেজঃ শাতনায়োপচক্রমে॥' ইতি॥

৩২। (সুনন্দা বলিল)—ইনি অবন্তিদেশের অধীশ্বর; ইঁহার বাহুযুগল সুদীর্ঘ বক্ষঃস্থল বিশাল, কটিদেশ ক্ষীণ ও বর্ত্তুলাকার। বিশ্বকর্ম্মা সূর্য্যদেবকে চক্রাকার শাণযন্ত্রে আরোপিত করিয়া ঘর্ষণ করিলে তাঁহার যেমন শোভা হইয়াছিল, ইনিও সেইরূপ শোভা পাইতেছেন।

**অস্য প্রয়াণেষু সমগ্রশক্তেরগ্রেসরৈর্বাজিভিরুত্থিতানি।**
**কুর্ব্বন্তি সামন্তশিখামণীনাং প্রভাপ্ররোহাস্তময়ং রজাংসি॥৩৩**

৩৩ অঃ। সমগ্রশক্তেঃ অস্য প্রয়াণেষু, অগ্রেসরৈঃ বাজিভিঃ উত্থিতানি রজাংসি, সামন্তশিখামণীনাং প্রভাপ্ররোহাস্তময়ং কুর্ব্বন্তি॥

৩৩। সমগ্রশক্তেঃ শক্তিত্রয়সম্পন্নস্য অস্য অবন্তিনাথস্য প্রয়াণেষু জৈত্রযাত্রাসু, অগ্রেসরৈঃ বাজিভিঃ অশ্বৈঃ উত্থিতানি রজাংসি, সামন্তানাং সমন্তাৎ ভবানাং রাজ্ঞাং যে শিখামণয়ঃ চূড়ামণয়ঃ তেষাং প্রভাপ্ররোহাস্তময়ং তেজোঽঙ্কুরনাশং কুর্ব্বন্তি। নাসোরৈরেবাস্য শত্রবঃ পরাজীয়ন্তে ইতি ভাবঃ॥

৩৩। প্রভাবপ্রভৃতি শক্তিত্রয়সম্পন্ন এই রাজার যুদ্ধযাত্রাকালে অগ্রগামী অশ্বগণের খুরোত্থিত ধূলিরাশি সামন্ত রাজগণের চূড়ামণিস্থ প্রভার অঙ্কুর পর্য্যন্ত বিলুপ্ত করিয়া থাকে।

**অসৌ মহাকালনিকেতনস্য**
**বসন্নদূরে কিল চন্দ্রমৌলেঃ।**
**তমিস্রপক্ষেঽপি সহ প্রিয়াভি-**
**র্জ্যোৎস্নাবতো নির্বিশতি প্রদোষান্॥৩৪**

৩৪ অঃ। অসৌ মহাকালনিকেতনস্য চন্দ্রমৌলেঃ অদূরে বসন্ (সন্) তমিস্রপক্ষে অপি প্রিয়াভিঃ সহ জ্যোৎস্নাবতঃ প্রদোষান্ নির্বিশতি॥

৩৪। অসৌ অবন্তিনাথঃ, মহাকালং নাম স্থানবিশেষঃ তদেব নিকেতনং স্থানং যস্য তস্য চন্দ্রমৌলেঃ ঈশ্বরস্য অদূরে সমীপে বসন্, অত এব হেতোঃ তমিস্রপক্ষে কৃষ্ণপক্ষে অপি প্রিয়াভিঃ সহ জ্যোৎস্নাবতঃ প্রদোষান্ রাত্রীঃ নির্বিশতি অনুভবতি কিল, নিত্যজ্যোৎস্নাবিহারত্বমেতস্যৈব নান্যস্য ইতি ভাবঃ॥

৩৪। এই রাজা মহাকালনামক স্থানে প্রতিষ্ঠিত চন্দ্রশেখর মহাদেবের অদূরে বাস করাতে কৃষ্ণপক্ষেও প্রিয়তমাগণের সহিত জ্যোৎস্নাময়ী রাত্রি উপভোগ করেন।

**अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते ।**
**सिप्रातरङ्गानिलकम्पितासु विहर्त्तुमुद्यानपरम्परासु ॥ ३५**

३५ अ: । (हे) रम्भोरु ! अनेन यूना पार्थिवेन सह सिप्रातरङ्गानिलकम्पितासु उद्यानपरम्परासु विहर्त्तुं ते मनसः रुचिः कच्चित् ? ।

३५ । रम्भे कदलीस्तम्भौ इव ऊरू यस्याः सा रम्भोरूः तस्याः सम्बोधनं हे रम्भोरु ? । 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः; नदीत्वाद् ह्रस्वः । यूना अनेन पार्थिवेन सह सिप्रा नाम तत्रत्या नदी तस्याः तरङ्गाणाम् अनिलेन कम्पितासु उद्यानानां परम्परासु पङ्क्तिषु, विहर्त्तुं ते तव मनसः रुचिः कच्चित्? स्पृहास्ति किमित्यर्थः । 'अभिष्वङ्गे स्पृहायाञ्च गभस्तौ च रुचिः स्त्रियाम्' इत्यमरः ॥

৩৫ । অয়ি রম্ভোরু ! এই যৌবনসম্পন্ন অবন্তিপতির সহিত সিপ্রানদীর তরঙ্গোত্থিত শীতলসমীরণ-সঞ্চালিত উদ্যান সকলে বিহার করিতে তোমার মনে সাধ হয় কি ?

**तस्मिन्नभिद्योतितबन्धुपद्मे प्रतापसंशोषितशत्रुपङ्के ।**
**बबन्ध सा नोत्तमसौकुमार्य्या कुमुद्वती भानुमतीव भावम् ३८**

३६ अ: । उत्तमसौकुमार्य्या सा, कुमुद्वती भानुमति इव, अभिद्योतितबन्धुपद्मे प्रतापसंशोषितशत्रुपङ्के तस्मिन् भावं न बबन्ध ॥

३६ । उत्तमसौकुमार्य्या उत्कृष्टाङ्गमार्दवा सा इन्दुमती, अभिद्योतितानि उल्लसितानि बन्धव एव पद्मानि येन तस्मिन्, प्रतापेन तेजसा संशोषिताः शत्रव एव पङ्काः कर्दमा येन तस्मिन् अवन्तिनाथे । कुमुद्वती । 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति ड्मतुप्प्रत्ययः । भानुमति अंशुमति इव भावं चित्तं न बबन्ध, न तत्रानुरागमकरोदित्यर्थः । बन्धूनां पद्मत्वेन शत्रूणां पङ्कत्वेन च रूपणं राज्ञः सूर्य्यसाम्यार्थम् ॥

৩৬ । বন্ধুরূপ কমলদলের উল্লাসক এবং শত্রুরূপ পঙ্কবিশোষক সেই দিবাকর সদৃশ অবন্তিনাথের সহিত, অলৌকিক সৌকুমার্য্যসম্পন্না, কুমুদিনীসদৃশী ইন্দুমতী প্রণয়-বন্ধনে নিরস্তা হইলেন ।

**तामग्रतस्तामरसान्तराभा-**
**मनूपराजस्य गुणैरनूनाम् ।**
**विधाय सृष्टिं ललितां विधातु-**
**र्जगाद भूयः सुदतीं सुनन्दा ॥ ३७**

३७ अ:। सुनन्दा, तामरसान्तराभां गुणैः अनूनां विधातुः ललितां सृष्टिं तां सुदतीम् अनूपराजस्य अग्रतः विधाय भूयः जगाद ॥

३७। सुनन्दा, तामरसान्तराभां पद्मोदरतुल्यकान्तिं कनकगौरीमित्यर्थः। गुणैः अनूनाम् अधिकामित्यर्थः। शोभनाः दन्ताः यस्याः सा सुदती। 'वयसि दन्तस्य दतृ' इति दत्रादेशः, 'उगितश्च' इति ङीप्। तां प्रकृतां प्रसिद्धां वा विधातुः ललितां सृष्टिं मधुरनिर्माणां स्त्रियमित्यर्थः। अनुगता आपो येषु ते अनूपाः नाम देशाः। 'ऋक्पूरब्धूःपथामानक्षे' इत्यप्रत्ययः समासान्तः 'ऊदनोर्देशे' इत्यूदादेशः। तेषां राज्ञः अनूपराजस्य अग्रतः विधाय व्यवस्थाप्य भूयः पुनः जगाद ॥

৩৭। অনন্তর সুনন্দা, পদ্মগর্ভের ন্যায় কমনীয় কান্তি, সর্ব্বগুণালঙ্কৃতা, বিধাতার অপূর্ব্ব সৃষ্টি, সুদতী সেই ইন্দুমতীকে অনূপরাজের সমীপে উপনীত করিয়া বলিল।

संग्रामनिर्विष्टसहस्रबाहु-
रष्टादशद्वीपनिखातयूपः।
अनन्यसाधारणराजशब्दो
बभूव योगी किल कार्त्तवीर्य्यः॥ ३८

३८ अ:। संग्रामनिर्विष्टसहस्रबाहुः अष्टादशद्वीपनिखातयूपः अनन्यसाधारणराजशब्दः योगी कार्त्तवीर्य्यः बभूव किल ॥

३८। संग्रामेषु युद्धेषु निर्विष्टाः अनुभूताः सहस्रं बाहवः यस्य सः तथोक्तः युद्धादन्यत्र द्विभुज एव दृश्यते इत्यर्थः। अष्टादशसु द्वीपेषु निखाताः स्थापिताः यूपा येन सः तथोक्तः। सर्वक्रतुयाजी सार्वभौमश्चेति भावः। जरायुजादिसर्वभूतरञ्जनात् अनन्यसाधारणो राजशब्दो यस्य सः तथोक्तः, योगी ब्रह्मविद्वानित्यर्थः। स किल भगवतो दत्तात्रेयाल्लब्धयोग इति प्रसिद्धिः। कृतवीर्य्यस्य अपत्यं पुमान् कार्त्तवीर्य्यः नाम राजा बभूव किल इति। अयञ्चास्य महिमा सर्वोऽपि दत्तात्रेयवरप्रसादल्लब्ध इति भारते दृश्यते ॥

৩৮। পূর্ব্বকালে কার্ত্তবীর্য্য নামে এক যোগী ছিলেন, যুদ্ধ সময়ে তাঁহার সহস্র বাহু বহির্গত হইত; তিনি অষ্টাদশ দ্বীপে নিজ যজ্ঞের যূপ ও জয়ের স্তম্ভ স্থাপন করিয়াছিলেন; লোকানুরঞ্জন দ্বারা তিনি অনন্যসুলভ রাজশব্দ প্রাপ্ত হইয়াছিলেন।

अकार्य्यचिन्तासमकालमेव प्रादुर्भवंश्चापधरः पुरस्तात्।
अन्तःशरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता॥३९

৩৯ অ:। বিনেতা য:, অকার্য্যচিন্তাসমকালম্ এব চাপধর: (সন্) পুরস্তাৎ প্রাদুর্ভবন্ প্রজানাম্ অন্ত:শরীরেষু অপি অবিনয়ং প্রত্যাদিদেশ।

৩৯। বিনেতা শিক্ষক: য: কার্ত্তবীর্য্য: অকার্য্যস্য অসৎকার্য্যস্য চিন্তায়া:, অহং চৌর্য্যাদিকং করিষ্যামীতি বুদ্ধ্যা: সমকালম্ একাকালম্ এব যথা তথা পুরস্তাৎ অগ্রে চাপধর: প্রাদুর্ভবন্ সন্, প্রজানাম্ জনানাম্। 'প্রজা স্যাৎ সন্ততৌ জনে' ইত্যমর:। অন্ত:শরীরেষু অন্ত:করণেষু। শরীর-শব্দেন ইন্দ্রিয়ং লক্ষ্যতে। অবিনয়মপি প্রত্যাদিদেশ মানসাপরাধমপি নিবা রয়ামাস ইত্যর্থ:। অন্যে তু বাক্কায়াপরাধমাত্রপ্রতিকর্ত্তার ইতি ভাব:॥

৩৯। প্রজাদের মনে কোনও পাপপ্রবৃত্তির উদয় হইবামাত্র সেই লোকনিয়ন্তা কার্ত্তবীর্য্য তৎক্ষণাৎ ধনুর্ধারণপূর্ব্বক উপস্থিত হইয়া তাহাদিগের হৃদয়গত পাপেরও দমন করিতেন।

**জ্যাবন্ধনিস্পন্দভুজেন যস্য বিনিশ্বসদ্বক্ত্রপরম্পরেণ।**
**কারাগৃহে নির্জ্জিতবাসবেন লঙ্কেশ্বরেণোষিতমা প্রসাদাৎ॥৪০**

৪০ অ:। জ্যাবন্ধনিস্পন্দভুজেন বিনিশ্বসদ্বক্ত্রপরম্পরেণ নির্জ্জিতবাসবেন লঙ্কেশ্বরেণ আ প্রসাদাৎ যস্য কারাগৃহে উষিতম্॥

৪০। জ্যায়া: মৌর্ব্ব্যা: বন্ধেন বন্ধনেন নিস্পন্দা: নিশ্চেষ্টা: ভুজা: যস্য তেন, বিনি:শ্বসন্তী জ্যাবন্ধোপরোধাৎ দীর্ঘং নিশ্বসন্তী বক্ত্রপরম্পরা দশমুখী যস্য তেন, নির্জ্জিতবাসবেন ইন্দ্রবিজয়িনা। অতেন্দ্রাদয়োঽপ্যনেন জিতপ্রায়া এবেতি ভাব:। লঙ্কেশ্বরেণ দশাস্যেন যস্য কার্ত্তবীর্য্যস্য কারাগৃহে বন্ধনাগারে। 'কারা স্যাদ্বন্ধনালয়ে' ইত্যমর:। আ প্রসাদাৎ অনুগ্রহপর্য্যন্তম্ উষিতং স্থিতম্। নপুংসকে ভাবে ক্ত:। এতৎপ্রসাদ এব তস্য মোক্ষোপায়ো ন তু স্বাস্ত্রমিতি ভাব:॥

পৌরাণিকী বার্ত্তা।—একদা নারীসখ: স্বভুজবলদৃপ্তো নর্ম্মদা-স্রোতসি জলকেলিনিরত: কার্ত্তবীর্য্য: দিগ্বিজয়নির্গতেন রাবণেন অভিযুক্ত: সন্ তং জিতবাসবং জিত্বা বদ্ধা চ জ্যা-বন্ধেন কারাগৃহে নিচিক্ষেপ। রাবণস্তু তস্য আ প্রসাদাৎ কারাগারে উবাসেতি।

৪০। বাসববিজয়ী লঙ্কেশ্বর যে কার্ত্তবীর্য্যের ধনুকের জ্যা বন্ধনে নিস্পন্দহস্ত হইয়া দশবদনে ঘন ঘন দীর্ঘনিশ্বাস পরিত্যাগ করিতে করিতে তাঁহার (কার্ত্তবীর্য্যের) সন্তোষোৎপাদন পর্য্যন্ত কারাগারে বাস করিয়াছিলেন।

**তস্যান্বয়ে ভূপতিরেষ জাত: প্রতীপ ইত্যাগমবৃদ্ধসেবী।**
**যেন শ্রিয়: সংশ্রয়দোষরূঢ়ং স্বভাবলোলেত্যযশ: প্রমৃষ্টম্॥৪১**

४१ अ:। आगमवृद्धसेवी प्रतीप इति एष: भूपति: तस्य अन्वये जात:। येन श्रिय: संश्रयदोषरूढ़ं स्वभावलोला इति अयश: प्रमृष्टम्॥

४१। आगमवृद्धसेवी श्रुतवृद्धसेवी प्रतीप इति ख्यात इति शेष:। एष: भूपति:, तस्य कार्त्तवीर्य्यस्य अन्वये वंशे जात:। येन प्रतीपेन संश्रयस्य आश्रयस्य पुंस: दोषै: व्यसनादिभि: रूढ़म् उत्पन्नं श्रिय: सम्बन्धि स्वभावलोला प्रकृतिचञ्चला इत्येवंरूपम् अयश: दुष्कीर्त्ति: प्रमृष्टं निरस्तम्। दुष्टाश्रयत्यागशीलाया: श्रिय: प्रकृतिचापलप्रवादो मूढ़जनपरिकल्पित इत्यर्थ:। अयन्तु दोषराहित्यान्न कदाचिदपि त्यज्येत इति भाव:॥

४१। সেই কার্ত্তবীর্য্যের বংশে বেদজ্ঞ পণ্ডিতসেবাপরায়ণ প্রতীপ নামক এই রাজা জন্মগ্রহণ করিয়াছেন। 'লক্ষ্মী স্বভাবতই চঞ্চলা' কুত্রাপি স্থির থাকেন না, আশ্রয়দোষ-সমুৎপন্ন এই অপযশ ইনিই দূরীভূত করিয়াছেন।

**आयोधने कृष्णगतिं सहायमवाप्य य: क्षत्त्रियकालरात्रिम्।**
**धारां शितां रामपरश्वधस्य सम्भावयत्युत्पलपत्रसाराम्॥४२**

४२ अ:। य: आयोधने कृष्णगतिं सहायम् अवाप्य क्षत्त्रियकालरात्रिं रामपरश्वधस्य शितां धाराम् उत्पलपत्रसारां सम्भावयति॥

४२। य: प्रतीप:, आयोधने युद्धे कृष्णगतिं कृष्णवर्त्मानम् अग्निं सहायम् अवाप्य, क्षत्त्रियाणां कालरात्रिं संहाररात्रिमित्यर्थ:। रामपरश्वधस्य जामदग्न्यपरशो: 'द्वयो: कुठार: स्वधिति: परशुश्च परश्वध:' इत्यमर:। शितां तीक्ष्णां धारां मुखम्। 'खड्गादीनाञ्च निशितमुखे धारा प्रकीर्त्तिता' इति विश्व:। उत्पलपत्रस्य सार इव सारो यस्या: तां तथाभूतां सम्भावयति मन्यते। एतन्नगरजिगीषयागतान् रिपून् स्वयमेव धक्ष्यामीति भगवता वैश्वानरेण दत्तवरोऽयं राजा। "दह्यन्ते च तथागता: शलभ" इति। "नीलस्य राज्ञो दुहिता बभूवातीवशोभना। साऽग्नि-होत्रमुपातिष्ठद्बोधनाय पितु: सदा॥" इत्यादिकञ्च महाभारतीय सभापर्व्वण्यनुसन्धेयम्।

४२। যিনি যুদ্ধকালে অগ্নিদেবের সাহায্য লাভ করিয়া পরশুরামের সেই ক্ষত্রিয়-কুল-কালরাত্রিস্বরূপ সুতীক্ষ্ণ পরশু-ধারাকেও পদ্মপত্রের ন্যায় অসার জ্ঞান করিয়া থাকেন।

**अस्याङ्कलक्ष्मीर्भव दीर्घबाहो-**
**र्माहिष्मतीवप्रनितम्बकाञ्चीम्।**

प्रासादजालैर्जलवेणिरम्यां
रेवां यदि प्रेक्षितुमस्ति कामः ॥ ४३

४३ अः। माहीष्मतीवप्रनितम्बकाञ्चीं जलवेणिरम्यां रेवां प्रासादजालैः प्रेक्षितुं यदि (ते) कामः अस्ति, दीर्घबाहोः अस्य अङ्कलक्ष्मीः भव ॥

४३। दीर्घबाहोः अस्य प्रतीपस्य अङ्कलक्ष्मीः भव, एनं वृणीष्वेत्यर्थः, अनेनायं विष्णुतुल्य इति ध्वन्यते। माहीष्मती नाम अस्य नगरी तस्याः वप्रः प्राकारः एव नितम्बः तस्य काञ्चीं रसनाभूतां जलानां वेण्याः प्रवाहेण रम्याम्। 'ओघः प्रवाहो वेणी च' इति हलायुधः। रेवां नर्म्मदां प्रासादजालैः गवाक्षैः। 'जालं समूह आनायो गवाक्षक्षारकावपि' इत्यमरः। प्रेक्षितुं कामः इच्छा अस्ति यदि ॥

৪৩। যদি তুমি প্রাসাদগবাক্ষ হইতে মাহীষ্মতী নগরীর প্রাকাররূপ নিতম্বদেশে মেখলাস্বরূপা সলিলপ্রবাহরমণীয়া রেবানদীকে দেখিতে ইচ্ছা কর, তাহা হইলে তুমি এই দীর্ঘবাহু রাজার অঙ্কলক্ষ্মী হও।

तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव।
शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्य्याप्तकलो नलिन्याः ॥४४

४४ अः। शरत्प्रमृष्टाम्बुधरोपरोधः पर्य्याप्तकलः शशी नलिन्याः इव सः क्षितीशः प्रकामं प्रियदर्शनः अपि तस्याः रुचये न बभूव ॥

४४। प्रकामं प्रियं प्रीतिकरं दर्शनं यस्य सः अपि दर्शनीयोऽपीत्यर्थः। सः क्षितीशः, शरदा प्रमृष्टाम्बुधरोपरोधः निरस्तमेघावरणः पर्य्याप्तकलः पूर्णकलः शशी नलिन्या इव तस्याः इन्दुमत्याः रुचये न बभूव, रुचिं नाजीजनदित्यर्थः। लोको भिन्नरुचिरिति भावः ॥

৪৪। মেঘাবরণনির্মুক্ত শারদীয় পূর্ণচন্দ্র যেমন পদ্মিনীর রুচিকর হয় না, তেমনি সেই রাজা অতিশয় প্রিয়দর্শন হইলেও ইন্দুমতীর রুচিকর হইলেন না।

सा शूरसेनाधिपतिं सुषेणमुद्दिश्य लोकान्तरगीतकीर्त्तिम्।
आचारशुद्धोभयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी ॥ ४५

४५ अः॥ लोकान्तरगीतकीर्त्तिम् आचारशुद्धोभयवंशदीपं शूरसेनाधिपतिं सुषेणम् उद्दिश्य, शुद्धान्तरक्ष्या सा कुमारी जगदे ॥

४५। लोकान्तरे स्वर्गादौ अपि गीतकीर्त्तिम्, आचारेण शुद्धयोः उभयोः वंशयोः मातापितृकुलयोः दीपं प्रकाशकम्। उभयवंशेत्यत्रोभयपदस्य-

নির্বাহঃ। শূরসেনানাং দেশানাম্ অধিপতিং সুষেণং নাম নৃপতিম্ উদ্দিশ্য অভিসন্ধায় শুদ্ধান্তরক্ষ্যা অন্তঃপুরপালিকয়া। কর্ম্মণ্যণ্, 'টিড্ঢাণঞ্' ইতি ঙীপ্। সা কুমারী জগদে ॥

৪৫। স্বর্গলোকেও যাঁহার যশ কীর্ত্তিত হইয়া থাকে, যিনি সদাচারপূত, উভয় বংশের (পিতৃকুলের ও মাতৃকুলের) দীপস্বরূপ, সেই শূরসেনাধিপতি সুষেণকে দেখাইয়া অন্তঃপুররক্ষিকা সুনন্দা রাজকুমারীকে বলিল।

**নীপান্বয়ঃ পার্থিব এষ যজ্বা গুণৈর্যমাশ্রিত্য পরস্পরেণ।**
**সিদ্ধাশ্রমং শান্তমিবৈত্য সত্ত্বৈর্নৈসর্গিকোঽপ্যুৎসসৃজে বিরোধঃ ॥ ৪৬**

৪৬ অঃ। যজ্বা এষঃ পার্থিবঃ নীপান্বয়ঃ শান্তং সিদ্ধাশ্রমম্ এত্য সত্ত্বৈরিব গুণৈঃ যম্ আশ্রিত্য পরস্পরেণ নৈসর্গিকঃ অপি বিরোধঃ উৎসসৃজে ॥

৪৬। যজ্বা বিধিবদিষ্টবান্। 'সুযজোর্ঙ্বনিপ্' ইতি ঙ্বনিপ্প্রত্যয়ঃ। এষঃ পার্থিবঃ, নীপো নাম অন্বয়োঽস্যেতি নীপান্বয়ঃ নীপবংশজঃ। যং সুষেণম্ আশ্রিত্য গুণৈঃ জ্ঞানমৌনাদিভিঃ শান্তং প্রসন্নং সিদ্ধাশ্রমম্ ঋষ্যাশ্রমম্ এত্য প্রাপ্য, সত্ত্বৈঃ গজসিংহাদিভিঃ প্রাণিভিরিব, নৈসর্গিকঃ স্বাভাবিকঃ পরস্পরেণ বিরোধঃ উৎসসৃজে ত্যক্তঃ ॥

৪৬। ইনি নীপবংশীয় রাজা; ইনি যথাবিধি যাগযজ্ঞের অনুষ্ঠান করিয়া থাকেন। জন্তুগণ যেমন শান্তরসাস্পদ সিদ্ধাশ্রমে বাস করতঃ পরস্পরের প্রতি স্বাভাবিক বৈরভাব পরিত্যাগ করিয়া থাকে, তেমনি জ্ঞান, মৌন, শক্তি, ক্ষমা প্রভৃতি পরস্পর বিরোধী গুণসকল ইঁহাকে আশ্রয় করিয়া পরস্পর বিরোধ পরিত্যাগ করিয়াছে।

**যস্যাত্মগেহে নয়নাভিরামা কান্তির্হিমাংশোরিব সন্নিবিষ্টা।**
**হর্ম্ম্যাগ্রসংরূঢ়তৃণাঙ্কুরেষু তেজোঽবিষহ্যং রিপুমন্দিরেষু ॥ ৪৭**

৪৭ অঃ। হিমাংশোঃ ইব নয়নাভিরামা কান্তিঃ যস্য আত্মগেহে সন্নিবিষ্টা, অবিষহ্যং তেজঃ (তু) হর্ম্ম্যাগ্রসংরূঢ়তৃণাঙ্কুরেষু রিপুমন্দিরেষু ॥ (সন্নিবিষ্টম্)

৪৭। হিমাংশোঃ কান্তিঃ চন্দ্রকিরণ ইব নয়নয়োঃ অভিরামা যস্য সুষেণস্য কান্তিঃ শোভা আত্মগেহে স্বভবনে সন্নিবিষ্টা সংক্রান্তা। অবিষহ্যং বিসোঢুমশক্যং তেজঃ প্রতাপস্তু হর্ম্ম্যাগ্রেষু ধনিকমন্দিরপ্রান্তেষু। 'হর্ম্ম্যাদি ধনিনাং বাসঃ' ইত্যমরঃ। সংরূঢ়াঃ তৃণাঙ্কুরাঃ যেষাং তেষু শূন্যেষু ইত্যর্থঃ। রিপুমন্দিরেষু শত্রুনগরেষু। 'মন্দিরং নগরে গৃহে' ইতি বিশ্বঃ। সন্নিবিষ্টম্। স্বজনাহ্লাদকো দ্বিষন্তপশ্চ ইতি ভাবঃ ॥

৪৭। ইনি নিজ ভবনে সুধাংশুর ন্যায় নয়নানন্দদায়িনী কান্তি বিস্তার করিয়া

থাকেন, কিন্তু ইঁহার অসহ্য তেজ রিপুনগরস্থ হর্ম্ম্যাবলীর অগ্রভাগে উদ্গত তৃণাঙ্কুর সকলে প্রকাশ পায় ॥

**যস্যাবরোধস্তনচন্দনানাং প্রক্ষালনাদ্বারিবিহারকালে ।**
**কলিন্দকন্যা মথুরাং গতাপি গঙ্গোর্ম্মিসংসক্তজলেব ভাতি॥ ৪৮**

৪৮ অঃ। যস্য বারিবিহারকালে, অবরোধস্তনচন্দনানাং প্রক্ষালনাৎ, মথুরাং গতা অপি কলিন্দকন্যা, গঙ্গোর্ম্মিসংসক্তজলা ইব ভাতি ॥

৪৮। যস্য সুষেণস্য বারিবিহারকালে জলক্রীড়াসময়ে অবরোধানাম্ অন্তঃপুরাঙ্গনানাং স্তনেষু চন্দনানাং মলয়জানাং প্রক্ষালনাৎ হেতোঃ, কলিন্দঃ নাম শৈলঃ তৎকন্যা যমুনা । 'কালিন্দী সূর্য্যতনয়া যমুনা শমনস্বসা' ইত্যমরঃ। মথুরা নাম অস্য রাজ্ঞঃ নগরী তাং গতা অপি, গঙ্গায়া বিপ্রকৃষ্টাপীত্যর্থঃ। মথুরায়াং গঙ্গাঽভাবং সূচয়ত্যপিশব্দঃ। কালিন্দীতীরে মথুরা লবণাসুরবধকালে শত্রুঘ্নেন নির্ম্মাস্যত ইতি বক্ষ্যতি তৎকথমধুনা মথুরাসম্ভব ইতি চিন্ত্যম্ । মথুরা মধুরাপুরীতি শব্দভেদঃ। গঙ্গায়াঃ ভাগীরথ্যাঃ ঊর্ম্মিভিঃ সংসক্তজলা ইব ভাতি ধবলচন্দনসংসর্গাৎ প্রয়াগাদন্যত্রাপ্যত্র গঙ্গাসঙ্গতেব ভাতীত্যর্থঃ। 'সিতাসিতে হি গঙ্গাযমুনে' ইতি ঘণ্টাপথঃ ॥

৪৮। জলবিহারকালে এই রাজার অন্তঃপুরকামিনীগণের স্তনচিহ্নিত চন্দনানুলেপন ধৌত করায়, যমুনানদী মথুরায় প্রবাহিত হইলেও জ্ঞান হয় যেন, যমুনার জল গঙ্গা-প্রবাহের সহিত মিলিত হইয়া শোভা পাইতেছে।

**ত্রস্তেন তার্ক্ষ্যাৎকিল কালিয়েন মণিং বিসৃষ্টং যমুনৌকসা যঃ ।**
**বক্ষঃস্থলব্যাপিরুচং দধানঃ সকৌস্তুভং হ্রেপয়তীব কৃষ্ণম্ ॥ ৪৯**

৪৯ অঃ। যঃ তার্ক্ষ্যাৎ ত্রস্তেন যমুনৌকসা কালিয়েন বিসৃষ্টং কিল বক্ষঃস্থলব্যাপিরুচং মণিং দধানঃ (সন্) সকৌস্তুভং কৃষ্ণং হ্রেপয়তি ইব ॥

৪৯। তার্ক্ষ্যাৎ গরুড়াৎ ত্রস্তেন, যমুনা ওকঃ স্থানং যস্য তেন কালিয়েন নাম নাগেন, বিসৃষ্টং কিল অভয়দাননিষ্ক্রয়ত্বেন দত্তং, কিলেতি ঐতিহ্যে, বক্ষঃস্থলব্যাপিরুচং মণিং দধানঃ যঃ সুষেণঃ সকৌস্তুভং কৃষ্ণং বিষ্ণুং হ্রেপয়তি ইব ব্রীড়য়তি ইব, 'অর্ত্তিহ্রী' ইত্যাদিনা পুগাগমঃ। কৌস্তুভমণিরপ্যুৎকৃষ্টোঽস্য মণিরিতি ভাবঃ

৪৯। গরুড়ভয়ে ভীত যমুনাবাসী কালিয় নাগ ইঁহার নিকট অভয়লাভ করিয়া প্রত্যুপকারস্বরূপ ইঁহাকে যে মণি দান করিয়াছেন, তাহার প্রভায় ইঁহার সমস্ত

বক্ষঃস্থল আলোকিত হইয়াছে এবং সেই মণি ধারণ করিয়া ইনি কৌস্তভধারী বিষ্ণুকেও যেন লজ্জা দিতেছেন।

**सम्भाव्य भर्त्तारममुं युवानं मृदुप्रवालोत्तरपुष्पशय्ये ।**
**वृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि! यौवनश्रीः ॥५०**

५० अः। सुन्दरि! अमुं युवानं भर्त्तारं सम्भाव्य मृदुप्रवालोत्तरपुष्पशय्ये चैत्ररथात् अनूने वृन्दावने यौवनश्रीः निर्विश्यताम् ॥

५०। युवानम् अमुं भर्त्तारं सम्भाव्य मत्वा पतित्वेनाङ्गीकृत्य इत्यर्थः। मृदुप्रवालोत्तरा उपरिप्रस्तारितकोमलपल्लवा पुष्पशय्या यस्मिन् तत् तस्मिन्, चैत्ररथात् कुवेरोद्यानात् अनूने वृन्दावने वृन्दावननामके उद्याने, हे सुन्दरि! यौवनश्रीः यौवनफलं निर्विश्यतां भुज्यताम् ॥

৫০। হে সুন্দরি! তুমি এই যুবাকে পতিত্বে বরণ করিয়া, কুবেরের চৈত্ররথ তুল্য বৃন্দাবন নামক উদ্যানে কোমল পল্লবাস্তরণমণ্ডিত পুষ্পশয্যায় নিজ যৌবনশোভাকে চরিতার্থ কর।

**अध्यास्य चाम्भःपृषतोक्षितानि**
**शैलेयगन्धीनि शिलातलानि ।**
**कलापिनां प्रावृषि पश्य नृत्यं**
**कान्तासु गोवर्द्धनकन्दरासु ॥ ५१**

५१ अः। कान्तासु गोवर्द्धनकन्दरासु, अम्भःपृषतोक्षितानि शैलेयगन्धीनि शिलातलानि अध्यास्य, प्रावृषि कलापिनां नृत्यं पश्य ॥

५१। किञ्च, प्रावृषि वर्षासु कान्तासु गोवर्द्धनस्य अद्रेः कन्दरासु दरीषु। 'दरी तु कन्दरो वा स्त्री' इत्यमरः। अम्भसः पृषतैः विन्दुभिः उक्षितानि सिक्तानि शिलायां भवं शैलेयम्। 'शिलाजतु च शैलेयम्' इति यादवः। यद्वा, शिलापुष्पाख्यः ओषधिविशेषः। 'कालानुसार्य्यवृद्धाश्मपुष्पशीतशिवानि तु। शैलेयम्' इत्यमरः। 'शिलाया ढः' इत्यत्र शिलाया इति योगविभागादिवार्थे ढप्रत्ययः। तद्गन्धवन्ति शैलेयगन्धीनि शिलातलानि अध्यास्य अधिष्ठाय कलापिनां वर्हिणां नृत्यं पश्य ॥

৫১। এবং বর্ষাকালে গোবর্দ্ধনগিরির রমণীয় কন্দরে জলবিন্দুসিক্ত শৈলেয়গন্ধযুক্ত শিলাতলে উপবেশন করিয়া ময়ূরগণের নৃত্য দর্শন কর।

**नृपं तमावर्त्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री ।**
**महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव ॥ ५२**

৫২ অ: । আবর্তমনোজ্ঞনাভি: অন্যবধূ: ভবিত্রী সা সাগরগামিনী স্রোতোবহা মার্গবশাৎ উপেতং মহীধরম্ ইব, তং নৃপং অত্যগাৎ ॥

৫২ । 'স্যাদাবর্ত্তোঽম্ভসাং ভ্রমম্' ইত্যমর: । আবর্ত্তমনোজ্ঞা নাভির্যস্যা: সা, ইদঞ্চ নদীসাম্যার্থমুক্তম্ । অন্যবধূ: অন্যপত্নী ভবিত্রী ভাবিনী সা কুমারী, তং নৃপং, সাগরগামিনী সাগরং গন্ত্রী স্রোতোবহা নদী মার্গবশাৎ উপেতং প্রাপ্তং মহীধরং পর্বতম্ ইব, অত্যগাৎ অতীত্য গতা ॥

৫২। আবর্ত্তরূপ মনোহর নাভি দ্বারা শোভিতা, সাগরগামিনী স্রোতস্বতী যেরূপ পথিমধ্যে অবস্থিত পর্ব্বতকে অতিক্রম করিয়া সাগরাভিমুখে চলিয়া যায়, সেইরূপ অন্য জনের ভাবিনী পত্নী, আবর্ত্তবৎ মনোহর নাভিসম্পন্না ইন্দুমতী সেই রাজাকে অতিক্রম করিয়া গমন করিলেন।

**অথাঙ্গদাশ্লিষ্টভুজং ভুজিষ্যা হেমাঙ্গদং নাম কলিঙ্গনাথম্ ।**
**আসেদুষীং সাদিতশত্রুপক্ষং বালামবালেন্দুমুখীং বভাষে ॥৫৩**

৫৩ অ: । অথ ভুজিষ্যা অঙ্গদাশ্লিষ্টভুজং সাদিতশত্রুপক্ষং হেমাঙ্গদং নাম কলিঙ্গনাথম্ আসেদুষীম্ অবালেন্দুমুখীং বালাং বভাষে ॥

৫৩ । অথ ভুজিষ্যা কিঙ্করী সুনন্দা । 'ভুজিষ্যা কিঙ্করী মতা' ইতি হলায়ুধ: । অঙ্গদাশ্লিষ্টভুজং কেয়ূরনদ্ধবাহুং সাদিতশত্রুপক্ষং বিনাশিতশত্রুবর্গং হেমাঙ্গদং নাম কলিঙ্গনাথম্ আসেদুষীম্ আসন্নাম্ অবালেন্দুমুখীং পূর্ণেন্দুমুখীং বালাম্ ইন্দুমতীং বভাষে ॥

৫৩। অনন্তর কিঙ্করী সুনন্দা, অঙ্গদসমলঙ্কৃত ভুজসম্পন্ন, বিপক্ষপক্ষ-বিনাশন, কলিঙ্গদেশাধিপতি হেমাঙ্গদ নামক নৃপতির সন্নিধানে পূর্ণেন্দুমুখী ইন্দুমতীকে লইয়া গিয়া বলিল।

**অসৌ মহেন্দ্রাদ্রিসমানসার: পতির্মহেন্দ্রস্য মহোদধেশ্চ ।**
**যস্য ক্ষরৎসৈন্যগজচ্ছলেন যাত্রাসু যাতীব পুরো মহেন্দ্র: ॥৫৪**

৫৪ অ: । মহেন্দ্রাদ্রিসমানসার: অসৌ মহেন্দ্রস্য মহোদধেশ্চ পতি:, যস্য যাত্রাসু ক্ষরৎসৈন্যগজচ্ছলেন মহেন্দ্র: পুর: যাতি ইব ॥

৫ । মহেন্দ্রাদ্রে: সমানসার: তুল্যসত্ত্ব: অসৌ হেমাঙ্গদ:, মহেন্দ্রস্য নাম কুলপর্বতস্য মহোদধেশ্চ পতি: স্বামী । মহেন্দ্রমহোদধী এবাস্য গিরিজলদুর্গে ইতি ভাব: । যস্য যাত্রাসু ক্ষরতাং মদস্রাবিণাং সৈন্যগজানাং ছলেন মহেন্দ্র: মহেন্দ্রাদ্রি: পুর: অগ্রে যাতি ইব ; অদ্রিকল্পা অস্য গজা ইত্যর্থ: ॥

৫৪। মহেন্দ্রপর্ব্বতের ন্যায় সারসম্পন্ন এই রাজা; মহেন্দ্রপর্ব্বত ও মহাসাগরের অধীশ্বর; ইঁহার যুদ্ধযাত্রাকালে মহীধর মহেন্দ্রই যেন মদস্রাবী গজসৈন্য ব্যপদেশে অগ্রে অগ্রে গমন করিয়া থাকেন।

ज्याघातरेखे सुभुजो भुजाभ्यां बिभर्त्ति यश्चापभृतां पुरोगः ।
रिपुश्रियां साञ्जनवाष्पसेके बन्दीकृतानामिव पद्धती द्वे ॥५५

५५ अः । सुभुजः चापभृतां पुरोगः यः भुजाभ्यां बन्दीकृतानां रिपुश्रियां साञ्जनवाष्पसेके पद्धती इव द्वे ज्याघातरेखे बिभर्त्ति ॥

५५। सुभुजः चापभृतां पुरोगः धनुर्धराग्रेसरः यः बन्दीकृतानां प्रगृहीतानाम्। 'प्रग्रहोपग्रहौ बन्द्याम्' इत्यमरः। रिपुश्रियां साञ्जनो वाष्पसेकः ययोस्ते कज्जलमिश्राश्रुसिक्ते इत्यर्थः। पद्धती इव द्वे ज्याघातानां मौर्वीकिणानां रेखे राजो भुजाभ्यां बिभर्त्ति। द्विवचनात् सव्यसाचित्वं गम्यते। रिपुश्रियां भुजाभ्यामेवाहरणात् तत्तद्रेखयोस्तन्मार्गत्वेनोत्प्रेक्षा, तयोः श्यामत्वात् साञ्जनाश्रुसेकोक्तिः ॥

৫৫। মনোহর ভুজযুগলশালী ধনুর্দ্ধরাগ্রগণ্য এই ভূপতি স্বীয় ভুজদ্বয়ে যেন বিপক্ষলক্ষ্মীর কজ্জলযুক্ত নেত্রজলসংসিক্ত পদ্ধতিদ্বয়ের ন্যায় দুইটী জ্যাঘাত রেখা ধারণ করিয়াছেন।

यमात्मनः सद्मनि सन्निकृष्टो मन्द्रध्वनित्याजितयामतूर्य्यः ।
प्रासादवातायनदृश्यवीचिः प्रबोधयत्यर्णव एव सुप्तम् ॥ ५६

५६ अः । आत्मनः सद्मनि सुप्तं यं सन्निकृष्टः प्रासादवातायनदृश्यवीचिः मन्द्रध्वनित्याजितयामतूर्य्यः अर्णवः एव प्रबोधयति ॥

५६। आत्मनः सद्मनि सुप्तं यं हेमाङ्गदं, सन्निकृष्टः समीपस्थः अतएव प्रासादवातायनैः दृश्यवीचिः मन्द्रेण गम्भीरेण। 'मन्द्रस्तु गम्भीरे' इत्यमरः। ध्वनिना त्याजितं विवर्जितं यामस्य तूर्य्यं प्रहरावसानसूचकं वाद्यं येन सः तथोक्तः। 'द्वौ यामप्रहरौ समौ' इत्यमरः। अर्णवः एव प्रबोधयति। अर्णवस्यैव तूर्य्यकार्य्यकारित्वात् तद्वैयर्थ्यमित्यर्थः। समुद्रस्य अपि सेव्यः किमन्येषामिति भावः ॥

৫৬। যাহার তরঙ্গমালা ইঁহার প্রাসাদ গবাক্ষ হইতে দৃষ্ট হয়, সেই সন্নিহিত সমুদ্রই, স্বকীয় সদনে নিদ্রিত এই রাজাকে প্রাতঃকালে গভীর কল কল শব্দে জাগরিত করে, ইঁহাকে জাগাইবার জন্য প্রহরাবসানসূচক তূর্য্যধ্বনির প্রয়োজন হয় না।

अनेन सार्द्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥ ५७

५७ अः। तालीवनमर्म्मरेषु अम्बुराशेः तीरेषु, द्वीपान्तरानीतलवङ्गपुष्पैः मरुद्भिः अपाकृतस्वेदलवा ( सती ) अनेन सार्द्धं विहर ॥

५७। अनेन राज्ञा सार्द्धं तालीवनैः मर्म्मरेषु ध्वनत्सु। 'अथ मर्म्मरः। स्वनिते वस्त्रपर्णानाम्' इत्यमरवचनात् गुणपरस्यापि मर्म्मरशब्दस्य गुणिपरत्वं प्रयोगादवसेयम् । अम्बुराशेः समुद्रस्य तीरेषु द्वीपान्तरेभ्यः आनीतानि लवङ्गपुष्पाणि देवकुसुमानि यैः तैः। 'लवङ्गं देवकुसुमम्' इत्यमरः। मरुद्भिः वातैः अपाकृताः प्रशमिताः स्वेदस्य लवाः बिन्दवः यस्याः सा तथाभूता सती, विहर क्रीड़ ॥

৫৭। তুমি এই নৃপতির সহিত তালীবনের মর্ম্মরশব্দযুক্ত সাগরতীরে বিহার কর; তথায় দ্বীপান্তর হইতে লবঙ্গপুষ্পসৌরভবাহী সমীরণ তোমার স্বেদবিন্দু সকল অপনোদন করিবে।

**प्रलोभिताप्याकृतिलोभनीया विदर्भराजावरजा तयैवम् ।**
**तस्मादपावर्त्तत दूरकृष्टा नीत्येव लक्ष्मीः प्रतिकूलदैवात् ॥ ५८**

५८ अः। आकृतिलोभनीया विदर्भराजावरजा तया (सुनन्दया) एवं प्रलोभिता अपि, नीत्या दूरकृष्टा लक्ष्मीः प्रतिकूलदैवात् ( पुंसः ) इव तस्मात् अपावर्त्तत ॥

५८। आकृत्या रूपेण लोभनीया आकर्षणीया न तु वर्णनमात्रेण इत्यर्थः। विदर्भराजावरजा भोजानुजा इन्दुमती, तया सुनन्दया एवं प्रलोभिता अपि प्रणोदिता अपि, नीत्या पुरुषकारेण दूरकृष्टा दूरमानीता लक्ष्मीः प्रतिकूलं दैवं यस्य तस्मात् पुंस इव, तस्मात् हेमाङ्गदात् अपावर्त्तत प्रतिनिवृत्ता ॥

৫৮। যেমন ভাগ্যলক্ষ্মী পুরুষকার দ্বারা বহুদূর হইতে আকৃষ্ট হইলেও, প্রতিকূল দৈব পুরুষের নিকট হইতে অপসৃত হইয়া থাকেন, সেইরূপ সুনন্দা কর্ত্তৃক প্রলোভিত-হইলেও প্রলোভনজনক রূপসম্পন্না বিদর্ভরাজানুজা সেই রাজার নিকট হইতে প্রত্যাবর্ত্তন করিলেন।

**अथोरगाख्यस्य पुरस्य नाथं**
**दौवारिकी देवसरूपमेत्य ।**
**इतश्चकोराक्षि विलोकयेति**
**पूर्व्वानुशिष्टां निजगाद भोज्याम् ॥ ५९**

५९ अः। अथ दौवारिकी ( सुनन्दा ) देवसरूपम् उरगाख्यस्य पुरस्य नाथम् एत्य, 'चकोराक्षि, इतः विलोकय' इति पूर्व्वानुशिष्टां भोज्यां निजगाद ॥

५९। अथ द्वारे नियुक्ता दौवारिकी सुनन्दा। 'तत्र नियुक्तः' इति ठक्प्रत्ययः। 'द्वारादीनाञ्च' इति औ-आगमः। आकारेण देवसरूपं देवतुल्यम् उरगाख्यस्य पुरस्य पाण्ड्यदेशे कान्यकुब्जतीरवर्त्तिनागपुरस्य नाथम् एत्य प्राप्य, हे चकोराक्षि! इतो विलोकय इति पूर्वानुशिष्टां पूर्वमुक्तां भोजस्य राज्ञः गोत्रापत्यं स्त्रियं भोज्याम् इन्दुमतीम्। 'कौड्यादिभ्यश्च' इत्यत्र भोजात् क्षत्रियादित्युपसंख्यानात् ष्यङ्प्रत्ययः, 'यङश्चाप्' इति चाप्। निजगाद इतो विलोकयेति पूर्वमुक्त्वा पश्चाद्वक्तव्यं निजगादेत्यर्थः॥

৫৯। অনন্তর, দ্বারপালিকা সুনন্দা দেবোপমকান্তি নাগপুরাধিপতির নিকট আসিয়া ভোজকন্যাকে বলিল, "অয়ি চকোরলোচনে! এদিকে চাহিয়া দেখ!" ইহা বলিয়া সে (সবিস্তারে) কহিতে লাগিল।

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥६०

६० अः। अंसार्पितलम्बहारः हरिचन्दनेन क्लृप्ताङ्गरागः अयं पाण्ड्यः, बालातपरक्तसानुः सनिर्झरोद्गारः अद्रिराज इव आभाति॥

६०। अंसयोः अर्पिताः, लम्बन्ते इति लम्बाः हाराः यस्य सः, हरिचन्दनेन गोशीर्षाख्येन चन्दनेन। 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्' इत्यमरः। क्लृप्ताङ्गरागः सिद्धानुलेपनः अयं पाण्डूनां जनपदानां राजा पाण्ड्यः॥ 'पाण्डोर्जनपदशब्दात् क्षत्रियात् ड्यण्वक्तव्यः' इति ड्यण्प्रत्ययः। तस्य राजन्यपत्यवदिति वचनात्। बालातपेन रक्ताः अरुणाः सानवः यस्य सः सनिर्झरोद्गारः प्रवाहस्यन्दनमण्डितः। 'वारिप्रवाहो निर्झरो झरः' इत्यमरः। अद्रिराज इव आभाति॥

৬০। এই পাণ্ড্যদেশাধিপতি, স্কন্ধদেশে লম্বমান হার ধারণ এবং হরিচন্দন দ্বারা অঙ্গরাগ রচনা করিয়া নির্ঝরধারাসমন্বিত, তরুণতপনরঞ্জিত সানুযুক্ত গিরিরাজের ন্যায় শোভা পাইতেছেন।

विन्ध्यस्य संस्तम्भयिता महाद्रेर्निःशेषपीतोज्झितसिन्धुराजः।
प्रीत्याश्वमेधावभृथार्द्रमूर्त्तेः सौस्नातिको यस्य भवत्यगस्त्यः॥६१

६१ अः। महाद्रेः विन्ध्यस्य संस्तम्भयिता निःशेषपीतोज्झितसिन्धुराजः अगस्त्यः प्रीत्या अश्वमेधावभृथार्द्रमूर्त्तेः यस्य सौस्नातिकः भवति॥

६२। विन्ध्यस्य नाम्नः महाद्रेः तपनमार्गनिरोधाय वर्द्धमानस्य इति शेषः। संस्तम्भयिता निवारयिता, निःशेषं पीतः उज्झितः पुनस्त्यक्तः सिन्धुराजः समुद्रः येन सः अगस्त्यः, अश्वमेधस्य अवभृथे दीक्षान्ते कर्म्मणि।

'दीक्षान्तोऽवभृथो यज्ञः' इत्यमरः। आर्द्रमूर्त्तेः स्नातस्य इत्यर्थः। यस्य पाण्डरस्य प्रीत्या स्नेहेन, न तु दाक्षिण्येन, सुस्नातं पृच्छतीति सौस्नातिकः भवति। 'पृच्छतौ सुस्नातादिभ्यः' इत्युपसंख्यानात् ठक्॥

पौराणिकी वार्त्ता —पुरा किल विन्ध्यगुरुभगवान् अगस्त्य इन्द्रादिसुरगणैः प्रार्थितः सन् सूर्य्यमार्गनिरोधाय वर्द्धितवपुषः विन्ध्यगिरेः समीपमाजगाम, प्रणनाम तं गुरुं विन्ध्यः; कुम्भयोनिस्तु "मम प्रत्यावर्त्तनं यावत् त्वमेतदवस्थ एव तिष्ठ" इत्युक्त्वा अपुनर्निवृत्तये दक्षिणाशामाश्रितवान्।

৬১। যিনি বিন্ধ্যগিরির অতিবৃদ্ধি নিবারণ করিয়াছিলেন, যিনি সমুদ্রকে নিঃশেষরূপে পান করিয়া আবার উদ্গার করিয়াছিলেন,সেই অগস্ত্য, এই রাজা অশ্বমেধযজ্ঞান্তে স্নান করিয়া উঠিলে,প্রীতিবশতঃ ইহাঁর শুভ স্নানের বিষয় জিজ্ঞাসা করিয়া থাকেন।

**अस्त्रं हरादाप्तवता दुरापं येनेन्द्रलोकावजयाय दृप्तः।**
**पुरा जनस्थानविमर्द्दशङ्की सन्धाय लङ्काधिपतिः प्रतस्थे॥६२**

६२ अः। पुरा जनस्थानविमर्द्दशङ्की दृप्तः लङ्काधिपतिः हरात् दुरापम् अस्त्रम् आप्तवता येन सन्धाय, इन्द्रलोकावजयाय प्रतस्थे॥

६२। पुरा पूर्व्वम् जनस्थानस्य खरालयस्य विमर्द्दशङ्की दृप्तः उद्धतः लङ्काधिपतिः रावणः, दुरापं दुर्लभम् अस्त्रं ब्रह्मशिरोनामकं, हरात् आप्तवता येन पाण्ड्येन सन्धाय इन्द्रलोकावजयाय इन्द्रलोकं जेतुं प्रतस्थे। इन्द्रविजयिनो रावणस्यापि विजेता इत्यर्थः॥

৬২। ইনি মহাদেবের নিকট ব্রহ্মশিরোনামক দুর্লভ অস্ত্র লাভ করিয়াছেন; সেই অস্ত্রপ্রভাবে জনস্থানের উচ্ছেদ আশঙ্কায় গর্ব্বিত রাবণও অগ্রে ইহাঁর সহিত সন্ধি করিয়া পশ্চাৎ ইন্দ্রলোক জয় করিতে গিয়াছিল।

**अनेन पाणौ विधिवद्गृहीते महाकुलीनेन महीव गुर्व्वी।**
**रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः॥६३**

६३ अः। महाकुलीनेन अनेन पाणौ विधिवत् गृहीते (सति) त्वम्, गुर्व्वी मही इव रत्नानुविद्धार्णवमेखलायाः दक्षिणस्याः दिशः सपत्नी भव॥

६३। महाकुलीनेन महाकुले जातेन। 'महाकुलादञ्खञौ' इति खञ्प्रत्ययः। अनेन पाण्ड्येन पाणौ त्वदीये विधिवत् यथाशास्त्रं गृहीते सति, गुर्व्वी गुरुः। 'वोतो गुणवचनात्' इति ङीष्। मही इव, रत्नैः अनुविद्धः व्याप्तः अर्णव एव मेखला यस्याः तस्याः। इदं विशेषणं मह्यामिन्दुमत्याञ्च योज्यम्। दक्षिणस्याः दिशः सपत्नी भव। अनेन पत्न्यन्तराभावो ध्वन्यते॥

৬৩। মহাবংশসম্ভূত এই রাজার সহিত বিধানানুসারে পরিণীতা হইয়া তুমিও মহতী মহীর ন্যায়, রত্নাকর-মেখলা দক্ষিণদিকের সপত্নী হও।

**ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु।**
**तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु ॥६४**

६४ अः। ताम्बूलवल्लीपरिणद्धपूगासु एलालतालिङ्गितचन्दनासु तमालपत्रास्तरणासु मलयस्थलीषु शश्वत् रन्तुं प्रसीद॥

६४। ताम्बूलवल्लीभिः नागवल्लीभिः परिणद्धाः परिवद्धाः पूगाः क्रमुकाः यासु तासु। 'ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि' इति, 'घोण्टा तु पूगः क्रमुकः' इति च अमरः। एलालताभिः आलिङ्गिताः चन्दनाः मलयजाः यासु तासु। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः। तमालस्य तापिच्छस्य पत्राणि एव आस्तरणानि यासु तासु। 'कालस्कन्धस्तमालः स्यात् तापिच्छोऽपि' इत्यमरः। मलयस्थलीषु शश्वत् मुहुः सदा वा रन्तुं प्रसीद अनुकूला भव॥

৬৪। তুমি তাম্বূলবল্লীপরিবেষ্টিত পূগবৃক্ষবিরাজিত, এলালতালিঙ্গিত-চন্দনক্রম-শোভিত তমালদলসমাকীর্ণ মলয়পর্ব্বতপ্রদেশে নিরন্তর বিহার করিতে সম্মতা হও।

**इन्दीवरश्यामतनुर्नृपोऽसौ त्वं रोचनागौरशरीरयष्टिः।**
**अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥६५**

६५ अः। असौ नृपः इन्दीवरश्यामतनुः, त्वं रोचनागौरशरीरयष्टिः; (अतएव) तडित्तोयदयोः इव, वां योगः अन्योन्यशोभापरिवृद्धये अस्तु॥

५५। असौ नृपः, इन्दीवरश्यामतनुः, त्वं रोचना गोरोचना इव गौरी शरीरयष्टिः यस्याः सा, ततः तडित्तोयदयोः विद्युन्मेघयोः इव वां युवयोः योगः समागमः अन्योन्यशोभायाः परिवृद्धये अस्तु॥

৬৫। এই রাজা নীলপদ্মের ন্যায় শ্যামকলেবর এবং তুমিও গোরোচনার ন্যায় গৌরাঙ্গী; বিদ্যুৎ ও মেঘের সমাগমের ন্যায় তোমাদের উভয়ের সম্মিলন পরস্পরের শোভা বৃদ্ধির নিমিত্ত হউক।

**स्वसुर्विदर्भाधिपतेस्तदीयो लेभेऽन्तरं चेतसि नोपदेशः।**
**दिवाकरादर्शनबद्धकोशे नक्षत्रनाथांशुरिवारविन्दे ॥६६**

६६ अः। दिवाकरादर्शनबद्धकोशे अरविन्दे नक्षत्रनाथांशुः इव, तदीयः उपदेशः विदर्भाधिपतेः स्वसुः चेतसि अन्तरं न लेभे॥

६६। विदर्भाधिपतेः भोजस्य स्वसुः इन्दुमत्याः चेतसि तदीयः सुनन्दा-

सम्बन्धी उपदेशः वाक्यं दिवाकरस्य अदर्शनेन बद्धकोशे मुकुलिते अरविन्दे नक्षत्रनाथांशुः चन्द्रकिरणः इव अन्तरम् अवकाशं न लेभे ॥

৬৬। সূর্য্যের অদর্শনে মুদ্রিত পদ্মের মধ্যে যেমন চন্দ্রকিরণ প্রবেশ করিতে পারে না, তেমন বিদর্ভরাজভগিনী ইন্দুমতীর হৃদয়েও সুনন্দার উপদেশ প্রবিষ্ট হইল না।

**सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।**
**नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥६७**

६७ अः। पतिंवरा सा, रात्रौ सञ्चारिणी दीपशिखा इव, यं यं व्यतीयाय, सः सः भूमिपालः नरेन्द्रमार्गाट्ट इव विवर्णभावं प्रपेदे ॥

६७। पतिंवरा सा इन्दुमती, रात्रौ सञ्चारिणी दीपशिखा इव, यं यं भूपालं व्यतीयाय अतीत्य गता, सः सः भूमिपालः स सर्व्व इत्यर्थः। 'नित्य-वीप्सयोः' इति वीप्सायां द्विर्वचनम्। नरेन्द्रमार्गे राजपथे अट्टाख्यः गृह-भेदः इव। 'स्यादट्टः क्षौममस्त्रियाम्' इत्यमरः। विवर्णभावं विच्छाय-त्वम् अट्टस्तु तमोवृतत्वं प्रपेदे ॥

৬৭। রাত্রিকালে রাজপথে কেহ প্রদীপ লইয়া গেলে সেই প্রদীপালোক রাজ-পথের যে যে অট্টালিকা ছাড়াইয়া যায়, সেই সেই অট্টালিকা যেমন অন্ধকারে নিমগ্ন হয়, তেমনি সেই স্বয়ংবরা ইন্দুমতী যে যে রাজাকে অতিক্রম করিয়া গেলেন, সেই সেই রাজাই দুঃখান্ধকারে নিমগ্ন হইল।

**तस्यां रघोः सूनुरुपस्थितायां**
**वृणीत मां नेति समाकुलोऽभूत् ।**
**वामेतरः संशयमस्य बाहुः**
**केयूरबन्धोच्छ्वसितैर्नुनोद ॥६८**

६८ अः। तस्याम् उपस्थितायां रघोः सूनुः, 'मां वृणीत न वा' इति समाकुलः अभूत्, वामेतरः बाहुः केयूरबन्धोच्छ्वसितैः अस्य संशयं नुनोद ॥

६८। तस्याम् इन्दुमत्याम् उपस्थितायाम् आसन्नायां सत्यां रघोः सूनुः अजः, 'मां वृणीत न वा' इति समाकुलः संशयितः अभूत्। अथ अस्य अजस्य वामेतरः वामात् इतरः दक्षिणः बाहुः केयूरं बध्यते अत्र इति केयूरबन्धः अङ्गदस्थानं तस्य उच्छ्वसितैः स्फुरणैः संशयं नुनोद ॥

৬৮। ইন্দুমতী সমীপবর্ত্তিনী হইলে, রঘুকুমার অজ,—ইনি আমাকে বরণ করিবেন কিনা, এই আশঙ্কায় ব্যাকুল হইলেন; কিন্তু তদীয় দক্ষিণ বাহুর কেয়ূর-বন্ধনস্থান বারংবার স্পন্দিত হইয়া তাঁহার সে সংশয় দূর করিল।

तं प्राप्य सर्वावयवानवद्यं
व्यावर्त्ततान्योपगमात् कुमारी।
न हि प्रफुल्लं सहकारमेत्य
वृक्षान्तरं काङ्क्षति षट्पदाली ॥६९

६९ अ:। कुमारी सर्व्वावयवानवद्यं तं प्राप्य अन्योपगमात् व्यावर्त्तत, हि षट्पदाली प्रफुल्लं सहकारम् एत्य, वृक्षान्तरं न काङ्क्षति ॥

६९। कुमारी, सर्वेषु अवयवेषु अनवद्यम् अदोषम् तम् अजं प्राप्य अन्योपगमात् राजान्तरोपगमात् व्यावर्त्तत निवृत्ता। तथाहि—षट्पदाली भृङ्गावलिः, प्रफुल्लतीति प्रफुल्लं विकसितं पुष्पितमित्यर्थः। प्रपूर्वात् फुल्लतेः पचाद्यच्, फलतेस्तु प्रफुल्तमिति पठितव्यम्, 'अनुपसर्गात्' इति निषेधादिति उभयथापि न कदाचिदनुपपत्तिरित्युक्तं प्राक्। सहकारं चूतविशेषम् एत्य। 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः। वृक्षान्तरं न काङ्क्षति। न हि सर्वोत्कृष्टवस्तुलाभेऽपि वस्त्वन्तरस्याभिलाषः स्यादित्यर्थः।

৬৯। রাজকুমারী ইন্দুমতী সর্ব্বাঙ্গসুন্দর রঘুকুমারকে পাইয়া অন্য রাজার নিকট গমন করিতে ক্ষান্ত হইলেন; কারণ—বিকসিত চূততরুকে পাইলে ভ্রমররাজি আর অন্য বৃক্ষের কামনা করে না।

तस्मिन् समावेशितचित्तवृत्तिमिन्दुप्रभामिन्दुमतीमवेक्ष्य।
प्रचक्रमे वक्तुमनुक्रमज्ञा सविस्तरं वाक्यमिदं सुनन्दा ॥७०

७० अ:। अनुक्रमज्ञा सुनन्दा, इन्दुप्रभाम् इन्दुमतीं तस्मिन् समावेशितचित्तवृत्तिम् अवेक्ष्य, सविस्तरम् इदं वाक्यं वक्तुं प्रचक्रमे ॥

७०। तस्मिन् अजे समावेशिता संक्रामिता चित्तवृत्तिः यया ताम्, इन्दोः प्रभा इव प्रभा यस्याः ताम्, आह्लादकत्वादिन्दुसाम्यम्। इन्दुमतीम् अवेक्ष्य अनुक्रमज्ञा वाक्यपौर्वापर्य्याभिज्ञा सुनन्दा, इदं वक्ष्यमाणं सविस्तरं सप्रपञ्चम्। 'प्रथने वावशब्दे' इति घञो निषेधात् 'ऋदोरप्' इत्यप् प्रत्ययः। 'विस्तरो विग्रहो व्यासः स च शब्दस्य विस्तरः' इत्यमरः। वाक्यं वक्तुं प्रचक्रमे ॥

৭০। বচনবিন্যাসচতুরা সুনন্দা, চন্দ্রের ন্যায় প্রভাশালিনী ইন্দুমতীকে তাঁহাতেই নিবিষ্টচিত্তা দেখিয়া, সবিস্তারে এইরূপ বলিতে আরম্ভ করিল;—

इक्ष्वाकुवंश्यः ककुदं नृपाणां
ककुत्स्थ इत्याहितलक्षणोऽभूत् ।
काकुत्स्थशब्दं यत उन्नतेच्छाः
श्लाघ्यं दधत्युत्तरकोशलेन्द्राः ॥७१

७१ अ: । इक्ष्वाकुवंश्यः नृपाणां ककुदम् आहितलक्षणः ककुत्स्थः इति (राजा) अभूत्, उन्नतेच्छाः उत्तरकोशलेन्द्राः यतः श्लाघ्यं काकुत्स्थशब्दं दधति ॥

७१ । इक्ष्वाकोः मनुपुत्रस्य वंश्यः वंशे भवः, नृपाणां ककुदं श्रेष्ठः । 'ककुच्च ककुदं श्रेष्ठे वृषांसे राजलक्ष्मणि' इति विश्वः । आहितलक्षणः प्रख्यातगुणः । 'गुणैः प्रतीते तु कृतलक्षणाहितलक्षणौ' इत्यमरः । ककुदि वृषांसे तिष्ठतीति ककुत्स्थः इति प्रसिद्धः कश्चित् राजा अभूत्, यतः ककुत्स्थात् आरभ्य उन्नतेच्छाः महाशयाः । 'महेच्छस्तु महाशयः' इत्यमरः । उत्तरकोशलेन्द्राः राजानः दिलीपादयः, श्लाघ्यं प्रशस्तं ककुत्स्थस्य अपत्यं पुमान् काकुत्स्थः इति शब्दं संज्ञां दधति बिभ्रति । तन्नामसंस्पर्शोऽपि वंशस्य कीर्त्तिकर इति भावः । पुरा किल पुरञ्जयो नाम साक्षाद्भगवतो विष्णोरंशावतारः कश्चिदैक्ष्वाको राजा देवैः सह समयबन्धेन देवासुरयुद्धे महोक्षरूपधारिणो महेन्द्रस्य ककुदि स्थित्वा पिनाकिलीलया निखिलमसुरकुलं निहत्य ककुत्स्थसंज्ञां लेभे इति पौराणिकी कथानुसन्धेया वक्ष्यते चायमेवार्थ उत्तरश्लोके ॥

৭১ । প্রখ্যাতগুণসম্পন্ন, নৃপশ্রেষ্ঠ, ককুৎস্থনামে ইক্ষ্বাকুবংশীয় এক রাজা ছিলেন ; মহাত্মা উত্তরকোশলেশ্বরগণ যে ককুৎস্থ হইতে 'কাকুৎস্থ' এই শ্লাঘনীয় উপাধি ধারণ করিয়া থাকেন ।

महेन्द्रमास्थाय महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः ॥७२

७२ अ: । यः संयति महोक्षरूपं महेन्द्रम् आस्थाय प्राप्तपिनाकिलीलः बाणैः असुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः चकार ॥

७२ । यः ककुत्स्थः संयति युद्धे महान् उक्षा महोक्षः । 'अचतुर' इत्यादिना निपातः । तस्य रूपम् इव रूपं यस्य तं महेन्द्रम् आस्थाय आरुह्य, अतएव प्राप्ता पिनाकिनः ईश्वरस्य लीला येन सः तथोक्तः सन्, बाणैः असुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः निवृत्तपत्ररचनाः चकार, तद्भर्तॄनसुरानवधीदित्यर्थः । न हि विधवाः प्रसाध्यन्ते इति भावः ॥

৭২। যে ককুৎস্থ যুদ্ধসময়ে মহাবৃষরূপী মহেন্দ্রের পৃষ্ঠে আরোহণ করিয়া শিব-মূর্ত্তির লীলা অনুকরণপূর্ব্বক বাণ দ্বারা অসুরনারীগণের গণ্ডস্থলে ( বৈধব্য ঘটনায় ) পত্ররচনাশূন্য করিয়াছিলেন।

**ऐरावतास्फालनविश्लथं यः सङ्घट्टयन्नङ्गदमङ्गदेन।**
**उपेयुषः स्वामपि मूर्त्तिमग्र्यामर्द्धासनं गोत्रभिदोऽधितष्ठौ॥७३**

७३ अ:। यः ऐरावतास्फालनविश्लथम् अङ्गदम् अङ्गदेन संघट्टयन् स्वाम् अग्र्याम् मूर्त्तिम् उपेयुषः अपि गोत्रभिदः अर्द्धासनम् अधितष्ठौ॥

७३। यः ककुत्स्थः, ऐरावतस्य स्वर्गजस्य आस्फालनेन ताडनेन विश्लथं शिथिलम् अङ्गदम् ऐन्द्रम् अङ्गदेन स्वकीयेन सङ्घट्टयन् सङ्घर्षयन्, स्वाम् अग्र्यां श्रेष्ठां मूर्त्तिम् उपेयुषः अपि प्राप्तस्य अपि गोत्रभिदः इन्द्रस्य अर्द्धम् आसनस्य अर्द्धासनम्। अर्द्धं नपुंसकमिति समासः। अधितष्ठौ अधिष्ठितवान्। 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति अभ्यासेन व्यवायेऽपि षत्वम्। न केवलं महोक्षरूपधारिणः एव तस्य ककुदमध्यास्त किन्तु निज-रूपधारिणोऽपि इन्द्रस्यार्द्धासनमित्यपिशब्दार्थः। अथवा, अर्द्धासनमपी-त्यपेरन्वयः॥

৭৩। ইন্দ্র, স্বাভাবিক দিব্যমূর্ত্তি পরিগ্রহ করিলেও যে ককুৎস্থ, স্বীয় অঙ্গদ দ্বারা ঐরাবতহস্তিচালনে শ্লথীভূত ইন্দ্রহস্তস্থিত কেয়ূর সংঘর্ষণ করিয়া তাহার সহিত একাসনে উপবেশন করিতেন।

**जातः कुले तस्य किलोरुकीर्त्तिः कुलप्रदीपो नृपतिर्दिलीपः।**
**अतिष्ठदेकोनशतक्रतुत्वे शक्राभ्यसूयाविनिवृत्तये यः॥७४**

७४ अ:। उरुकीर्त्तिः कुलप्रदीपः नृपतिः दिलीपः तस्य कुले जातः, यः शक्राभ्यसूयाविनिवृत्तये एकोनशतक्रतुत्वे अतिष्ठत्॥

७४। उरुकीर्त्तिः महायशाः कुलप्रदीपः वंशप्रदीपः दिलीपः नृपतिः तस्य ककुत्स्थस्य कुले जातः किल। यः दिलीपः शक्राभ्यसूया-विनिवृत्तये, न त्वशक्तया इति भावः। एकेन ऊनाः शतं क्रतवो यस्य सः एकोनशतक्रतुः तस्य भावे तत्त्वे अतिष्ठत्, इन्द्रप्रीतये शततमं क्रतुमवशे-षितवानित्यर्थः॥

৭৪। মহাযশস্বী কুলপ্রদীপ রাজা দিলীপ সেই ককুৎস্থ ভূপতির বংশে জন্মগ্রহণ করিয়াছেন। যিনি একোনশত অশ্বমেধ যজ্ঞ করিয়া, ইন্দ্রের অসূয়া পরিহারের জন্যই অশ্বমেধের শতসংখ্যা পূর্ণ করেন নাই।

तस्मिन् महीं शासति वाणिनीनां
निद्रां विहारार्द्धपथे गतानाम् ।
वातोऽपि नास्रंसयदंशुकानि
को लम्बयेदाहरणाय हस्तम् ॥৭৫

৭৫ अ: । तस्मिन् महीं शासति ( सति ), विहारार्द्धपथे निद्रां गतानां वाणिनीनाम् अंशुकानि वात: अपि न अस्रंसयत्, आहरणाय क: हस्तं लम्बयेत् ॥

৭৫ । यस्मिन् दिलीपे महीं शासति सति, विहरत्यत्रेति विहार: क्रीड़ास्थानं, तस्य अर्द्धपथे निद्रां गतानां वाणिनीनां मत्ताङ्गनानाम् । 'वाणिनी नर्त्तकी मत्ता विदग्धवनितासु च' इति विश्व: । 'वाणिन्यौ नर्त्तकीमत्ते' इत्यमरश्च । अंशुकानि वस्त्राणि वात: अपि न अस्रंसयत् न अकम्पयत्, आहरणाय अपहर्त्तुं क: हस्तं लम्बयेत् । तस्य आज्ञा-सिद्धत्वादकुतोभयसञ्चारा: प्रजा इत्यर्थ: । अर्द्धश्चासौ पन्थाश्चेति विग्रह:, समप्रविभागे प्रमाणाभावात् नैकदेशिसमास: ॥

৭৫ । সেই দিলীপের শাসনকালে মত্ত বারবিলাসিনীগণ বিহারস্থানের অর্দ্ধপথে নিদ্রিতা হইয়া পড়িলে, স্বয়ং পবনদেবও তাহাদের গাত্রবস্ত্র কম্পিত করিতে সাহস করিতেন না। কাহার সাধ্য যে তাহাদের অঙ্গ হইতে কোন বস্ত্র অপহরণ করিবার জন্য হস্তপ্রসারণ করে ? ।

पुत्रो रघुस्तस्य पदं प्रशास्ति
महाक्रतोर्विश्वजित: प्रयोक्ता ।
चतुर्दिगावर्जितसम्भृतां यो
मृत्पात्रशेषामकरोद्विभूतिम् ॥৭৬

৭৬ अ: । विश्वजित: महाक्रतो: प्रयोक्ता तस्य दिलीपस्य पुत्र: रघु: पदं प्रशास्ति, य: चतुर्दिगा-वर्जितसम्भृतां विभूतिं मृत्पात्रशेषाम् अकरोत् ॥

৭৬ । विश्वजित: नाम महाक्रतो: प्रयोक्ता अनुष्ठाता तस्य दिलीपस्य पुत्र: रघु:, पदं पैत्रम् एव प्रशास्ति पालयति । य: रघु:, चतसृभ्य: दिग्भ्य: आवर्जिता आहृता सम्भृता सम्यग्वर्द्धिता च या तां चतुर्दिगावर्जितसम्भृतां विभूतिं सम्पदं, मृत्पात्रम् एव शेष: यस्या: ताम् अकरोत्, विश्वजिद्यागस्य सर्वस्वदक्षिणकत्वादितार्थ: ॥

৭৬ । সেই দিলীপের পুত্র, বিশ্বজিৎযজ্ঞের অনুষ্ঠাতা রঘু এক্ষণে পৈতৃক সাম্রাজ্য

শাসন করিতেছেন; তিনি উক্ত মহাযজ্ঞ সম্পাদনানন্তর চতুর্দ্দিক্ হইতে সমাহৃত ও সংবর্দ্ধিত সমস্ত ধনরাশি দান করিয়া মৃৎপাত্রমাত্র অবশিষ্ট রাখিয়াছিলেন।

आरूढमद्रीनुदधीन् वितीर्णं
भुजङ्गमानां वसतिं प्रविष्टम्।
ऊर्द्ध्वं गतं यस्य न चानुबन्धि
यशः परिच्छेत्तुमियत्तयालम्॥ ७७

७७ अः। अद्रीन् आरूढम्, उदधीन् वितीर्णं, भुजङ्गमानां वसतिं प्रविष्टम्, ऊर्द्ध्वं गतम्, अनुबन्धि च यस्य यशः इयत्तया परिच्छेत्तुं न अलम्॥

७७। किञ्च, अद्रीन् आरूढम्, उदधीन् वितीर्णम् अवगाढं सकल-भूगोलव्यापकमित्यर्थः। भुजङ्गमानां वसतिं पातालं प्रविष्टम्, ऊर्द्ध्वं स्वर्गादिकं गतं व्याप्तम् इत्थं सर्वदिग्व्यापीत्यर्थः। अनुबध्नाति इति अनुबन्धि च अविच्छेदिकालत्रयव्यापकञ्च इत्यर्थः। अतएव एवम्भूतं यस्य यशः इयत्तया देशतः कालतो वा केनचित् मानेन परिच्छेत्तुं न अलं न शक्यम्।

৭৭। রঘুর যশোরাশি পর্ব্বতোপরি আরোহণ, সমুদ্রে অবগাহন, নাগলোকে প্রবেশ এবং সুরলোকে গমন করিয়াছে। তদীয় অনন্তকালস্থায়ী যশের ইয়ত্তা করিতে কেহই সমর্থ হয় না।

असौ कुमारस्तमजोऽनुजात-
स्त्रिविष्टपस्येव पतिं जयन्तः।
गुर्व्वीं धुरं यो भुवनस्य पित्रा
धुर्य्येण दम्यः सदृशं बिभर्त्ति॥ ७८

७८ अः। असौ कुमारः अजः, जयन्तः त्रिविष्टपस्य पतिम् इव तम् अनुजातः, यः दम्यः अपि भुवनस्य गुर्व्वीं धुरं धुर्य्येण पित्रा सदृशं बिभर्त्ति।

७८। असौ अजाख्यः कुमारः, त्रिविष्टपस्य स्वर्गस्य पतिम् इन्द्रं जयन्तः इव। 'जयन्तः पाकशासनिः' इत्यमरः। तं रघुम् अनुजातः, तस्माज्जात इत्यर्थः। तज्जातोऽपि तदनुजातो भवति जन्यजनकयोरानन्तर्य्यात्। 'गत्यर्थाकर्म्मकश्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्च' इति क्तः। सोपसृष्टत्वात् सकर्म्मकत्वम्। आह चात्रैव सूत्रे वृत्तिकारः— 'श्लिषादयः सोपसृष्टाः सकर्म्मका भवन्ति' इति। दम्यः शिक्षणीयावस्थः यः अजः, गुर्व्वीं भुवनस्य धुरं धुर्य्येण धुरन्धरेण चिरनिरूढेन पित्रा सदृशं

तुल्यं यथा तथा बिभर्त्ति । यथा कश्चिद्दम्यवत्सतरोऽपि धुर्य्येण महोक्षेण समं वहतीत्युपमालङ्कारो ध्वन्यते । 'दम्यवत्सतरौ समौ' इत्यमरः ।

৭৮। যেমন ত্রিদিবেশ্বর হইতে জয়ন্ত, তেমনি সেই রঘু হইতে এই রাজকুমার অজ জন্ম লাভ করিয়াছেন। ইহার এখনও শিক্ষালাভের যোগ্য বয়স; তথাপি ইনি ধুরন্ধর পিতার সহিত তুল্যরূপে গুরুতর সাম্রাজ্য ভার বহন করিতেছেন।

कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः ।
त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥ ৭৯

৭৯ অ:। কুলেন, কান্ত্যা, নবেন বয়সা, বিনয়প্রধানৈ: তৈ: তৈ: গুণৈ: আত্মন: তুল্যম্ অমুং ত্বং বৃণীষ্ব, রত্নং কাঞ্চনেন (সহ) সমাগচ্ছতু।

৭৯। कुलेन, कान्त्या लावण्येन, नवेन वयसा यौवनेन, विनयः प्रधानं येषां तैस्तैः गुणैः श्रुतशीलादिभिश्च आत्मनः तुल्यं स्वानुरूपम् अमुम् अजं त्वं वृणीष्व। किं बहुना? रत्नं काञ्चनेन समागच्छतु सङ्गच्छताम्। प्रार्थनायां लोट्। रत्नकाञ्चनयोरिवात्यन्तानुरूपत्वाद्युवयोः समागमः प्रार्थ्यते इत्यर्थः।

৭৯। কৌলীন্য, সৌন্দর্য্য, নবযৌবনে এবং বিনয়াদি গুণগ্রামে ইনি তোমার অনুরূপ বর; তুমি ইঁহাকে বরণ কর;—মণি, কাঞ্চনের সহিত মিলিত হউক।

ततः सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत् संवरणस्रजेव ॥ ৮০

৮০ অ:। ততঃ সুনন্দাবচনাবসানে নরেন্দ্রকন্যা লজ্জাং তনূকৃত্য প্রসাদামলয়া দৃষ্ট্যা সংবরণস্রজা ইব কুমারং প্রত্যগ্রহীৎ॥

৮০। ततः सुनन्दावचनस्य अवसाने अन्ते नरेन्द्रकन्या इन्दुमती लज्जां तनूकृत्य सङ्कोच्य प्रसादेन मनःप्रसादेन अमलया प्रसन्नया दृष्ट्या संवरणस्य स्रजा स्वयंवरणार्थस्रजा इव कुमारम् अजम् प्रत्यग्रहीत् स्वीचकार। सम्यक् सानुरागमपश्यदित्यर्थः।

৮০। অনন্তর, সুনন্দার কথাবসানে রাজকুমারী ইন্দুমতী লজ্জা পরিত্যাগ করিয়া সাক্ষাৎ বরমাল্যের ন্যায় প্রণয়োৎফুল্ল দৃষ্টিপাত দ্বারা অজকে বরণ করিলেন।

सा यूनि तस्मिन्नभिलाषबन्धं
शशाक शालीनतया न वक्तुम् ।

**रोमाञ्चलक्ष्येण स गात्रयष्टिं**
**भित्त्वा निराक्रामदरालकेश्याः॥ ८१**

८१ अ:। सा तस्मिन् यूनि अभिलाषबन्धं शालीनतया वक्तुं न शशाक, सः रोमाञ्चलक्ष्येण अरालकेश्याः गात्रयष्टिं भित्त्वा निराक्रामत्।

८१। सा कुमारी यूनि तस्मिन् अजे अभिलाषबन्धम् अनुरागग्रन्थिं शालीनतया अधृष्टतया। 'स्यादधृष्टस्तु शालीनः' इत्यमरः। 'शालीन-कौपिने अधृष्टाकार्य्ययोः' इति निपातः। वक्तुं न शशाक, तथापि अराल-केश्याः सः अभिलाषबन्धः रोमाञ्चलक्ष्येण पुलकव्याजेन। 'व्याजोऽपदेशो लक्ष्यञ्च' इत्यमरः। गात्रयष्टिं भित्त्वा निराक्रामत्। सात्त्विकाविर्भाव-लिङ्गेन प्रकाशित इत्यर्थः।

৮১। কুমারী, সেই যুবকের প্রতি হৃদয়ের গাঢ় অনুরাগ যদিও লজ্জাবশতঃ কথায় প্রকাশ করিতে পারিলেন না, কিন্তু সেই অনুরাগ সুকেশী ইন্দুমতীর গাত্র ভেদ করিয়া রোমাঞ্চরূপে প্রকাশিত হইল।

**तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदाबभाषे।**
**आर्य्ये व्रजामोऽन्यत इत्यथैनां बधूरसूयाकुटिलं ददर्श॥८२**

८२। अ:। तस्यां तथागतायां (सत्याम्), सखी वेत्रभृत् (सुनन्दा) परिहासपूर्वम् आबभाषे, आर्य्ये! अन्यतः व्रजामः इति, बधूः असूयाकुटिलम् एनां ददर्श॥

८२। सख्याम् इन्दुमत्यां तथागतायां तथाभूतायां दृष्टानुरागायां सत्यामित्यर्थः। सखी सहचरी। 'सख्यशिश्वीति भाषायाम्' इति निपा-तनात् ङीप्। वेत्रभृत् सुनन्दा, हे आर्य्ये! पूज्ये! अन्यत्र अन्यं प्रति व्रजामः इति परिहासपूर्वम् आबभाषे। अथ बधूः इन्दुमती एनां सुनन्दाम् असूयया रोषेण कुटिलं ददर्श. अन्यगमनस्यासह्यत्वादित्यर्थः।

৮২। সহচরী বেত্রধারিণী সুনন্দা, সখীকে তদবস্থাপন্ন দেখিয়া পরিহাসপূর্ব্বক বলিল,—আর্য্যে! চল, অন্য রাজার নিকট গমন করি। তাহা শুনিয়া ইন্দুমতী সুনন্দার দিকে রোষে কুটিল কটাক্ষপাত করিলেন।

**सा चूर्णगौरं रघुनन्दनस्य धात्रीकराभ्यां करभोपमोरुः।**
**आसञ्जयामास यथाप्रदेशं कण्ठे गुणं मूर्त्तमिवानुरागम्॥८३**

८३ अ:। सा करभोपमोरुः धात्रीकराभ्यां, रघुनन्दनस्य कण्ठे यथाप्रदेशं चूर्णगौरं गुणं, मूर्त्तम् अनुरागम् इव, आसञ्जयामास॥

८३। करभः करप्रदेशविशेषः। 'मणिबन्धादाकनिष्ठं करस्य करभो वहिः' इत्यमरः। करभः उपमा ययोः तौ ऊरू यस्याः सा करभोपमोरूः। 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः। सा कुमारी, चूर्णेन मङ्गलचूर्णेन गौरं लोहितं गुणं स्रजं, मूर्त्तं मूर्त्तिमन्तम् अनुरागम् इव, धात्र्याः उपमातुः सुनन्दायाः कराभ्यां रघुनन्दनस्य अजस्य कण्ठे यथाप्रदेशं यथास्थानम् आसञ्जयामास, आसक्तं कारयामास, न तु स्वयमाससञ्ज, अनौचित्यात्।

৮৩। করভোপম ঊরুযুগলসম্পন্না ইন্দুমতী ধাত্রীহস্ত দ্বারা রঘুনন্দন অজের কণ্ঠে যথাস্থানে মূর্ত্তিমান্ অনুরাগের ন্যায় মঙ্গলচূর্ণ লোহিত মাল্য সন্নিবেশিত করিয়া দিলেন।

तया स्रजा मङ्गलपुष्पमय्या विशालवक्षःस्थललम्बया सः।
अमंस्त कण्ठार्पितबाहुपाशां विदर्भराजावरजां वरेण्यः ॥८४

८४। वरेण्यः सः विशालवक्षःस्थललम्बया मङ्गलपुष्पमय्या तया स्रजा, विदर्भराजावरजां कण्ठार्पितबाहुपाशाम् अमंस्त।

८४। वरेण्यः वरणीयः उत्कृष्टः, वृञ एण्यः। सः अजः मङ्गलपुष्पमय्या मधूकादिकुसुममय्या विशालवक्षःस्थले लम्बया लम्बमानया तया प्रकृतया स्रजा विदर्भराजावरजाम् इन्दुमतीं कण्ठार्पितौ बाहू एव पाशौ यया ताम् अमंस्त मन्यतेर्लुङ्। बाहुपाशकल्पसुखमन्वभूदित्यर्थः।

৮৪। বরণীয় অজ বিশাল বক্ষঃস্থলে লম্বমানা মঙ্গলপুষ্পরচিতা সেই মালা কণ্ঠে ধারণ করিয়া জ্ঞান করিলেন, যেন বিদর্ভরাজানুজা ইন্দুমতী মালারূপ বাহুপাশে তাঁহার কণ্ঠদেশ আলিঙ্গন করিয়াছেন।

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ ८५

८५ अः। तत्र समगुणयोगप्रीतयः पौराः, "इयं मेघमुक्तं शशिनम् उपगता कौमुदी, अनुरूपं जलनिधिम् अवतीर्णा जह्नुकन्या" इति नृपाणां श्रवणकटु एकवाक्यं विवव्रुः।

८५। तत्र स्वयम्वरे समगुणयोः तुल्यगुणयोः इन्दुमतीरघुनन्दनयोः योगेन प्रीतिः येषां ते समगुणयोगप्रीतयः पौराः पुरे भवा जनाः, इयम् अजसङ्गता इन्दुमती, मेघैः मुक्तं शशिनं शरच्चन्द्रम् उपगता कौमुदी, अनु-

रूपं सदृशं जलनिधिम् अवतीर्णा प्रविष्टा जह्नुकन्या भागीरथी, तत्सदृशी इत्यर्थः, इत्येवं नृपाणां श्रवणयोः कटु परुषम् एकम् अविसंवादि वाक्यम् एकवाक्यं विवव्रुः। मालिनीवृत्तमेतत् लक्षणन्तूक्तं प्राक्।

৮৫। পরস্পর তুল্যগুণসম্পন্ন সেই বর-বধূর সম্মিলনে আনন্দিত হইয়া পৌরগণ এইরূপ বলিতে লাগিল ;—যেন চন্দ্রিকা মেঘমুক্ত চন্দ্রমার সহিত মিলিত হইল ; যেন গঙ্গা অনুরূপ পতি সমুদ্রের সহিত সংযুক্ত হইলেন ; এই সকল কথা অপর নৃপতিগণের কর্ণে অত্যন্ত কটু বোধ হইল।

प्रमुदितवरपक्षमेकतस्तत्
क्षितिपतिमण्डलमन्यतो वितानम्।
उषसि सर इव प्रफुल्लपद्मं
कुमुदवनप्रतिपन्ननिद्रमासीत्॥ ८६

इति श्रीमहाकविकालिदासकृतौ रघुवंशे षष्ठः सर्गः॥ ६

८६ अ:। एकतः प्रमुदितवरपक्षम्, अन्यतः वितानं तत् क्षितिपतिमण्डलम्, उषसि प्रफुल्लपद्मं कुमुदवनप्रतिपन्ननिद्रं सरः इव आसीत्॥

८६। एकतः एकत्र प्रमुदितः हृष्टः वरस्य जामातुः पक्षः वर्गः यस्य तत् तथोक्तम्, अन्यतोऽन्यत्र वितानं शून्यं, भग्नाशत्वादप्रहृष्टमित्यर्थः, तत् क्षितिपतिमण्डलम्, उषसि प्रभाते प्रफुल्लपद्मं कुमुदवनेन प्रतिपन्ननिद्रं प्राप्तनिमीलनं सरः इव सरस्तुल्यम् आसीत्। पुष्पिताग्रा वृत्तमेतत्, लक्षणन्तूक्तं प्राक्।

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकवि श्रीकालिदासकृतौ
रघुवंशे महाकाव्ये स्वयंवरवर्णनो नाम षष्ठः सर्गः॥ ६

৮৬। সেই স্বয়ংবর সভার এক দিকে হর্ষপ্রফুল্ল বরপক্ষীয়গণ, অন্য দিকে ভগ্নমনোরথ বিষণ্ণবদন রাজমণ্ডলী ;—বোধ হইল যেন প্রভাতে সরোবরের এক দিকে প্রফুল্ল পদ্মবন এবং অন্য দিকে মুদ্রিত কুমুদবন রহিয়াছে।

ষষ্ঠ সর্গ সমাপ্ত॥৬

## सप्तमः सर्गः ।



अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनाम् ।
स्वसारमादाय विदर्भनाथः पुरप्रवेशाभिमुखो बभूव ॥ १

१ अः । अथ, सदृशेन उपयन्त्रा युक्तां, स्कन्देन साक्षात् देवसेनाम् इव, स्वसारम् आदाय, विदर्भनाथः पुरप्रवेशाभिमुखः बभूव ॥

भजेमहि निपीयैकं मुहुरन्यं पयोधरम् ।
मार्गन्तं बालमालोक्याश्वासयन्तौ हिं दम्पती ॥

१ । अथ विदर्भनाथो भोजः सदृशेनोपयन्त्रा वरेण युक्ताम् । अतएव साक्षात् प्रत्यक्षम् । 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः । स्कन्देन युक्तां देवसेनामिव । देवसेना नाम देवपुत्री स्कन्दपत्नी तामिव स्थितां स्वसारं भगिनीमिन्दुमतीमादाय गृहीत्वा पुरप्रवेशाभिमुखो बभूव । उपजातिवृत्तं सर्गेऽस्मिन् प्रायः ।

১। অনন্তর বিদর্ভপতি, সাক্ষাৎ কার্ত্তিকেয়ের সহিত দেবসেনার ন্যায় অনুরূপ বরের সহিত সংযুক্তা ভগিনী ইন্দুমতীকে লইয়া নগরাভিমুখে গমন করিলেন।

सेनानिवेशान् पृथिवीक्षितोऽपि जग्मुर्विभातग्रहमन्दभासः ।
भोज्यां प्रति व्यर्थमनोरथत्वाद्रूपेषु वेशेषु च साभ्यसूयाः ॥ २

२ अः । पृथिवीक्षितः अपि, भोज्यां प्रति व्यर्थमनोरथत्वात् विभातग्रहमन्दभासः रूपेषु वेशेषु च साभ्यसूयाः (सन्तः) सेनानिवेशान् जग्मुः ॥

२ । भोजस्य राज्ञो गोत्रापत्यं स्त्री भोज्या । तामिन्दुमतीं प्रति व्यर्थमनोरथत्वात् रूपेषु आकृतिषु वेशेषु नेपथ्येषु च साभ्यसूया वृथेति निन्दन्तः । किञ्च, विभाते प्रातःकाले ये ग्रहाश्चन्द्रादयस्त इव मन्दभासः क्षीणकान्तयः पृथिवीक्षितो नृपा अपि सेनानिवेशान् शिविराणि जग्मुः ॥

২। এদিকে মহীপালগণও ভোজনন্দিনীলাভে ব্যর্থমনোরথ হওয়াতে স্ব স্ব রূপ ও বেশের নিন্দা করিয়া প্রভাতকালীন গ্রহগণের ন্যায় ম্লানভাবে শিবিরে প্রত্যাগমন করিলেন।

सान्निध्ययोगात्किल तत्र शच्याः
स्वयंवरक्षोभकृतामभावः ।

काकुत्स्थमुद्दिश्य समत्सरोऽपि
शशाम तेन क्षितिपाललोकः ॥ ३

३ अ:। तत्र शच्याः सान्निध्ययोगात् स्वयंवरक्षोभकृताम् अभावः किल, तेन काकुत्स्थम् उद्दिश्य समत्सरः अपि क्षितिपाललोकः शशाम ॥

३। ननु क्रुद्धाश्चेद्युध्यन्तां तत्राह – सान्निध्येति। तत्र स्वयंवरक्षेत्रे शच्या इन्द्राण्याः। सन्निधिरेव सान्निध्यम्। तस्य योगात्सद्भावाद्धेतोः स्वयंवरस्य क्षोभकृतां विघ्नकारिणामभावः किल। किलेति स्वयंवरविघातकाः शच्या विनाश्यन्त इत्यागमसूचनार्थम्। तेन हेतुना काकुत्स्थमजमुद्दिश्य समत्सरोऽपि सवैरोऽपि क्षितिपाललोकः शशाम नाक्षुभ्यत् ॥

৩। স্বয়ংবরস্থলে শচীদেবীর অধিষ্ঠান নিবন্ধন কেহই স্বয়ংবরের বিঘ্ন করিতে সাহসী হয় নাই; ভূপালবর্গ, অজের প্রতি ঈর্ষান্বিত হইলেও তৎকালে ক্রোধ দমন করিয়াছিলেন।

तावत्प्रकीर्णाभिनवोपचार-
मिन्द्रायुधद्योतिततोरणाङ्कम्।
वरः स वध्वा सह राजमार्गं
प्राप ध्वजच्छायनिवारितोष्णम् ॥ ४

४ अ:। सः वरः वध्वा सह तावत्प्रकीर्णाभिनवोपचारम्, इन्द्रायुधद्योतिततोरणाङ्कम् ध्वजच्छायनिवारितोष्णम् राजमार्गं प्राप ॥

४। 'यावत्तावच्च साकल्ये' इत्यमरः। तावत्प्रकीर्णाः साकल्येन प्रसारिता अभिनवा नूतना उपचाराः पुष्पप्रकारादयो यस्य तं तथोक्तम्। इन्द्रायुधानीव द्योतितानि प्रकाशितानि तोरणानि अङ्कश्चिह्नानि यस्य तम्। ध्वजानां छाया ध्वजच्छायम्। 'छाया बाहुल्ये' इति नपुंसकत्वम्। तेन निवारित उष्ण आतपो यत्र तं तथा राजमार्गं स वरो वोढा वध्वा सह प्राप विवेश।

৪। তখন জামাতা বধূর সহিত মাল্য প্রভৃতি বিবিধ উপচারে সুশোভিত, সহস্র ইন্দ্রধনুঃ সদৃশ দীপ্ততর তোরণবিশিষ্ট, পতাকাচ্ছায়ায় নিবারিতরৌদ্র রাজপথে উপনীত হইলেন।

ततस्तदालोकनतत्पराणां
सौधेषु चामीकरजालवत्सु।

बभूवुरित्थं पुरसुन्दरीणां
त्यक्तान्यकार्य्याणि विचेष्टितानि ॥ ५

५ अ: । ततः चामीकरजालवत्सु सौधेषु तदालोकनतत्पराणां पुरसुन्दरीणां इत्थं त्यक्तान्यकार्य्याणि विचेष्टितानि बभूवुः ॥

५। ततः तदनन्तरं, चामीकरजालवत्सु सौवर्णगवाक्षयुक्तेषु सौधेषु तस्य अजस्य आलोकने तत्पराणाम् आसक्तानां पुरसुन्दरीणाम् इत्थं वक्ष्यमाणप्रकाराणि त्यक्तानि अन्यकार्य्याणि केशबन्धनादीनि येषु तानि विचेष्टितानि व्यापाराः बभूवुः ॥

৫। অনন্তর বরদর্শনোৎসুকা পুরসুন্দরীরা হেম-গবাক্ষ-সমলঙ্কৃত প্রাসাদসমূহে অনন্যকার্য্যা হইয়া বক্ষ্যমাণরূপে ব্যগ্রতা প্রকাশ করিতে লাগিলেন।

आलोकमार्गं सहसा व्रजन्त्या
कयाचिदुद्वेष्टनवान्तमाल्यः ।
बन्धुं न सम्भावित एव तावत्
करेण रुद्धोऽपि च केशपाशः ॥ ६

६ अ: । सहसा आलोकमार्गं व्रजन्त्या कयाचित् उद्वेष्टनवान्तमाल्यः केशपाशः करेण रुद्धः अपि तावत् बन्धुं न सम्भावित एव ॥

६। तान्येवाह पञ्चभिः श्लोकैः—आलोकेति। सहसा आलोकमार्गं गवाक्षपथं व्रजन्त्या कयाचित् कामिन्या उद्वेष्टनवान्तमाल्यः उद्वेष्टनः द्रुतगतिवशात् उन्मुक्तबन्धनः अतएव वान्तमाल्यः बन्धविश्लेषेण उद्गीर्णमाल्यः करेण रुद्धः गृहीतः अपि च केशपाशः केशकलापः। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे' इत्यमरः। तावत् आलोकमार्गप्राप्तिपर्य्यन्तं बन्धुं बन्धनार्थं न सम्भावितः न चिन्तित एव।

৬। কোনও মহিলা গবাক্ষ সন্নিধানে দ্রুতভাবে গমন করিবার কালে কবরীবন্ধন উন্মুক্ত ও তাহা হইতে মাল্যদাম স্খলিত হইলেও হস্তদ্বারা অবরুদ্ধ রাখিয়া এবং তাহা বন্ধন করিবার বিষয়ে চিন্তা না করিয়াই চলিলেন।

प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान ॥ ७

७ अ: । काचित्, प्रसाधिकालम्बितं द्रवरागम् एव अग्रपादम् आक्षिप्य उत्सृष्टलीलागतिः (सती) आगवाक्षात् अलक्तकाङ्कां पदवीं ततान ॥

७। काचित् प्रसाधिकया अलङ्कर्त्र्या आलम्बितं रञ्जनार्थं धृतं, द्रवरागम् एव आर्द्रालक्तकम् एव, अग्रश्चासौ पादश्च इति अग्रपादः इति कर्म्मधारयसमासः। 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्' इति वामनः। तम्, आक्षिप्य आकृष्य, उत्सृष्टलीलागतिः त्यक्तमन्दगमना सती, आ गवाक्षात् गवाक्षपर्य्यन्तं, पदवीं पन्थानम्, अलक्तकाङ्कां लाक्षारागचिह्नां, ततान विस्तारयामास॥

৭। কোনও কামিনী বেশবিন্যাসকারিণীর করধৃত আর্দ্র অলক্তকরঞ্জিত চরণ আকর্ষণ করিয়া, বিলাসগতি পরিত্যাগপূর্ব্বক গবাক্ষপথ পর্য্যন্ত লাক্ষারঞ্জিত পদচিহ্ন বিস্তার করিলেন।

**विलोचनं दक्षिणमञ्जनेन सम्भाव्य तद्वञ्चितवामनेत्रा।**

**तथैव वातायनसन्निकर्षं ययौ शलाकामपरा वहन्ती॥ ८**

८ अ:। अपरा दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य, तद्वञ्चितवामनेत्रा ( सती ) तथा एव शलाकां वहन्ती ( सती ), वातायनसन्निकर्षं ययौ॥

८। अपरा स्त्री दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य अलङ्कृत्य सम्भ्रमादिति भावः। तद्वञ्चितं तेन अञ्जनेन वर्जितं वामनेत्रं यस्याः सा सती, तथैव शलाकाम् अञ्जनतूलिकां वहन्ती सती, वातायनसन्निकर्षं गवाक्षसमीपं ययौ। दक्षिणग्रहणं सम्भ्रमात् च्युतक्रमकरणद्योतनार्थम्, 'सव्यं हि पूर्वं मनुष्या अञ्जते' इति श्रुतेः॥

৮। কোন সুন্দরী দক্ষিণনয়ন অঞ্জনযুক্ত ও বামনেত্র অঞ্জনশূন্য করিয়া, কজ্জলশলাকা গ্রহণপূর্ব্বক সেই অবস্থাতেই বাতায়নসন্নিধানে গমন করিলেন।

**जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम्।**

**नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः॥ ९**

९ अ:। अन्या जालान्तरप्रेषितदृष्टिः ( सती ), प्रस्थानभिन्नां नीवीं न बबन्ध, नाभिप्रविष्टाभरणप्रभेण, हस्तेन वासः अवलम्ब्य तस्थौ॥

९। अन्या स्त्री, जालान्तरप्रेषितदृष्टिः गवाक्षमध्यप्रेरितदृष्टिः सती, प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वसनग्रन्थिम्। 'नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि' इति विश्वः। न बबन्ध, किन्तु नाभिप्रविष्टा आभरणानां कङ्कणादीनां प्रभा यस्य तेन। प्रभैव नाभेराभरणमभूदिति भावः। हस्तेन वासः अवलम्ब्य गृहीत्वा तस्थौ॥

৯। কোন ভাবিনী গবাক্ষে দত্তদৃষ্টি হইয়া গমনবেগে স্খলিতনীবী বন্ধন করিলেন

না ; কঙ্কণ প্রভৃতি আভরণপ্রভায় নাভিবিবর রঞ্জনপূর্ব্বক পরিধেয় বসন হস্ত দ্বারা ধারণ করিয়াই রহিলেন।

**अर्द्धाञ्चिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती।**
**कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा॥ १०**

१० अः। सत्वरम् उत्थितायाः कस्याश्चित् अर्द्धाञ्चिता दुर्निमिते पदे पदे गलन्ती (सती) रशना, तदानीम् अङ्गुष्ठमूलार्पितसूत्रशेषा आसीत्॥

१०। सत्वरम् उत्थितायाः कस्याश्चित् अर्द्धाञ्चिता मणिभिः अर्द्ध-गुम्फिता दुर्निमिते संभ्रमात् दुरुत्क्षिप्ते। 'डुमिञ् प्रक्षेपणे' इति धातोः कर्म्मणि क्तः। पदे पदे प्रतिपदम्। वीप्सायां द्विर्भावः। गलन्ती गल-द्रत्ना सती रशना मेखला तदानीम् गमनसमये अङ्गुष्ठमूले अर्पितं सूत्रम् एव शेषः यस्याः सा आसीत्॥

১০। কোন বিলাসিনী অর্দ্ধগ্রথিত কাঞ্চীসহ সত্বর উত্থিত হইয়া দ্রুতপাদবিক্ষেপে গমন করাতে কাঞ্চীস্থ মণিসমূহ পদে পদে স্খলিত হওয়ায়, উহার সূত্র মাত্র অঙ্গুষ্ঠমূলে অবশিষ্ট রহিল।

**तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम्।**
**विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन्॥ ११**

११ अः। सान्द्रकुतूहलानां तासाम् आसवगन्धगर्भैः विलोलनेत्रभ्रमरैः मुखैः व्याप्तान्तराः गवाक्षाः सहस्रपत्राभरणाः इव आसन्॥

११। तदानीं सान्द्रकुतूहलानां तासां स्त्रीणाम् आसवगन्धः गर्भे येषां तैः विलोलानि नेत्राणि एव भ्रमराः येषां तैः, मुखैः व्याप्तान्तराः छन्नावकाशाः गवाक्षाः सहस्रपत्राभरणा इव कमलालङ्कृता इव। 'सहस्रपत्रं कमलम्' इत्यमरः। आसन्॥

১১। একান্ত কৌতূহলপরতন্ত্র সেই পুরমহিলাগণের আসবগন্ধপূর্ণ চঞ্চললোচনরূপ ভ্রমরসংযুক্ত মুখপরম্পরায় গবাক্ষবিবর ব্যাপ্ত হওয়াতে যেন উহা কমলসমলঙ্কৃত বলিয়া প্রতীয়মান হইতে লাগিল।

**ता राघवं दृष्टिभिरापिबन्त्यो**
**नार्य्यो न जग्मुर्विषयान्तराणि।**
**तथाहि शेषेन्द्रियवृत्तिरासां**
**सर्व्वात्मना चक्षुरिव प्रविष्टा॥ १२**

१२ अ:। ताः नार्य्यः राघवं दृष्टिभिः आपिबन्त्यः (सत्यः), विषयान्तराणि न जग्मुः (तथाहि) आसां शेषेन्द्रियवृत्तिः सर्वात्मना चक्षुः प्रविष्टा इव॥

१२। ताः नार्य्यः, रघोरपत्यं राघवम् अजम्। तस्यापत्यमित्यण्-प्रत्ययः। दृष्टिभिः आपिबन्त्यः अतितृष्णया पश्यन्त्यः विषयान्तराणि अन्यान् विषयान् न जग्मुः न विविदुरित्यर्थः। तथाहि, आसां नारीणां शेषेन्द्रियवृत्तिः चक्षुर्व्यतिरिक्तश्रोत्रादीन्द्रियव्यापारः सर्वात्मना स्वरूप-कात्स्न्येन चक्षुः प्रविष्टा इव श्रोत्रादीनि इन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेः चक्षुरेव प्रविश्य कौतुकात् स्वयमप्येनम् उपलभन्ते किमु, अन्यथा स्वस्व-विषयाधिगमः किं न स्यादिति भावः॥

১২। সেই কামিনীগণ উদ্‌গতচিত্ত হইয়া অজকে নিরীক্ষণ করিতে লাগিলেন। তাঁহাদের অন্যান্য ইন্দ্রিয়বৃত্তি সকল যেন সর্ব্বতোভাবে একমাত্র নয়নমধ্যেই প্রবিষ্ট হইয়াছিল।

स्थाने वृता भूपतिभिः परोक्षैः
स्वयंवरं साधुममंस्त भोज्या।
पद्मेव नारायणमन्यथासौ
लभेत कान्तं कथमात्मतुल्यम्॥ १३

१३ अ:। भोज्या, परोक्षैः भूपतिभिः वृता अपि, साधु स्वयंवरम् अमंस्त स्थाने, अन्यथा असौ पद्मा नारायणम् इव आत्मतुल्यं कान्तं कथं लभेत॥

१३। 'शृण्वन् कथाः' इति वक्ष्यति ताः कथयति - स्थाने इत्यादिभि-स्त्रिभिः। भोज्या इन्दुमती, परोक्षैः अदृष्टैः भूपतिभिः वृता ममैवेयमिति प्रार्थिता अपि स्वयंवरम् एव साधु हितम् अमंस्त मेने, न तु परोक्षमेव कञ्चित् प्रार्थकं वव्रे, स्थाने युक्तमेतत्। 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः। कुतः? अन्यथा स्वयंवराभावे असौ इन्दुमती पद्ममस्या अस्तीति पद्मा लक्ष्मीः। 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः। नारायणम् इव आत्मतुल्यं स्वानुरूपं कान्तं पतिं कथं लभेत न लभेत एव सदसद्विवेकासौकर्य्यादिति भावः॥

১৩। রমণীগণ পরস্পর কহিতে লাগিলেন—ভোজনন্দিনী ইন্দুমতী পরোক্ষে অনেক ভূপতি কর্ত্তৃক প্রার্থিত হইলেও যে স্বয়ংবর হিতকর জ্ঞান করিয়াছিলেন, তাহা যুক্তিযুক্তই হইয়াছে; নতুবা লক্ষ্মী যেরূপ নারায়ণকে লাভ করিয়াছেন, ইনি সেইরূপ অনুরূপ পতিলাভে কিরূপে সমর্থা হইতেন?

परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत्।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां वितथोऽभविष्यत्॥ १४

१४ अः। स्पृहणीयशोभम् इदं द्वन्द्वं चेत् परस्परेण न अयोजयिष्यत्, (तर्हि) अस्मिन् द्वये प्रजानां पत्युः रूपविधानयत्नः वितथः अभविष्यत्॥

१४। स्पृहणीयशोभं सर्वाशास्यसौन्दर्य्यम् इदं द्वन्द्वं मिथुनम्। 'द्वन्द्वं रहस्य—' इत्यादिना निपातः। परस्परेण न योजयिष्यत् चेत् न योजयेत् यदि, तर्हि प्रजानां पत्युः विधातुः अस्मिन् द्वये द्वन्द्वे रूपविधानयत्नः सौन्दर्य्यनिर्माणप्रयासः वितथः विफलः अभविष्यत् एतादृशानुरूपस्त्रीपुंसान्तराभावादिति भावः। 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ'विति लृङ्। 'कुतश्चित् कारणवैगुण्यात् क्रियाया अनभिनिष्पत्तिः क्रियातिपत्तिः' इति वृत्तिकारः॥

১৪। প্রজাপতি যদি স্পৃহণীয় সৌন্দর্য্যশালী এই দম্পতীকে পরস্পর সংযোজিত না করিতেন, তাহা হইলে তাঁহার বরবধূতে অসাধারণ রূপনির্ম্মাণযত্ন নিষ্ফল হইত।

रतिस्मरौ नूनमिमावभूतां राज्ञां सहस्रेषु तथाहि बाला।
गतेयमात्मप्रतिरूपमेव मनो हि जन्मान्तरसङ्गतिज्ञम्॥ १५

१५ अः। इमौ नूनं रतिस्मरौ अभूताम्, तथाहि, इयं बाला राज्ञां सहस्रेषु आत्मप्रतिरूपम् एव गता, मनः हि जन्मान्तरसङ्गतिज्ञम्॥

१५। रतिस्मरौ यौ नित्यसहचरौ इत्यभिप्रायः नूनं तौ एव इयञ्च अयञ्च इमौ दम्पती अभूताम् एतद्रूपेण उत्पन्नौ। कुतः? तथाहि, इयं बाला राज्ञां सहस्रेषु राजसहस्रमध्ये सत्यपि व्यत्यासकारणे इति भावः। आत्मप्रतिरूपं स्वतुल्यम् एव। 'तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः' इति दण्डी। गता प्राप्ता। तदपि कथं जातमत आह—हि यस्मात् मनः जन्मान्तरसङ्गतिज्ञं भवति। तदेवेदमिति प्रत्यभिज्ञाभावेऽपि वासनाविशेषवशादनुभूतार्थेषु मनःप्रवृत्तिरस्तीत्युक्तं, जन्मान्तरसाहचर्य्यमेवात्र प्रवर्त्तकमिति भावः॥

১৫। এই দুই জন নিশ্চয়ই রতি ও অনঙ্গদেব হইবেন; নতুবা এই বালিকা সহস্ররাজগণমধ্যে কিরূপে আত্মানুরূপ পতি নির্ব্বাচন করিয়া লইলেন? মন, অবশ্যই জন্মান্তরীণ সম্পর্ক অবগত থাকে।

इत्युद्गताः पौरवधूमुखेभ्यः
शृण्वन् कथाः श्रोत्रसुखाः कुमारः।
उद्भासितं मङ्गलसंविधाभिः
सम्बन्धिनः सद्म समाससाद ॥ १६

१६। कुमारः, पौरवधूमुखेभ्यः उद्गताः श्रोत्रसुखाः इति कथाः शृण्वन् ( सन् ) मङ्गलसंविधाभिः उद्भासितं सम्बन्धिनः सद्म समाससाद ॥

· १६। इति 'स्थाने वृता' इत्याद्युक्तप्रकारेण पौरवधूमुखेभ्यः उद्गता उत्पन्नाः श्रोत्रयोः सुखाः मधुराः। सुखशब्दो विशेष्यनिघ्नः। 'पापपुण्य-सुखादि च' इत्यमरः। कथाः गिरः शृण्वन् कुमारः अजः मङ्गलसंविधाभिः मङ्गलरचनाभिः उद्भासितं शोभितं सम्बन्धिनः कन्यादायिनः सद्म गृहं समाससाद प्राप ॥

१७। রাজকুমার অজ পুরমহিলাগণের মুখ হইতে এইরূপ শ্রুতিমধুর কথা শুনিয়া বিবিধ মাঙ্গল্যদ্রব্যশোভিত কন্যাদাতার ভবনে উপস্থিত হইলেন।

ततोऽवतीर्य्याशु करेणुकायाः स कामरूपेश्वरदत्तहस्तः।
वैदर्भनिर्द्दिष्टमथो विवेश नारीमनांसीव चतुष्कमन्तः॥ १७

१७ अः। ततः सः कामरूपेश्वरदत्तहस्तः ( सन् ) आशु करेणुकायाः अवतीर्य्य अथो वैदर्भ-निर्द्दिष्टम् अन्तश्चतुष्कं नारीमनांसि इव विवेश ॥

१७। ततः अनन्तरं करेणुकायाः हस्तिन्याः सकाशात् आशु शीघ्रम् अवतीर्य्य कामरूपेश्वरे दत्तः हस्तः येन सः अजः, अथो अनन्तरं वैदर्भेण निर्द्दिष्टं प्रदर्शितम् अन्तश्चतुष्कं चत्वरं नारीणां मनांसि इव विवेश ॥

১৭। তদনন্তর তিনি কামরূপেশ্বরের হস্তধারণপূর্ব্বক হস্তিনীপৃষ্ঠ হইতে অবতীর্ণ হইয়া রমণীগণের হৃদয়ের ন্যায় ভোজরাজ-প্রদর্শিত অভ্যন্তরস্থ চত্বরে প্রবেশ করিলেন।

महार्हसिंहासनसंस्थितोऽसौ सरत्नमर्घ्यं मधुपर्कमिश्रम्।
भोजोपनीतञ्च दुकूलयुग्मं जग्राह सार्द्धं वनिताकटाक्षैः॥ १८

१८ अः। महार्हसिंहासनसंस्थितः असौ भोजोपनीतं सरत्नं मधुपर्कमिश्रम् अर्घ्यं दुकूलयुग्मं च वनिताकटाक्षैः सार्द्धं जग्राह ॥

१८। महार्हसिंहासने संस्थितः असौ अजः, भोजेन उपनीतं रत्नैः सहितं सरत्नं मधुपर्कमिश्रम् अर्घ्यं पूजासाधनद्रव्यं दुकूलयोः क्षौमयोः युग्मञ्च वनिताकटाक्षैः अन्यस्त्रीणाम् अपाङ्गदर्शनैः सार्द्धं जग्राह गृहीतवान् ॥

১৮। তথায় অজ বহুমূল্য সিংহাসনে আসীন হইয়া ভোজরাজপ্রদত্ত মধুপর্কমিশ্রিত সরত্ন অর্ঘ্য ও যুগ্ম বস্ত্র গ্রহণ করিলেন। তখন পুরকামিনীগণ তাঁহার প্রতি কটাক্ষ নিক্ষেপ করিতে লাগিল।

**दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः।**
**वेलासकाशं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥१९**

१९ अः। दुकूलवासाः सः विनीतैः अवरोधरक्षैः वधूसमीपं, स्फुटफेनराजिः उदन्वान् नवैः चन्द्रपादैः वेलासकाशम् इव निन्ये ॥

१९। दुकूलवासाः सः अजः, विनीतैः नम्रैः अवरोधरक्षैः अन्तःपुराधिकृतैः वधूसमीपं निन्ये। तत्र दृष्टान्तः—स्फुटफेनराजिः उदन्वान् समुद्रः नवैः नूतनैः चन्द्रपादैः चन्द्रकिरणैः वेलायाः सकाशं समीपम् इव। पूर्णदृष्टान्तोऽयम् ॥

১৯। যেরূপ নবপ্রকাশিত চন্দ্রকিরণ ফেনরাজিবিরাজিত সাগরকে বেলাসন্নিধানে লইয়া যায়, তদ্রূপ অন্তঃপুররক্ষী বিনীত পুরুষগণ ক্ষৌমযুগল-পরিহিত অজকে বধূ ইন্দুমতী সন্নিধানে লইয়া গেল।

**तत्रार्चितो भोजपतेः पुरोधा**
**हुत्वाग्निमाज्यादिभिरग्निकल्पः।**
**तमेव चाधाय विवाहसाक्ष्ये**
**वधूवरौ सङ्गमयाञ्चकार ॥ २०**

२० अः। तत्र अर्चितः अग्निकल्पः भोजपतेः पुरोधाः, आज्यादिभिः अग्निं हुत्वा, तम् एव विवाहसाक्ष्ये आधाय च, वधूवरौ सङ्गमयाञ्चकार ॥

२०। तत्र सद्मनि अर्चितः पूजितः अग्निकल्पः अग्नितुल्यः भोजपतेः भोजदेशाधीश्वरस्य पुरोधाः पुरोहितः 'पुरोधास्तु पुरोहितः' इत्यमरः। आज्यादिभिः द्रव्यैः अग्निं हुत्वा तम् एव च अग्निं विवाहसाक्ष्ये आधाय साक्षिणं कृत्वा इत्यर्थः। वधूवरौ सङ्गमयाञ्चकार योजयामास ॥

২০। সেইস্থানে ভোজপতি কর্ত্তৃক সংকৃত, অনলতুল্য দীপ্তিমান্ পুরোহিত ঘৃতাদি দ্বারা হুতাশনে আহুতিপ্রদানপূর্ব্বক অগ্নিকেই বিবাহসাক্ষিত্বে স্থাপন করিয়া দম্পতিকে একত্র সংযোজিত করিলেন।

**हस्तेन हस्तं परिगृह्य वध्वाः स राजसूनुः सुतरां चकाशे।**
**अनन्तराशोकलताप्रवालं प्राप्येव चूतः प्रतिपल्लवेन ॥ २१**

२१ अ:। सः राजसूनुः, हस्तेन वध्वाः हस्तं परिगृह्य, अनन्तराशोकलताप्रवालं प्रतिपल्लवेन प्राप्य चूतः इव सुतरां चकाशे ॥

२१। सः राजसूनुः हस्तेन स्वकीयेन वध्वाः हस्तं परिगृह्य, अनन्तरायाः सन्निहितायाः अशोकलतायाः प्रवालं पल्लवं प्रतिपल्लवेन स्वकीयेन प्राप्य चूतः आम्रः इव, सुतरां चकाशे ॥

২১। সহকার পাদপ যেমন স্বীয় পল্লবদ্বারা সন্নিহিত অশোকলতার পল্লবে সঙ্গত হইয়া সুশোভিত হয়, রাজপুত্র অজও স্বীয় হস্তদ্বারা বধূর হস্তগ্রহণ করিয়া সেইরূপ অনির্ব্বচনীয় শোভা প্রাপ্ত হইলেন।

**आसीद्वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी।**
**वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य ॥२२**

२२ अ:। वरः कण्टकितप्रकोष्ठः आसीत्, कुमारी स्विन्नाङ्गुलिः संववृते, पाणिसमागमेन मनोभवस्य वृत्तिः तयोः समं विभक्ता इव ॥

२२। वरः कण्टकितः पुलकितः प्रकोष्ठः यस्य सः आसीत्। 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इत्यमरः। कुमारी स्विन्नाङ्गुलिः संववृते बभूव। अतोऽत्प्रेक्ष्यते पाणिसमागमेन पाण्योः संस्पर्शेन कर्त्रा तयोः वधूवरयोः मनोभवस्य वृत्तिः स्थितिः समं विभक्ता इव समीकृतेव इत्यर्थः। प्राक्सिद्धस्याप्यनुरागसाम्यस्य सम्प्रति तत्कार्य्यदर्शनात् पाणिस्पर्शकृतत्वमुत्प्रेक्ष्यते। अत्र वात्स्यायनः,—'कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः स्विन्नमुखी च भवति पुरुषस्तु रोमाञ्चितो भवति एभिरनयोर्भावं परीक्षेत' इति। स्त्रीपुरुषयोः स्वेदरोमाञ्चाभिधानं सात्त्विकमात्रोपलक्षणं, न तु प्रतिनियमो विवक्षितः एभिरिति बहुवचनसामर्थ्यात्। सात्त्विका यथा—"स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः॥" एवं सति कुमारसम्भवे, 'रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्' इति व्युत्क्रमवचनं न दोषायेति। तस्मिन् द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोभवेन' इति अपराद्धस्य पाठान्तरे व्याख्यानान्तरम्—तस्मिन् द्वये मिथुने तत्क्षणम् आत्मवृत्तिः सात्त्विकोदयरूपा वृत्तिः मनोभवेन कामेन समं तुल्यं विभक्ता इव पृथक् कृता इव ॥

২২। বধূর করস্পর্শে বরের প্রকোষ্ঠদেশ পুলকিত হইল এবং বরের করসম্মিলনে তোজনন্দিনীর অঙ্গুলী সকল বিন্দু বিন্দু স্বেদজলে আর্দ্র হইতে লাগিল। তখন এই পরস্পরের করস্পর্শ যেন কামদেবের সাত্ত্বিকভাবের আবির্ভাবরূপ ব্যাপারকে সেই নব দম্পতীতে সমভাবে বিভক্ত করিয়া দিল।

तयोरपाङ्गप्रतिसारितानि
क्रियासमापत्तिनिवर्त्तितानि।
ह्रीयन्त्रणामानशिरे मनोज्ञा-
मन्योन्यलोलानि विलोचनानि॥ २३

२३ अ:। अपाङ्गप्रतिसारितानि क्रियासमापत्तिनिवर्त्तितानि अन्योन्यलोलानि तयोः विलोचनानि मनोज्ञां ह्रीयन्त्रणाम् आनशिरे॥

२३। अपाङ्गेषु नेत्रप्रान्तेषु प्रतिसारितानि प्रवर्त्तितानि क्रिययोः निरीक्षणलक्षणयोः समापत्त्या यदृच्छासङ्गत्या निवर्त्तितानि प्रत्याकृष्टानि अन्योन्यस्मिन् लोलानि सतृष्णानि। 'लोलश्चलसतृष्णयोः' इत्यमरः। तयोः दम्पत्योः विलोचनानि दृष्टयः मनोज्ञां रम्यां ह्रिया निमित्तेन यन्त्रणां सङ्कोचम् आनशिरे प्रापुः॥

२৩। তাঁহাদের পরস্পর দর্শন নিমিত্ত সতৃষ্ণ দৃষ্টি অপাঙ্গদেশে প্রসারিত ও যদৃচ্ছাক্রমে মিলিত হইলে পর অমনি নিবর্ত্তিত হইয়া লজ্জাজনিত এক মনোহর যন্ত্রণা প্রাপ্ত হইল।

प्रदक्षिणप्रक्रमणात् कृशानोरुदर्चिषस्तन्मिथुनं चकाशे।
मेरोरुपान्तेष्विव वर्त्तमानमन्योन्यसंसक्तमहस्त्रियामम्॥२४

२४ अ:। उदर्चिषः कृशानोः प्रदक्षिणप्रक्रमणात् तत् मिथुनम् सुमेरोः उपान्तेषु वर्त्तमानम् अन्योन्यसंसक्तम् अहस्त्रियामम् इव चकाशे॥

४४। तत् मिथुनम् उदर्चिषः उन्नतज्वालस्य कृशानोः वह्नेः प्रदक्षिण-प्रक्रमणात् प्रदक्षिणीकरणात्, मेरोः उपान्तेषु समीपेषु वर्त्तमानम् आवर्त्तमानं मेरुं प्रदक्षिणीकुर्वदित्यर्थः। अन्योन्यसंसक्तं परस्परसङ्गतं, मिथुनस्याप्येतद्विशेषणम्, अहश्च त्रियामा च अहस्त्रियामं रात्रिन्दिवम् इव। समाहारे द्वन्द्वैकवद्भावः। चकाशे दिदीपे॥

২৪। সেই দম্পতী, উন্নতশিখ হুতাশনকে প্রদক্ষিণ করিবার কালে, সুমেরু পর্ব্বতের উপান্তে তৎপ্রদক্ষিণকারী, পরস্পর সংলগ্ন দিনযামিনীর ন্যায় শোভমান হইলেন।

नितम्बगुर्वी गुरुणा प्रयुक्ता
वधूर्विधातृप्रतिमेन तेन।
चकार सा मत्तचकोरनेत्रा
लज्जावती लाजविसर्गमग्नौ॥ २५

२५ अः। नितम्बगुर्वी मत्तचकोरनेत्रा लज्जावती सा विधातृप्रतिमेन तेन गुरुणा प्रयुक्ता (सती) अग्नौ लाजविसर्गं चकार ॥

२५। नितम्बेन गुर्वी अलघ्वी। 'दुर्वहालघुनोर्गुर्वी' इति शाश्वतः। विधातृप्रतिमेन ब्रह्मतुल्येन तेन गुरुणा याजकेन, प्रयुक्ता जुहुधीति नियुक्ता मत्तचकोरस्य इव नेत्रे यस्याः सा लज्जावती सा वधूः, अग्नौ लाजविसर्गं चकार ॥

২৫। অনন্তর মত্তচকোরনয়না, নিবিড়নিতম্বা, লজ্জাবতী ইন্দুমতী বিধাতৃপ্রতিম সেই পুরোহিতের অনুমত্যনুসারে অনলে লাজাঞ্জলি নিক্ষেপ করিলেন।

**हविःशमीपल्लवलाजगन्धी पुण्यः कृशानोरुदियाय धूमः ।**
**कपोलसंसर्पिशिखः स तस्या मुहूर्त्तकर्णोत्पलतां प्रपेदे ॥२६**

२६ अः। हविःशमीपल्लवलाजगन्धी पुण्यः धूमः कृशानोः उदियाय, सः तस्याः कपोलसंसर्पिशिखः (सन्) मुहूर्त्तं कर्णोत्पलतां प्रपेदे ॥

२६। हविषः आज्यादेः शमीपल्लवानां लाजानाञ्च गन्धः अस्यास्तीति हविःशमीपल्लवलाजगन्धी। 'शमीपल्लवमिश्रान् लाजान् अञ्जलिना वपति' इति कात्यायनः। पुण्यः धूमः कृशानोः पावकात् उदियाय उद्भूतः। कपोलयोः संसर्पिणी प्रसरणशीला शिखा यस्य सः तथोक्तः सः धूमः तस्याः वध्वाः मुहूर्त्तं कर्णोत्पलतां प्रपेदे ॥

২৬। সেই অনল হইতে ঘৃত, শমীপল্লব ও লাজগন্ধযুক্ত পবিত্র ধূম উত্থিত হইয়া বধূর কপোলদেশে শিখাসংস্পর্শপূর্ব্বক মুহূর্ত্তকালের জন্য কর্ণোৎপলের ন্যায় সুশোভিত হইল।

**तदञ्जनक्लेदसमाकुलाक्षं प्रम्लानबीजाङ्कुरकर्णपूरम् ।**
**वधूमुखं पाटलगण्डलेखमाचारधूमग्रहणाद्बभूव ॥ २७**

२७ अः। आचारधूमग्रहणात् तत् वधूमुखम् अञ्जनक्लेदसमाकुलाक्षं प्रम्लानबीजाङ्कुरकर्णपूरं पाटलगण्डलेखं बभूव ॥

२७। तत् वधूमुखम् आचारेण प्राप्तात् धूमग्रहणात् अञ्जनस्य क्लेदः अञ्जनक्लेदः अञ्जनमिश्रवाष्पोदकमित्यर्थः। तेन समाकुलाक्षं प्रम्लानः बीजाङ्कुरः यवाङ्कुरः एव कर्णपूरः अवतंसः यस्य तत् पाटलगण्डलेखम् अरुणगण्डस्थलम् बभूव ॥

২৭। আচারার্থ পরিগৃহীত ধূমপ্রভাবে তদীয় মুখমণ্ডলশোভা যবাঙ্কুরের কর্ণপূর অত্যন্ত ম্লান ও গণ্ডস্থল পাটলবর্ণ হইয়া উঠিল এবং নয়নযুগল অঞ্জনমিশ্রিত বাষ্প-বিন্দুতে আকুল হইতে লাগিল।

तौ स्नातकैर्बन्धुमता च राज्ञा
पुरन्ध्रिभिश्च क्रमशः प्रयुक्तम्।
कन्याकुमारौ कनकासनस्था-
वार्द्राक्षतारोपणमन्वभूताम् ॥ २८

२८ अः। कनकासनस्थौ तौ कन्याकुमारौ स्नातकैः बन्धुमता राज्ञा पुरन्ध्रिभिः च क्रमशः प्रयुक्तम् आर्द्राक्षतारोपणम् अन्वभूताम् ॥

२८। कनकासनस्थौ तौ कन्याकुमारौ स्नातकैः गृहस्थविशेषैः। 'स्नातकस्त्वाप्लुतो व्रती' इत्यमरः। बन्धुमता बन्धुपुरःसरेण इत्यर्थः। राज्ञा च पुरन्ध्रिभिः पतिपुत्रवतीभिर्नारीभिश्च क्रमशः प्रयुक्तं स्नातकादीनां पूर्वपूर्ववैशिष्ट्यात् क्रमेण कृतम् आर्द्राक्षतानाम् आरोपणम् अन्वभूताम् अनुभूतवन्तौ ॥

২৮। অনন্তর স্নাতকগণ, বন্ধুজনসহ ভোজরাজ ও পুরমহিলাগণ সুবর্ণসিংহাসনোপবিষ্ট বরবধূকে আর্দ্র আতপতণ্ডুলদ্বারা যথাক্রমে আশীর্ব্বাদ করিলেন।

इति स्वसुर्भोजकुलप्रदीपः सम्पाद्य पाणिग्रहणं स राजा।
महीपतीनां पृथगर्हणार्थं समादिदेशाधिकृतानधिश्रीः ॥२९

२९ अः। अधिश्रीः भोजकुलप्रदीपः सः राजा, इति स्वसुः पाणिग्रहणं सम्पाद्य, महीपतीनां पृथक् अर्हणार्थम् अधिकृतान् समादिदेश ॥

२९। अधिश्रीः अधिकसम्पन्नः भोजकुलप्रदीपः सः राजा, इति स्वसुः इन्दुमत्याः पाणिग्रहणं विवाहं सम्पाद्य कारयित्वा महीपतीनां राज्ञां पृथक् एकैकशः अर्हणार्थं पूजार्थं अधिकृतान् अधिकारिणः समादिदेश आज्ञापयामास ॥

২৯। সমৃদ্ধিশালী ভোজবংশপ্রদীপ বিদর্ভপতি এইরূপে ভগিনীর বিবাহকার্য্য সম্পাদন করিয়া সমাগত রাজন্যবর্গকে পৃথক্ পৃথক্‌রূপে সৎকার করিবার নিমিত্ত অনুচরদিগকে আদেশ করিলেন।

लिङ्गैर्मुदः संवृतविक्रियास्ते ह्रदाः प्रसन्ना इव गूढनक्राः।
वैदर्भमामन्त्र्य ययुस्तदीयां प्रत्यर्प्य पूजामुपदाच्छलेन ॥ ३०

३० अः। मुदः लिङ्गैः संवृतविक्रियाः गूढनक्राः प्रसन्नाः ह्रदाः इव (स्थिताः) ते वैदर्भम् आमन्त्र्य उपदाच्छलेन तदीयां पूजां प्रत्यर्प्य ययुः ॥

३०। मुदः सन्तोषस्य लिङ्गैः चिह्नैः कपटहासादिभिः संवृतविक्रियाः

निगूहितमत्सराः अतएव प्रसन्नाः वहिर्निर्मलाः गूढ़नक्राः अन्तर्लीनग्राहाः ह्रदा इव स्थिताः ते नृपाः, वैदर्भं भोजम् आमन्त्र्य आपृच्छ्य तदीयां वैदर्भीयां पूजाम् उपदाच्छलेन उपायनमिषेण प्रत्यर्प्य ययुः गतवन्तः ॥

৩০। সেই ভূপালবর্গ, নির্ম্মলজলপরিপূর্ণ, অথচ গুপ্তভাবে বিচরণকারী কুম্ভীর-সমাকীর্ণ হ্রদের ন্যায়, বাহিরে সন্তোষচিহ্ন দেখাইয়া, অন্তর্গত ক্রোধ গোপনপূর্ব্বক ভোজরাজপ্রদত্ত দ্রব্যসম্ভার উপঢৌকনচ্ছলে তাঁহাকেই প্রত্যর্পণ করিয়া বিদায়গ্রহণ করিলেন।

**स राजलोकः कृतपूर्व्वसंवि,-दारम्भसिद्धौ समयोपलभ्यम् ।**
**आदास्यमानः प्रमदामिषं त,-दावृत्य पन्थानमजस्य तस्थौ ॥३१**

३१ अः। आरम्भसिद्धौ कृतपूर्व्वसंवित् सः राजलोकः, समयोपलभ्यं तत् प्रमदामिषम् आदास्यमानः (सन्), अजस्य पन्थानम् आवृत्य तस्थौ ॥

३१। आरम्भसिद्धौ कार्य्यसिद्धौ विषये पूर्वं कृता कृतपूर्वा सुप्सुपेति समासः। कृतपूर्वा संवित् सङ्केतः मार्गावरोधरूपः उपायः येन सः तथोक्तः। 'संवित् युद्धे प्रतिज्ञायां सङ्केताचारनामसु' इति केशवः। सः राजलोकः समयोपलभ्यम् अजप्रस्थानकाले लभ्यं तदा तस्यैकाकित्वादिति भावः। 'समरोपलभ्यम्' इति पाठे युद्धसाध्यमित्यर्थः। तत् प्रमदा एव आमिषं भोग्यवस्तु। 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि' इति केशवः। आदास्यमानः ग्रहीष्यमाणः सन् अजस्य पन्थानम् आवृत्य अवरुध्य तस्थौ ॥

৩১। সেই রাজগণ কার্য্যসিদ্ধি বিষয়ে পূর্ব্বেই পরস্পর সঙ্কেত করিয়া অজ-প্রত্যাগমনসময়ে লভ্য সেই প্রমদারূপ উপভোগ্য সামগ্রীর লাভ-কামনায় তাঁহার পথ অবরোধপূর্ব্বক অবস্থান করিতে লাগিলেন।

**भर्त्तापि तावत् क्रथकैशिकानामनुष्ठितानन्तरजाविवाहः ।**
**सत्त्वानुरूपाहरणीकृतश्रीः प्रास्थापयद्राघवमन्वगाच्च ॥ ३२**

३२ अः। तावत् अनुष्ठितानन्तरजाविवाहः क्रथकैशिकानां भर्त्ता अपि, सत्त्वानुरूपाहरणीकृतश्रीः (सन्) राघवं प्रास्थापयत् अन्वगात् च ॥

३२। अनुष्ठितः सम्पादितः अनन्तरजायाः अनुजायाः विवाहः येन सः तथोक्तः क्रथकैशिकानां देशानां भर्त्ता स्वामी भोजः, अपि तावत् तदा सत्त्वानुरूपम् उत्साहानुरूपं यथा तथा आ समन्तात्। अनेनानियत-वस्तुदानमित्यर्थः। हरणं कन्यायै देयं धनम्। 'यौतुकादि तु यद्देयं सदायो हरणञ्च तत्' इत्यमरः। अहरणं हरणीकृता श्रीः येन तथोक्तः

२६ अ: । पितृकार्य्यकल्पवित् स: पितृभक्त्या तदौर्द्ध्वदैहिकम् अकरोत् तेन यथा तनुत्यजः तनया-वर्ज्जितपिण्डकाङ्क्षिण: न हि ॥

२६। पितृकार्य्यस्य तातश्राद्धस्य कल्पवित् विधानज्ञ: स: अज:, पितृभक्त्या पितरि प्रेम्णा कारणेन, न पितु: परलोकसुखापेक्षया, मुक्तत्वादिति भाव:। तस्य रघो: और्द्ध्वदैहिकं देहादूर्द्ध्वं भवतीति। 'ऊर्द्ध्वं देहाच्च' इति वक्तव्यात् ठक्प्रत्यय:, अनुशतिकादित्वादुभयपदवृद्धि:। तत् तिलोदक-पिण्डदानादिकम् अकरोत्। ननु कथं भक्तिरेव, श्राद्धादिफलप्रेप्सापि कस्मान्नाभूदित्याशङ्क्याह न हीति। तेन यथा योगरूपेण मार्गेण तनुत्यज: शरीरत्यागिन: पुरुषा: तनयेन आवर्जितं दत्तं पिण्डं काङ्क्षन्तीति तथोक्ता: न हि भवन्ति ॥

२৬। যদিও যোগবলে তনুত্যাগকারী মহাত্মগণ পুত্রপ্রদত্ত পিণ্ডের আকাঙ্ক্ষা করেন না, তথাপি শ্রাদ্ধবিধানজ্ঞ অজ পিতৃভক্তি বশতঃ পিতার ঔর্দ্ধ্বদৈহিকক্রিয়া সম্পন্ন করিলেন।

**स परार्द्ध्यगतेरशोच्यतां पितुरुद्दिश्य सदर्थवेदिभि:।**
**शमिताधिरधिज्यकार्मुक: कृतवानप्रतिशासनं जगत् ॥ २७**

२७ अ:। परार्द्ध्यगते: पितु: अशोच्यताम् उद्दिश्य सदर्थवेदिभि: शमिताधि: स: अधिज्यकार्म्मुक: (सन्) जगत् अप्रतिशासनं कृतवान् ॥

२७। परार्द्ध्यगते: प्रशस्तगतेः प्राप्तमोक्षस्य पितु: अशोच्यताम् अशो-चनीयत्वम् उद्दिश्य अभिसन्धाय, शोको न कर्त्तव्य इत्युपदिश्य इत्यर्थ:। सदर्थ-वेदिभि: परमार्थज्ञै: विद्वद्भि: शमिताधि: निवारितमनोव्यथः। 'पुंस्याधि-र्मानसी व्यथा' इत्यमर:। स: अज:, अधिज्यकार्मुक: अधिज्यम् आरोपित-मौर्वीकं कार्मुकं यस्य स: तथोक्त: सन्, जगत् कर्मभूतम् अप्रतिशासनं द्वितीयाज्ञारहितम् आत्माज्ञाविधेयमित्यर्थ:। कृतवान् चकार ॥

২৭। মহারাজ অজ মুক্তিপ্রাপ্ত পিতার উদ্দেশে শোক করা বিধেয় নহে, ইহা অবধারণ করিয়া তত্ত্বদর্শী বুধগণের সাহায্যে স্বীয় মনঃকষ্ট দূরীভূত করিলেন এবং শরাসনে জ্যা আরোপণ করিয়া সমস্ত জগৎ আপনার শাসনের অধীনে আনিলেন।

**क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम्।**
**प्रथमा बहुरत्नसूरभूदपरा वीरमजीजनत् सुतम् ॥ २८**

२८ अ:। क्षिति: भामिनी इन्दुमती च अग्र्यपौरुषं तम् पतिम् आसाद्य प्रथमा बहुरत्नसू: अभूत, अपरा वीरं सुतमजीजनत् ॥

२८। क्षिति: मही, भामिनी कामिनी इन्दुमती च 'भामिनी

कामिनी च' इति हलायुधः। अप्रापौरुषं महापराक्रमम् उत्कृष्टभोगप्रशितं तम् अजं पतिम् आसाद्य तत्र प्रथमा क्षितिः बहूनि रत्नानि श्रेष्ठवस्तूनि सूते इति बहुरत्नसूः अभूत्। 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः। अपरा इन्दुमती वीरं सुतम् अजीजनत् जनयति स्म। जायतेर्णौ लुङि रूपम् सहोक्त्या सादृश्यमुच्यते ॥

২৮। বসুমতী ও ইন্দুমতী সেই প্রবল পরাক্রম অজকে পতি পাইয়া একজন রত্নপ্রসবিনী ও অপরজন বীরপ্রসবিনী হইলেন।

दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम्।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥ २९

२९ अः। बुधाः दशरश्मिशतोपमद्युतिम् यशसा दशसु अपि दिक्षु श्रुतं दशकण्ठारिगुरुं यम् आख्यया दशपूर्व्वरथं विदुः॥

२९। किं नामकोऽसावत आह—दश रश्मिशतानि यस्य सः दशरश्मिशतः सूर्य्यः सः उपमा यस्याः सा दशरश्मिशतोपमा द्युतिर्यस्य तं यशसा कारणेन दशसु अपि दिक्षु आशासु श्रुतं प्रसिद्धं दशकण्ठारेः रावणारेः रामस्य गुरुं पितरं यं सुतम् आख्यया नाम्ना दशपूर्वः दशशब्दपूर्वः रथः रथशब्दः तं दशरथमित्यर्थः। बुधा विद्वांसः विदुः विदन्ति। 'विदो लटो वा' इति झेर्जुसादेशः॥

২৯। ইন্দুমতী যে বীরপুত্র প্রসব করিয়াছিলেন, তিনি, দশস্কন্ধারি রামের পিতা হইয়াছিলেন, তিনি দশসহস্র সূর্য্যের ন্যায় দ্যুতিসম্পন্ন এবং তাঁহার যশঃপ্রভাব দশদিকে প্রথিত হইয়াছিল; 'রথ'শব্দের পূর্ব্বে 'দশ'শব্দ যোগ করিলে যাহা হয়, পণ্ডিতগণ তাহাকে সেই "দশরথ" নামে অভিহিত করিয়াছিলেন।

ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवैः स पार्थिवः।
अनृणत्वमुपेयिवान् बभौ परिधेर्मुक्त इवोष्णदीधितिः ॥ ३०

३० अः। श्रुतयागप्रसवैः ऋषिदेवगणस्वधाभुजाम् अनृणत्वम् उपेयिवान् सः पार्थिवः परिधेः मुक्तः उष्णदीधितिः इव बभौ।

३०। श्रुतयागप्रसवैः अध्ययनयज्ञसन्तानैः करणैः यथासंख्यमृषीणां देवगणानामिन्द्रादीनां स्वधाभुजां पितॄणाम् अनृणत्वम् ऋणविमुक्तत्वम् उपेयिवान् प्राप्तवान्। 'एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा' इति श्रुतिः। सः पार्थिवः अजः परिधेः परिवेशात्। 'परिवेशस्तु परिधिः' इत्यमरः। मुक्तः निर्गतः (कर्म्मकर्त्ता) उष्णदीधितिः सूर्य्य इव, बभौ दिदीपे इत्युपमा॥

৩০। মহীশ্বর অজ অধ্যয়নদ্বারা ঋষিগণের, যজ্ঞানুষ্ঠানদ্বারা দেবগণের এবং পুত্রোৎপাদনদ্বারা পিতৃগণের ঋণ হইতে মুক্ত হইয়া পরিধিবিরহিত রবির ন্যায় শোভমান হইলেন।

**बलमार्त्तभयोपशान्तये विदुषां सत्कृतये बहुश्रुतम् ।**

**वसु तस्य विभोर्न केवलं गुणवत्तापि परप्रयोजना ॥ ३१**

३१ अ:। तस्य विभोः बलम् आर्त्तभयोपशान्तये, बहुश्रुतम् विदुषाम् सत्कृतये, (अतः) केवलं वसु न, गुणवत्तापि परप्रयोजना (अभूत्) ॥

३१। तस्य विभोः अजस्य केवलं वसु धनम् एव परप्रयोजनं परोपकारकं न अभूत् किन्तु गुणवत्तापि गुणवत्त्वमपि परप्रयोजना परेषाम् अन्येषां प्रयोजनं यस्यां सा विधेयांशत्वेन प्राधान्याद्गुणवत्ताया विशेषणम्, वसु इत्यत्र तूहनीयम्। (परप्रयोजनमिति पदमित्यर्थः, तच्च प्रदर्शितम्) तथाहि—बलं पौरुषम् आर्त्तानाम् आपन्नानां भयस्य उपशान्तये निवारणाय, न तु स्वार्थं परपीड़नाय वा। बहु भूरि श्रुतं विद्या विदुषां सत्कृतये सत्काराय न तूत्सेकाय बभूव, तस्य धनं परोपयोगीति किं वक्तव्यम् बलश्रुतादयोऽपि गुणाः परोपयोगिन इत्यर्थः ॥

৩১। মহারাজ অজের বল বিপন্নদিগের রক্ষণার্থ এবং প্রভূত শাস্ত্রচর্চ্চা মনীষিগণের সম্মাননার্থ হইয়াছিল। অতএব তাঁহার বিভবই যে কেবল পরোপকারের নিমিত্ত ছিল এরূপ নহে তাঁহার সকল গুণই পরপ্রয়োজনসাধক ছিল।

**स कदाचिदवेक्षितप्रजः सह देव्या विजहार सुप्रजाः ।**

**नगरोपवने शचीसखो मरुतां पालयितेव नन्दने ॥ ३२**

३२ अ:। अवेक्षितप्रजः सुप्रजाः सः कदाचित् देव्या सह नगरोपवने नन्दने शचीसखो मरुतां पालयिता इव विजहार ॥

३२। अवेक्षितप्रजः अकुतोभयत्वेनानुसंहितप्रजः। 'नित्यमसिच् प्रजामेधयोः' इति असिच्प्रत्ययः। न केवलं स्त्रैण इति भावः। शोभना प्रजा यस्य असौ सुप्रजाः सुपुत्त्रवान् पुत्त्रन्यस्तभार इति भावः। सः अजः, कदाचित् देव्या महिष्या इन्दुमत्या सह नगरोपवने, नन्दने नन्दनाख्ये अमरावत्युपकण्ठवने शचीसखः शच्या सह इत्यर्थः। मरुतां देवानां पालयिता इन्द्र इव, विजहार चिक्रीड़ ॥

৩২। সুরপতি যেরূপ শচীদেবীর সমভিব্যাহারে নন্দনকাননে বিহার করিয়া থাকেন, তদ্রূপ সেই সুপুত্রক প্রজারঞ্জন মহারাজ অজ একদা মহিষী ইন্দুমতীর সহিত রাজধানীর নিকটস্থ উপবন বিহারে গমন করিয়াছিলেন।

**अथ रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतमीश्वरम् ।**
**उपवीणयितुं ययौ रवेरुदगावृत्तिपथेन नारदः ॥ ३३**

३३ अः । अथ दक्षिणोदधेः रोधसि श्रितगोकर्णनिकेतनम् ईश्वरम् उपवीणयितुम् नारदः रवेः उदगावृत्तिपथेन ययौ ॥

३३ । अथ दक्षिणस्य उदधेः समुद्रस्य रोधसि तीरे श्रितगोकर्णनिकेतमधिष्ठितगोकर्णाख्यस्थानम् ईश्वरं शिवम् उपवीणयितुं वीणया उप समीपे गातुम् 'सत्यापपाश' इत्यादिना वीणाशब्दादुपगानार्थे णिच्प्रत्ययः, ततस्तुमुन् । नारदः देवर्षिः रवेः सूर्य्यस्य उदगावृत्तिपथेन उदीचः उत्तरस्या दिशः आवृत्तिः निवर्त्तनं तस्याः पन्थाः गतिप्रकारः तेन । यथा रविः उत्तरस्या दिशः व्यावृत्य दक्षिणायनमार्गं गच्छति, तथा ययौ । [ 'उदयावृत्तिपथेन' इति वल्लभसम्मतः पाठः स च अस्मद्देशीयपुस्तके दृश्यते, तस्यैवं व्याख्या,—रवेः सम्बन्धिना उदयावृत्तेः पन्थाः तेन उदयावृत्तिपथेन आकाशमार्गेण ययौ जगाम । ] सूर्य्योपमानेन अस्य अतितेजस्त्वमुच्यते ॥

৩৩। তখন দেবর্ষি নারদ দক্ষিণসাগরের তীরবর্ত্তী গোকর্ণনামক নগরে প্রতিষ্ঠিত মহাদেবকে বীণাবাদনদ্বারা আরাধনা করার মানসে দক্ষিণায়ন সময়ে সূর্য্যদেব যেরূপ উত্তরদিক হইতে দক্ষিণদিকে গমন করেন, তদ্রূপ উত্তরদিক হইতে দক্ষিণদিকে যাইতেছিলেন।

**कुसुमैर्ग्रथितामपार्थिवैः स्रजमातोद्यशिरोनिवेशिताम् ।**
**अहरत् किल तस्य वेगवानधिवासस्पृहयेव मारुतः ॥ ३४**

३४ अः । अपार्थिवैः कुसुमैः ग्रथिताम् तस्य आतोद्यशिरोनिवेशिताम् स्रजम् वेगवान् मारुतः अधिवासस्पृहया इव अहरत् किल ॥

३४ । अपार्थिवैः अभौमैः दिव्यैरित्यर्थः । कुसुमैः ग्रथितां रचितां तस्य नारदस्य आतोद्यस्य वाद्यस्य वीणायाः शिरसि अग्रे निवेशिताम् । 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः । स्रजं मालां वेगवान् मारुतः, अधिवासे वासनायां स्पृहया इव स्रजा स्वाङ्गं संस्कर्त्तु-मित्यर्थः । 'संस्कारो गन्धमाल्याद्यैर्यः स्यात् तदधिवासनम्' इत्यमरः । अहरत् किल, किलेत्यैतिह्ये ॥

৩৪। সেই বীণার অগ্রভাগে স্বর্গীয় কুসুমদ্বারা গ্রথিত পুষ্পমালা সন্নিবেশিত ছিল পবন নিজে সেই মালার সৌরভে সৌরভিত হইবার নিমিত্তই যেন অতি বেগে আসিয়া তাহা হরণ করিল।

**भ्रमरैः कुसुमानुसारिभिः परिकीर्णा परिवादिनी मुनेः ।**
**ददृशे पवनावलेपजं सृजती वाष्पमिवाञ्जनाविलम् ॥ ३५**

३५ अ: । कुसुमानुसारिभि: भ्रमरै: परिकीर्णा मुने: परिवादिनी पवनावलेपजम् अञ्जनाविलम् वाष्पम् सृजती इव ददृशे ॥

३५ । कुसुमानुसारिभि: पुष्पानुयायिभि: भ्रमरै: अलिभि: परिकीर्णा व्याप्ता मुनेर्नारदस्य परिवादिनी वीणा । 'वीणा तु वल्लकी । विपञ्ची सा तु तन्त्रीभि: सप्तभि: परिवादिनी' इत्यमर: । पवनस्य वायो: अवलेप: अधिक्षेप: तज्जम् अञ्जनेन कज्जलेन आविलं कलुषं वाष्पम् अश्रु सृजती मुञ्चती इव ददृशे दृष्टा । भ्रमराणां साञ्जनवाष्पविन्दुसादृश्यं विवक्षितम् परिभूताः स्त्रियोऽपि हि रुदन्ति इति भाव: । 'वा नपुंसकस्य' इति वर्त्तमाने 'आच्छीनद्योर्नुम्' इति नुम्विकल्प: ॥

৩৫। অলিকুল সেই মালার অনুসরণ করিতে ছিল, তখন বোধ হইল—যেন মহর্ষির বীণাযন্ত্র পবনকৃত এই পরাভবদুঃখে অঞ্জন মলিন অশ্রুবিন্দু বিসর্জ্জন করিতেছে।

**अभिभूय विभूतिमार्त्तवीं मधुगन्धातिशयेन वीरुधाम् ।**
**नृपतेरमरस्रगाप सा दयितोरुस्तनकोटिसुस्थितिम् ॥ ३६**

३६ अ: । सा अमरस्रक् मधुगन्धातिशयेन वीरुधाम् आर्त्तवीं विभूतिम् अभिभूय नृपते: दयितोरुस्तनकोटिसुस्थितिम् आप ॥

३६ । सा अमरस्रक् दिव्यमाला मधुगन्धयो: मकरन्दसौरभयो: अतिशयेन आधिक्येन वीरुधां लतानाम् । 'लता प्रतानिनी वीरुत्' इत्यमर: । ऋतो: प्राप्ताम् आर्त्तवीम् ऋतुसम्बन्धिनीं विभूतिं सम्पदम् अभिभूय तिरस्कृत्य नृपते: अजस्य दयिताया: इन्दुमत्या: उर्वो: विशालयो: स्तनयो: ये कोटी चूचुकौ तयो: सुस्थितिं गोप्यस्थाने पतितत्वात् प्रशस्त स्थानम् आप प्राप्ता ॥

৩৬। অতঃপর সেই সুরকুসুমমালা মকরন্দ ও সৌরভের আতিশয্যনিবন্ধন উপবনস্থিত লতাবলীর ঋতুসম্ভূত সম্পত্তিকে পরাভূত করিয়া অজপ্রিয়তমা ইন্দুমতীর স্তনাগ্রভাগে পতিত হইল।

**क्षणमात्रसखीं सुजातयो: स्तनयोस्तामवलोक्य विह्वला ।**
**निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी ॥ ३७**

३७ अ: । सुजातयो: स्तनयो: क्षणमात्रसखीम् तां स्रजम् अवलोक्य विह्वला नरोत्तमप्रिया तमसा हृतचन्द्रा कौमुदी इव निमिमील ॥

३७ । सुजातयो: सुजन्मनो: सुन्दरयोरित्यर्थ: । स्तनयो: क्षणमात्रसखीं सखीमिव स्थिताम् । सुजातत्वसाधर्म्यात्स्रज: स्तनसखीत्वमिति भाव: । तां स्रजम् अवलोक्य [ईषद्दृष्ट्वा विह्वला परवशा नरोत्तमप्रिया इन्दुमती, तमसा राहुणा । 'तमस्तु राहु: स्वर्भानु:' इत्यमर: । हृतचन्द्रा

कौमुदी चन्द्रिका इव, निमिमील मुमोह ममार इत्यर्थः। 'निमीलो दीर्घनिद्रा च' इति हलायुधः। कौमुद्या निमीलनं प्रतिसंहारः॥

৩৭। মহিষী স্বীয় সুশোভন স্তনযুগলের ক্ষণসমাগম সখী সেই মালা অবলোকন করিয়া একান্ত বিহ্বলা এবং রাহুগ্রস্ত চন্দ্রের চন্দ্রিকার ন্যায় নিমীলিতা হইলেন।

**वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत्।**

**ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम्॥ ३८**

३८ अः। सा करणोज्झितेन वपुषा निपतन्ती पतिम् अपि अपातयत्, दीपार्चिः तैलनिषेकबिन्दुना सह मेदिनीम् उपैति ननु॥

३८। करणैः इन्द्रियैः उज्झितेन मुक्तेन। 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः। वपुषा निपतन्ती सा इन्दुमती पतिम् अजम् अपि अपातयत् पातयति स्म। तथाहि, निषिच्यते निषेकः तैलस्य निषेकः तैलनिषेकः क्षरत्तैलमित्यर्थः। तस्य बिन्दुना सह दीपार्चिः दीपज्वाला मेदिनीं भुवम् उपैति ननु उपैत्येव। नन्वित्यवधारणे। 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः। इन्दुमत्या दीपार्चिरुपमानम् अजस्य तैलबिन्दुः तत एव तस्या जीवितसमाप्तिस्तस्य जीवितशेषस्य सूचयति॥

৩৮। ইন্দুমতী তৎক্ষণাৎ চৈতন্যশূন্যা ও ভূতলে নিপতিতা হইয়া পতিকেও পাতিত করিলেন; দীপশিখা ক্ষরিত তৈলবিন্দুর সহিতই ভূতলে পতিত হইয়া থাকে।

**उभयोरपि पार्श्ववर्त्तिनां तुमुलेनार्त्तरवेण वेजिताः।**

**विहगाः कमलाकरालयाः समदुःखा इव तत्र चुक्रुशुः॥ ३९**

३९ अः। उभयोः पार्श्ववर्त्तिनाम् तुमुलेन आर्त्तरवेण वेजिताः कमलाकरालया विहगा अपि तत्र समदुःखा इव चुक्रुशुः॥

३९। उभयोः दम्पत्योः पार्श्ववर्त्तिनां परिजनानां तुमुलेन सङ्कुलेन आर्त्तरवेण करुणस्वनेन वेजिताः भीताः कमलाकरालयाः सरःस्थिताः विहगाः हंसादयः अपि, तत्र उपवने समदुःखाः इव तत्पार्श्ववर्त्तिनां समानशोका इव चुक्रुशुः क्रोशन्ति स्म।

৩৯। তদ্দর্শনে তাহাদের উভয়ের পার্শ্বস্থিত পরিচারকেরা মুক্তকণ্ঠে রোদন করিতে লাগিল। ঐ তুমুল আর্ত্তস্বরশ্রবণে সরোবরস্থিত হংস, সারসপ্রভৃতি পক্ষিগণ যেন সমবেদনায় ব্যথিত হইয়া চীৎকার করিতে লাগিল।

**नृपतेर्व्यजनादिभिस्तमो नुनुदे सा तु तथैव संस्थिता।**

**प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते॥ ४०**

৪০ অ:। নৃপতে: তম: ব্যজনাদিভি: নুনুদে সা তু তথা এব সংস্থিতা, হি প্রতিকারবিধানম্ আয়ুষ: শেষে সতি ফলায় কল্পতে ॥

৪০। নৃপতেঃ অজস্য তমঃ অজ্ঞানং, ব্যজনাভিঃ সাধনৈঃ নুনুদে অপসারিতম্ আদিশব্দেন জলসেককর্পূরক্ষোদাদয়ো গৃহ্যন্তে। সা তু ইন্দুমতী তু তথৈব তদবস্থা এব সংস্থিতা মৃতা। তথাহি—প্রতিকারবিধানং চিকিৎসা আয়ুষঃ জীবিতকালস্য শেষে অবশেষে সতি বিদ্যমানে। 'আয়ুর্জীবিতকালো না' ইত্যমরঃ। ফলায় সিদ্ধয়ে কল্পতে, আরোগ্যায় ভবতি নান্যথা। নৃপতেরায়ুঃশেষসদ্ভাবাৎ প্রতীকারস্য সাফল্যং তস্যাস্তু তদভাবাদফলমিত্যর্থঃ ॥

৪০। অনন্তর ব্যজনাদি দ্বারা শুশ্রূষায় মহারাজ অজের মোহ অপনীত হইল কিন্তু ইন্দুমতী সেই অচেতন অবস্থায়ই রহিলেন। পরমায়ু অবশিষ্ট থাকিলেই প্রতিকারচেষ্টা সফল হয়।

প্রতিযোজয়িতব্যবল্লকীসমবস্থামথ সত্ত্ববিপ্লবাৎ।
স নিনায় নিতান্তবৎসলঃ পরিগৃহ্যোচিতমঙ্কমঙ্গনাম্ ॥ ৪১

৪১ অ:। অথ নিতান্তবৎসল: স: সত্ত্ববিপ্লবাৎ প্রতিযোজয়িতব্যবল্লকীসমবস্থাম্ অঙ্গনাম্ পরিগৃহ্য উচিতম্ অঙ্কম্ নিনায় ॥

৪১। অথ সত্ত্বস্য চৈতন্যস্য বিপ্লবাৎ বিনাশাৎ হেতোঃ। 'দ্রব্যাসুব্যবসায়েষু সত্ত্বম্' ইত্যমরঃ। প্রতিযোজয়িতব্যা তন্ত্রীভিঃ যোজনীয়া ন তু যোজিততন্ত্রীত্যর্থঃ। যা বল্লকী বীণা তস্যাঃ সমা অবস্থা দশা যস্যাঃ তাম্ অঙ্গনাং বনিতাং, নিতান্তবৎসলঃ অতিপ্রেমবান্ সঃ অজঃ, পরিগৃহ্য হস্তাভ্যাং গৃহীত্বা, উচিতং পরিচিতম্ অঙ্কমুৎসঙ্গং নিনায় নীতবান্। বল্লকীপক্ষে তু সত্ত্বম্ তন্ত্রীণামবষ্টম্ভকঃ শলাকাবিশেষঃ ॥

৪১। অনন্তর সেই ললনাবৎসল নরপতি ইন্দুমতীর চিরপরিচিত নিজ অঙ্কে তন্ত্রীযোজনীয়া বীণার ন্যায় ইন্দুমতীকে তুলিয়া লইলেন।

পতিরঙ্কনিষণ্ণয়া তয়া করণাপায়বিভিন্নবর্ণয়া।
সমলক্ষ্যত বিভ্রদাবিলাং মৃগলেখামুষসীব চন্দ্রমাঃ ॥ ৪২

৪২ অ:। পতি: করণাপায়বিভিন্নবর্ণয়া অঙ্কনিষণ্ণয়া তয়া উষসি আবিলাম মৃগলেখাম্ বিভ্রচ্চন্দ্রমা ইব সমলক্ষ্যত ॥

৪২। পতিঃ অজঃ, অঙ্কনিষণ্ণয়া উৎসঙ্গস্থিতয়া করণানাম্ ইন্দ্রিয়াণামপায়েন অপগমেন হেতুনা বিভিন্নবর্ণয়া বিচ্ছায়য়া তয়া

वनितया, उषसि प्रातःकाले आविलां मलिनाम् मृगलेखां लाञ्छनं मृग-रेखारूपं बिभ्रत् धारयन् चन्द्रमाः इव, समलक्ष्यत अदृश्यत इत्युपमा॥

४२। তখন নরপতি নিজ ক্রোড়ে সেই জীবিতশূন্যা মলিনবর্ণা ইন্দুমতীকে ধারণ করিয়া উষাকালে মলিন মৃগরেখাধারী নিশাকরের তুল্য লক্ষিত হইতে লাগিলেন।

विललाप स वाष्पगद्गदं सहजामप्यपहाय धीरताम्।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु॥ ४३

४३ अः। सः सहजाम् अपि धीरताम् अपहाय वाष्पगद्गदं विललाप, अयः अपि अभितप्तं (सत्) मार्दवं भजते शरीरिषु का एव कथा॥

४३। सः अजः, सहजां स्वाभाविकीम् अपि धीरतां धैर्यम् अपहाय वाष्पेण कण्ठगतेन गद्गदं विशीर्णाक्षरं यथा तथा ध्वनिमात्रानुकारि-गद्गदशब्दैर्विललाप परिदेवितवान् 'विलापः परिदेवनम्' इत्यमरः। अभितप्तम् अग्निना सन्तप्तम् अयः लौहम् अपि अचेतनमपि इति भावः मार्दवं मृदुत्वं भजते प्राप्नोति शरीरिषु देहिषु चेतनेषु शोकादिना अभि-सन्तप्तेषु इति शेषः, विषये का एव कथा सन्दिग्धनिर्णयरूपा का वार्त्ता अनुक्तसिद्धमित्यर्थः सन्दिग्धे न्यायः प्रवर्त्तते। प्रतप्तेषु अधैर्यप्राप्ति-सन्देहो नास्त्येव इत्यर्थः।

४३। ইন্দুমতীর বিরহে তাঁহার স্বাভাবিক ধৈর্য্য দূরীভূত হইল। তিনি বাষ্প-গদ্গদকণ্ঠে রোদন করিতে লাগিলেন; শরীরীদিগের কথা দূরে থাকুক, লৌহও সন্তপ্ত হইলে মৃদুতা প্রাপ্ত হইয়া থাকে।

कुसुमान्यपि गात्रसङ्गमात् प्रभवन्त्यायुरपोहितुं यदि।
नभविष्यति हन्त साधनं किमिवान्यत् प्रहरिष्यतो विधेः॥ ४४

४४ अः। कुसुमानि अपि गात्रसङ्गमात् आयुः अपोहितुम् प्रभवन्ति यदि हन्त प्रहरिष्यतः विधेः अन्यत् किम् इव साधनम् न भविष्यति॥

४४। कुसुमानि पुष्पाणि अपि। अपिशब्दो नितान्तमार्दवद्योत-नार्थः। गात्रसङ्गमात् देहसंसर्गात् तीव्राभिघातादित्यर्थः। आयुः अपोहितुम् अपहर्त्तुं प्रभवन्ति यदि। हन्त विषादे। 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयो'रित्यमरः। प्रहरिष्यतः हन्तुमिच्छतो विधेर्दैवस्य अन्यत् कुसुमातिरिक्तं किम् इव वस्तु। इवशब्दो वाक्यालङ्कारे कीदृश-मित्यर्थः। साधनं प्रहारसाधनं न भविष्यति सर्वमपि साधनं भविष्यत्येव इत्यर्थः।

৪৪। হায়! যদি কুসুমও শরীরে সঙ্গত হইয়া প্রাণবিনাশ করিতে সমর্থ হইল, তবে বিধি সংহার করিতে ইচ্ছা করিলে কোন্ বস্তুদ্বারাই বা সংহার করিতে না পারেন।

**অথবা মৃদু বস্তু হিংসিতুং মৃদুনৈবারভতে প্রজান্তকঃ।**
**হিমসেকবিপত্তিরত্র মে নলিনী পূর্বনিদর্শনং মতা ॥ ৪৫**

৪৫ অঃ। অথবা প্রজান্তকঃ মৃদু বস্তু মৃদুনা এব হিংসিতুম্ আরভতে, অত্র হিমসেকবিপত্তিঃ নলিনী মে পূর্বনিদর্শনম্ মতা ॥

**৪৫। অথবা পক্ষান্তরে। প্রজান্তকঃ কালঃ, মৃদু কোমলং বস্তু মৃদুনা এব বস্তুনা হিংসিতুং হন্তুম্ আরভতে উপক্রমতে। অত্রার্থে হিমসেকেন তুষারনিস্যন্দেন বিপত্তিঃ মৃত্যুঃ যস্যাঃ সা নলিনী, মে পূর্বং প্রথমং নিদর্শনম্ উদাহরণং মতা। দ্বিতীয়ং নিদর্শনং পুষ্পমৃত্যুরিন্দুমতীতি ভাবঃ।**

৫৫। অথবা কৃতান্ত কোমল বস্তুদ্বারাই কোমল বস্তুর সংহার করিয়া থাকেন। ইহার প্রথম উদাহরণ—কমলিনী, যেহেতু উহা শিশিরবিন্দুপাতে বিনষ্ট হইয়া থাকে।

**স্রগিয়ং যদি জীবিতাপহা হৃদয়ে কিং নিহিতা ন হন্তি মাম্।**
**বিষমপ্যমৃতং ক্বচিদ্ভবেদমৃতং বা বিষমীশ্বরেচ্ছয়া ॥ ৪৬**

৪৬ অঃ। ইয়ম্ স্রক্ যদি জীবিতাপহা, হৃদয়ে নিহিতা (সতী) মাং কিং ন হন্তি, ঈশ্বরেচ্ছয়া ক্বচিত্ বিষম্ অপি অমৃতং ভবেত্ (ক্বচিত্) অমৃতং বা বিষম্ (ভবেত্) ॥

**৪৬। ইয়ং স্রক্ জীবিতম্ অপহন্তীতি জীবিতাপহা যদি, হৃদয়ে বক্ষসি 'হৃদয়ং বক্ষসি স্বান্তে' ইত্যমরঃ। নিহিতা অর্পিতা সতী, মাং কিং ন হন্তি। ঈশ্বরেচ্ছয়া ক্বচিত্ প্রদেশে বিষমপি অমৃতং ভবেত্ ক্বচিত্ অমৃতং বা বিষং ভবেত্। দৈবমেবাত্র কারণমিত্যর্থঃ ॥**

৪৬। যদি এই পারিজাতমালাই প্রিয়তমার প্রাণনাশ করিল, তবে আমিও এই মালাকে হৃদয়ে স্থাপন করিতেছি, আমাকে কেন বিনাশ করিতেছে না? ঈশ্বরের অভিপ্রায়ে বিষও কখন অমৃত হয়, অমৃতও কখন বিষ হয়।

**অথবা মম ভাগ্যবিপ্লবাদশনিঃ কল্পিত এষ বেধসা।**
**যদনেন তরুর্ন পাতিতঃ ক্ষপিতা তদ্বিটপাশ্রিতা লতা ॥ ৪৭**

৪৭ অঃ। অথবা মম ভাগ্যবিপ্লবাত্ বেধসা এষঃ অশনিঃ কল্পিতঃ, যত্ অনেন তরুঃ ন পাতিতঃ তদ্বিটপাশ্রিতা লতা ক্ষপিতা ॥

**৪৭। অথবা মম ভাগ্যস্য বিপ্লবাত্ বিপর্য্যয়াত্ এষঃ স্রক্ ইত্যর্থঃ। বিধেয়প্রাধান্যাত্ পুংলিঙ্গনির্দেশঃ। বেধসা বিধাত্রা অশনিঃ বৈদ্যুতোঽগ্নিঃ। কল্পিতঃ। [অপূর্বঃ কৃত ইত্যভিসন্ধিঃ।] 'দম্ভোলিরশনির্দ্বয়োঃ' ইত্য-**

मरः । अपूर्वत्वमेव स्पष्टयति—यत् यस्मात् अनेन पुरोवर्त्तिना अपि अशनिना पुष्पाशनिना इत्यर्थः [ प्रसिद्धाशनिना इव ] तरुः तरुस्थानीयः स्वयम् एव [ अहमित्यर्थः ] न पातितः किन्तु तस्य तरोः विटपाश्रिता लता, मदाश्रिता इन्दुमतीत्यर्थः । क्षपिता नाशिता ॥

৪৭। অথবা আমারই অদৃষ্টদোষে বিধাতা ইহাকে এইরূপ অপূর্ব্ব বজ্র করিয়া নির্ম্মাণ করিয়াছেন যে, ইহাদ্বারা বৃক্ষ নিপাতিত হইল না কিন্তু তাহার শাখাশ্রিত লতাটী বিনষ্ট হইল।

कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि ।
कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ॥४८

४८ अ: । यदा मयि चिरम् अपराद्धेऽपि अवधीरणां न कृतवती असि ( तत् ) कथम् एकपदे निरागसम् इमं जनम् आभाष्यं न मन्यसे ॥

४८ । मयि चिरं भूरिशः अपराद्धे अपि अपराधं कृतवत्यपि । राधेः कर्त्तरि क्तः । यदा यस्मात् हेतोः, यदेति हेत्वर्थः । 'स्वरादौ पठ्यते यदेति हेतौ' इति गणव्याख्यानात् अवधीरणाम् अवज्ञां न कृतवती असि न अकार्षीः । तत् कथम् एकपदे तत्क्षणे । 'स्यात् तत्क्षणे एकपदम्' इति विश्वः । निरागसं नितरामनपराधम् इमं जनम् इममिति आत्मनिर्द्देशः । मामित्यर्थः आभाष्यं सम्भाष्यं न मन्यसे न चिन्तयसि ।

৪৮। প্রিয়তমে ! পূর্ব্বে আমি বার বার অপরাধ করিলেও তুমি আমাকে কখনও অবজ্ঞা কর নাই, কিন্তু এক্ষণে আমি তোমার নিকট কিছুই অপরাধ করি নাই, তথাপি তুমি কি নিমিত্ত আমাকে সম্ভাষণযোগ্য মনে করিতেছ না !

ध्रुवमस्मि शठः शुचिस्मिते विदितः कैतववत्सलस्तव ।
परलोकमसन्निवृत्तये यदनापृच्छ्य गतासि मामितः ॥४९

४९ अ: । हे शुचिस्मिते, शठः कैतववत्सलः तव ध्रुवं विदितः अस्मि, यत् माम् अनापृच्छ्य असन्निवृत्तये इतः परलोकं गता असि ॥

४९ । हे शुचिस्मिते ! शठः गूढविप्रियकारी कैतवेन कपटेन वत्सलः कैतवस्निग्ध इति ध्रुवं सत्यं तव विदितः त्वया विज्ञातः अस्मि । 'मतिबुद्धि' इत्यादिना कर्त्तरि क्तः, क्तस्य च वर्त्तमाने' इति कर्त्तरि षष्ठी । कुतः ? यत् यस्मात् माम् अनापृच्छ्य अनामन्त्र्य इतः अस्मात् लोकात् परलोकम् असन्निवृत्तये अपुनरावृत्तये गता असि ।

৪৯। অয়ি মধুরহাসিনি ! আমাকে কোন কথা না বলিয়াই চিরকালের জন্য

এস্থান হইতে পরলোকে প্রস্থান করিলে ? নিশ্চয়ই বুঝিলাম—তুমি আমাকে শঠ ও কপটপ্রণয়ী বলিয়া জানিতে।

**दयितां यदि तावदन्वगाद्विनिवृत्तं किमिदं तया विना।**
**सहतां हतजीवितं मम प्रबलामात्मकृतेन वेदनाम् ॥५०**

५० अ:। इदं मम हतजीवितं तावत् दयिताम् अन्वगात् यदि, (तर्हि) तया विना किं विनिवृत्तम् अतएव आत्मकृतेन प्रबलां वेदनां सहताम्॥

५०। इदं मम हतजीवितं कुत्सितं जीवितं तावदादौ दयितामिन्दुमतीमन्वगात् अन्वगच्छत् यदि अन्वगादेव। यद्यत्रावधारणे। पूर्वं मूर्च्छितत्वादिति भावः। तर्हि तया दयितया विना किं किमर्थं विनिवृत्तं प्रत्यागतम्। प्रत्यागमनं न युक्तमित्यर्थः। अतएव आत्मकृतेन स्वदुश्चेष्टितेन निवृत्तरूपेण प्रबलामधिकां वेदनां दुःखं सहतां क्षमताम्। स्वयं कृतापराधेषु सहिष्णुतैव शरणमिति भावः॥

রে দগ্ধজীবন! যদি তুই প্রিয়তমার অনুগমন করিয়াছিলি, তবে আবার তাহাকে পরিত্যাগ করিয়া কিজন্য প্রত্যাগমন করিলি ? এক্ষণ এই আত্মকৃত দুঃসহ বিরহযন্ত্রণা সহ্য কর।

**सुरतश्रमसम्भृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते।**
**अथ चास्तमिता त्वमात्मना धिगिमां देहभृतामसारताम्॥५१**

५१। सुरतश्रमसम्भृत: स्वेदलवोद्गम: अपि ते मुखे ध्रियते अथच त्वम् आत्मना अस्तम् इता (अत:) देहभृताम् इमाम् असारतां धिक्॥

५१। सुरतश्रमेण सम्भृतः जनितः स्वेदलवोद्गमोऽपि ते तव मुखे ध्रियते वर्त्तते। अथच त्वमात्मना स्वरूपेण अस्तं नाशमिता प्राप्ता। अतः कारणाद्देहभृतां प्राणिनामिमां प्रत्यक्षामसारतामस्थिरतां धिक्॥

৫১। প্রিয়তমে! এখনও তোমার মুখে সম্ভোগশ্রমজনিত ঘর্ম্মজলবিন্দু রহিয়াছে, কিন্তু ইতিমধ্যেই তুমি স্বয়ং প্রাণশূন্য হইয়াছ! অতএব দেহীদিগের এইরূপ অসারতায় ধিক্!

**मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम्।**
**ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः॥५२**

५२ अ:। मया मनसा अपि तव विप्रियं न कृतपूर्वं, मां किं जहासि ननु? अहं क्षिते: शब्दपति: भावनिबन्धना मे रति: (तु) त्वयि (अस्ति)॥

५२। आत्मनि कैतववत्सलत्वं शठत्वञ्च इन्दुमत्यभिप्रायेणैव यत्

आरोपितं तत् अधुना निषेधयति—मनसेति। मया मनसापि तव विप्रियं न कृतपूर्व्वम् पूर्वं न कृतमित्यर्थः। सुप्सुपेति समासः। किं केन निमित्तेन मां जहासि त्यजसि। ननु मेदिनीपतिस्त्वम् अतः कथं विप्रियं नाशङ्कनीयम् इत्याह—ननु प्रिये, अहं क्षितेः शब्दपतिः शब्दतः एव पतिः न त्वर्थत इत्यर्थः। [ पालयिता प्रियश्च पतिः, अतः मेदिन्याः शब्दशक्त्या पतित्वं नार्थशक्त्या इत्याशयः। तर्हि कुत्र तवार्थतः पतित्वमित्याशङ्क्याह ] भावनिबन्धना अभिप्रायनिबन्धना स्वभावहेतुका न तु वाह्यकरणाश्रया मे रतिः प्रेम तु त्वय्येव अस्तीति शेषः। [ शठनायको हि एकत्र बद्धभावः अन्यत्र दर्शितवहिरनुरागो गूढ़ं विप्रियमाचरति। अहन्तु अकृतदारान्तरपरिग्रहः कथं शठः स्यामिति ? ]॥

৫২। আমি পূর্ব্বে মনেও তোমার কোন অপ্রিয় আচরণ করি নাই, তবে আমাকে তুমি কিজন্য পরিত্যাগ করিতেছ ? দেখ আমি বসুমতীর পতি নামমাত্র, কিন্তু তোমার উপরেই আমার আন্তরিক অনুরাগ নিবদ্ধ হইয়াছিল।

कुसुमोत्खचितान् वलीभृतश्चलयन् भृङ्गरुचस्तवालकान्।
करभोरु! करोति मारुतस्त्वदुपावर्त्तनशङ्कि मे मनः॥ ५३

५३ अ:। हे करभोरु! मारुत: कुसुमोत्खचितान् वलीभृत: भृङ्गरुच: तव अलकान् चलयन् (सन्) मे मन: त्वदुपावर्त्तनशङ्कि करोति॥

५३। कुसुमैरुत्खचितानुत्कर्षेण रचितान् वलीभृतो भङ्गीयुक्तान् कुटिलानित्यर्थः। भृङ्गरुचो नीलान् तवालकान् चलयन् कम्पयन् मारुतः, हे करभोरु! करभसदृशोरु! 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। मे मनस्त्वदुपावर्त्तनशङ्कि तव पुनरागमने शङ्कावत्करोति। त्वदुज्जीवने शङ्कां सम्भावनामिति यावत्। कारयतीत्यर्थः॥

৫৩। অয়ি করভোরু! সমীরণ তোমার কুসুমসমলঙ্কৃত ভ্রমরতুল্য কৃষ্ণবর্ণ কুটিল অলকাবলী কম্পিত করিয়া তুমি যেন পুনর্জ্জীবিত হইয়াছ এরূপ আশা আমার জন্মাইয়া দিতেছে।

तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे।
ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः॥५४

५४ अ:। हे प्रिये! तत् आशु प्रतिबोधेन मे विषादं, नक्तम् ओषधि: ज्वलितेन तुहिनाद्रे: गुहागतं तम: इव अपोहितुम् अर्हसि॥

५४। हे प्रिये! तत्तस्मात्कारणात् आशु मे विषादं दुःखम्। नक्तं रात्रा-

वोषधिस्तृणज्योतिराख्या लता ज्वलितेन प्रकाशेन तुहिनाद्रेर्हिमाचलस्य गुहागतं तमः अन्धकारमिव प्रतिबोधेन ज्ञानेनापोहितुं निरसितुमर्हसि ॥

৫৪। অতএব, হে প্রিয়তমে! রজনীযোগে প্রজ্জ্বলিত ওষধি সকল যেরূপ হিমগিরিগুহার অন্ধকার দূর করে, তদ্রূপ অবিলম্বে চৈতন্যলাভ করিয়া আমার মনের বিষাদ দূর করা তোমার উচিত হইতেছে।

इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम्।
निशि सुप्तमिवैकपङ्कजं विरताभ्यन्तरषट्पदस्वनम् ॥५५

৫৫ অ:। इदम् उच्छ्वसितालकं विश्रान्तकथं तव मुखं निशि सुप्तं विरताभ्यन्तरषट्पदस्वनम् एकपङ्कजम् इव मां दुनोति ॥

৫৫। इदमुच्छ्वसितालकं चलितचूर्णकुन्तलं विश्रान्तकथं निवृत्तसंलापं तव मुखं निशि रात्रौ सुप्तं निमीलितं विरतः अभ्यन्तराणामन्तर्वर्त्तिनां षट्पदानां स्वनो यत्र तत्, निःशब्दभृङ्गमित्यर्थः। एकपङ्कजम् अद्वितीयं पद्ममिव, मां दुनोति परितापयति ॥

৫৫। তোমার মুখমণ্ডলে অলকজাল বায়ুকর্তৃক সঞ্চালিত হইতেছে, কিন্তু বাক্য একবারে বিশ্রামলাভ করিয়াছে; এক্ষণে উহা নিশাকালে মুকুলিত এবং অভ্যন্তরে ভ্রমরধ্বনিশূন্য পঙ্কজের ন্যায় আমাকে নিতান্ত সন্তপ্ত করিতেছে।

शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम्।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥५६

৫৬ অ:। शर्व्वरी शशिनं, दयिता द्वन्द्वचरं पतत्रिणं पुनः एति इति तौ विरहान्तरक्षमौ, अत्यन्तगता (त्वन्तु) मां कथं न दहेः ॥

৫৬। शर्व्वरी रात्रिः शशिनं चन्द्रं पुनरेति प्राप्नोति। द्वन्द्वीभूय चरतीति द्वन्द्वचरः। तं पतत्रिणं चक्रवाकं दयिता चक्रवाकी पुनरेति। इति हेतोः तौ चन्द्रचक्रवाकौ विरहान्तरक्षमौ विरहावधिसहौ। 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये' इत्यमरः। अत्यन्तगता पुनरावृत्तिरहिता त्वं तु कथं न मां दहेः न सन्तापयेः अपि तु दहेरेवेत्यर्थः ॥

৫৬। রজনী চন্দ্রমাকে এবং চক্রবাকী সহচর চক্রবাককে পুনর্ব্বার প্রাপ্ত হইয়া থাকে, অতএব চন্দ্রমা ও চক্রবাক বিরহ যন্ত্রণা সহ্য করিতে পারে; কিন্তু তুমি পুনঃ ফিরিয়া আসিবে না, অতএব তোমার বিরহ আমাকে দগ্ধ করিবে না কেন?

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम्।
तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥५७

५७ अ:। हे वामोरु, नवपल्लवसंस्तरे अपि अर्पितं मृदु ते तव यत् अङ्गं दूयेत तत् इदं चिताधिरोहणं कथं विषहिष्यते वद ॥

५७। नवपल्लवसंस्तरे नूतनप्रबालास्तरणेऽपि अर्पितं स्थापित मृदु ते तव यदङ्गं शरीरं दूयेत परितप्तं भवेत्। वामौ सुन्दरौ ऊरू यस्याः सा हे वामोरु! 'वामं स्यात् सुन्दरे सव्ये' इति केशवः। 'संहितशफलक्षण—' इत्यादिनोङ्प्रत्ययः। तदिदमङ्गं चितायाः काष्ठसञ्चयस्य अधिरोहणं कथं विषहिष्यते वद ॥

৫৭। হে বামোরু! তোমার যে কোমল কলেবর অভিনবপল্লবরচিত শয্যায় শয়ন করিয়া বেদনা অনুভব করিত, বল—এক্ষণে সেই শরীর কিরূপে চিতারোহণক্লেশ সহ্য করিবে?।

इयमप्रतिबोधशायिनीं रशना त्वां प्रथमा रहःसखी।
गतिविभ्रमसादनीरवा न शुचा नानुमृतेव लक्ष्यते ॥५८

५८ अ:। इयं प्रथमा रहःसखी गतिविभ्रमसादनीरवा रशना अप्रतिबोधशायिनीं त्वां शुचा अनुमृता इव न लक्ष्यते न ॥

५८। इयं प्रथमा आद्या रहःसखी, सुरतसमयेऽप्यनुयानादिति भावः। गतिविभ्रमसादेन नीरवा विलासोपरमेण निःशब्दा रशना मेखला अप्रतिबोधम् अपुनरुद्बोधं यथा तथा शायिनीम् मृतामित्यर्थः। त्वामनु त्वया सह तृतीयार्थ इत्यनुशब्दस्य कर्मप्रवचनीयत्वेन द्वितीया। शुचा शोकेन मृतेव न लक्ष्यते इति न, लक्ष्यत एवेत्यर्थः। सम्भाव्यनिषेधनिवर्त्तनाय द्वौ प्रतिषेधौ ॥

৫৮। এই রশনা সুরত-রঙ্গে অনুগামিনী হইয়া তোমার রহস্যসখী হইয়াছিল, এক্ষণে তোমার দীর্ঘনিদ্রা দর্শনে বিলাসগমনের বিরামে নীরব হইয়া শোকে অনুমৃতার ন্যায় পরিলক্ষিত হইতেছে না কি?

कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम्।
पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः ॥५९

त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया।
विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितुं क्षमाः ॥६०

५९—६० अ:। अन्यभृतासु कलं भाषितं, कलहंसीषु मदालसं गतं, पृषतीषु विलोलम् ईक्षितं, पवनाधूतलतासु विभ्रमाः, अमी गुणाः त्रिदिवोत्सुकया अपि त्वया माम् अवेक्ष्य सत्यं निहिताः (किन्तु) तव विरहे गुरुव्यथं मे हृदयं त्ववलम्बितुं न क्षमाः ॥

५६-६०। युग्मम्। उभयोरेकान्वयः। अन्यभृतासु कोकिलासु कलं मधुरं भाषितं भाषणम्। कलहंसीषु विशिष्टहंसीषु मदालसं मन्थरं गतं गमनम्। पृषतीषु हरिणीषु विलोलमीक्षितं चञ्चला दृष्टिः। पवनेन वायुना आधूतलतासु ईषत्कम्पितलतासु विभ्रमा विलासाः। इत्यमी पूर्वोक्ताः कलभाषणादयो गुणाः। एषु कोकिलादिस्थानेष्विति शेषः। त्रिदिवोत्सुकयापीह जीवन्त्येव स्वर्गं प्रति प्रस्थितयापि त्वया मामवेक्ष्य विरहासहं विचार्य्य सत्यं निहिताः मत्प्राणधारणोपायतया स्थापिता इत्यर्थः। तव विरहे गुरुव्यथमतिदुःखं मे हृदयं मनः अवलम्बितुं स्थापयितुं न क्षमाः न शक्ताः। ते तु त्वत्संगम एव सुखकारिणः, नान्यथा। प्रत्युत प्राणानपहरन्तीति भावः॥

৫৯—৬০। প্রিয়ে! তুমি সুরলোকগমনে একান্ত উৎসুক হইয়া আমার ক্লেশ নিবারণমানসে কোকিলে মধুরালাপ, রাজহংসীমধ্যে মন্থরগতি, হরিণীগণে চঞ্চলদৃষ্টি এবং পবনকম্পিত লতাজালে হাবভাব রাখিয়া গিয়াছ; কিন্তু তোমার বিরহে নিদারুণ ব্যথায় ব্যথিত আমার এ হৃদয় ঐ সকল দ্বারা ধৈর্য্যধারণে সমর্থ হইতেছে না।

**मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ।**
**अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसाम्प्रतम्॥६१**

६१ अः। ननु सहकारः फलिनी च इमौ त्वया मिथुनम् परिकल्पितम् अनयोर्विवाहसत्क्रियाम् अविधाय गम्यते इति असाम्प्रतम्॥

६१। ननु हे प्रिये! सहकारश्चूतविशेषः फलिनी प्रियङ्गुलता च इमौ त्वया मिथुनं परिकल्पितं मिथुनत्वेनाभ्यमानि। अनयोः फलिनीसहकारयोर्विवाहसत्क्रियां विवाहमङ्गलमविधाय अकृत्वा गम्यते इत्यसाम्प्रतमयुक्तम्। मातृहीनानां न किञ्चित् सुखमस्तीति भावः॥

৬১। প্রিয়ে! এই সহকার তরু ও প্রিয়ঙ্গুলতাকে তুমি পতিপত্নী করিয়া দিবে এরূপ সঙ্কল্প করিয়াছিলে, কিন্তু এক্ষণে ইহাদের বিবাহসংস্কার সমাধান না করিয়া প্রস্থান করিলে, ইহা তোমার নিতান্ত অনুচিত কার্য্য হইতেছে।

**कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति।**
**अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम्॥६२**

६२ अः। त्वया कृतदोहदः अयम् अशोकः यत् कुसुमम् उदीरयिष्यति, तव अलकाभरणं तत् कथं निवापमाल्यतां नेष्यामि॥

६२। वृक्षादिपोषकं दोहदम्। त्वया कृतं दोहदं पादताड़नरूपं यस्य सोऽयमशोको यत् कुसुममुदीरयिष्यति प्रसविष्यते, तवालकाना-

माभरणमाभरणभूतं तत्कुसुमं कथं नु केन प्रकारेण निवापमाल्यतां दाहाञ्जलेरर्घ्यतां नेष्यामि। 'निवापः पितृदानं स्यात्' इत्यमरः॥

৬২। তুমি এই অশোকতরুর পুষ্পোদ্গম হওয়ার জন্য দোহদ প্রদান করিয়াছিলে। এক্ষণে এই বিকসিতপুষ্প তোমার অলকজালের অলঙ্কাররূপে প্রদান না করিয়া ঔর্দ্ধদেহিক কার্য্যে কিরূপে নিয়োজিত করিব?

**स्मरतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभम्।**
**अमुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे॥६३**

६३ अ:। हे सुगात्रि! अन्यदुर्लभं सशब्दनूपुरं चरणानुग्रहं स्मरता इव अमुना अशोकेन कुसुमाश्रुवर्षिणा त्वं शोच्यसे॥

६३। अन्यदुर्लभं दुष्प्रापं किन्तु मत्तव्यमेवेत्यर्थः। सशब्दं ध्वनियुक्तं नूपुरं मञ्जीरं यस्य तं चरणानुग्रहं पादेन ताड़नरूपं स्मरतेव चिन्तयतेव कुसुमान्येव अश्रूणि तद्वर्षिणा अमुना पुरोवर्त्तिना अशोकेन, हे सुगात्रि! 'अङ्गगात्रकण्ठेभ्यश्च' इति वक्तव्यात् ङीप्। त्वं शोच्यसे॥

৬৩। সুন্দরি! এক্ষণে এই অশোকতরু অন্যের দুর্ল্লভ নূপুররবমুখরিত তোমার পদাঘাতরূপ অনুগ্রহ স্মরণ করিয়াই যেন নিরন্তর কুসুমাশ্রু বর্ষণপূর্ব্বক তোমার নিমিত্ত শোকপ্রকাশ করিতেছে।

**तव निःश्वसितानुकारिभिर्बकुलैरर्द्धचितां समं मया।**
**असमाप्य विलासमेखलां किमिदं किन्नरकण्ठि सुप्यते॥६४**

६४ अ:। हे किन्नरकण्ठि, तव निःश्वसितानुकारिभिः बकुलैर्मया समम् अर्द्धचिता विलासमेखलाम् असमाप्य (त्वया) किमिदं सुप्यते॥

६४। तव निःश्वसितानुकारिभिर्बकुलैर्बकुलकुसुमैर्मया समं सार्द्धम् अर्द्धचिताम् अर्द्धं यथा तथा चितां रचितां विलासमेखलामसमाप्य अपूरयित्वा। किन्नरस्य देवयोनिविशेषस्य कण्ठ इव कण्ठो यस्यास्तत्संबुद्धिः हे किन्नरकण्ठि! 'अङ्गगात्रकण्ठेभ्यश्च' इति ङीप्। किमिदं सुप्यते निद्रा क्रियते। 'वचिस्वपि' इत्यादिना संप्रसारणम्। अनुचितमिदं स्वपनमित्यर्थः॥

৬৪। অয়ি কিন্নরকলনাদিনি! তোমার নিঃশ্বাসের ন্যায় সুগন্ধি বকুলপুষ্পের দ্বারা তুমি আমার সহিত যে এই বিলাসরশনা অর্দ্ধরচনা করিয়াছ, তাহা সম্পূর্ণ না করিয়া কিজন্য নিদ্রাভিভূত হইলে?।

**समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः।**
**अहमेकरसस्तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः॥६५**

६५ अ:। सखीजनः समदुःखसुखः, अयम् आत्मजः प्रतिपच्चन्द्रनिभः, अहम् एकरसः, तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः॥

६५। सखीजनः समदुःखसुखः, त्वद्दुःखेन दुःखी त्वत्सुखेन सुखी इत्यर्थः। अयमात्मजो बालः प्रतिपच्चन्द्रनिभः दर्शनीयो वर्द्धिष्णुश्चेत्यर्थः। प्रतिपच्छब्देन द्वितीया लक्ष्यते प्रतिपदि चन्द्रस्यादर्शनात्। अहञ्च एकरसः अभिन्नरागः समानप्रेमा इत्यर्थः। 'शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः' इत्यमरः। तथापि जीवितसामग्रीसत्त्वेऽपीत्यर्थः। ते तव व्यवसायोऽस्मत्परित्यागरूपो व्यापारः प्रतिपत्त्या निष्ठुरः क्रूरः। 'प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च। प्रागल्भ्ये च प्रबोधे च' इति विश्वः। "स्मर्त्तु" "न शक्यः किमुताधिकर्त्तु"मिति भावः॥

৬৫। তোমার এই সকল সখী তোমার দুঃখে দুঃখী ও তোমার সুখে সুখী; তোমার এই পুত্র প্রতিপদুদিত চন্দ্রমার ন্যায় প্রিয়দর্শন; আর আমিও তোমার প্রতি একান্ত অনুরাগী, তথাপি তুমি যে আমাদিগকে পরিত্যাগ করিয়া প্রস্থান করিলে ইহা তোমার নিশ্চয়ই নিতান্ত নিষ্ঠুরতার কার্য্য হইল।

**धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः।**
**गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे॥६६**

६६ अ:। अद्य मे धृतिः अस्तम् इता, रतिः च्युता, गेयम् विरतम्, ऋतुः निरुत्सवः, आभरणप्रयोजनं गतं, शयनीयं परिशून्यम्॥

६६। अद्य मे धृतिः धैर्य्यं प्रतीतिर्वा अस्तं नाशम् इता। रतिः क्रीड़ा च्युता गता। गेयं गानं विरतम्। ऋतुर्वसन्तादिर्निरुत्सवः। आभरणानां प्रयोजनं गतम् अपगतम्। शेतेऽस्मिन्निति शयनीयं तल्पम्। 'कृत्यल्युटो बहुलम्' इत्यधिकरणार्थेऽनीयप्रत्ययः। परिशून्यम्। त्वां विना सर्वमपि निष्फलमिति भावः॥

৬৬। অদ্য হইতে আমার ধৈর্য্য লোপ পাইল, ভোগস্পৃহা নিবৃত্ত হইল, সঙ্গীতে বিরক্তি জন্মিল, বসন্তাদি ঋতু সকল আমার পক্ষে উৎসবশূন্য হইল। আর আমার আভরণধারণের প্রয়োজন নাই এবং শয্যাও শূন্য হইল।

**गृहिणी सचिवः सखी मिथः**
**प्रियशिष्या ललिते कलाविधौ।**

करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम् ॥ ६৭

६৭ অ:। (त्वमेव) गृहिणी सचिवः, मिथः सखी, ललिते कलाविधौ प्रियशिष्या, (अत एव) करुणाविमुखेन मृत्युना त्वां हरता मे किं न हृतं वद ॥

६৭। त्वमेव गृहिणी दाराः। अनेन सर्वं कुटुम्बं त्वदाश्रयमिति भावः। सचिवो बुद्धिसहायो मन्त्री। सर्वो हितोपदेशस्त्वदायत्त इत्यनेनोच्यते मिथो रहसि सखी नर्मसचिवः। अनेन सर्वोपभोगस्त्वदाश्रय इति प्रकटितम्। ललिते मनोहरे कलाविधौ वादित्रादिचतुःषष्टिकलाप्रयोगे प्रियशिष्या। प्रियत्वं प्राज्ञत्वादित्यभिसन्धिः। सर्वानन्दोऽनेन त्वन्निबन्धन इत्युद्घाटितम्। अतस्त्वां तत्समष्टिरूपां हरता अत एव करुणाविमुखेन कृपाशून्येन मृत्युना मे मत्सम्बन्धि किं वस्तु न हृतं वद। सर्वमपि हृतमित्यर्थः ॥

৬৭। প্রিয়তমে! তুমি আমার গৃহিণী, মন্ত্রী, রহস্যসখী এবং মনোহর নৃত্যগীত প্রভৃতি কলালাপে প্রিয়শিষ্যা; বল দেখি, নির্দ্দয় কৃতান্ত তোমাকে হরণ করিয়া আমার কি না অপহরণ করিল।

मदिराक्षि मदाननार्पितं मधु पीत्वा रसवत् कथं नु मे।
अनुपास्यसि वाष्पदूषितं परलोकोपनतं जलाञ्जलिम् ॥ ६৮

६৮ अ:। हे मदिराक्षि, मदाननार्पितं रसवत् मधु पीत्वा परलोकोपनतं मे वाष्पदूषितं जलाञ्जलिं कथं नु अनुपास्यसि ॥

६৮। माद्यत्यनयेति मदिरा लोकप्रसिद्धा, तथापि 'नार्यो मदिरलोचनाः' इत्यादिप्रयोगदर्शनान्माद्यत्याभ्यामिति मदिरे अक्षिणी यस्यास्तत्संबुद्धिः हे मदिराक्षि! मदाननेनार्पितं रसवत् स्वादुतरं मधु मद्यं पीत्वा वाष्पदूषितमश्रुतप्तं परलोकोपनतं परलोकप्राप्तं मे जलाञ्जलिं तिलोदकाञ्जलिं कथं नु अनु अनन्तरं पास्यसि तदनन्तरमिदमनर्हमित्यर्थः। यथाह भट्टमल्लः—'अनुपानं हिमजलं यवगोधूमनिर्मिते। दध्नि मद्ये विषे द्राक्षे पिष्टेमिष्टमयेऽपि च ॥' इति। तच्चेहैव युज्यते ॥ इदं तूष्णं लोकान्तरोपयोगित्वेत्यायुर्वेदविरोधात् कथमनुपास्यसीति भावः ॥

৬৮। হে মদিরলোচনে! তুমি আমার মুখসমর্পিত সুস্বাদু মদ্য পান করিয়া এক্ষণে কিরূপে মৎপ্রদত্ত লোকান্তরোপনীত অশ্রুজলদূষিত জলাঞ্জলি অনুপান করিবে?।

विभवेऽपि सति त्वया विना सुखमेतावदजस्य गण्यताम्।
अहृतस्य विलोभनान्तरैर्मम सर्व्वे विषयास्त्वदाश्रयाः ॥ ६৯

६९ अ:। विभवे सति अपि त्वया विना अजस्य एतावत् (एव) सुखं गण्यताम्, विलोभनान्तरैः अहृतस्य मम सर्वे विषयाः त्वदाश्रयाः हि॥

६९। विभवे ऐश्वर्य्ये सत्यपि त्वया विना अजस्य एतावदेव सुखं गण्यताम्। यावत्त्वया सह भुक्तं ततोऽन्यं न किञ्चिद्भविष्यतीत्यर्थः। कुतः विलोभनान्तरैरहृतस्यानाकृष्टस्य मम सर्वे विषया भोगादयस्त्वदाश्रयास्त्वदधीनाः। त्वां विना मे न किञ्चिद्रोचत इत्यर्थः।

৬৯। ঐশ্বর্য্যসত্ত্বেও তোমা ব্যতিরেকে এই পর্য্যন্তই অজের সুখভোগ পর্য্যবসিত হইল, অন্য কোনরূপ প্রলোভন আমাকে আর আকর্ষণ করিতে পারিবে না। আমার ভোগাদি সকল বিষয় তোমারই অধীন।

विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति।
अकरोत् पृथिवीरुहानपि स्रुतशाखारसवाष्पदूषितान्॥७०

७० अ:। कोसलाधिपः प्रियां प्रति इति करुणार्थग्रथितं विलपन् पृथिवीरुहानपि स्रुतशाखारसवाष्पदूषितान् अकरोत्॥

७०। कोसलाधिपोऽज इति करुणः शोकरसः स एवार्थस्तेन ग्रथितं सम्बद्धं यथा तथा प्रियां प्रति इन्दुमतीमुद्दिश्य विलपन् पृथिवीरुहान् वृक्षानपि स्रुताः शाखारसा मकरन्दा एव वाष्पास्तैर्दूषितान् अकरोत्। अचेतनानप्यरोदयदित्यर्थः।

৭০। কোসলাধিপতি অজ প্রিয়তম ইন্দুমতীর নিমিত্ত এইপ্রকার করুণরস-সম্বলিত বিলাপ করিয়া তত্রত্য পাদপগণকেও নির্য্যাস বা মকরন্দরূপ অশ্রুবর্ষণে রোদন করাইয়াছিলেন।

अथ तस्य कथञ्चिदङ्कतः स्वजनस्तामपनीय सुन्दरीम्।
विससर्ज तदन्त्यमण्डनामनलायागुरुचन्दनैधसे॥ ७१

७१ अ:। अथ स्वजनः तस्य अङ्कतः कथञ्चित् अपनीय तदन्त्यमण्डनां तां सुन्दरीम् अगुरुचन्दनैधसे अनलाय विससर्ज॥

७१। अथ स्वजनो बन्धुवर्गस्तस्याजस्याङ्कत उत्सङ्गात् कथञ्चिदपनीय, तद्दिव्यकुसुममेवान्त्यं मण्डनमलङ्कारो यस्यास्तां तां सुन्दरीम् अगुरूणि चन्दनान्येधांसीन्धनानि यस्य तस्मै अनलायाग्नये विससर्ज विसृष्टवान्। 'क्रियाग्रहणमपि कर्त्तव्यम्' इति क्रियामात्रप्रयोगे सम्प्रदानत्वाच्चतुर्थी।

৭১। অনন্তর বন্ধুবর্গ অতিকষ্টে অজের ক্রোড় হইতে সেই রমণীকে অপনয়ন-পূর্ব্বক অন্ত্যেষ্টিক্রিয়াকালোচিত সজ্জায় সজ্জিত করিয়া অগুরুচন্দনকাষ্ঠের অগ্নিতে বিসর্জ্জন করিলেন।

प्रमदामनुसंस्थितः शुचा
नृपतिः सन्निति वाच्यदर्शनात्।
न चकार शरीरमग्निसात्
सह देव्या न तु जीविताशया॥ ७२

७२ अ:। नृपतिः 'सन् (अपि) शुचा प्रमदाम् अनु संस्थितः' इति वाच्यदर्शनात् देव्या सह शरीरम् अग्निसात् न अकरोत् तु जीविताशया न॥

७२। नृपतिरजः, 'सन्नपि विद्वानपि शुचा शोकेन प्रमदामनु प्रमदया सह संस्थितो मृतः' इति वाच्यदर्शनान्निन्दादर्शनात् देव्या इन्दुमत्या सह शरीरमग्निसात् अग्न्यधीनं न चकार। 'तदधीनवचने' इति सातिप्रत्ययः। जीविताशया प्राणेच्छया तु नेति।

৭২। 'অজ সুপণ্ডিত হইয়াও রমণীর শোকে আকুল হইয়া তাহার সহমৃত হইলেন, এই লোকনিন্দাভয়েই ভূপতি মহিষীর সহিত এক চিতানলে দেহ দগ্ধ করিলেন না, নচেৎ জীবনের আশায় তিনি দেহরক্ষা করেন নাই।

अथ तेन दशाहतः परे गुणशेषामुपदिश्य भामिनीम्।
विदुषा विधयो महर्द्धयः पुर एवोपवने समापिताः॥ ७३

७३ अ:। अथ विदुषा तेन गुणशेषां भामिनीम् उपदिश्य दशाहतः परे महर्द्धयः विधयः पुरः उपवने एव समापिताः॥

७३। अथ विदुषा शास्त्रज्ञेन तेनाजेन। गुणा रूपादय एव शेषा यस्यास्तां गुणशेषां भामिनीमिन्दुमतीमुपदिश्य उद्दिश्य। दशानामह्नां समाहारो दशाहः। 'तद्धितार्थ'—इत्यादिना समासः। समाहारस्य एकत्वादेकवचनम्। 'राजाहःसखिभ्यष्टच्' इति टच्। 'रात्राह्नाहाः पुंसि' इति पुंवत्। ततस्तसिल्। तस्माद्दशाहतः परे ऊर्द्ध्वं कर्त्तव्या महर्द्धयो महासमृद्धयो विधयः क्रियाः, पुरः पुर्य्या उपवने उद्याने एव समापिताः सम्पूर्णमनुष्ठिताः 'दशाहतः' इत्यत्र 'विप्रः शुध्येद्दशाहेन द्वादशाहेन भूमिपः।' इति मनुवचनविरोधो नाशङ्कनीयः। तस्य निर्गुणक्षत्त्रियविषयत्वात्। गुणवत्क्षत्रियस्य तु दशाहेन शुद्धिमाह पराशरः—'क्षत्त्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः' इति। सूच्यतेऽस्यापि गुणवत्त्वं विदुषेत्यनेन॥

৭৩। অতঃপর দশদিবস অতীত হইলে পর সেই পরমপণ্ডিত নরপতি গুণমাত্রাবশেষা প্রিয়তমা ইন্দুমতীর উদ্দেশে সেই উপবনমধ্যেই মহাসমারোহে শ্রাদ্ধাদিক্রিয়াকলাপ নির্ব্বাহ করিলেন।

**स विवेश पुरीं तया विना क्षणदापायशशाङ्कदर्शनः।**
**परिवाहमिवावलोकयन् स्वशुचः पौरवधूमुखाश्रुषु ॥ ७४**

৭৪ অ:। তয়া বিনা ক্ষণদাপায়শশাঙ্কদর্শন: স: পৌরবধূমুখাশ্রুষু স্বশুচ: পরিবাহম্ ইব অবলোকয়ন্ পুরীং বিবেশ ॥

७४। तया इन्दुमत्या विना। क्षणदाया रात्रेरपायेऽपगमे यः शशाङ्कश्चन्द्रः स इव दृश्यत इति क्षणदापायशशाङ्कदर्शनः। प्रातःकालिकचन्द्र इव दृश्यमान इत्यर्थः। दृश्यत इति कर्मार्थे ल्युट्। सोऽजः पौरवधूमुखाश्रुषु स्वशुचः स्वशोकस्य परिवाहं जलोच्छ्वासमिवावलोकयन्। 'जलोच्छ्वासाः परीवाहाः' इत्यमरः। स्वदुःखपूरातिशयमिव पश्यन् पुरीं विवेश। बधूग्रहणात्तस्यामिन्दुमत्यां सख्याभिमानादजसमानदुःखसूचकपरिवाहोक्तिर्निर्वहति।

৭৪। পরে তিনি প্রেয়সীর বিরহে প্রভাতকালীন শশধরের ন্যায় ক্ষীণকান্তি হইয়া পুররমণীগণের বাষ্পাকুললোচনে স্বীয় শোকসাগরের উচ্ছ্বাস অবলোকন করিয়াই যেন অন্তঃপুরে প্রবেশ করিলেন।

**अथ तं सवनाय दीक्षितः**
**प्रणिधानाद्गुरुराश्रमस्थितः।**
**अभिषङ्गजडं विजज्ञिवा-**
**निति शिष्येण किलान्वबोधयत् ॥ ७५**

৭৫। অথ সবনায় দীক্ষিত: গুরু: আশ্রমস্থিত: (সন্) তম্ অভিষঙ্গজড়ং প্রণিধানাৎ বিজজ্ঞিবান্ ইতি শিষ্যেণ অন্ববোধয়ৎ কিল ॥

७५। अथ सवनाय यागाय दीक्षितो गुरुर्वशिष्ठ आश्रमे स्वकीयाश्रमे स्थितः सन्। तमजमभिषङ्गजडं दुःखमोहितं प्रणिधानात् चित्तैकाग्र्यात् विजज्ञिवान् ज्ञातवान्। 'क्वसुश्च' इति क्वसुप्रत्ययः। इति वक्ष्यमाणप्रकारेण शिष्येण अन्वबोधयत् किल। बुधेर्ण्यन्तात् णिचि लङ्।

৭৫। অনন্তর যজ্ঞে দীক্ষিত কুলগুরু বশিষ্ঠ, স্বীয় আশ্রমে অবস্থান করিয়াই যোগবলে মহারাজ অজকে সহধর্ম্মিণীশোকে কাতর অবগত হইয়া প্রবোধপ্রদানার্থ এক শিষ্যকে প্রেরণ করিলেন।

**असमाप्तविधिर्यतो मुनिस्तव विद्वानपि तापकारणम्।**
**न भवन्तमुपस्थितः स्वयं प्रकृतौ स्थापयितुं पथश्च्युतम् ॥ ७६**

৭৬। यतः मुनिः असमाप्तविधिः (ततः) तव तापकारणं विद्वान् अपि पथश्च्युतं भवन्तं प्रकृतौ स्थापयितुम् स्वयं न उपस्थितः॥

৭৬। वशिष्ठशिष्य आह—यतो हेतोर्मुनिरसमाप्तविधिरसमाप्तक्रतुस्तत-स्तव तापकारणं दुःखहेतु कलत्रनाशरूपं विद्वान् जानन्नपि। "विदेः शतु-र्वसुः" इति वस्वादेशः। 'न लोक'—इत्यादिना षष्ठीप्रतिषेधः। पथश्च्युतं स्वभावाद् भ्रष्टं भवन्तं प्रकृतौ स्वभावे स्थापयितुम्। समाश्वासयितु-मित्यर्थः। स्वयं नोपस्थितो नागतः।

৭৬। মহর্ষিশিষ্য ভূপতির নিকট উপস্থিত হইয়া কহিলেন,—মহারাজ! মহর্ষির যজ্ঞ সমাপন হয় নাই, এজন্য তিনি আপনার সন্তাপ কারণ অবগত হইয়াও আপনাকে আশ্বস্ত করিবার নিমিত্ত স্বয়ং উপনীত হইতে পারিলেন না।

मयि तस्य सुवृत्त वर्त्तते लघुसन्देशपदा सरस्वती।
शृणु विश्रुतसत्त्वसार तां हृदि चैनामुपधातुमर्हसि॥ ৭৭

৭৭ अः। हे सुवृत्त, लघुसन्देशपदा तस्य सरस्वती मयि वर्त्तते, हे विश्रुतसत्त्वसार, तां शृणु एनां हृदि उपधातुं च अर्हसि॥

৭৭। हे सुवृत्त! सदाचार! संदिश्यत इति सन्देशः सन्देष्टव्यार्थः तस्य पदानि वाचकानि लघूनि संक्षिप्तानि सन्देशपदानि यस्यां सा लघुसन्देशपदा तस्य मुनेः सरस्वती वाक् मयि वर्त्तते। हे विश्रुतसत्त्वसार! प्रख्यात-धैर्य्यातिशय! तां सरस्वतीं शृणु। एनां वाचं हृदि उपधातुं धर्त्तुं चार्हसि॥

৭৭। হে পূতচরিত! আমি তাঁহার সংক্ষিপ্ত উপদেশবচন বহন করিয়া আনিয়াছি। হে মনীষিতম! আপনি তাহা শ্রবণ করুন ও হৃদয়ে ধারণ করিয়া রাখুন।

पुरुषस्य पदेष्वजन्मनः समतीतं च भवच्च भावि च।
स हि निष्प्रतिघेन चक्षुषा त्रितयं ज्ञानमयेन पश्यति॥ ৭৮

৭৮ अः। अजन्मनः पुरुषस्य पदेषु समतीतञ्च यत् भवच्च भावि च इति) त्रितयं सः निष्प्रतिघेन ज्ञानमयेन चक्षुषा पश्यति हि॥

৭৮। वक्ष्यमाणार्थानुगुणं मुनेः सर्वज्ञत्वं तावदाह—पुरुषस्येति। अजन्मनः पुरुषस्य पुराणपुरुषस्य भगवतस्त्रिविक्रमस्य पदेषु विक्रमेषु। त्रिभुवनेष्वपीत्यर्थः। समतीतं भूतञ्च भवद्वर्त्तमानञ्च भावि भविष्यच्चेति त्रितयं स मुनिर्निष्प्रतिघेन अप्रतिबन्धेन ज्ञानमयेन चक्षुषा ज्ञानदृष्ट्या पश्यति हि। अतस्तदुक्तिषु न संशयितव्यमित्यर्थः॥

৭৮। মহর্ষি জ্ঞাননয়নদ্বারা অনাদিপুরুষ ত্রিবিক্রমের বিক্রমস্থান এই ত্রিলোক-মধ্যে ভূত, ভবিষ্যৎ ও বর্তমান এই ত্রিবিধ বিষয়ই অব্যাঘাতে দর্শন করিতেছেন।

**चरतः किल दुश्चरं तपस्तृणविन्दोः परिशङ्कितः पुरा।**
**प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम् ॥७९**

৭৯ অঃ। পুরা দুশ্চরং তপশ্চরতঃ তৃণবিন্দোঃ পরিশঙ্কিতঃ হরিঃ সমাধিভেদিনীং হরিণীং সুরাঙ্গনাম্ অস্মৈ প্রজিঘায় ॥

७९। पुरा किल दुश्चरं तीव्रं तपश्चरतस्तृणविन्दोस्तृणविन्दुनामकात् कस्मात् ऋषेः परिशङ्कितो भीतः। कर्त्तरि क्तः। 'भीत्रार्थानां भयहेतुः' इत्यपादानात्पञ्चमी। हरिरिन्द्रः समाधिभेदिनीं तपोविघातिनीं हरिणीं नाम सुराङ्गनामस्मै तृणविन्दवे प्रजिघाय प्रेरितवान् ॥

৭৯। পূর্ব্বে দেবরাজ ইন্দ্র তৃণবিন্দুনামক কোন এক ঋষির কঠোর তপস্যাদর্শনে নিতান্ত ভয়বিহ্বল হইয়া তাঁহার ধ্যানভঙ্গার্থ হরিণী নাম্নী এক সুরাঙ্গনাকে তাঁহার নিকটে পাঠাইয়াছিলেন।

**स तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम्।**
**अशपद्भव मानुषीति तां शमवेलाप्रलयोर्म्मिणा भुवि ॥ ८०**

৮০ অঃ। সঃ শমবেলাপ্রলয়োর্ম্মিণা তপঃপ্রতিবন্ধমন্যুনা প্রমুখাবিষ্কৃতচারুবিভ্রমাং তাং "ভুবি মানুষী ভব" ইতি অশপত্ ॥

८०। स मुनिः। शमः शान्तिरेव वेला मर्य्यादा तस्याः प्रलयोर्म्मिणा प्रलयकालतरङ्गेण। शमविघातकेनेत्यर्थः। 'अब्ध्यम्बुविकृतौ वेला काल-मर्य्यादयोरपि' इत्यमरः। तपसः प्रतिबन्धेन विघ्नेन यो मन्युः क्रोधः तेन हेतुना। प्रमुखे अग्रे आविष्कृतचारुविभ्रमां प्रकाशितमनोहरविलासां तां हरिणीं भुवि भूलोके मानुषी मनुष्यस्त्री भव इत्यशपत् शशाप ॥

৮০। সেই সুরাঙ্গনা তৃণবিন্দু মহর্ষির নিকট উপস্থিত হইয়া মনোহর হাবভাব প্রকাশপূর্ব্বক তপস্যার প্রতিবন্ধকাচরণ করিতে লাগিল। তখন সেই মহর্ষি শান্তি-রূপবেলার প্রলয়তরঙ্গস্বরূপ তপোভঙ্গজনিত ক্রোধে একান্ত অধীর হইয়া তাহাকে "মর্ত্ত্যলোকে মানুষী হইয়া থাক," এই অভিশাপ প্রদান করিয়াছিলেন।

**भगवन् परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे।**
**इति चोपनतां क्षितिस्पृशं कृतवाना सुरपुष्पदर्शनात् ॥८१**

৮১ অঃ। হে ভগবন্, অয়ং জনঃ পরবান্, মে প্রতিকূলাচরিতং ক্ষমস্ব ইতি উপনতাং চ তাম্ আ সুরপুষ্পদর্শনাৎ ক্ষিতিস্পৃশং কৃতবান্ ॥

८१। हे भगवन्! महर्षे! अयं जनः, परोऽस्यास्तीति स्वामित्वेन परवान् पराधीनः। अयमित्यात्मनिर्देशः। अहं पराधीन इत्यर्थः। मे

मम प्रतिकूलाचरितमपराधं क्षमस्वेत्यनेन प्रकारेणोपनतां शरणागतां च हरिणीम् आ सुरपुष्पदर्शनात् सुरपुष्पदर्शनपर्यन्तम्। क्षितिं स्पृशतीति क्षितिस्पृक्, तां क्षितिस्पृशं मानुषीं कृतवानकरोत्। दिव्यपुष्पदर्शनं शापावधिरित्यनुगृहीतवानित्यर्थः ॥

৮১। তখন হরিণী শরণাগতা হইয়া কহিল—ভগবন্! আমি পরাধীনা, অতএব আপনি আমার এই প্রতিকূলাচরণ অপরাধ ক্ষমা করুন। তখন মহর্ষি সুরকুসুম দর্শন পর্য্যন্ত তাহার পৃথিবীতে অবস্থান নিরূপণ করিয়া দিয়াছিলেন।

**क्रथकैशिकवंशसम्भवा तव भूत्वा महिषी चिराय सा ।**
**उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥ ८२**

८२ अ:। क्रथकैशिकवंशसम्भवा सा तव महिषी भूत्वा चिराय दिवः च्युतं शापनिवृत्तिकारणम् उपलब्धवती विवशा (अभूत्) ॥

८२। क्रथकैशिकानां राज्ञां वंशे सम्भवो यस्याः सा हरिणी तव महिषी अभिषिक्ता स्त्री। 'कृताभिषेका महिषी' इत्यमरः। भूत्वा चिराय दिवः स्वर्गाच्च्युतं पतितं शापनिवृत्तिकारणं सुरपुष्परूपम् उपलब्धवती विवशा अभूदिति शेषः, मृतेत्यर्थः ॥

৮২। সেই সুরাঙ্গনা হরিণী ক্রথকৈশিকবংশে জন্মগ্রহণ করিয়া আপনার মহিষী হইয়াছিলেন, ইদানীং বহুকালপরে সেই শাপবিমোচনের নিদানভূত নভোমণ্ডল-পরিভ্রষ্ট দিব্যকুসুম দর্শন করিয়া মানবীদেহ পরিত্যাগ করিয়াছেন।

**तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता ।**
**वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ॥८३**

८३ अ:। तत् तदपायचिन्तया अलम्। उत्पत्तिमतां विपत् उपस्थिता। त्वया इयम् वसुधा अवेक्ष्यतां, हि नृपाः वसुमत्या कलत्रिणः ॥

८३। तत्तस्मात्तस्या अपायचिन्तया अलम्। तस्या मरणं न चिन्त्यमित्यर्थः। निषेधक्रियां प्रति करणत्वाच्चिन्तयेति तृतीया। कुतो न चिन्त्यमत आह—उत्पत्तिमतां जन्मवतां विपद्विपत्तिरुपस्थिता सिद्धा। जातस्य हि ध्रुवो मृत्युरित्यर्थः। तथापि कलत्ररहितस्य किं जीवितेन। तत्राह—त्वयेयं वसुधा भूमिरवेक्ष्यतां पाल्यताम्। हि यस्मान्नृपा वसुमत्या पृथिव्या कलत्रिणः कलत्रवन्तः। अतो न शोचितव्यमित्यर्थः ॥

৮৩। অতএব এক্ষণে তাঁহার মৃত্যুর জন্য চিন্তা করা নিষ্ফল, জন্মগ্রহণ করিলেই মৃত্যু হইবে ইহা নিঃসংশয়। মহারাজ! আপনি পৃথিবী পালন করুন, নরপতিবর্গ এই বসুমতী দ্বারাই কলত্রবান্ হইয়া থাকেন।

**उदये मदवाच्यमुज्झता श्रुतमाविष्कृतमात्मवत्त्वया।**
**मनसस्तदुपस्थिते ज्वरे पुनरक्लीवतया प्रकाश्यताम्॥ ८४**

८४ अ:। उदये मदवाच्यम् उज्झता त्वया यत् आत्मवत् श्रुतम् आविष्कृतं तत् मनसः ज्वरे समुपस्थिते अक्लीवतया पुनः प्रकाश्यताम्॥

८४। उदयेऽभ्युदये सति मदेन यद्वाच्यं निन्दादुःखं तदुज्झता परिहरता सत्यपि मदहेतावमाद्यता त्वया यदात्मवदध्यात्मप्रचुरं श्रुतं शास्त्रम्। तज्जनितं ज्ञानमिति यावत्। आविष्कृतं प्रकाशितम्। तत् श्रुतं मनसो ज्वरे सन्तापे उपस्थिते प्राप्तेऽक्लीवतया धैर्य्येण लिङ्गेन पुनः प्रकाश्यताम्। विदुषा सर्वासु अवस्थासु अपि धीरेण भवितव्यमित्यर्थः॥

৮৪। আপনি অভ্যুদয় সময়ে গর্ব্বজনিত লোকনিন্দার পাত্র না হইয়া অবিকৃতচিত্ততাপ্রদর্শনহেতু শাস্ত্রজ্ঞান প্রকাশ করিয়াছেন। এখন এই শোকসময়ে ধৈর্য্য অবলম্বন করিয়া পুনরায় সেই শাস্ত্রজ্ঞানের প্রকাশ করুন।

**रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते।**
**परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम्॥ ८५**

८५ अ:। भवता रुदता (सता) सा कुत एव लभ्यते, अनुमृता अपि पुनः न: परलोकजुषां देहिनां गतयः स्वकर्मभिः भिन्नपथाः हि॥

८५। इतोऽपि न रोदितव्यमित्याह—रुदता भवता सा कुत एव लभ्यते, न लभ्यत एव। अनुम्रियत इत्यनुमृत्, क्विप्। तेनानुमृतानुसृतवतापि भवता पुनः न लभ्यते। कथं न लभ्यते इत्याह—परलोकजुषां लोकान्तरभाजां देहिनाम्। गम्यन्त इति गतयो गम्यस्थानानि स्वकर्मभिः पूर्वाचरितपुण्यपापैर्भिन्नपथाः पृथक्कृतमार्गा हि। परत्रापि स्वस्वकर्मानुरूपफलभोगाय भिन्नदेहगमनान्न मृतेनापि लभ्यत इत्यर्थः॥

৮৫। আপনি রোদন করিলে আর কোথায় মহিষীকে পাইবেন? অনুমৃত হইলেও তাঁহার সমাগম অসম্ভব। যেহেতু মনুষ্য পরলোক গমন করিয়া স্ব স্ব কর্ম্মফলে ভিন্ন ভিন্ন গতি লাভ করিয়া থাকে।

**अपशोकमनाः कुटुम्बिनीमनुगृह्णीष्व निवापदत्तिभिः।**
**स्वजनाश्रु किलातिसन्ततं दहति प्रेतमिति प्रचक्षते॥ ८६**

८६ अ:। अपशोकमनाः (सन्) निवापदत्तिभिः कुटुम्बिनीम् अनुगृह्णीष्व, अतिसन्ततं स्वजनाश्रु प्रेतम् दहति इति प्रचक्षते किल॥

८६। किन्तु अपशोकमना निर्दुःखचित्तः सन् कुटुम्बिनीं पत्नीं

निवापदत्तिभिः पिण्डोदकादिदानैरनुगृह्णीष्व। तर्पयेत्यर्थः। अन्यथा दोषमाह—अतिसन्ततमविच्छिन्नं स्वजनानां बन्धूनाम्। 'बन्धुस्वस्वजनाः समाः' इत्यमरः। अश्रु कर्तृ प्रेतं मृतं दहतीति प्रचक्षते मन्वादयः किल। अत्र याज्ञवल्क्यः—श्लेष्माश्रु बन्धुभिर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः। अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः॥' इति॥

৮৬। অতএব এক্ষণ আপনি শোক পরিত্যাগপূর্ব্বক জলপিণ্ডাদি প্রদান করিয়া সহধর্ম্মিণীর প্রতি অনুগ্রহ প্রকাশ করুন, বৃথা আর রোদন করিবেন না; মনীষিগণ বলিয়া থাকেন যে, বন্ধুবর্গের অজস্র নিপাতিত অশ্রুজল মৃত ব্যক্তিকে সন্তাপিত করে।

**मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः।**
**क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसौ॥ ८७**

৮৭ অ:। শরীরিণাং মরণং প্রকৃতি: জীবিতং বিকৃতি: (ইতি) বুধৈ: উচ্যতে জন্তু: ক্ষণম্ অপি শ্বসন্ অবতিষ্ঠতে যদি, অসৌ লাভবান্ ননু॥

८७। शरीरिणां मरणं प्रकृतिः स्वभावः। ध्रुवमित्यर्थः। जीवितं विकृतिर्यादृच्छिकं बुधैरुच्यते। एवं स्थिते जन्तुः प्राणी क्षणमपि। अत्यन्तसंयोगे द्वितीया। श्वसन् जीवन् अवतिष्ठते यद्यसौ क्षणजीवी लाभवान् ननु। जीवने यथालाभं सन्तोष्टव्यम् अलभ्यलाभात्। मरणे तु न शोचितव्यम् अस्य स्वाभाव्यादिति भावः॥

৮৭। পণ্ডিতগণ বলেন, প্রাণীদিগের মরণই প্রকৃতি, জীবনই বিকৃতি, জীব শরীর ধারণ করিয়া যদি ক্ষণকালও অবস্থান করে, উহাই তাহার পরম লাভ।

**अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम्॥**
**स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम्॥ ८८**

৮৮ অ:। মূঢ়চেতন: প্রিয়নাশং হৃদি অর্পিতং শল্যম্ অবগচ্ছতি স্থিরধী: তু তৎ এব কুশলদ্বারতয়া সমুদ্ধৃতং মন্যতে॥

८८। मूढचेतनो भ्रान्तबुद्धिः प्रियनाशम् इष्टनाशं हृदि अर्पितं निखातं शल्यं शङ्कुमवगच्छति मन्यते। स्थिरधीर्विद्वांस्तु तदेव शल्यं समुद्धृतम् उत्खातं मन्यते। प्रियनाशे सतीति शेषः। कुतः। कुशलद्वारतया प्रियनाशस्य मोक्षोपायतयेत्यर्थः। विषयलाभविनाशयोर्यथाक्रमं हिताहितसाधनत्वाभिमानः पामराणाम्। विपरीतन्तु विपश्चितामिति भावः॥

৮৮। মূঢ় ব্যক্তিরাই প্রিয়জনের বিয়োগ হৃদয়ের শল্য মনে করে; কিন্তু স্থিরবুদ্ধি ব্যক্তিরা প্রিয়বিনাশকে মুক্তির দ্বারবোধে উহাকেই হৃদয়নিহিত শল্যের উদ্ধার বিবেচনা করিয়া থাকেন।

स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्य्ययौ यदा।
विरहः किमिवानुतापयेद्वद वाह्यैर्विषयैर्विपश्चितम्॥ ८९

८९ अ:। यदा स्वशरीरशरीरिणौ अपि श्रुतसंयोगविपर्य्ययौ, तदा वाह्यैः विषयैः विरहः विपश्चितं किम् इव अनुतापयेत् वद॥

८९। स्वस्य शरीरशरीरिणौ देहात्मानावपि यदा यतः श्रुतौ श्रुत्यवगतौ संयोगविपर्य्ययौ संयोगवियोगौ ययोस्तौ तथोक्तौ। तदा वाह्यैर्विषयैः पुत्रमित्रकलत्रादिभिर्विरहो विपश्चितं विद्वांसं किमिवानुतापयेत् वद। न किञ्चिदित्यर्थः। अथवा स्वशब्दस्य शरीरेणैव सम्बन्धः॥

৮৯। যখন স্বীয় দেহের সহিত আত্মার একবার সংযোগ পুনরায় বিয়োগ হইয়া থাকে, তখন বলুন দেখি, পুত্রকলত্র প্রভৃতি বাহ্যবিষয়ের বিরহ বিদ্বান্ ব্যক্তিকে কি নিমিত্ত অনুতপ্ত করিবে?।

न पृथग्जनवच्छुचो वशं वशिनामुत्तम गन्तुमर्हसि।
द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः॥ ९०

९० अ:। हे वशिनामुत्तम! पृथग्जनवत् शुचः वशं गन्तुं न अर्हसि द्रुमसानुमतां किम् अन्तरम्? यदि वायौ (सति) द्वितये अपि ते चलाः॥

९०। हे वशिनामुत्तम! जितेन्द्रियवर्य्य! पृथग्जनवत्पामरजनवच्छुचः शोकस्य वशं गन्तुं नार्हसि। तथाहि—द्रुमसानुमतां तरुशिखरिणां किमन्तरं को विशेषः? वायौ सति द्वितयेऽपि द्विप्रकारा अपि। 'प्रथमचरम'—इत्यादिना जसि विभाषया सर्वनामसंज्ञा। ते द्रुमसानुमन्तश्चलाश्चञ्चला यदि। सानुमतामपि चलेन द्रुमवत्तेषामप्यचलसंज्ञा न स्यादित्यर्थः॥

৯০। হে সুধীর! সামান্য লোকের ন্যায় শোকের বশীভূত হওয়া আপনার নিতান্ত অনুচিত। যদি বাত্যা (ঝড়) উপস্থিত হইলে বৃক্ষ ও পর্ব্বত উভয়ই বিচলিত হয়, তবে এই দুই বস্তুর প্রভেদ কি?

स तथेति विनेतुरुदारमतेः
प्रतिगृह्य वचो विससर्ज मुनिम्।
तदलब्धपदं हृदि शोकघने
प्रतियातमिवान्तिकमस्य गुरोः॥ ९१

९१ अ:। सः उदारमतेः विनेतुः (गुरोः) वचः तथा इति प्रतिगृह्य मुनिं विससर्ज्ज (किन्तु) तत् शोकघने अस्य हृदि अलब्धपदं (सत्) गुरोः अन्तिकं प्रतियातम् इव॥

९१। सोऽजः उदारमतेर्विनेतुर्गुरोर्वशिष्ठस्य वचस्तच्छिष्यमुखेरितं तथेति। प्रतिगृह्य अङ्गीकृत्य मुनिं वशिष्ठशिष्यं विससर्ज प्रेषयामास। किन्तु तद्वचः शोकघने दुःखसान्द्रेऽस्य अजस्य हृदि अलब्धपदमप्राप्तावकाशं सत् गुरोर्वशिष्ठस्यान्तिकं प्रतियातमिव प्रतिनिवृत्तं किमु इत्युत्प्रेक्षा। तोटकवृत्तमेतत्—'इह तोटकमम्बुधिसैः प्रथितम्' इति तल्लक्षणम्॥

৯১। মহারাজ অজ, উদারমতি কুলগুরু বশিষ্ঠের প্রদত্ত উপদেশ 'যে আজ্ঞা' বলিয়া গ্রহণ করিয়া তদীয় শিষ্যকে বিদায় দিলেন। কিন্তু শোকে ঘনীভূত অজহৃদয়ে সেই বাক্য স্থানলাভে অসমর্থ হইয়া যেন পুনর্বার সেই কুলগুরু বশিষ্ঠের নিকটেই প্রত্যাগমন করিল।

तेनाष्टौ परिगमिताः समाः कथञ्चिद्-
बालत्वादवितथसूनृतेन सूनोः।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च॥ ९२

९२ च। अवितथसूनृतेन तेन सूनोः बालत्वात् प्रियायाः सादृश्यप्रतिकृतिदर्शनैः स्वप्नेषु क्षणिकसमागमोत्सवैश्च कथञ्चित् अष्टौ समाः परिगमिताः॥

९२। अवितथं यथार्थं सूनृतं प्रियवचनं यस्य तेन अजेन। सूनोः पुत्रस्य बालत्वात्, राज्याक्षमत्वादित्यर्थः। प्रियायाः इन्दुमत्याः सादृश्यं वस्त्वन्तरगतमाकारसाम्यं, प्रतिकृतिं चित्रं, तयोर्दर्शनैः स्वप्नेषु क्षणिकाः क्षणभङ्गुरा ये समागमोत्सवास्तैश्च। कथञ्चित् कृच्छ्रेण अष्टौ समा वत्सराः। 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समाः' इत्यमरः। परिगमिताः अतिवाहिताः। उक्तं च—'वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि। तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोऽपि कथितः॥' इति। प्रकृते सादृश्यादित्रितयाभिधाना तदङ्गस्पृष्टपदार्थस्पृष्टेरप्युपलक्षणम्। प्रहर्षिणीवृत्तमेतत्॥

৯২। অনন্তর সত্য প্রিয়বাদী অজ আত্মজ দশরথের বাল্য অবস্থাহেতু রাজ্যভারবহনে তাদৃশ ক্ষমতা জন্মে নাই বলিয়া প্রিয়তমার সাদৃশ্য ও প্রতিকৃতি দর্শনে এবং স্বপ্নাবস্থায় তৎসহ ক্ষণিক মিলনসুখের আস্বাদনে অতিকষ্টে আট বৎসর অতিবাহিত করিলেন।

तस्य प्रसह्य हृदयं किल शोकशङ्कुः
प्लक्षप्ररोह इव सौधतलं बिभेद।

**नृपस्य इषुभिः सहसा जघनानामाश्रयेषु अवष्टम्भेषु वृक्षेषु विद्धमात्मानं न विविदुः । एतेन वराहाणां मनस्वित्वं नृपस्य हस्तलाघवं चोक्तम् ॥**

৬০। তিনি স্বীয় বাহন অশ্ব হইতে উত্তরকায় কিঞ্চিৎ অবনত করিয়া শরদ্বারা বরাহগণকে বিদ্ধ করিতে প্রবৃত্ত হইলেন, তখন সেই বরাহেরাও সটাজাল উত্তোলিত করিয়া তাঁহার বিনাশসাধনে উদযুক্ত হইল, কিন্তু রাজা এমনই বাণক্ষেপণনিপুণ যে, বৃক্ষের সহিত তাহাদের জঘনদেশ বিদ্ধ হইয়াছে, উহা তাহারা জানিতে পারিল না।

**तेनाभिघातरभसस्य विकृष्य पत्री**
**वन्यस्य नेत्रविवरे महिषस्य मुक्तः ।**
**निर्भिद्य विग्रहमशोणितलिप्तपुङ्ख-**
**स्तं पातयाम्प्रथममास पपात पश्चात् ॥ ६१**

६१ अः। तेन अभिघातरभसस्य वन्यस्य महिषस्य नेत्रविवरे विकृष्य मुक्तः पत्री विग्रहं निर्भिद्य अशोणितलिप्तपुङ्खः (सन्) तं प्रथमं पातयामास स्वयं पश्चात् पपात ॥

**६१। अभिघाते रभस औत्सुक्यं यस्य तस्य अभिहन्तुमुद्यतस्य इत्यर्थः। वन्यस्य वने भवस्य महिषस्य नेत्रविवरे नेत्रमध्ये तेन नृपेण विकृष्य आकृष्य मुक्तः पत्री शरो विग्रहं महिषदेहं निर्भिद्य विदार्य्य। शोणितलिप्तो न भवतीत्यशोणितलिप्तः पुङ्खो यस्य स तथोक्तः सन्, तं महिषं प्रथमं पातयामास, स्वयं पश्चात्पपात। 'कृञ्चानुप्रयुज्यते लिटि' इत्यत्रानुशब्दस्य व्यवहितविपर्य्यस्तप्रयोगनिवृत्त्यर्थत्वात् 'पातयां प्रथममास' इत्यपप्रयोग इति पाणिनीयाः। यथाह वार्त्तिककारः—'विपर्य्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्च' इति ॥**

৬১। অনন্তর এক বন্য মহিষ তাঁহাকে প্রহার করিতে প্রবৃত্ত হইলে তিনি শরাসন আকর্ষণপূর্ব্বক তাহার নেত্রবিবরে একটী শর নিক্ষেপ করিলেন; নিক্ষিপ্ত শর এতই দ্রুতবেগে গমন করিল যে, উহা মহিষদেহ ভেদ করিয়া শোণিতলিপ্ত না হইয়াই প্রথমে মহিষকে পাতিত করিল এবং তৎপশ্চাৎ স্বয়ং পতিত হইল।

**प्रायो विषाणपरिमोक्षलघूत्तमाङ्गान्**
**खड्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः ।**
**शृङ्गं स दृप्तविनयाधिकृतः परेषा-**
**मत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥ ६२**

६२ अः। नृपतिः निशितैः क्षुरप्रैः खड्गान् प्रायः विषाणपरिमोक्षलघूत्तमाङ्गान् चकार। दृप्तविनयाधिकृतः स परेषाम् अत्युच्छ्रित शृङ्गं न ममृषे तु (किन्तु) दीर्घम् आयुः न ममृषे इति न ॥

६२। नृपतिः निशितैः क्षुरप्रैः शरविशेषैः खड्गान् खड्गाख्यान् मृगान्। 'गण्डके खड्गखड्गिनौ' इत्यमरः। प्रायो बाहुल्येन विषाणपरिमोक्षेण शृङ्गभङ्गेन लघूनि अगुरूणि उत्तमाङ्गानि शिरांसि येषां तांश्चकार न त्ववधीत् इत्यर्थः। कुतः? दृप्तविनयाधिकृतो दृप्तनिग्रहनियुक्तः स राजा, परेषां प्रतिकूलानामत्युच्छ्रितमुन्नतं शृङ्गं विषाणं प्राधान्यञ्च। 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः। न ममृषे न सेहे। दीर्घमायुर्जीवितकालम्। 'आयुर्जीवितकालो ना' इत्यमरः। न ममृषे इति न किन्तु ममृष एवेत्यर्थः॥

৬২। দুষ্টনিগ্রহনিরত নরবর দশরথ শাণিত ক্ষুরপ্র অস্ত্রদ্বারা গণ্ডারদিগের খড়্গাকৃতি শৃঙ্গ উৎপাটন করিয়া উহাদের মস্তকভার লঘু করিয়া দিলেন, কিন্তু প্রাণ বিনাশ করিলেন না; কেননা তিনি রিপুগণের প্রাধান্যই সহ্য করিতে পারিতেন না, পরন্তু দীর্ঘজীবনের বিরোধী ছিলেন না।

व्याघ्रानभीरभिमुखोत्पतितान् गुहाभ्यः
फुल्लासनाग्रविटपानिव वायुरुग्णान्।
शिक्षाविशेषलघुहस्ततया निमेषा-
त्तूणीचकार शरपूरितवक्त्ररन्ध्रान्॥ ६३

६३ अः। अभीः धन्वी सः गुहाभ्यः अभिमुखोत्पतितान् वायुरुग्णान् फुल्लासनाग्रविटपान् इव (स्थितान्) शरपूरितरन्ध्रवक्त्रान् शिक्षाविशेषलघुहस्ततया निमेषात् तूणीचकार॥

६३। अभीः निर्भीकः स धन्वी गुहाभ्योऽभिमुखमुत्पतितान्। वायुना रुग्णान् भग्नान्। फुल्ला विकसिताः। 'अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः' इति निष्ठातकारस्य लत्वनिपातः। ये असनस्य सर्जवृक्षस्य 'सर्जकासनबन्धूकपुष्पप्रियकजीवकाः' इत्यमरः। अग्रविटपास्तानिव स्थितान् इषुधिभूतानित्यर्थः। व्याघ्राणां चित्ररूपत्वादुपमाने फुल्लविशेषणम्। शरैः पूरितानि वक्त्ररन्ध्राणि येषां तान् व्याघ्रान्। शिक्षाविशेषेण अभ्यासातिशयेन लघुहस्ततया क्षिप्रहस्ततया निमेषात् तूणीचकार तूणं शरैः पूरितवान् इत्यर्थः॥

৬৩। ভয়হীন ভূপতি দশরথ সবিশেষ অভ্যাসনিবন্ধন ক্ষিপ্রহস্ততা প্রদর্শনপূর্ব্বক প্রফুল্ল সর্জ্জতরুর বায়ুভগ্ন শাখাগ্রের ন্যায় গিরিগুহা হইতে অভিমুখাগত শার্দ্দূলগণের বদনবিবর শরনিকরে পরিপূর্ণ করিয়া ফেলিলেন।

निर्घातोग्रैः कुञ्जलीनान् जिघांसु-
र्ज्यानिर्घोषैः क्षोभयामास सिंहान्।

नूनं तेषामभ्यसूयापरोऽभू-
द्वीर्य्योदग्रे राजशब्दे मृगेषु ॥ ६४

६४ अ: । कुञ्जलीनान् सिंहान् जिघांसु: निर्घातोग्रैः ज्यानिर्घोषै: क्षोभयामास । तेषां वीर्य्योदग्रे मृगेषु राजशब्दे अभ्यसूयापर: अभूत् नूनम् ॥

६४ । कुञ्जेषु लीनान् । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः । सिंहान् जिघांसु: हन्तुमिच्छुः । निर्घातो व्योमोत्थित औत्पातिक: शब्दविशेष:, तद्वदुग्रै: रौद्रै: ज्यानिर्घोषैः मौर्वीशब्दै: क्षोभयामास । अत्रोत्प्रेक्षते—तेषां सिंहाना सम्बन्धिनि वीर्य्येण उदग्रे उन्नते मृगेषु विषये यो राजशब्दः तस्मिन् अभ्यसूयापर: अभूत् नूनम् । अन्यथा कथमेतानन्विष्य हन्यादित्यर्थ: । 'मृगाणाम्' इति पाठे समासे गुणभूतत्वाद्राजशब्देन सम्बन्धो दुर्घटः । शालिनी वृत्तम्—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणम् ॥

৬৪ । অনন্তর তিনি নিকুঞ্জশায়ী কেশরীদিগের বিনাশবাসনায় বজ্রধ্বনির ন্যায় অতিভীষণ জ্যানিস্বনদ্বারা তাহাদিগকে সংক্ষোভিত করিতে লাগিলেন ; তখন মনে হইল, যেন তিনি সকল পশুঅপেক্ষা অধিকবলশালী সিংহের উন্নত মৃগরাজ-পদবীতে ঈর্ষান্বিত হইয়াছেন ।

तान् हत्वा गजकुलबद्धतीव्रवैरान्
काकुत्स्थ: कुटिलनखाग्रलग्नमुक्तान् ।
आत्मानं रणकृतकर्म्मणां गजाना
मानृण्यं गतमिव मार्गणैरमंस्त ॥ ६५

६५ अ: । काकुत्स्थ: गजकुलबद्धतीव्रवैरान कुटिलनखाग्रलग्नमुक्तान् तान् हत्वा आत्मानं रणकृतकर्म्मणां गजानाम् आनृण्यं मार्गणै: गतम् इव अमंस्त ॥

६५ । काकुत्स्थो दशरथः, गजकुलेषु बद्धं तीव्रं वैरं यैस्तान् कुटिलेषु नखाग्रेषु लग्ना मुक्ता गजकुम्भमौक्तिकानि येषां तान् सिंहान् हत्वा, आत्मानं रणेषु कृतकर्म्मणां कृतोपकाराणां गजानाम् आनृण्यमनृणत्वं मार्गणै: शरैः । 'मार्गणो याचके शरे' इति विश्व: । गतं प्राप्तवन्तमिव अमंस्त मेने ॥

৬৫ । কাকুৎস্থকুলতিলক রাজা, বক্রনখাগ্রে সংলগ্নমৌক্তিক করিকুলের চিররিপু সেই কেশরীসকলকে শরদ্বারা সংহার করিয়া সংগ্রামভূমির সহায় করিগণের নিকট আপনাকে ঋণমুক্ত করিলেন ।

चमरान् परितः प्रवर्त्तिताश्वः
क्वचिदाकर्णविकृष्टभल्लवर्षी।
नृपतीनिव तान् वियोज्य सद्यः
सितबालव्यजनैर्जगाम शान्तिम्॥ ६६

६६ अः। क्वचित् चमरान् परितः प्रवर्त्तिताश्वः आकर्णविकृष्टभल्लवर्षी सः नृपतीन् इव तान् सितबालव्यजनैः वियोज्य सद्यः शान्तिं जगाम॥

६६। क्वचित् चमरान् परितः। 'अभितः परितः समया'—इत्यादिना द्वितीया। प्रवर्त्तिताश्वः प्रधाविताश्वः, आकर्णविकृष्टभल्लान् इषुविशेषान् वर्षतीति तथोक्तः स नृपः, नृपतीनिव तांश्चमरान् सितबालव्यजनैः शुभ्रचामरैः वियोज्य विरहय्य सद्यः शान्तिं जगाम। शूराणां परकीयमैश्वर्य्यमेवासह्यं न तु जीवितमिति भावः। औपच्छन्दसिकं वृत्तम्॥

৬৬। কোন স্থানে তিনি চমরীমৃগগণের প্রতি অতিবেগে অশ্বসঞ্চালন করিলেন এবং আকর্ণকৃষ্ট শর ও ভল্লাস্ত্রবর্ষণে বিজিত রাজগণের ন্যায় উহাদিগকে শ্বেতচামর-বিরহিত করিয়া অবিলম্বে শান্তি প্রাপ্ত হইলেন।

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः॥ ६७

६७ अः। सः तुरगसमीपात् उत्पतन्तम् अपि रुचिरकलापं मयूरं चित्रमाल्यानुकीर्णे रतिविगलितबन्धे प्रियायाः केशपाशे सपदि गतमनस्कः न बाणलक्ष्यीचकार॥

६७। स नृपस्तुरगसमीपादुत्पतन्तमपि। सुप्रहारमपीत्यर्थः। रुचिरकलापं भासुरबर्हम्। मह्यामतिशयेन रौतीति मयूरो बर्ही। पृषोदरादित्वात् साधुः। तं चित्रेण माल्येन अनुकीर्णे रतौ विगलितबन्धे प्रियायाः केशपाशे सपदि गतमनस्कः प्रवृत्तचित्तः। 'उरःप्रभृतिभ्यः कप्' इति कप्प्रत्ययः। न बाणलक्ष्यीचकार न प्रजहारेत्यर्थः॥

৬৭। কোথায়ও বা কতকগুলি ময়ূর তাঁহার অশ্বের সম্মুখে উড্ডীন হইতে লাগিল, কিন্তু উহাদিগের পুচ্ছদর্শনে সুরতসময়ে আলুলায়িতবন্ধন বিচিত্রমাল্যভূষিত প্রিয়তমাগণের কেশপাশ সহসা স্মৃতিপথে উদিত হওয়ায় রাজা ঐ সুচারুবর্হ ময়ূরদিগের প্রতি আর বাণ নিক্ষেপ করিলেন না।

तस्य कर्कशविहारसम्भवं स्वेदमाननविलग्नजालकम् ।
आचचाम सतुषारशीकरो भिन्नपल्लवपुटो वनानिलः ॥ ६८

६८ अः। सतुषारशीकरः भिन्नपल्लवपुटः वनानिलः, कर्कशविहारसम्भवम् आननविलग्नजालकं तस्य स्वेदम् आचचाम ॥

६८। कर्कशविहारादतिव्यायामात् सम्भवो यस्य तम्। आनने विलग्नजालकं बद्धकदम्बकं तस्य नृपस्य स्वेदम्। सतुषारशीकरः शिशिराम्बुकणसहितः। भिन्ना निर्दलिताः पल्लवानां पुटाः कोशा येन सः वनानिलः आचचाम जहारेत्यर्थः। रथोद्धता वृत्तमेतत् ॥

৬৮। তুষারশীকরশীতল বনসমীরণ পাদপসমূহের পল্লবপুট ভেদ করিয়া নৃপতির অতিমাত্র মৃগয়াজনিত বদনসংলগ্ন স্বেদবিন্দু অপনোদিত করিল।

इति विस्मृतान्यकरणीयमात्मनः
सचिवावलम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबन्धसेवया
मृगया जहार चतुरेव कामिनी ॥ ६९

६९ अः। इति आत्मनः विस्मृतान्यकरणीयं सचिवावलम्बितधुरम् अनुबन्धसेवया परिवृद्धरागं धराधिपं मृगया चतुरा कामिनी इव जहार ॥

६९। इति पूर्वोक्तप्रकारेणात्मनो विस्मृतमन्यत् करणीयं कार्य्यं येन तम्। विस्मृतान्यकार्य्यान्तरमित्यर्थः 'ऋक्पूरब्धूः पथामानक्षे' इति समासान्तोऽच्प्रत्ययः। अनुबन्धसेवया सन्ततसेवया परिवृद्धो रागो यस्य तं धराधिपम्। मृग्यन्ते यस्यां मृगा इति मृगया। 'परिचर्य्यापरिसर्य्यामृगयाटाट्यादीनामुपसंख्यानम्' इति सप्रत्ययान्तो निपातः। चतुरा विदग्धा कामिनीव, जहार आचकर्ष। 'न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥' इति भावः ॥

৬৯। এইরূপে রাজা দশরথ সচিবগণের প্রতি রাজ্যভার সমর্পণ এবং কার্য্যান্তর বিস্মরণপূর্ব্বক নিরন্তর মৃগয়ায় দৃঢ়রূপে বদ্ধানুরাগ হইলেন; তখন মৃগয়া যেন চতুরা রমণীর ন্যায় তাঁহার মন আকর্ষণ করিয়া ফেলিল।

स ललितकुसुमप्रवालशय्यां
ज्वलितमहौषधिदीपिकासनाथाम् ।
नरपतिरतिवाहयाम्बभूव
क्वचिदसमेतपरिच्छदस्त्रियामाम् ॥ ७०

७० अ: । सः ललितकुसुमप्रवालशय्यां ज्वलितमहौषधिदीपिकासनाथां त्रियामां क्वचित् असमेतपरिच्छदः ( सन् ) अतिवाहयाम्बभूव ॥

७० । स नरपतिः । ललितानि कुसुमानि प्रवालानि पल्लवानि शय्या यस्यां ताम् । ज्वलिताभिर्महौषधिभिरेव दीपिकाभिः सनाथां तत्-प्रधानामित्यर्थः । त्रियामां रात्रिं क्वचिदसमेतपरिच्छदः परिहृतपरिजनः सन्नित्यर्थः । अतिवाहयाम्बभूव गमयामास । पुष्पिताग्रा वृत्तम् ॥

৭০। অনন্তর পরিজনবিরহিত নৃপতি কোনস্থলে সুকোমল পল্লব ও পুষ্পদ্বারা বিরচিত শয্যায় শয়ন করিয়া প্রজ্বলিত মহৌষধিরূপ দীপালোকে রজনী অতিবাহিত করিলেন।

उषसि स गजयूथकर्णतालैः
पटुपटहध्वनिभिर्विनीतनिद्रः ।
अरमत मधुराणि तत्र शृण्वन्
विहगविकूजितवन्दिमङ्गलानि ॥ ७१

७१ अ: । उषसि पटुपटहध्वनिभिः गजयूथकर्णतालैः विनीतनिद्रः स तत्र मधुराणि विहगकूजितवन्दिमङ्गलानि शृण्वन् अरमत ॥

७१ । उषसि प्रातः पटूनां पटहानामिव ध्वनिर्येषां तैः गजयूथानां कर्णैरेव तालैः वाद्यप्रभेदैः विनीतनिद्रः स नृपस्तत्र वने मधुराणि विहगानां विहङ्गानां विकूजितान्येव वन्दिनां मङ्गलानि मङ्गलगीतानि शृण्वन् अरमत ॥

৭১। অতঃপর রাত্রি প্রভাত হইলে পটহশব্দতুল্য গজযূথের কর্ণাস্ফালনশব্দে বিগতনিদ্র নৃপতি বৈতালিকদিগের মঙ্গলগীতির ন্যায় সুমধুর বিহঙ্গমকূজন শ্রবণ করিতে করিতে সেই রমণীয় বনে বিহার করিতে লাগিলেন।

अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।
श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरङ्गमेण ॥७२

७२ अ: । अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैः अलक्ष्यमाणः श्रमफेनमुचा तुरङ्गमेण तपस्विगाढां तमसां नदीं प्राप ॥

७२ । अथ जातु कदाचित् रुरोर्मृगस्य गृहीतवर्त्मा स्वीकृतरुरुमार्गः, विपिने वने पार्श्वचरैः अलक्ष्यमाणः, तुरगवेगादित्यर्थः । श्रमेण फेन-मुचा सफेनं स्विद्यतेत्यर्थः । तुरङ्गमेण तपस्विभिः गाढामवगाढां तमसां नाम नदीं सरितं प्राप ॥

৭২। অনন্তর নরপতি দশরথ রুরুমৃগের পথানুসরণ করিয়া তুরগের গতিবেগ বশতঃ অনুচরবর্গের অলক্ষিতরূপে গহনবনমধ্যস্থ তপস্বিজনসেবিত তমসানদীসমীপে উপস্থিত হইলেন, তখন সাতিশয় ক্লান্ত অশ্বের মুখ হইতে ফেন উদ্গীর্ণ হইতে লাগিল।

কুম্ভপূরণভবঃ পটুরুচ্চৈরুচ্চচার নিনদোঽম্ভসি তস্যাঃ ।
তত্র স দ্বিরদবৃংহিতশঙ্কী শব্দপাতিনমিষুং বিসসর্জ্জ ॥ ৭৩

৭৩ অঃ। তস্যাঃ অম্ভসি কুম্ভপূরণভবঃ পটুঃ উচ্চৈঃ নিনদঃ উচ্চচার। তত্র সঃ দ্বিরদবৃংহিতশঙ্কী ( সন্ ) শব্দপাতিনম্ ইষুং বিসসর্জ্জ ॥

৭৩। তস্যাস্তমসায়া অম্ভসি কুম্ভপূরণেন ভব উৎপন্নঃ। পটুর্মধুরঃ উচ্চৈর্গম্ভীরো নিনদো ধ্বনিরুচ্চচার উদিয়ায়। তত্র নিনদে স নৃপঃ। দ্বিরদবৃংহিতং শঙ্কত ইতি দ্বিরদবৃংহিতশঙ্কী সন্। শব্দেন শব্দানুসারেণ পততীতি শব্দপাতিনম্ ইষুং বাণং বিসসর্জ। স্বাগতা বৃত্তম্ ॥

৭৩। তখন সেই তমসা হইতে কুম্ভপূরণসম্ভূত এক মধুর গম্ভীর রব উত্থিত হইল, তিনি ঐ শব্দকে গজবৃংহিত মনে করিয়া সেই শব্দানুসারে একটী শব্দভেদী শর নিক্ষেপ করিলেন।

নৃপতেঃ প্রতিষিদ্ধমেব তৎ কৃতবান্ পঙ্‌ক্তিরথোবিলঙ্ঘ্য যৎ ।
অপথে পদমর্পয়ন্তি হি শ্রুতবন্তোঽপি রজোনিমীলিতাঃ ॥ ৭৪

৭৪ অঃ। তৎ নৃপতেঃ প্রতিষিদ্ধম্ এব যৎ পঙ্‌ক্তিরথঃ বিলঙ্ঘ্য কৃতবান্। শ্রুতবন্তঃ অপি রজোনিমীলিতাঃ ( সন্তঃ ) অপথে পদম্ অর্পয়ন্তি হি ॥

৭৪। তৎকর্ম নৃপতেঃ ক্ষত্রিয়স্য প্রতিষিদ্ধমেব, যদেতৎ কর্ম্ম গজবধরূপং পঙ্‌ক্তিরথো দশরথো বিলঙ্ঘ্য 'লক্ষ্মীকামো যুদ্ধাদন্যত্র করিবধং ন কুর্য্যাৎ' ইতি শাস্ত্রমুল্লঙ্ঘ্য কৃতবান্। ননু বিদুষস্তস্য কথমীদৃগ্বিচেষ্টিতমত আহ—অপথ ইতি। শ্রুতবন্তোঽপি বিদ্বাংসোঽপি রজোনিমীলিতা রজোগুণাবৃতাঃ সন্তঃ। ন পন্থা ইত্যপথম্। 'পথো বিভাষা' ইতি বা সমাসান্তঃ। 'অপথং নপুংসকম্' ইতি নপুংসকত্বম্ 'অপন্থাস্ত্বপথং তুল্যম্' ইত্যমরঃ। তস্মিন্ অপথে অমার্গে পদমর্পয়ন্তি নিক্ষিপন্তি হি প্রবর্ত্তন্ত ইত্যর্থঃ। বৈতালীয়ং বৃত্তম্ ॥

৭৪। বন্যগজ বধ করা রাজাদিগের পক্ষে শাস্ত্রে নিষিদ্ধ, কিন্তু তিনি যে সেই শাস্ত্র উল্লঙ্ঘন করিবেন, তাহাতে আর আশ্চর্য্য কি? কেননা জ্ঞানিগণও রজোগুণে বিমলিন হইলে কুপথে পদার্পণ করিয়া থাকেন।

হা তাতেতি ক্রন্দিতমাকর্ণ্য বিষণ্ণ
স্তস্যান্বিষ্যন্ বেতসগূঢ়ং প্রভবং সঃ ।

शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं
तापादन्त:शल्य इवासीत् क्षितिपोऽपि ॥७५

७५ अ:। हे तात ! इति क्रन्दितम् आकर्ण्य विषण्ण: ( सन् ) तस्य वेतसगूढं प्रभवम् अन्विष्यन् शल्यप्रोतं सकुम्भं मुनिपुत्रं प्रेक्ष्य क्षितिप: अपि तापात् अन्त:शल्य इव आसीत् ॥

७५। हा इति आर्त्तौ। तातो जनक:। 'हा विषादशुगार्त्तिषु' इति। 'तातस्तु जनक: पिता' इति चामर:। हा तातेति क्रन्दितं क्रोशनमाकर्ण्य, विषण्णो भग्नोत्साह: सन्। तस्य क्रन्दितस्य वेतसै: गूढं छन्नम्। प्रभवत्यस्मादिति प्रभव: कारणम्। तमन्विष्यन् शल्येन शरेण स्यूतम्। 'शल्यं शङ्कौ शरे वंशे' इति विश्व:। सकुम्भं मुनिपुत्रं प्रेक्ष्य स क्षितिपोऽपि तापात् दु:खादन्त:शल्यं यस्य स: अन्त:शल्य इव आसीत्। मत्तमयूरवृत्तम् ॥

৭৫। অনন্তর শব্দভেদী শর নিক্ষিপ্ত হইবামাত্র তমসার সেই বেতসকুঞ্জমধ্য হইতে অকস্মাৎ "হা তাত!" এইরূপ একটি ক্রন্দনধ্বনি উত্থিত হইল, তচ্ছ্রবণে সাতিশয় বিষণ্ণ নৃপতি সেই ক্রন্দনকারণ অন্বেষণ করিলেন, এবং দেখিলেন,—শরবিদ্ধ একটী ঋষিকুমার কলসীর উপর পড়িয়া রহিয়াছেন। তদ্দর্শনে তিনিও যেন হৃদয়ে শল্যবিদ্ধ হইলেন।

तेनावतीर्य्य तुरगात्प्रथितान्वयेन
पृष्टान्वय: स जलकुम्भनिषण्णदेह:।
तस्मै द्विजेतरतपस्विसुतं स्खलद्भि-
रात्मानमक्षरपदै: कथयाम्बभूव ॥७६

७६ अ:। प्रथितान्वयेन तेन तुरगात् अवतीर्य्य पृष्टान्वय: जलकुम्भनिषण्णदेह: स: तस्मै स्खलद्भि: अक्षरपदै: आत्मानं द्विजेतरतपस्विसुतं कथयाम्बभूव ॥

७६। प्रथितान्वयेन प्रख्यातवंशेन। एतेन पापभीरुत्वं सूचितम्। तेन राज्ञा तुरगादवतीर्य्य पृष्टान्वयो ब्रह्महत्याशङ्कया पृष्टकुल:, जलकुम्भनिषण्णदेह: स मुनिपुत्र: तस्मै राज्ञे स्खलद्भि: अशक्तिवशात् अर्द्धोच्चारितै: इत्यर्थ:। अक्षरप्रायै: पदै: अक्षरपदै: आत्मानं द्विजेतरश्चासौ तपस्विसुतश्च तं द्विजेतरतपस्विसुतं कथयाम्बभूव। न तावन्नैवर्णिक एवाहमस्मि किन्तु करण:। 'वैश्यात्तु करण: शूद्रायाम्' इति याज्ञवल्क्य:। कुतो ब्रह्महत्या इत्यर्थ:। तथाच रामायणे—'ब्रह्महत्याकृतं पापं हृदयादपनीयताम्। न द्विजातिरहं राजन् मा भूत्ते मनसो व्यथा॥ शूद्रायामस्मि वैश्येन जातो जनपदाधिप ॥' इति ॥

৭৬। তখন বিখ্যাতবংশসম্ভূত নৃপতি দশরথ অবিলম্বে অশ্ব হইতে অবতরণ করিয়া সেই কলসী সম্পৃক্তদেহ ঋষিকুমারের বংশপরিচয় জিজ্ঞাসা করিলে তিনি তখন স্খলিতবাক্যে এইরূপ আত্মপরিচয়প্রদান করিলেন ;—হে রাজন্! আমি শূদ্রাগর্ভজাত ও বৈশ্যতাপসের পুত্র।

तच्चोदितश्च तमनुद्धृतशल्यमेव
पित्रोः सकाशमवसन्नदृशोर्निनाय ।
ताभ्यां तथागतमुपेत्य तमेकपुत्र-
मज्ञानतः स्वचरितं नृपतिः शशंस ॥७७

७७ अ:। सः नृपतिः तच्चोदितः (सन्) अनुद्धृतशल्यमेव तम् अवसन्नदृशोः पित्रोः सकाशं निनाय, तथागतम् एकपुत्रं तम् उपेत्य ताभ्याम् अज्ञानतः, स्वचरितं शशंस च ॥

७७। तच्चोदितस्तेन पुत्रेण चोदितः 'पितृसमीपं प्रापय' इत्युक्तः स नृपतिः, अनुद्धृतशल्यम् अनुत्पाटितशरमेव तं मुनिपुत्रम् अवसन्नदृशोः नष्टचक्षुषोः अन्धयोरित्यर्थः, पित्रोः मातापित्रोः 'पिता माता' इत्येकशेषः। सकाशं समीपं निनाय। इदञ्च रामायणविरुद्धम्। तत्र—'अथाहमेक-स्तं देशं नीत्वा तौ भृशदुःखितौ। अस्पर्शयमहं पुत्रं तं मुनिं सह भार्य्यया॥' इति नदीतीर एव मृतं पुत्रं प्रति पित्रोरानयनाभिधानात्। तथागतं वेतसगूढ़म्। एकश्चासौ पुत्रश्च एकपुत्रस्तम्। एकग्रहणं पित्रो-रनन्यगतिकत्वसूचनार्थम्। तं मुनिपुत्रमुपेत्य सन्निकृष्टं गत्वा अज्ञानतः करिभ्रान्त्या स्वचरितं स्वकृतं ताभ्यां मातापितृभ्याम्। क्रियाग्रहणाच्चतुर्थी। शशंस कथितवान्॥

৭৭। রাজা সেই ঋষিকুমার কর্ত্তৃক এইরূপ অভিহিত হইয়া তাঁহার শল্যমোচন না করিয়াই তদীয় অন্ধ পিতামাতার নিকট তাঁহাকে লইয়া গেলেন এবং তাঁহাদের সেই একমাত্র পুত্রের ঈদৃশী দশা ও অজ্ঞান-বশতঃ স্বীয় দুষ্কর্ম্মের কাহিনী নিবেদন করিলেন।

तौ दम्पती बहु विलप्य शिशोः प्रहर्त्त्रा
शल्यं निखातमुदहारयतामुरस्तः ।
सोऽभूत्परासुरथ भूमिपतिं शशाप
हस्तार्पितैर्नयनवारिभिरेव वृद्धः ॥७८
दिष्टान्तमाप्स्यति भवानपि पुत्रशोका-
दन्त्ये वयस्यहमिवेति तमुक्तवन्तम् ।

आक्रान्तपूर्वमिव मुक्तविषं भुजङ्गं
प्रोवाच कोशलपतिः प्रथमापराद्धः ॥७९

शापोऽप्यदृष्टतनयाननपद्मशोभे
सानुग्रहो भगवता मयि पातितोऽयम्।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं ज्वलनः करोति ॥८०

७८ अः। तौ दम्पती बहु विलप्य शिशोः उरसः निखातं शल्यम् प्रहर्त्रा उद्धारयतां, सः परासुः अभूत्। अथ वृद्धः हस्तार्पितैः नयनवारिभिः एव भूमिपतिं शशाप॥

७९ अः। (हे राजन्!) 'भवान् अपि अन्त्ये वयसि अहम् इव पुत्रशोकात् दिष्टान्तम् आप्स्यति' इति उक्तवन्तम् आक्रान्तपूर्वं तं मुक्तविषं भुजङ्गम् इव (स्थितं) प्रथमापराद्धः कोशलपतिः प्रोवाच॥

८० अः। भगवता अदृष्टतनयाननपद्मशोभे मयि पातितः अयं शापः अपि सानुग्रहः। इन्धनेद्धः ज्वलनः कृष्यां क्षितिं दहन् अपि बीजप्ररोहजननीं करोति॥

७८। तौ जाया च पतिश्च दम्पती। राजदन्तादिषु जायाशब्दस्य दम्भावो जम्भावश्च विकल्पेन निपातितः। 'दम्पती जम्पती जायापती भार्यापती च तौ' इत्यमरः। बहु विलप्य भूरि परिदेव्य। 'विलापः परिदेवनम्' इत्यमरः। शिशोः उरस्तः वक्षसः। 'पञ्चम्यास्तसिल्'। निखातं शल्यं शरं प्रहर्त्रा राज्ञा उद्धारयताम् उद्धारयामासतुः। स शिशुः परासुर्गतप्राणोऽभूत्। अथ वृद्धः, हस्तार्पितैः नयनवारिभिरेव शापदानस्य जलपूर्वकत्वात्तैरेव भूमिपतिं शशाप॥

७९। हे राजन्! भवानप्यन्त्ये वयसि अहमिव पुत्रशोकात् दिष्टान्तं कालावसानं मरणमित्यर्थः। 'दिष्टः काले च दैवे स्यात्' इति विश्वः। आप्स्यति प्राप्स्यति इत्युक्तवन्तम्। आक्रान्तः पदाहतः पूर्वम् आक्रान्तपूर्वः। सुप्सुपेति समासः। तं प्रथममपकृतमित्यर्थः। मुक्त-विषम् अपकारात् पश्चादुत्सृष्टविषं भुजङ्गमिव स्थितं तं वृद्धं प्रति प्रथमा-पराद्धः प्रथमापराधी। कर्त्तरि क्तः। इदञ्च सङ्गे कारणमुक्तम्। कोसल-पतिः दशरथः शापदानात् पश्चादपि एनं मुनिं प्रोवाच॥

८०। अदृष्टा तनयाननपद्मशोभा येन तस्मिन्नपुत्रके मयि भगवता पातितः। वज्रप्रायत्वात् पातित इत्युक्तम् 'अयं पुत्रशोकात् म्रियताम्' इत्येवंरूपः शापोऽपि सानुग्रहः। वृद्धकुमारीवरन्यायेन इष्टावाप्तेरन्तरी-यकत्वात् स उपकार एव। निग्राहकस्याप्यनुग्राहकत्वमर्थान्तरन्यासेन आह—कृष्यामिति। इन्धनैः काष्ठैः इद्धः प्रज्वलितः ज्वलनोऽग्निः कृष्यां

कर्षणार्हाम्। 'ऋदुपधाच्चाक्लृपिचृतेः' इति क्यप्। क्षितिं दहन्नपि बीजप्ररोहाणां बीजाङ्कुराणां जननीमुत्पादनक्षमां करोति।

৭৮—৮০। তখন তাপসদম্পতী এই নিদারুণ কথা শ্রবণ করিয়া বহুক্ষণ রোদন করিলেন এবং শিশুর প্রহর্ত্তা সেই রাজাকে শিশুর বক্ষঃস্থল হইতে বাণমোচন করিতে অনুমতি দিলেন। রাজা যেমন বাণ মোচন করিলেন, অমনি ঋষিতনয়ও প্রাণ পরিত্যাগ করিলেন। বৃদ্ধ তাপসও তখন হস্তদ্বারা নেত্রবারি গ্রহণ করিয়া তদ্দ্বারা ভূপতিকে অভিশাপ প্রদান করিলেন। "হে রাজন্! তুমিও আমার ন্যায় অন্তিমদশায় পুত্রশোকে শরীর পরিত্যাগ করিবে।" এইরূপে অভিশপ্ত কৃতাপরাধ কোশলাধিপতি দশরথ, পদাহত মুক্তবিষ বিষধরের ন্যায় তাঁহাকে কহিলেন। "ভগবন্! এইরূপ অভিশাপ প্রদান করিয়া আমাকে আজ অনুগৃহীতই করিলেন, কেননা আমি অদ্যাবধি পুত্রমুখপদ্ম সন্দর্শন করি নাই। প্রজ্বলিত হুতাশন যেমন কাষ্ঠাদিদ্বারা কর্ষণোপযুক্ত ভূমিকে দগ্ধ করিয়াও তাহার শস্যোৎপাদিকাশক্তির বৃদ্ধি করিয়া দেয়, আপনার অভিশাপও আমার পক্ষে তদ্রূপ বরস্বরূপই হইল।"

इत्थङ्गते गतघृणः किमयं विधत्तां
वध्यस्तवेत्यभिहितो वसुधाधिपेन।
एधान् हुताशनवतः स मुनिर्ययाचे
पुत्रं परासुमनुगन्तुमनाः सदारः ॥८१

८१ अः। इत्थङ्गते (सति) वसुधाधिपेन गतघृणः तव वध्यः अयं किं विधत्ताम् इति अभिहितः स मुनिः सदारः परासुं पुत्रमनुगन्तुमनाः (सन्)। हुताशनवतः एधान् ययाचे॥

८१। इत्थङ्गते प्रवृत्ते सति। वसुधाधिपेन राज्ञा, गतघृणः निष्करुणः क्रूरत्वान्निष्कृप इत्यर्थः। अतएव तव वध्यो वधार्होऽयं जनः। अयमिति राज्ञो निर्वेदादनादरेण स्वात्मनिर्देशः। किं विधत्तामित्यभिहित उक्तः, मया किं विधेयमिति विज्ञापित इत्यर्थः। सः मुनिः सदारः सभार्य्यः परासुं गतासुं पुत्रमनुगन्तुं मनो यस्य सोऽनुगन्तुमनाः सन्। 'तुं काममनसोरपि' इति मकारलोपः। हुताशनवतः साग्नेरेधान् काष्ठानि ययाचे। न च अत्रात्मघातदोषः। 'अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः। भृग्वग्निजलसम्पातैर्मरणं प्रविधीयते।' इत्युक्तेः॥

৮১। অনন্তর শাপগ্রস্ত বসুধাধিপ দশরথ মুনিকে নিবেদন করিলেন,—এই বধ্য করুণাহীন আপনাদের কি হিতানুষ্ঠান করিবে আদেশ করুন।" তখন সপত্নীক মুনি পুত্রের সহিত চিতারোহণ-মানসে রাজাকে বলিলেন,—"আমাদিগের জন্য প্রজ্বলিত কাষ্ঠরাশি প্রস্তুত কর।"

प्राप्तानुगः सपदि शासनमस्य राजा
सम्पाद्य पातकविलुप्तधृतिर्निवृत्तः।
अन्तर्निविष्टपदमात्मविनाशहेतुं
शापं दधज्ज्वलनमौर्वमिवाम्बुराशिः॥ ८२

इति श्रीमहाकविकालिदासकृतौ रघुवंशे मृगयावर्णनं नाम
नवमः सर्गः॥ ९

८२ अः। प्राप्तानुगः राजा सपदि अस्य शासनं सम्पाद्य पातकविलुप्तधृतिः (सन्) अन्तर्निविष्टपदम् आत्मविनाशहेतुं शापम् अम्बुराशिः और्वं ज्वलनम् इव दधत् निवृत्तः॥

८२। प्राप्तानुगः प्राप्तानुचरो राजा सपदि अस्य मुनेः शासनं काष्ठसम्भारणरूपं प्रगीकोऽपि सम्प्रति प्राप्तानुचरत्वात् सम्पाद्य पातकेन मुनिवधरूपेण विलुप्तधृतिः नष्टोत्साहः सन्। अन्तर्निविष्टपदमन्तर्लब्धस्थानम् आत्मविनाशहेतुं शापम्। अम्बुराशिरौर्वं ज्वलनं वड़वानलमिव। 'और्वस्तु वाड़वो वड़वानलः' इत्यमरः। दधद्धृतवान् सन्, निवृत्तः वनादिति शेषः॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे
महाकाव्ये दशरथमृगयावर्णनं नाम नवमः सर्गः॥ ९

৮২। অনন্তর রাজা অনুচরগণের সাহায্যে তৎক্ষণাৎ তাঁহার চিতা প্রস্তুত করিয়া দিয়া মুনিতনয়-বধ-জনিত পাপে ভগ্নোৎসাহ হইয়া রাজধানী অভিমুখে প্রত্যাবৃত্ত হইলেন এবং বড়বানল যেমন সাগরগর্ভে সতত প্রদীপ্ত থাকে, তদ্রূপ আত্মবিনাশকর সেই ঋষিশাপ তাঁহার অন্তঃকরণে দৃঢ়রূপে নিবিষ্ট হইয়া রহিল

নবম সর্গ সমাপ্ত ।।৯

# दशमः सर्गः।

पृथिवीं शासतस्तस्य पाकशासनतेजसः।
किञ्चिदूनमनूनर्द्धेः शरदामयुतं ययौ॥१
न चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम्।
सुताभिधानं स ज्योतिः सद्यः शोकतमोऽपहम्॥२

१ अः। पाकशासनतेजसः पृथिवीं शासतः अनूनर्द्धेः तस्य किञ्चित् ऊनं शरदाम् अयुतं ययौ॥

२ अः। सः पूर्वेषाम् ऋणनिर्मोक्षसाधनं सद्यः शोकतमोऽपहं सुताभिधानं ज्योतिः न च उपलेभे॥

आशंसे नित्यमानन्दं रामनामकथामृतम्।
सद्भिः श्रवणैर्नित्यं पेयं पापं प्रणोदितुम्॥

१। पृथिवीं शासतः पालयतः पाकशासनतेजस इन्द्रवर्चसः। अनूनर्द्धेर्महासमृद्धेस्तस्य दशरथस्य किञ्चिदूनमीषत् न्यूनं शरदां वत्सराणाम्। 'स्याद्दतौ वत्सरे शरत्' इत्यमरः। अयुतं दशसहस्रं ययौ। 'एकदशशतसहस्राण्ययुतं लक्षं तथा प्रयुतम्। कोट्यर्बुदञ्च पद्मं स्थानात् स्थानं दशगुणं स्यात्॥' इत्यार्य्यभट्टः। इदञ्च मुनिशापात् परं वेदितव्यं न तु जननात्। 'षष्टिवर्षसहस्राणि जातस्य मम कौशिक! दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि॥' इति रामायणविरोधात्। नाप्यभिषेकात् परं तस्यापि 'सम्यग्विनीतमथ वर्महरं कुमारमादिश्य रक्षणविधौ विधिवत् प्रजानाम्' इति कौमारानुष्ठितत्वाभिधानात् स एव विरोध इति॥

२। स दशरथः पूर्वेषां पितॄणाम् ऋणनिर्मोक्षसाधनम्। 'एष वा अनृणो यः पुत्री' इति श्रुतेः। पितॄणाम् ऋणविमुक्तिकारणम्। सद्यः शोक एव तमस्तदपहन्तीति शोकतमोऽपहम्। अत्राभयङ्कर इति वदुपपदेऽपि तदन्तविधिमाश्रित्य 'अपक्लेशतमसोः' इति डप्रत्ययः। सुताभिधानं सुताख्यं ज्योतिः न उपलेभे न प्राप च॥

১—২। শক্রতুল্য বিক্রমশালী প্রভূতসমৃদ্ধিসম্পন্ন নরপতি দশরথ পৃথিবীপালনে নিরত থাকিয়া কিছু কম অযুতবৎসর অতিবাহিত করিলেন। কিন্তু তিনি এই সুদীর্ঘ সময়মধ্যে পিতৃগণের ঋণমুক্তিসাধনস্বরূপ শোকান্ধকারবিনাশী পুত্রজ্যোতিঃলাভে সমর্থ হইলেন না।

अतिष्ठत्प्रत्ययापेक्षसन्ततिः स चिरं नृपः।
प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥३

३ अः। प्रत्ययापेक्षसन्ततिः स नृपः मन्थात् प्राक् अनभिव्यक्तरत्नोत्पत्तिः अर्णवः इव चिरम् अतिष्ठत् ॥

३। प्रत्ययं हेतुमपेक्षत इति प्रत्ययापेक्षा सन्ततिर्यस्य स तथोक्तः। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। स नृपः। मन्थात् प्राक् मन्थनात् पूर्वमनभिव्यक्ता अदृष्टा रत्नोत्पत्तिर्यस्य सोऽर्णव इव। चिरमतिष्ठत्। सामग्र्याभावात् विलम्बो न तु वन्ध्यत्वादिति भावः ॥

৩। তিনি সন্তানলাভ কোন হেতুবিশেষসাপেক্ষ জানিয়া মন্থনের পূর্ব্বে অলক্ষিতরত্ন রত্নাকরের ন্যায় কালাতিপাত করিতে লাগিলেন।

ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः।
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥४

४ अः। जितात्मानः ऋष्यशृङ्गादयः ऋत्विजः सन्तः सन्तानकाङ्क्षिणः तस्य पुत्रीयाम् इष्टिम् आरेभिरे ॥

४। ऋष्यशृङ्गादयः। ऋष्यशृङ्गो नाम कश्चिदृषिः। तदादयः। ऋतुम् ऋतौ वा यजन्तीति ऋत्विजो याज्ञिकाः। ऋत्विग्दधृक्'—इत्यादिना क्विन्नन्तो निपातः। जितात्मानो जितान्तःकरणाः सन्तः, सन्तानकाङ्क्षिणः पुत्रार्थिनस्तस्य दशरथस्य पुत्रीयां पुत्रनिमित्ताम्। 'पुत्राच्छ च' इति छ-प्रत्ययः। इष्टिं यागमारेभिरे प्रचक्रमिरे ॥

৪। তদনন্তর জিতেন্দ্রিয় ঋষ্যশৃঙ্গ প্রভৃতি ঋত্বিগগণ সেই সন্তানার্থী নরপতির প্রার্থনায় পুত্রেষ্টি যজ্ঞের অনুষ্ঠান করিলেন।

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम्।
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ ५

५ अः। तस्मिन् अवसरे देवाः पौलस्त्योपप्लुताः (सन्तः) अध्वगाः निदाघार्ताः (सन्तः) छायावृक्षम् इव हरिम् अभिजग्मुः ॥

५। तस्मिन्नवसरे पुत्रकामेष्टिप्रवृत्तिसमये देवाः। पुलस्त्यस्य गोत्रापत्यं पुमान् पौलस्त्यो रावणः। तेनोपप्लुताः पीड़िताः सन्तः। निदाघार्त्ता घर्मातुराः। अध्वानं गच्छन्तीत्यध्वगाः पान्थाः। 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः' इति डप्रत्ययः। छायाप्रधानं वृक्षं छायावृक्षमिव। शाकपार्थिवादित्वात् समासः। हरिं विष्णुमभिजग्मुः ॥

৫। ইত্যবসরে নিদাঘপীড়িত পথিকগণ যেমন ছায়াবহুল তরুতল আশ্রয় করিয়া থাকে, তদ্রূপ পৌলস্ত্যনন্দন রাক্ষসরাজ রাবণকর্তৃক নিপীড়িত সুরগণ নারায়ণসমীপে গমন করিলেন।

ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्षणम् ॥६

६ अः। ते च उदन्वन्तं प्रापुः आदिपूरुषश्च बुबुधे। अव्याक्षेपः भविष्यन्त्याः कार्य्यसिद्धेर्लक्षणं हि ॥

६। ते देवाश्च उदन्वन्तं समुद्रम्। 'उदन्वानुदधौ च' इति निपातः। प्रापुः। आदिपूरुषो विष्णुश्च बुबुधे। योगनिद्रां जहावित्यर्थः। गमन-प्रतिबोधयोरविलम्बार्थौ चकारौ। तथाहि—अव्याक्षेपो गम्यस्याव्यासङ्गः अविलम्ब इति यावत् भविष्यन्त्याः कार्य्यसिद्धेर्लक्षणं लिङ्गं हि। उक्तञ्च—'अनन्यपरता चास्य कार्य्यसिद्धेस्तु लक्षणम्' इति ॥

৬। সুরগণও সাগরতীরে উপনীত হইলেন, ভগবান্ আদিপুরুষ বিষ্ণুও যোগনিদ্রা পরিত্যাগ করিলেন। কার্য্যসিদ্ধার্থ গম্যজনের অবিলম্বে সমাগমই ভাবী কার্য্যসিদ্ধির শুভলক্ষণ, সন্দেহ নাই।

भोगिभोगासनासीनं ददृशुस्तं दिवौकसः ।
तत्फणामण्डलोदर्च्चिर्मणिद्योतितविग्रहम् ॥ ७

७ अः। दिवौकसः भोगिभोगासनासीनं तत्फणामण्डलोदर्च्चिर्मणिद्योतितविग्रहं तं ददृशुः ॥

७। द्यौरोको येषां ते दिवौकसो देवाः। पृषोदरादित्वात् साधुः। यद्वा दिवशब्दोऽदन्तोऽप्यस्ति। तथाच बुद्धचरिते—'न शोभते तेन हि नो विना पुरं मरुत्वता वृत्रवधे यथा दिवम्' इति। तत्र 'दिवु क्रीडादौ' इति धातोः 'इगुपध'—इति कः। दिवमोक एषामिति विग्रहः। भोगिनः शेषस्य भोगः शरीरम्। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। स एवासनं सिंहासनं तत्र आसीनमुपविष्टम्। आसेः शानच्। 'ईदासः' इतीकारादेशः। तस्य भोगिनः फणामण्डले ये उदर्च्चिष उद्गमयो मणयस्तैर्द्योतितविग्रहं तं विष्णुं ददृशुः ॥

৭। দেবগণ তথায় উপস্থিত হইয়া দেখিলেন,—নারায়ণ অনন্তনাগের দেহশয্যায় শয়ান রহিয়াছেন এবং সেই নাগের ফণামণ্ডলস্থ মণিসমূহের কিরণজালে তাঁহার কলেবর সমুদ্ভাসিত হইতেছে।

श्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले ।
अङ्के निक्षिप्तचरणमास्तीर्णकरपल्लवे ॥ ८

८ अ:। पद्मनिषण्णायाः श्रियः क्षौमान्तरितमेखले आस्तीर्णकरपल्लवे अङ्के निक्षिप्तचरणम् ॥

८। कीदृशं विष्णुम् ? पद्मे निषण्णाया उपविष्टायाः श्रियः क्षौमान्तरिता दुकूलव्यवहिता मेखला यस्य तस्मिन्। आस्तीर्णौ करपल्लवौ पाणिपल्लवौ यस्मिन्। विशेषणद्वयेनापि चरणयोः सौकुमार्य्यात् कठिमेखलास्पर्शासहत्वं सूच्यते। तस्मिन्नङ्के निक्षिप्तौ चरणौ येन तम् ॥

৮। কমলাসনা লক্ষ্মীদেবী দুকূলদ্বারা মেখলা ( কটী আভরণ ) আবৃত করিয়া অঙ্কতলে পাণিপল্লব সন্নিবেশিত করতঃ তদুপরি তাঁহার চরণদ্বয় ধারণ করিয়া রহিয়াছেন।

प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ ९

९ अ:। प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकं प्रारम्भसुखदर्शनं शारदं दिवसम् इव ॥

९। पुनः कीदृशम् ? प्रबुद्धे विकसिते पुण्डरीके इव अक्षिणी यस्य तम्। दिवसे तु पुण्डरीकमेवाक्षि यस्येति विग्रहः। बालातपनिभमंशुकं यस्य तम्, पीताम्बरधरमित्यर्थः। अन्यत्र बालातपव्याजांशुकमित्यर्थः। 'निभो व्याजसदृक्षयोः' इति विश्वः। प्रकृष्टः आरम्भो योगो येषां ते प्रारम्भा योगिनः, तेषां सुखदर्शनम्। अन्यत्र प्रारम्भे आदौ सुखदर्शनं शारदं शरत्सम्बन्धिनं दिवसमिव स्थितम् ॥

৯। সেই বিকসিতপুণ্ডরীকনয়ন তরুণ আতপতুল্য পীতবসন নারায়ণ শরৎকালীন প্রভাতকালের ন্যায় একান্ত সুদর্শন হইয়াছিলেন।

प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम् ।
कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा ॥१०

१० अ:। प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणं कौस्तुभाख्यम् अपां सारं बृहता उरसा बिभ्राणम् ॥

१०। पुनः किंविधम् ? प्रभया अनुलिप्तमनुरञ्जितं श्रीवत्सं नाम लाञ्छनं यस्य तं, लक्ष्म्या विभ्रमदर्पणम्, कौस्तुभ इत्याख्या यस्य तम् अपां समुद्राणां सारं स्थिरांशम्, अश्ममणिमित्यर्थः। बृहता उरसा बिभ्राणम् ॥

১০। যাহার প্রভামণ্ডলে অনুরঞ্জিত হইয়া শ্রীবৎসচিহ্ন সমুজ্জ্বল হইয়াছে, কমলার বিলাসদর্পণস্বরূপ, সমুদ্রের সারভূত সেই কৌস্তুভমণি তদীয় বিশাল বক্ষঃস্থলে বিরাজ করিতেছে।

**बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः।**

**आविर्भूतमपां मध्ये पारिजातमिवापरम्॥ ११**

११ अः। विटपाकारैः दिव्याभरणभूषितैः बाहुभिः (उपलक्षितम्) अपां मध्ये आविर्भूतम् अपरपारिजातम् इव (स्थितम्)॥

११। विटपाकारैः शाखाकारैः दिव्याभरणभूषितैः बाहुभिरुपलक्षितम्। अतएव अपां सैन्धवीनां मध्ये आविर्भूतमपरं द्वितीयं पारिजातमिव स्थितम्॥

১১। তাঁহার শাখাসদৃশ দীর্ঘ বাহুচতুষ্টয় দিব্যাভরণে ভূষিত, তাঁহাকে দেখিয়া বোধ হইল যেন, অপর একটী পারিজাতবৃক্ষ সমুদ্রমধ্যে আবির্ভূত হইয়াছে।

**दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः।**

**हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम्॥ १२**

१२ अः। दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः चेतनावद्भिः हेतिभिः उदीरितजयस्वनम्॥

१२। दैत्यस्त्रीगण्डलेखानाम् असुराङ्गनागण्डस्थलीनां यो मदरागस्तं विलुम्पन्ति हरन्तीति मदरागविलोपिनः. तैः। चेतनावद्भिः सजीवैः हेतिभिः सुदर्शनादिभिः शस्त्रैः। 'रवेरर्चिश्च शस्त्रञ्च वह्निज्वाला च हेतयः' इत्यमरः। उदीरितजयस्वनम्। जयशब्दमुद्वोषयन्तीभिः मूर्त्तिमतीभिः अस्त्रदेवताभिरुपास्यमानमित्यर्थः॥

১২। অসুররমণীগণের গণ্ডস্থল হইতে যাহারা মদরাগের বিলোপসাধন করিয়াছিল, সেই সচেতন সুদর্শনপ্রভৃতি শস্ত্রগণ তাঁহার জয়ধ্বনি উচ্চারণ করিতেছে।

**मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा।**

**उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता॥ १३**

१३ अः। मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा विनीतेन प्राञ्जलिना गरुत्मता उपस्थितम्॥

१३। मुक्तो भगवत्सन्निधानात् त्यक्तः शेषेण अहीश्वरेण सह विरोधः सहजमपि वैरं येन तेन। कुलिशव्रणा अमृताहरणकाले इन्द्रयुद्धे ये वज्रप्रहारास्त एव लक्ष्माणि यस्य सः तेन। प्रबद्धाऽञ्जलिः येन तेन प्राञ्जलिना। प्रबद्धाञ्जलिनेत्यर्थः। विनीतेन अनुद्धतेन गरुत्मता उपस्थितम् उपासितम्। पुरा किल तेन विष्णुना मातलिप्रार्थितेन भगवता तद्दुहितुर्गुणकेश्याः पत्युः कस्यचित् सर्पस्य गरुडादभयदाने कृते स्वविपक्षरक्षणक्षुभितं पक्षिराजं त्वद्वाहं त्वत्तो बलाढ्य इति गर्वितं स्ववामतर्जनीभारे-

येव भक्त्या भगवान् विनिनायेति महाभारतीयां कथां सूचयति विनीतेन इत्यनेन ।

১৩। কুলিশক্ষতদেহ খগরাজ গরুড় বাসুকির সহিত সহজবৈর পরিহার করিয়া কৃতাঞ্জলিপুটে তাঁহার নিকট দণ্ডায়মান রহিয়াছে।

योगनिद्रान्तविशदैः पावनैरवलोकनैः ।
भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन् ॥ १४

१४ अः। योगनिद्रान्तविशदैः पावनैः अवलोकनैः सौखशायनिकान् भृग्वादीन् ऋषीन् अनुगृह्णन्तम् ॥

१४। योगो मनसो विषयान्तरव्यावृत्तिः। तद्रूपा या निद्रा तस्या अन्ते अवसाने विशदैः प्रसन्नैः पावनैः शोधनैरवलोकनैः सुखशायनं पृच्छन्तीति सौखशायनिकास्तान्। 'पृच्छतौ सुस्नातादिभ्यः' इत्युपसंख्यानाट्ठक-प्रत्ययः। भृग्वादीन् ऋषीन् अनुगृह्णन्तम्।

১৪। যোগনিদ্রার অবসানে সেই ত্রিলোকপতি তদীয় সুখশয়নজিজ্ঞাসু মহর্ষি ভৃগুপ্রভৃতিকে পূত দৃষ্টি দ্বারা অনুগৃহীত করিতেছেন।

प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।
अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ १५

१५ अः। अथ सुराः सुरद्विषां शमयित्रे तस्मै (विष्णवे) प्रणिपत्य अवाङ्मनसगोचरं स्तुत्यम् एनं तुष्टुवुः ॥

१५। अथ दर्शनानन्तरं सुराः सुरद्विषामसुराणां शमयित्रे विनाशकाय तस्मै विष्णवे प्रणिपत्य स्तुत्यं स्तोत्रार्हम्। 'एतिस्तुशास्वृदृजुषः क्यप्' इति क्यप्प्रत्ययः। वाक् च मनश्च वाङ्मनसे। 'अचतुर'—इत्यच्प्रत्ययान्तो निपातः। तयोर्गोचरो विषयो न भवतीत्यवाङ्मनसगोचरः। तमेनं विष्णुं तुष्टुवुः अस्तुवन् ॥

১৫। অনন্তর সুরগণ অসুরবিনাশকারী বাক্যমনের অগোচর জগৎপূজ্য সেই হরিকে প্রণিপাতপূর্ব্বক স্তব করিতে লাগিলেন।

नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने ॥ १६

१६ अः। पूर्वं विश्वसृजे तदनु विश्वं बिभ्रते अथ विश्वस्य संहर्त्रे त्रेधा स्थितात्मने तुभ्यं नमः ॥

१६। पूर्वमादौ विश्वसृजे विश्वस्रष्ट्रे, तदनु सर्गानन्तरं विश्वं बिभ्रते

পুষ্ণতে, অথ বিশ্বস্য সংহর্ত্রে, এবং ত্রেধা সৃষ্টিস্থিতিসংহারকত্বেন স্থিত আত্মা স্বরূপং যস্য তস্মৈ ব্রহ্মবিষ্ণুহরাত্মনে তুভ্যং নমঃ ॥

১৬। আপনি প্রথমে ব্রহ্মদেহ ধারণ করিয়া এই বিশ্ব সৃষ্টি করিয়াছেন, পরে আপনিই বিষ্ণুরূপে পালন করেন, তদনন্তর রুদ্ররূপে আপনিই ইহার সংহার করিয়া থাকেন, অতএব এই মূর্ত্তিত্রয়রূপী আপনাকে নমস্কার।

রসান্তরাণ্যেকরসং যথা দিব্যং পয়োঽশ্নুতে।
দেশে দেশে গুণেষ্বেবমবস্থাস্ত্বমবিক্রিয়ঃ ॥ ১৭

১৭ অঃ। একরসং দিব্যং পয়ঃ দেশে দেশে রসান্তরাণি যথা অশ্নুতে এবম্ অবিক্রিয়ঃ ত্বং গুণেষু অবস্থাঃ ( অশ্নুষে ) ॥

১৭। ননু কূটস্থস্য কথং ত্রৈরূপ্যমিত্যাশঙ্ক্য ঔপাধিকমিত্যাহ—রসান্তরাণীতি। একরসং মধুরৈকরসং দিবি ভবং দিব্যং পয়ঃ বর্ষোদকং, দেশে দেশে ঊষরাদিদেশে, অন্যান্ রসান্তরাণি লবণাদীনি যথা অশ্নুতে প্রাপ্নোতি। এবমবিক্রিয়ো নির্ব্বিকারঃ একরূপ ইত্যর্থঃ। ত্বং গুণেষু সত্ত্বাদিষু অবস্থাঃ স্রষ্টৃত্বাদিরূপাঃ অশ্নুষে ॥

১৭। একরূপ মধুরাস্বাদ দিব্য বারি যেমন দেশভেদে ভিন্নস্বাদ হয়, তদ্রূপ আপনি স্বয়ং নির্ব্বিকার হইয়াও সত্ত্বাদি গুণভেদে সৃষ্টিস্থিতিপ্রলয়ের কর্ত্তা ব্রহ্মাদি তিন প্রকার মূর্ত্তি পরিগ্রহ করিয়াছেন।

অমেয়ো মিতলোকস্ত্বমনর্থী প্রার্থনাবহঃ।
অজিতো জিষ্ণুরত্যন্তমব্যক্তো ব্যক্তকারণম্ ॥ ১৮

১৮ অঃ। হে দেব! ত্বম্ অমেয়ঃ মিতলোকঃ অনর্থী প্রার্থনাবহঃ অজিতঃ জিষ্ণুঃ অত্যন্তম্ অব্যক্তঃ ব্যক্তকারণম্ ॥

১৮। হে দেব! ত্বম্ অমেয়ো লোকৈরিয়ত্তয়া ন পরিচ্ছেদ্যঃ। মিতলোকঃ পরিচ্ছিন্নলোকঃ। অনর্থী নিঃস্পৃহঃ। আবহতীত্যাবহঃ। পচাদ্যচ্। প্রার্থনানামাবহঃ কামদঃ। অজিতঃ অন্যৈর্ন জিতঃ। জিষ্ণুর্জয়শীলঃ। অত্যন্তমব্যক্তো অতিসূক্ষ্মরূপঃ। ব্যক্তস্য স্থূলরূপস্য কারণম্ ॥

১৮। হে ভগবন্! কেহই আপনার পরিমাণ নিরূপণ বা ইয়ত্তাদ্বারা পরিচ্ছেদ করিতে পারে না, আপনিই কেবল অখিল জগতের পরিচ্ছেদ করিতে সক্ষম। আপনার কোন বিষয়েই প্রার্থনা নাই এবং আপনিই সকলের অভীষ্টফল বিতরণ করিয়া থাকেন। আপনি জয়শীল, আপনাকে কেহ পরাজয় করিতে পারে না; আপনি অব্যক্ত হইয়াও এই অখিলজগতের ব্যক্ত মূল কারণরূপে বিরাজমান।

हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ।
दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥ १९

१९ अ:। त्वां हृदयस्थम् अनासन्नम् अकामं तपस्विनं दयालुम् अनघस्पृष्टं पुराणम् अजरं विदुः ॥

१९। हे देव! त्वां हृदतस्थं सर्वान्तर्यामितया, नित्यसन्निहितं तथाप्यनासन्नमगम्यरूपत्वाद्विप्रकृष्टञ्च विदुः। सन्निकृष्टस्यापि विप्रकृष्टत्वमिति विरोधः। तथा अकामम्। न कामोऽभिलाषोऽस्य तं, परिपूर्णत्वान्निःस्पृहत्वाच्च निष्कामम्। तथाहि—तपस्विनं प्रशस्ततपोयुक्तं विदुः। यो निष्काम: स कथं तपः कुरुत इति विरोधः। परिहारस्तु कथिद्रूपेण दुस्तरं तपस्तप्यते। दयालुं परदुःखापहरणपरं तथाप्यनघस्पृष्टं नित्यानन्दस्वरूपत्वाददुःखिनं विदुः। 'अघ दुरितदुःखयोः' इति विश्वः। दयालुरदुःखो चेति विरोधः। 'ईर्ष्यी घृणी त्वसन्तुष्टः क्रोधनो नित्यशङ्कितः। परभाग्योपजीवी च षडेते नित्यदुःखिताः॥' इति महाभारते। पुराणम् अनादिम् अजरं निर्विकारत्वादक्षरं विदुः। चिरन्तनं न जीर्यत इति विरोधालङ्कारः। उक्तञ्च—'आभासत्वे विरोधस्य विरोधालङ्कृतिर्मता' इति। विरोधेन चालौकिकमहिमत्वं व्यज्यते॥

১৯। হে দেব! আপনি সতত হৃদয়স্থ হইয়াও অত্যন্ত দূরে অবস্থান করিতেছেন, আপনি স্বয়ং নিষ্কাম, তথাপি নিরন্তর তপস্যার অনুষ্ঠান করিয়া থাকেন। আপনি দয়ালু, পাপবিবর্জ্জিত, অজর এবং পুরাণপুরুষ বলিয়া অভিহিত হন।

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ २०

२० अ:। त्वं सर्वज्ञः अविज्ञातः। त्वं सर्वयोनिः आत्मभूः। त्वं सर्वप्रभुः अनीशः। त्वम् एकः सर्वरूपभाक् ॥

२०। त्वं सर्वं जानातीति सर्वज्ञः। 'इगुपध'—इति कप्रत्ययः। अविज्ञातः न केनापि विज्ञात इत्यर्थः। त्वं सर्वस्य योनिः कारणम्। त्वम् आत्मन एव भवतीत्यात्मभूः। न ते किञ्चित्कारणमस्तीत्यर्थः। त्वं सर्वस्य प्रभुः। त्वमनीशः। त्वमेकः सर्वरूपभाक् त्वमेक एव सर्वात्मना वर्त्तसे इत्यर्थः॥

২০। আপনি সর্ব্বজ্ঞ, কিন্তু আপনাকে কেহ জানিতে পারে না, আপনি অখিল জগতের নির্ম্মাণকর্ত্তা, অথচ আপনি স্বয়ম্ভু; আপনি সকলের প্রভু, আপনার প্রভু কেহ নাই এবং আপনি এক হইয়াও বিশ্বব্রহ্মাণ্ডরূপে অবস্থান করিতেছেন।

सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम्।
सप्तार्च्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम्॥ २१

२१ अ:। त्वां सप्तसामोपगीतं सप्तार्णवजलेशयं सप्तार्च्चिर्मुखं सप्तलोकैकसंश्रयम् आचख्युः॥

२१। हे देव! त्वां सप्तभिः सामभिः रथन्तरादिभिरुपगीतम्। 'तद्धितार्थे'—इत्युत्तरपदसमासः। सप्तानामर्णवानां जलं सप्तार्णवजलम्। पूर्ववत्समासः। तत्र शेते यः स सप्तार्णवजलेशयः तम्। 'शयवासवासिष्वकालात्' इत्यलुक्। सप्तार्च्चिर्मुखं यस्य तम्। 'अग्निमुखा वै देवाः' इति श्रुतेः। सप्तानां लोकानां भूर्भुवःस्वरादीनामेकसंश्रयम्। एवम्भूतम् आचख्युः॥

২১। সপ্ত সামবেদে আপনার মহিমা কীর্ত্তিত হইয়া থাকে, সপ্ত সমুদ্র আপনার শয়নীয়, লোকে আপনাকে সপ্তশিখাবান্ বহ্নিমুখ এবং সপ্তভুবনের আশ্রয় বলিয়া কীর্ত্তন করে।

चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात्॥ २२

२२ अ:। चतुर्वर्गफलं ज्ञानं चतुर्युगाः कालावस्थाः लोकश्चतुर्वर्णमयः (इति) सर्वं चतुर्मुखात् त्वत्तः (जातम्)॥

२२। चतुर्णां धर्म्मार्थकाममोक्षाणां वर्गश्चतुर्वर्गः। 'त्रिवर्गो धर्म्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः। तत्फलकं यज्ज्ञानम्। चत्वारि युगानि कृतत्रेतादीनि यासु ताश्चतुर्युगाः कालावस्थाः कालपरिमाणम्। चत्वारो वर्णाः प्रकृता उच्यन्ते यस्मिन्निति चतुर्वर्णमयः चातुर्वर्ण्यप्रचुर इत्यर्थः। तत्प्रकृतवचने मयट्। 'तद्धितार्थे'—इत्यादिना तद्धितार्थे विषये तत्पुरुषः। स लोकः। इत्येवंरूपं सर्वं चतुर्मुखाच्चतुर्मुखरूपिणस्त्वत्तः, जातमिति शेषः। 'इदं सर्वमसृजत यदिदं किञ्चित्' इति श्रुतेः॥

২২। ধর্ম্ম অর্থ কাম মোক্ষ চতুর্ব্বর্গফলপ্রদ জ্ঞান, সত্যত্রেতাদি যুগচতুষ্টয় প্রভৃতি কালপরিমাণ এবং ব্রাহ্মণাদি চতুর্ব্বর্ণময় লোকসকল—চতুর্ম্মুখস্বরূপ আপনা হইতেই সমুদ্ভূত হইয়াছে।

अभ्यासनिगृहीतेन मनसा हृदयाश्रयम्।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये॥ २३

२३ अ:। योगिनः अभ्यासनिगृहीतेन मनसा हृदयाश्रयं ज्योतिर्मयं त्वां विमुक्तये विचिन्वन्ति॥

२३। अभ्यासेन निगृहीतं विषयान्तरेभ्यो निवर्त्तितम्। तेन मनसा

যোগিনো হৃদয়াশ্রয়ং হৃৎপদ্মস্থং জ্যোতির্ম্ময়ং ত্বাং বিমুক্তয়ে মোক্ষার্থং বিচিন্বন্তি অন্বিষ্যন্তি ধ্যায়ন্তীত্যর্থঃ॥

২৩। যোগিগণ মোক্ষকামনায় অভ্যাসবশীভূত মন দ্বারা অন্তরাত্মাকে বিষয়ান্তর হইতে বিনিবর্ত্তিত করিয়া হৃদিস্থ জ্যোতির্ম্ময় আপনারই ধ্যান করিয়া থাকেন।

অজস্য গৃহ্ণতো জন্ম নিরীহস্য হতদ্বিষঃ।
স্বপতো জাগরূকস্য যাথার্থ্যং বেদ কস্তব॥ ২৪

২৪ অঃ। কঃ অজস্য জন্ম গৃহ্ণতঃ নিরীহস্য হতদ্বিষঃ স্বপতঃ জাগরূকস্য তব যাথার্থ্যং বেদ॥

২৪। ন জায়ত ইত্যজঃ। 'অন্যেষ্বপি দৃশ্যতে' ইতি ডপ্রত্যয়ঃ। তস্য অজস্য জন্মশূন্যস্যাপি জন্ম গৃহ্ণতঃ মৎস্যাদিরূপেণ জায়মানস্য। নিরীহস্য চেষ্টারহিতস্যাপি হতদ্বিষঃ শত্রুঘাতিনঃ, জাগরূকস্য সর্ব্বসাক্ষিতয়া নিত্যপ্রবুদ্ধস্যাপি স্বপতঃ যোগনিদ্রামনুভবতঃ। ইত্থং বিরুদ্ধচেষ্টস্য তব যাথার্থ্যং কো বেদ বেত্তি। 'বিদো লটো বা' ইতি ণলাদেশঃ॥

২৪। আপনি অজ হইয়াও জন্ম পরিগ্রহ করেন, নিরীহ হইয়াও শত্রুবিনাশ করিয়া থাকেন; যোগনিদ্রা আশ্রয় করিয়াও আপনি সতত জাগরূক, অতএব কে আপনার তত্ত্ব বিদিত হইতে সমর্থ?

শব্দাদীন্ বিষয়ান্ ভোক্তুং চরিতুং দুশ্চরং তপঃ।
পর্য্যাপ্তোঽসি প্রজাঃ পাতুমৌদাসীন্যেন বর্ত্তিতুম্॥ ২৫

২৫ অঃ। শব্দাদীন্ বিষয়ান্ ভোক্তুং দুশ্চরং তপঃ চরিতুং প্রজাঃ পাতুম্ ঔদাসীন্যেন বর্ত্তিতুং পর্য্যাপ্তঃ অসি॥

২৫। কিঞ্চ কৃষ্ণাদিরূপেণ শব্দাদীন্ বিষয়ান্ ভোক্তুম্। নরনারায়ণাদিরূপেণ দুশ্চরং তপশ্চরিতুম্। তথা দৈত্যমর্দ্দনেন প্রজাঃ পাতুম্। ঔদাসীন্যেন তাটস্থ্যেন বর্ত্তিতুঞ্চ পর্য্যাপ্তঃ সমর্থঃ অসি। ভোগতপসোঃ পালনৌদাসীন্যয়োশ্চ পরস্পরবিরুদ্ধয়োরাচরণে ত্বদন্যঃ কঃ সমর্থ ইত্যর্থঃ॥

২৫। উদাসীনভাবে অবস্থিত হইয়া আপনিই শৃঙ্গারসাদি বিষয়ভোগ, দুশ্চর তপশ্চরণ এবং প্রজাপালন করিতে সক্ষম।

বহুধাপ্যাগমৈর্ভিন্নাঃ পন্থানঃ সিদ্ধিহেতবঃ।
ত্বয্যেব নিপতন্ত্যোঘা জাহ্নবীয়া ইবার্ণবে॥ ২৬

২৬ অঃ। আগমৈঃ বহুধা ভিন্নাঃ অপি সিদ্ধিহেতবঃ পন্থানঃ জাহ্নবীয়াঃ ওঘাঃ অর্ণবে ইব ত্বয়ি এব পতন্তি॥

२६ । आगमैस्त्रयीसांख्यादिभिर्दर्शनैर्बहुधा भिन्ना अपि सिद्धिहेतवः पुरुषार्थसाधकाः पन्थान उपायाः । जाह्नव्या इमे जाह्नवीया गाङ्गाः । 'वृद्धाच्छः' इति छप्रत्ययः । ओघाः प्रवाहाः । ते अपि आगमैरागतिभिः बहुधा भिन्नाः सिद्धिहेतवस्त्व । अर्णवे इव, त्वय्येव निपतन्ति प्रविशन्ति । येन केनापि रूपेण त्वामेवोपयान्तीत्यर्थः । यथाहुराचार्य्याः—'किं बहुना, कारवोऽपि विश्वकर्म्मेत्युपासते' इति ॥

২৬। ইতস্ততঃ প্রবহমান জাহ্নবীজল যেমন জলধিতে মিলিত হয়, তদ্রূপ আগমাদি শাস্ত্রে সিদ্ধিপথ বহুধা কীর্ত্তিত হইলেও আপনার সর্ব্বব্যাপিত্বহেতু উহা আপনাতে নিপতিত হইয়াছে।

त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयः सन्निवृत्तये ॥ २७

२७ अ: । त्वयि आवेशितचित्तानां त्वत्समर्पितकर्मणां वीतरागाणाम् अभूयः सन्निवृत्तये त्वं गतिः ॥

२७ । त्वयि आवेशितं निवेशितं चित्तं यैस्तेषाम् । तुभ्यं समर्पितानि कर्माणि यैस्तेषां 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि कौन्तेय प्रतिजाने प्रियोऽसि मे ॥' इति भगवद्वचनात् । वीतरागाणां विरक्तानामभूयः सन्निवृत्तये अपुनरावृत्तये मोक्षायेत्यर्थः । त्वमेव गतिः साधनम् । 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेरित्यर्थः ॥

২৭। নিখিল কর্ম্মফল সমর্পণপূর্ব্বক যাঁহারা আপনাতে চিত্ত নিবিষ্ট করিয়াছেন, সেই বীতরাগ সংসারিগণের পুনর্জ্জন্ম নিবৃত্তির আপনিই একমাত্র গতি।

प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥ २८

२८ अ: । तव मह्यादिः महिमा प्रत्यक्षः अपि अपरिच्छेद्यः आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥

२८ । प्रत्यक्षः प्रत्यक्षप्रमाणगम्योऽपि तव मह्यादिः पृथिव्यादिर्महिमैश्वर्य्यमपरिच्छेद्यः इयत्तया नावधार्य्यः । आप्तवाक् वेदः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिः, अनुमानं—क्षित्यादिकं सकर्तृकं कार्य्यत्वाद्घटवदित्यादिकम् । ताभ्यां साध्यं गम्यं त्वां प्रति का कथा । प्रत्यक्षमपि त्वत्कृतं जगदपरिच्छेद्यम् । तत्कारणमप्रत्यक्षस्त्वमपरिच्छेद्य इति किमु वक्तव्यमित्यर्थः ॥

২৮। পৃথিবী প্রভৃতি প্রত্যক্ষ পরিদৃশ্যমান ভবদীয় ঐশ্বর্য্যেরই যখন পরিচ্ছেদ করা যায় না, তখন বেদাদি আপ্ত বাক্য দ্বারা অনুমেয় আপনার কথা আর কি বলিব ?

**কেবলং স্মরণেনৈব পুনাসি পুরুষং যতঃ।**

**অনেন বৃত্তয়ঃ শেষা নিবেদিতফলাস্ত্বয়ি॥ ২৯**

২৯ অঃ। স্মরণেন কেবলং পুরুষং যতঃ পুনাসি ; অনেন এব ত্বয়ি শেষাঃ বৃত্তয়ঃ নিবেদিতফলাঃ॥

২৯। স্মরণেন কেবলং কৃতস্নম্। 'কেবলঃ কৃতস্ন একশ্চ' ইতি শাশ্বতঃ। পুরুষং স্মর্ত্তারং জনং পুনাসি। যতঃ যদিত্যর্থঃ। অনেন স্মৃতিকার্য্যেণৈব ত্বয়ি ত্বদ্বিষয়ে যা অবশিষ্টা বৃত্তয়ো দর্শনস্পর্শনাদয়ো ব্যাপারাঃ, তা নিবেদিতফলা বিজ্ঞাপিতকার্য্যাঃ। তব স্মরণস্যৈব এতৎ ফলং, দর্শনাদীনান্তু কিয়দিতি নাবধারয়াম ইতি ভাবঃ॥

২৯। আপনাকে স্মরণমাত্র করিলেই আপনি যে পুরুষকে পবিত্র করিয়া থাকেন, ইহাতেই বেশ জানা যাইতেছে যে, আপনার দর্শন শ্রবণাদি অবশিষ্ট বৃত্তিসকল কি অনন্ত ফল প্রসব করে।

**উদধেরিব রত্নানি তেজাংসীব বিবস্বতঃ।**

**স্তুতিভ্যো ব্যতিরিচ্যন্তে দূরাণি চরিতানি তে॥ ৩০**

৩০ অঃ। উদধেঃ রত্নানি ইব, বিবস্বতঃ তেজাংসি ইব দূরাণি তে চরিতানি স্তুতিভ্যঃ ব্যতিরিচ্যন্তে॥

৩০। উদধে রত্নানীব, বিবস্বতস্তেজাংসীব, দূরাণি অবাঙ্মনসগোচরাণি তে চরিতানি স্তুতিভ্যো ব্যতিরিচ্যন্তে, নিঃশেষং স্তোতুং ন শক্যন্ত ইত্যর্থঃ॥

৩০। রত্নাকরের রত্নসমূহের ন্যায়, সহস্রাংশুর অংশুজালের ন্যায় বাক্যমনের অগোচর আপনার অনন্ত মহিমা স্তুতিবাক্য দ্বারা বর্ণনা করা যায় না।

**অনবাপ্তমবাপ্তব্যং ন তে কিঞ্চন বিদ্যতে।**

**লোকানুগ্রহ এবৈকো হেতুস্তে জন্মকর্ম্মণোঃ॥ ৩১**

৩১ অঃ। তে অনবাপ্তম্ অবাপ্তব্যং কিঞ্চন ন বিদ্যতে। একঃ লোকানুগ্রহঃ এব তে জন্মকর্ম্মণোঃ হেতুঃ॥

৩১। অনবাপ্তম্ অপ্রাপ্তম্ অবাপ্তব্যং প্রাপ্তব্যং তে তব কিঞ্চন কিঞ্চিদপি ন বিদ্যতে, নিত্যপরিপূর্ণত্বাদিতি ভাবঃ। তর্হি কিং নিবন্ধনে জন্মকর্ম্মণী ? তত্রাহ—লোকেতি। একঃ লোকানুগ্রহ এব তে তব জন্মকর্ম্মণঃ হেতুঃ। পরমকারুণিকস্য তে পরার্থৈব প্রবৃত্তিঃ, ন স্বার্থেত্যর্থঃ॥

৩১। আপনার প্রাপ্য বা অপ্রাপ্য কিছুই নাই, তবে যে আপনি জন্মপরিগ্রহ ও

কর্ম্মাচরণ করিতেছেন, ইহা কেবল লোকের প্রতি অনুগ্রহ প্রদর্শনের জন্যই বুঝিতে হইবে।

**महिमानं यदुत्कीर्त्य तव संह्रियते वचः।**

**श्रमेण तदशक्त्या वा न गुणानामियत्तया॥ ३२**

३२ अ:। तव महिमानम् उत्कीर्त्य वचः यत् संह्रियते तत् श्रमेण अशक्त्या गुणानाम् इयत्तया वा न॥

३२। तव महिमानमुत्कीर्त्य वचः संह्रियत इति यत्, तद्वचःसंहरणं श्रमेण वाग्व्यापारश्रान्त्या, अशक्त्या कात्स्न्येन वक्तुमशक्यत्वाद्वा। गुणानामियत्तया एतावन्मात्रतया न, तेषामानन्त्यादिति भावः॥

৩২। আপনার মাহাত্ম্য কীর্ত্তন শেষ করিয়াই যে আমাদের বাক্যাবসান হইতেছে এমন নহে, প্রত্যুত আপনার গুণকীর্ত্তনে অসামর্থ্য অথবা পরিশ্রান্তিবশতই বাক্যের বিরাম হইতেছে।

**इति प्रसादयामासुस्ते सुरास्तमधोक्षजम्।**

**भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः॥ ३३**

३३ अ:। इति ते सुराः तम् अधोक्षजं प्रसादयामासुः। हि परमेष्ठिनः सा भूतार्थव्याहृतिः, स्तुतिः न॥

३३। इति ते सुराः, तम् अधोभूतमक्षजमिन्द्रियजं ज्ञानं यस्मिन्, तमधोक्षजं विष्णुं प्रसादयामासुः प्रसन्नं चक्रुः। हि यस्मात् परमेष्ठिनः सर्वोत्तमस्य तस्य देवस्य सा देवैः कृता भूतार्थव्याहृतिः भूतस्य सत्यस्यार्थस्य व्याहृतिरुक्तिः। 'युक्ते क्ष्मादावृते भूतम्' इत्यमरः। न स्तुतिर्न प्रशंसामात्रम्। महान्तो हि यथाकथञ्चिन्न सुलभा इति भावः। परमे स्थाने तिष्ठतीति परमेष्ठी। 'परमे कित्' इत्युणादिसूत्रेण तिष्ठतेरिनिः। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। 'स्थास्थिन्स्थूणाम्' इति वक्तव्यात् षत्वम्॥

৩৩। সুরগণ এইরূপ বাক্য বিন্যাস করিয়া ইন্দ্রিয়াতীত ভগবান্ বিষ্ণুকে প্রসন্ন করিলেন; ঐ সব বাক্যাবলী নিতান্ত স্তুতিবাদ নহে, ফলতঃ উহা সেই পরমেষ্ঠীর পক্ষে স্বরূপ কথন।

**तस्मै कुशलसम्प्रश्नव्यञ्जितप्रीतये सुराः।**

**भयमप्रलयोद्वेलादाचख्युर्नैऋतोदधेः॥ ३४**

३४ अ: । सुराः कुशलप्रश्नव्यञ्जितप्रीतये तस्मै अप्रलयोद्वेलात् नैऋतोदधेः भयम् आचख्युः ॥

३४। सुरा देवाः कुशलस्य सम्प्रश्नेन व्यञ्जिता प्रकटीकृता प्रीतिर्यस्य तस्मै, लक्षितप्रसादायेत्यर्थः। अन्यथा अनवसरविज्ञप्तिर्मुखराणामिव निष्फला स्यादिति भावः। तस्मै विष्णवे अप्रलये प्रलयाभावेऽप्युद्वेलादुन्मर्य्यादात्, नैऋतो राक्षसः, स एवोदधिः तस्माद्भयमाचख्युः कथितवन्तः॥

৩৪। অনন্তর নারায়ণ সুরগণের কুশলপ্রশ্ন জিজ্ঞাসা করিলে তাঁহারা তদীয় প্রীতি বুঝিতে পারিয়া কহিলেন,—ভগবন্! রাক্ষস রূপ জলধি অকালে উদ্বেলিত হওয়ায় আমরা অত্যন্ত ভীত হইয়াছি।

अथ वेलासमासन्नशैलरन्ध्रानुनादिना।
स्वरेणोवाच भगवान् परिभूतार्णवध्वनिः॥ ३५

३५ अ: । अथ भगवान् वेलासमासन्नशैलरन्ध्रानुनादिना स्वरेण परिभूतार्णवध्वनिः (सन्) उवाच ॥

३५। अथ वेलायामब्धिकूले समासन्नानां सन्निकृष्टानां शैलानां रन्ध्रेषु गह्वरेषु अनुनादिना प्रतिध्वनिमता स्वरेण परिभूतार्णवध्वनिः तिरस्कृतसमुद्रघोषः भगवानुवाच॥

৩৫। তদনন্তর দেবগণের বাক্যাবসানে সেই অনাদিপুরুষ ভগবান্ বেলাভূমসন্নিহিত গিরিগহ্বর প্রতিধ্বনিত ও সমুদ্রনিনাদ পরাভূত করিয়া অতি গম্ভীরস্বরে কহিতে লাগিলেন।

पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता।
बभूव कृतसंस्कारा चरितार्थैव भारती॥ ३६

३६ अ: । पुराणस्य कवेः तस्य वर्णस्थानसमीरिता कृतसंस्कारा भारती चरितार्था एव बभूव ॥

३६। पुराणस्य चिरन्तनस्य कवेस्तस्य भगवतो वर्णस्थानेषु उरःकण्ठादिषु समीरिता सम्यगुच्चारिता, अतएव कृतः सम्पादितः संस्कारः साधुत्वस्पष्टतादिप्रयत्नो यस्याः सा भारती वाणी चरितार्था कृतार्था बभूवैव। एवकारस्तु असम्भावनाविपरीतभावनाव्युदासार्थः॥

৩৬। সেই পুরাণকবি বিষ্ণুর বর্ণোচ্চারণস্থান হইতে সংস্কারবিশুদ্ধ ভারতী নিঃসৃত হইয়া যেন নিঃসন্দেহই চরিতার্থতা লাভ করিল।

बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता।
निर्यातशेषा चरणाद्गङ्गेवोर्द्ध्वप्रवर्त्तिनी॥ ३७

३७ अ: । विभोः वदनोद्गता सदशनज्योत्स्ना सा, चरणात् निर्यातशेषा ऊर्द्ध्वप्रवर्त्तिनी गङ्गा इव बभौ ॥

३७। विभोः विष्णोः वदनात् उद्गता निःसृता सदशनज्योत्स्ना दन्तकान्तिसहिता। इदञ्च विशेषणं धावल्यातिशयार्थम्। अतएव सा भारती चरणादङ्घ्रेर्निर्य्याता चासौ शेषा च निर्य्यातशेषा। निःसृतावशिष्टेत्यर्थः। 'स्त्रियाः पुंवत्'—इत्यनुवर्त्त्य 'पुंवत्कर्म्मधारय' – इति पुंवद्भावः, निर्य्यातशब्दस्य या निर्य्याता सावशेषा सा गङ्गेवेति सामानाधिकरण्यनिर्वाहः। निर्य्याताया: शेषेति विग्रहे पुंवद्भावो दुर्घट एव। ऊर्द्ध्वप्रवर्त्तिनी ऊर्द्ध्ववाहिनी गङ्गेव बभौ। इत्युत्प्रेक्षा॥

৩৭। সেই বাণী বিষ্ণুর বদন হইতে ধবলদন্তকান্তি সম্বলিত হইয়া উচ্চারিত হওয়ায় মনে হইল যেন তাঁহার চরণকমলবিগলিতাবশিষ্ট গঙ্গাদেবী ঊর্দ্ধে গমন করিয়াছেন।

जाने वो रक्षसाक्रान्तावनुभावपराक्रमौ।
अङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ॥ ३८

३८ अ:। रक्षसा व: अनुभावपराक्रमौ अङ्गिनां प्रथममध्यमौ उभौ गुणौ तमसा इव आक्रान्तौ जाने॥

३८। हे देवाः! वो युष्माकमनुभावपराक्रमौ महिमपुरुषकारौ रक्षसा रावणेन। अङ्गिनां शरीरिणां प्रथममध्यमौ उभौ गुणौ सत्त्वरजसौ तमसेव तमोगुणेनेव आक्रान्तौ जाने। वाक्यार्थः कर्म्म॥

৩৮। ভগবান্ বলিলেন,—হে দেবগণ! তমোগুণ যেমন জীবগণের সত্ত্ব ও রজোগুণকে পরাভূত করে, তদ্রূপ রাক্ষস রাবণ যে তোমাদিগের প্রভাব ও পরাক্রম অভিভূত করিয়াছে, ইহা আমি বিদিত আছি।

विदितं तप्यमानञ्च तेन मे भुवनत्रयम्।
अकामोपनतेनेव साधोर्हृदयमेनसा॥ ३९

३९ अ:। च (किञ्च) अकामोपनतेन एनसा साधोः हृदयम् इव तेन तप्यमानं भुवनत्रयं मे विदितम्॥

३९। किञ्च अकामेन अनिच्छया उपनतेन प्रमादादागतेन एनसा पापेन साधोः सज्जनस्य हृदयमिव। तेन रक्षसा तप्यमानं सन्तप्यमानम्। तपेर्भौवादिकात् कर्म्मणि शानच्। भुवनत्रयञ्च मे विदितं मया ज्ञायत इत्यर्थः। 'मतिबुद्धि'—इत्यादिना वर्त्तमाने क्तः। 'क्तस्य च वर्त्तमाने' इति षष्ठी॥

৩৯। অপরিজ্ঞাত পাপ যেমন সজ্জনগণের অন্তরাবরণ পরিতপ্ত করে, তদ্রূপ সেই রাক্ষসের অত্যাচারে যে আমার এই ত্রিভুবন দগ্ধ হইতেছে; তাহা আমি অবিদিত নহি।

कार्य्येषु चैककार्य्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा।
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते॥ ४०

४० अ:। च (किञ्च) एककार्य्यत्वात् कार्य्येषु वज्रिणा न अभ्यर्थ्यः अस्मि। हि वातः स्वयम् एव अग्नेः सारथ्यं प्रतिपद्यते॥

४०। किञ्च। एककार्य्यत्वादावयोः एककार्य्यकत्वाद्धेतोः, कार्य्येषु कर्त्तव्यार्थेषु विषयेषु वज्रिणा इन्द्रेण अभ्यर्थ्यं इदं कुर्विति प्रार्थनीयो नास्मि। तथाहि वातः स्वयमेवाग्नेः सारथ्यं साहाय्यं प्रतिपद्यते प्राप्नोति, न तु वह्निप्रार्थनया इत्येवकारार्थः। प्रेक्षावतां हि स्वार्थेषु स्वत एव प्रवृत्तिः, न तु परप्रार्थनया। स्वार्थश्चायं ममापीत्यर्थः॥

৪০। সুররাজ ইন্দ্র এবং আমি আমাদের উভয়েরই প্রজাপালনরূপ একই কার্য্য; এ বিষয়ে ইন্দ্রের প্রার্থনা নিষ্প্রয়োজন; কেননা বায়ু স্বয়ংই অগ্নির সহায়তা প্রাপ্ত হইয়া থাকেন।

स्वासिधारापरिहृतः कामं चक्रस्य तेन मे।
स्थापितो दशमो मूर्द्धा लभ्यांश इव रक्षसा॥ ४१

४१ अ:। स्वासिधारापरिहृतः दशमः मूर्द्धा मे चक्रस्य कामं लभ्यांशः इव तेन रक्षसा स्थापितः॥

४१। पुरा किल त्रिपुरारिप्रीणनाय स्वशिरांसि छिन्दता दशकन्धरेण यद्दशमं शिरोऽवशेषितं तत् मच्चक्रार्थमित्याह स्वेति। स्वासिधारया स्वखड्गधारया परिहृतः। अच्छिन्न इत्यर्थः। दशमो मूर्द्धा मे मम चक्रस्य कामं पर्य्याप्तो लभ्यांशः प्राप्तव्यभाग इव तेन रक्षसा स्थापितः। तत् सर्वथा तमहं हनिष्यामीत्यर्थः॥

৪১। দশানন তপশ্চরণকালে স্বীয় তীক্ষ্ণ অসিধারা স্বহস্তে নয়টী মস্তক ছেদন করিয়াছিল, এবং তৎকালেই যেন তাঁহার অবশিষ্ট দশম মস্তকটী আমার চক্রের প্রাপ্য অংশ বলিয়া রাখিয়া দিয়াছে।

स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः।
अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः॥ ४२

४२ अ:। मया स्रष्टुः वरातिसर्गात् तु तस्य दुरात्मनः रिपोः अत्यारूढं चन्दनेन भोगिन इव सोढम्॥

४२। तर्हि किं प्रागुपेक्षितमत आह—स्रष्टुरिति। किन्तु स्रष्टुर्ब्रह्मणो वरातिसर्गात् वरदानाद्धेतोः। मया तस्य दुरात्मनः रिपोः रावणस्य अत्यारूढम् अत्यारोहणम् अतिवृद्धिरित्यर्थः। नपुंसके भावे क्तः। भोगिनः

सर्पस्य अत्याचारं चन्दनेनेव सोढ़म्। चन्दनद्रुमस्यापि तथा सहनं स्रष्टुः नियतेरिति द्रष्टव्यम्॥

४२। চন্দনতরু যেরূপ বিষধরের ঘোরতর অত্যাচার সহ্য করে, আমিও তদ্রূপ চতুরাননের বরপ্রভাবে প্রদীপ্ত সেই দুরাত্মা রাক্ষসপতির উৎপাত সহ্য করিতেছি।

धातारं तपसा प्रीतं ययाचे स हि राक्षसः।

दैवात्सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः॥ ४३

४३ अ:। हि सः राक्षसः मर्त्येषु आस्थापराङ्मुखः (सन्) तपसा प्रीतं धातारं दैवात् सर्गात् अवध्यत्वं ययाचे॥

४३। सम्प्रति वरस्वरूपमाह धातारमिति। स राक्षसस्तपसा प्रीतं सन्तुष्टं धातारं ब्रह्माणम्। मर्त्येषु विषये आस्थापराङ्मुख आदरविमुखः सन्, मर्त्याननादृत्य इत्यर्थः। दैवादष्टविधात् सर्गात् दैवसृष्टैरवध्यत्वं ययाचे हि॥

৪৩। ঐ রাক্ষস তীব্র তপস্যাদ্বারা ব্রহ্মাকে সন্তুষ্ট করিয়া ভক্ষ্যদ্রব্যহেতু মর্ত্যলোকে অনাস্থাবশতঃ 'দেবের অবধ্য হইবে' এই বর প্রার্থনা করে।

सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम्।

करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम्॥ ४४

४४अ:। सः अहं दाशरथिः भूत्वा तच्छिरःकमलोच्चयं तीक्ष्णैः शरैः रणभूमेः बलिक्षमं करिष्यामि॥

४४। तर्हि का गतिरित्याशङ्क्य मनुष्यावतारेण हनिष्यामीत्याह—सोऽहमिति। सोऽहम् दशरथस्यापत्यं पुमान् दाशरथिः। 'अत इञ्' इति इञ्प्रत्ययः। रामो भूत्वा तीक्ष्णैः शरैः तस्य रावणस्य शिरांस्येव कमलानि तेषामुच्चयं राशिं रणभूमेः बलिक्षमं पूजार्हं करिष्यामि। पुष्पविशदा हि पूजेति भावः।

৪৪। অতএব আমি রাজা দশরথের পুত্ররূপে অবতীর্ণ হইয়া শাণিত শরদ্বারা তাহার মস্তক রূপ কমলদল ছেদনপূর্ব্বক সমরভূমির উপহার দিব।

अचिराद्यज्वभिर्भागं कल्पितं विधिवत् पुनः।

मायाविभिरनालीढमादास्यध्वे निशाचरैः॥ ४५

४५ अ:। यज्वभिः विधिवत् कल्पितं भागं मायाविभिः निशाचरैः अनालीढम् अचिरात् पुनः आदास्यध्वे॥

४५। हे देवाः! यज्वभिर्याज्ञिकैः विधिवत् कल्पितमपहृतं भागं

अहत्रेण शैलवद्‌गुरुमपि ताड़कासुतं मारीचं, पाण्डुपत्रमिव परिणतपर्णमिव इत्यर्थः। अपातयत् पातितवान् ॥

२८। অস্ত্রবিদ্যাবিশারদ রাম তখন শরাসনে অতি বেগশালী এক বায়ব্য অস্ত্র-সন্ধানপূর্ব্বক পর্ব্বততুল্য সারবান্ তাড়কা'নয় মারীচকে বৃক্ষের পরিপক্ব পত্রের ন্যায় ভূতলে পাতিত করিলেন।

**यः सुबाहुरिति राक्षसोऽपरस्तत्र तत्र विससर्प मायया।**
**तं क्षुरप्रशकलीकृतं कृती पत्त्रिणां व्यभजदाश्रमाद्बहिः ॥२९**

२९ अः। 'सुबाहुः' इति यः अपरः राक्षसः तत्र तत्र मायया विससर्प, क्षुरप्रशकलीकृतं तम् कृती आश्रमात् बहिः पत्त्रिणाम् व्यभजत् ॥ वाच्य—सुबाहुना इति अपरेण राक्षसेन विससृपे, कृतिना क्षुरप्रशकलीकृतः स व्यभज्यत ॥

२९। सुबाहुरिति यः अपरो राक्षसः तत्र तत्र मायया शम्बरविद्यया विससर्प सञ्चचार। क्षुरप्रैः शकलीकृतं खण्डीकृतं तं सुबाहुं कृती कुशलो रामः। 'कृती च कुशलः समौ' इत्यमरः। आश्रमात् वहिः पत्त्रिणां पक्षिणाम्। 'पत्त्रिणौ शरपक्षिणौ' इत्यमरः। व्यभजत् विभज्य दत्तवान् इत्यर्थः ॥

২৯। সুবাহু নামক যে এক অপর নিশাচর মায়াজাল বিস্তারপূর্ব্বক সেই স্থানে বিচরণ করিতেছিল, রিপুসংহারদক্ষ রাম তাহাকে ক্ষুরপ্র অস্ত্রদ্বারা সংহার করিয়া আশ্রমবহির্ভাগে বিহঙ্গমগণের ভক্ষণার্থ বিভাগ করিয়া দিলেন।

**इत्यपास्तमखविघ्नयोस्तयोः सांयुगीनमभिनन्द्य विक्रमम्।**
**ऋत्विजः कुलपतेर्यथाक्रमं वाग्यतस्य निरवर्त्तयन् क्रियाः॥३०**

३० अः। ऋत्विजः इति अपास्तमखविघ्नयोः तयोः सांयुगीनं विक्रमम् अभिनन्द्य वाग्यतस्य कुलपतेः क्रियाः यथाक्रमं निरवर्त्तयन् ॥ वाच्य—ऋत्विग्भिः क्रियाः निरवर्त्त्यन्त ॥

३०। इति अपास्तमखविघ्नयोः तयोः राघवयोः. संयुगे रणे साधुः सांयुगीनः तम्। 'प्रतिजनादिभ्य खञ्' इति खञ्प्रत्ययः। 'सांयुगीनो रणे साधुः' इत्यमरः। विक्रममभिनन्द्य, ऋत्विजो याज्ञिकाः। वाचि यतो वाग्यतो मौनी तस्य कुलपतेः मुनिकुलेश्वरस्य क्रियाः क्रतुक्रियाः यथाक्रमं निरवर्त्तयन् निष्पादितवन्तः ॥

৩০। এইরূপে সেই যজ্ঞবিঘ্ন শান্তি করিলে পর তপস্বিগণ তাঁহাদের যুদ্ধবিক্রমের প্রশংসা করিতে লাগিলেন এবং ঋত্বিগ্‌গণ বাগ্‌যত কুলপতি বিশ্বামিত্রের যজ্ঞকার্য্য যথাক্রমে সম্পন্ন করিলেন।

तौ प्रणामचलकाकपक्षकौ भ्रातरावभृथाप्लुतो मुनिः ।
आशिषामनुपदं समस्पृशद्दर्भपाटिततलेन पाणिना ॥ ३१

३१ অ:। अवभृथाप्लुत: मुनि: प्रणामचलकाकपक्षकौ तौ भ्रातरौ आशिषामनुपदं दर्भपाटिततलेन पाणिना समस्पृशत् ॥ वाच्य—अवभृथाप्लुतेन मुनिना समस्पृश्येताम् ॥

३१। अवभृथे दीक्षान्ते आप्लुतः स्नातो मुनिः। 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः। प्रणामेन चलकाकपक्षकौ चञ्चलचूडौ तौ भ्रातरौ आशिषामनुपदमन्वग् दर्भपाटिततलेन कुशक्षतान्तःप्रदेशेन पवित्रेण इत्यर्थः। पाणिना समस्पृशत् सम्स्पृष्टवान्। सन्तोषादिति भावः ॥

৩১। অনন্তর অবভৃতস্নানান্তে মহর্ষি বিশ্বামিত্র চঞ্চলকাকপক্ষধারী প্রণামনম্র ভ্রাতৃদ্বয়কে আশীর্ব্বাদ করিয়া কুশক্ষত পাণিতল দ্বারা তাঁহাদের শরীর স্পর্শ করিলেন।

तं न्यमन्त्रयत सम्भृतक्रतुर्मैथिलः स मिथिलां व्रजन् वशी ।
राघवावपि निनाय बिभ्रतौ तद्धनुःश्रवणजं कुतूहलम् ॥३२

३२ অ:। सम्भृतक्रतु: मैथिल: तं न्यमन्त्रयत वशी स: मिथिलां व्रजन् तद्धनु:श्रवणजं कुतूहलं बिभ्रतौ राघवौ अपि निनाय ॥ वाच्य—सम्भृतक्रतुना मैथिलेन स न्यमन्त्र्यत। वशिना तेन मुनिना मिथिलां व्रजता बिभ्रतौ राघवौ (मिथिलां) निन्याते ॥

३२। सम्भृतक्रतुः सङ्कल्पितसम्भारः। मिथिलायां भवो मैथिलः जनकः तं विश्वामित्रं न्यमन्त्रयत् आहूतवान्। वशी स मुनिः मिथिलां जनकनगरीं व्रजन् तस्य जनकस्य यत् धनुः तत् श्रवणजं कुतूहलं बिभ्रतौ राघवौ अपि निनाय नीतवान् ॥

৩২। তৎকালে যজ্ঞদীক্ষিত মিথিলাধিপতি রাজা জনক তাঁহাকে তদীয় যজ্ঞে নিমন্ত্রণ করিয়াছিলেন, তখন সেই জিতেন্দ্রিয় মুনি, মিথিলায় গমনকালে ধনুর্ভঙ্গশ্রবণে কুতূহলান্বিত রাম ও লক্ষ্মণকে সমভিব্যাহারে লইয়াছিলেন।

तैः शिवेषु वसतिर्गताध्वभिः सायमाश्रमतरुष्वगृह्यत ।
येषु दीर्घतपसः परिग्रहो वासवक्षणकलत्रतां ययौ ॥ ३३

३३ অ:। गताध्वभि: तै: सायं शिवेषु आश्रमतरुषु वसति: अगृह्यत येषु दीर्घतपस: परिग्रह: वासवक्षणकलत्रतां ययौ ॥ वाच्य—गताध्वानस्ते वसतिम् अगृह्णन्। परिग्रहेण वासवक्षणकलत्रता ययै ॥

३३। गताध्वभिः तैः त्रिभिः सायं शिवेषु रम्येषु आश्रमतरुषु वसतिः

स्थानम् अगृह्यत । येषु आश्रमतरुषु दीर्घतपसो गौतमस्य परिग्रहः पत्नी । पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः । अहल्येति यावत् । वासवस्य इन्द्रस्य क्षणकलत्रतां ययौ ॥

৩৩। অনন্তর তাঁহারা ক্রমে অনেক পথ অতিক্রম করিয়া সায়ংসময়ে দীর্ঘতপা মহর্ষি গৌতমের রমণীয় আশ্রমতরুতলে অবস্থান করিলেন, ঐ আশ্রমে গৌতমপত্নী অহল্যা ক্ষণকালমাত্র সুররাজের কলত্রভাব প্রাপ্ত হইয়াছিলেন।

**प्रत्यपद्यत चिराय यत् पुनश्चारु गौतमवधूः शिलामयी ।**
**स्वं वपुः स किल किल्बिषच्छिदां रामपादरजसामनुग्रहः ॥ ३४**

३४ अः। शिलामयी गौतमवधूः चारु स्वं वपुः चिराय पुनः यत् प्रत्यपद्यत, सः किल्बिषच्छिदां रामपादरजसाम् अनुग्रहः किल ॥ वाच्य—शिलामय्या गौतमवध्वा यत् प्रत्यपद्यत तेन अनुग्रहेण (अभूयत) ॥

३४ । शिलामयी भर्त्तृशापात् शिलात्वं प्राप्ता गौतमवधूः अहल्या चारु स्वं वपुः चिराय पुनः प्रत्यपद्यत प्राप्तवती यत् । स किल्विषच्छिदां पापहारिणाम् । 'पापं किल्विषकल्मषम्' इत्यमरः । रामपादरजसाम् अनुग्रहः किल प्रसादः किलेति श्रूयते ॥

पौराणिकी वार्त्ता ।—पुरा किल भगवान् गौतमः छद्मवेशिना इन्द्रेण सह स्वपत्न्या अहल्यायाः व्यभिचारम् अवगम्य कोपेन तावत् 'शिलामयी भूत्वा अत्रैव तिष्ठ, यावत् रामपादस्पर्शेन स्वं वपुः न प्राप्स्यसी'ति शशाप ॥

৩৪। শিলাময়ী গৌতমপত্নী অহল্যা বহুকালের পর পুনরায় যে স্বীয় মনোজ্ঞ পূর্ব্বদেহ প্রাপ্ত হইয়াছিলেন, সে কেবল পাপাপহারী রামপদধূলির অনুগ্রহ।

**राघवान्वितमुपस्थितं मुनिं तं निशम्य जनको जनेश्वरः ।**
**अर्थकामसहितं सपर्य्यया देहबद्धमिव धर्ममभ्यगात् ॥ ३५**

३५ अः। जनकः जनेश्वरः राघवान्वितं तं मुनिम् उपस्थितं निशम्य अर्थकामसहितं देहबद्धं धर्म्मम् इव सपर्य्यया अभ्यगात् ।। वाच्य—जनेश्वरेण जनकेन, अर्थकामसहितः देहबद्धः धर्म्म इव राघवान्वित उपस्थितः स मुनिः अभ्यगायि ॥

३५ । राघवाभ्यामन्वितं युक्तमुपस्थितमागतं तं मुनिं जनको जनेश्वरो निशम्य । अर्थकामाभ्यां सहितं देहबद्धं बद्धदेहम्, मूर्त्तिमन्तमित्यर्थः । वाहिताग्न्यादित्वात् साधुः । धर्ममिव । सपर्य्यया अभ्यगात् प्रत्युद्गतवान् ॥

৩৫। প্রজানাথ জনক—রাম ও লক্ষ্মণসহ মহর্ষি বিশ্বামিত্র আগমন করিয়াছেন শুনিয়া অর্ঘগ্রহণপূর্ব্বক অর্থ ও কামসহকৃত সাক্ষাৎ ধর্ম্মের ন্যায় তাঁহার প্রত্যুদ্গমন করিলেন।

तौ विदेहनगरीनिवासिनां गां गताविव दिवः पुनर्वसू।
मन्यते स्म पिबतां विलोचनैः पक्ष्मपातमपि वञ्चनां मनः॥३६

३६ अ:। दिवः गां गतौ पुनर्वसू इव (स्थितौ) विलोचनैः पिबतां विदेहनगरीनिवासिनाम् मनः पक्ष्मपातम् अपि वञ्चनां मन्यते स्म॥ वाच्य—मनसा पक्ष्मपातोऽपि वञ्चना मन्यते स्म॥

३६। दिवः सुरवर्त्मनः आकाशात्। 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः। गां भुवं गतौ। 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्म-दृष्ट्योः स्त्रियां पुंसि गौः' इत्यमरः। पुनर्वसू इव तन्नामकनक्षत्राधिदेवते इव स्थितौ। तौ राघवौ विलोचनैः पिबताम्। अत्यास्थया पश्यताम् इत्यर्थः। विदेहनगरी मिथिला। तन्निवासिनां मनः कर्त्तृ पक्ष्मपातं निमेषमपि तद्दर्शनप्रतिबन्धकत्वात् वञ्चनां विडम्बनां मन्यते स्म मेने। 'लट् स्म' इति भूतार्थे लट्॥

৩৬। মিথিলাবাসীরা নভোমণ্ডল হইতে ভূতলে অবতীর্ণ পুনর্ব্বসুদ্বয়সদৃশ সেই ভ্রাতৃদ্বয়কে সতৃষ্ণনয়নে নিরীক্ষণ করিতে লাগিল; তখন তাহারা চক্ষুর পক্ষ্মপাত ও যেন দর্শনব্যাপারের প্রতিবন্ধক বলিয়া মনে করিল।

यूपवत्यवसिते क्रियाविधौ कालवित् कुशिकवंशवर्द्धनः।
राममिष्वसनदर्शनोत्सुकं मैथिलाय कथयाम्बभूव सः॥३७

३७ अ:। यूपवति क्रियाविधौ अवसिते (सति) कालवित् कुशिकवंशवर्द्धनः सः रामम् इष्वसन-दर्शनोत्सुकं मैथिलाय कथयाम्बभूव॥ वाच्य—कालविदा कुशिकवंशवर्द्धनेन तेन इष्वसनदर्शनोत्सुकः रामः मैथिलाय कथयाञ्चक्रे बभूवे वा॥

३७। यूपवति क्रियाविधौ कर्मानुष्ठाने क्रतौ इत्यर्थः। अवसिते समाप्ते सति, कालवित् अवसरज्ञः कुशिकवंशवर्द्धनः स मुनिः रामम् अस्यते अनेन इति असनम्। इषूणाम् असनम् इष्वसनं चापः तस्य दर्शने उत्सुकं मैथिलाय जनकाय कथयाम्बभूव कथितवान्॥

৩৭। অনন্তর রাজা জনকের যূপচিহ্নিত যাগক্রিয়া সম্পন্ন হইলে কুশিকবংশবর্দ্ধন কালবিৎ বিশ্বামিত্র সেই মিথিলাপতিকে বলিলেন,—রামচন্দ্র আপনার শরাসন দর্শনের জন্য সাতিশয় উৎসুক হইয়াছেন।

तस्य वीक्ष्य ललितं वपुः शिशोः
पार्थिवः प्रथितवंशजन्मनः।
स्वं विचिन्त्य च धनुर्दुरानमं
पीड़ितो दुहितृशुल्कसंस्थया॥ ३८

३८ अ: । पार्थिवः प्रथितवंशजन्मनः शिशोः तस्य ललितं वपुः वीक्ष्य, स्वं दुरानमं धनुः विचिन्त्य च दुहितृशुल्कसंस्थया पीड़ितः ॥ वाच्य—दुहितृशुल्कसंस्था पार्थिवं पीड़ितवती ॥

३८। पार्थिवो जनकः। प्रथितवंशे जन्म यस्य तथोक्तस्य। एतेन वरसम्पत्तिरुक्ता। शिशोः तस्य रामस्य ललितं कोमलं वपुः वीक्ष्य, स्वं स्वकीयं दुरानमम् आनमयितुम् अशक्यम्। नमेर्ण्यन्तात् खल्। धनुर्विचिन्त्य च, दुहितृशुल्कं कन्यामूल्यं जामातृदेयम्। 'शुल्कं घट्टादिदेये स्यात् जामातुबन्धकेऽपि च' इति विश्वः। तस्य धनुर्भङ्गरूपस्य संस्थया स्थित्या। 'संस्था स्थितौ शरे नाशे' इति विश्वः। पीड़ितो बाधितः। शिशुना रामेण दुष्करमिति दुःखित इति भावः ॥

**अब्रवीच्च भगवन् मतङ्गजैर्यद्बृहद्भिरपि कर्म दुष्करम् ।**
**तत्र नाहमनुमन्तुमुत्सहे मोघवृत्ति कलभस्य चेष्टितम् ॥ ३९**

३९ अ: । अब्रवीच्च—हे भगवन् ! बृहद्भिः मतङ्गजैः अपि यत् कर्म दुष्करं तत्र कलभस्य मोघवृत्ति चेष्टितम् अनुमन्तुम् अहं न उत्सहे ॥ वाच्य—पार्थिवेन अोच्यत। मया अनुमन्तुं न उत्सह्यते ॥

३९। अब्रवीच्च मुनिमिति शेषः। किमिति। हे भगवन् मुने! बृहद्भिः मतङ्गजैः महागजैरपि दुष्करं यत् कर्म तत्र कर्मणि कलभस्य बालगजस्य। 'कलभः करिशावकः' इत्यमरः। मोघवृत्ति व्यर्थव्यापारं चेष्टितं साहसमनुमन्तुमहं नोत्सहे ॥

৩৮—৩৯। বিখ্যাতবংশসম্ভূত সেই শিশু রামের সুকুমার শরীর দর্শন ক'রয়া রাজা জনক তাঁহা দ্বারা ধনুর আনমন অসম্ভব জানিয়া স্বীয় তনয়ার পণহেতু ব্যথিত হইলেন এবং বলিলেন,—ভগবন্ ! বৃহৎ হস্তীদিগের দুষ্কর কর্ম্মে করিশাবকের বিফল প্রযত্ন অনুমোদন করিতে আমি উৎসাহিত হইতেছি না।

**ह्रेपिता हि बहवो नरेश्वरा-**
**स्तेन तात धनुषा धनुर्भृतः ।**
**ज्यानिघातकठिनत्वचो भुजान्**
**स्वान् विधूय धिगिति प्रतस्थिरे ॥ ४०**

४० अ: । हे तात ! तेन धनुषा बहवः धनुर्भृतः नरेश्वराः ह्रेपिताः हि ते ज्यानिघातकठिनत्वचः स्वान् भुजान् धिक् इति विधूय प्रतस्थिरे ॥ वाच्य—तत् धनुः बहून् धनुर्भृतः नरेश्वरान् ह्रेपितवत्। बहुभिः धनुर्भृद्भिः नरेश्वरैः ह्रेपितैः प्रतस्थे ॥

४०। हे तात! तेन धनुषा बहवो धनुर्भृतो नरेश्वराः ह्रेपिता ह्रियं प्रापिता हि। जिह्रेतेर्धातोर्ण्यन्तात् कर्मणि क्तः। 'अर्त्तिह्री'—

इत्यादिना पुगागमः । ते नरेश्वरा ज्यानिघातैः कठिनत्वचः स्वान् भुजान् धिगिति विधूय अवमत्य प्रतस्थिरे प्रस्थिताः ॥

৪০। হে তাত ! ধনুর্দ্ধারী অনেক বীর নরপতি এই ধনুর নিকটে লজ্জাপ্রাপ্ত হইয়া স্ব স্ব জ্যাঘাতকঠিন ভুজদণ্ডে ধিক্কার দিয়া প্রস্থান করিয়াছেন।

**प्रत्युवाच तमृषिर्निशम्यतां सारतोऽयमथवा गिरा कृतम् ।**
**चाप एव भवतो भविष्यति व्यक्तशक्तिरशनिर्गिराविव ॥४१**

४१ अ: । ऋषि: तं प्रत्युवाच—अयं सारत: निशम्यताम् अथवा गिरा कृतं गिरौ अशनि: इव चापे एव भवत: व्यक्तशक्ति: भविष्यति ॥ वाच्य—ऋषिणा स प्रत्यूचे । इमं निशामय । अशनिना गिराविव चापे व्यक्तशक्तिना भविष्यते ॥

४१ । ऋषिस्तं प्रत्युवाच । किमिति ? अयं रामः सारतो बलेन निशम्यतां श्रूयताम् । अथवा गिरा सारवर्णनया कृतमलम् । गीर्न वक्तव्या इत्यर्थः । 'युगपर्य्याप्तयोः कृतम्' इत्यमरः । अव्ययं चैतत् । 'कृतं निवारण-निषेधयोः' इति गणव्याख्याने । गिरेति करणे तृतीया निषेधक्रियां प्रति करणत्वात् । किन्तु अशनिः वज्रो गिरौ इव, चापे धनुष्येव भवतः तव व्यक्तशक्तिः दृष्टसारो भविष्यति ॥

৪১। তখন মুনি প্রত্যুত্তরে রাজা জনককে কহিলেন,—ইঁহার বলের বিষয় কীর্ত্তন করিতেছি শ্রবণ করুন ; অথবা বাক্য দ্বারা ইঁহার পরিচয়ে প্রয়োজন নাই, পর্ব্বতপৃষ্ঠে অশনির ন্যায় ভবদীয় এই শরাসনদ্বারাই রামের সারবত্তা প্রকাশিত হউক।

**एवमाप्तवचनात् स पौरुषं काकपक्षकधरेऽपि राघवे ।**
**श्रद्दधे त्रिदशगोपमात्रके दाहशक्तिमिव कृष्णवर्त्मनि ॥४२**

४२ अ: । स: एवमाप्तवचनात् काकपक्षकधरे अपि राघवे पौरुषं त्रिदशगोपमात्रके कृष्णवर्त्मनि दाहशक्तिम् इव श्रद्दधे ॥ वाच्य—तेन दाहशक्तिरिव पौरुषं श्रद्दधे ॥

४२ । एवम् आप्तस्य मुनेर्वचनात् स जनकः काकपक्षकधरे बालेऽपि राघवे पुरुषस्य कर्म पौरुषं पराक्रमम् । हायनान्तयुवादिभ्योऽण्' इति युवादित्वादण् । 'पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसि' इति विश्वः । त्रिदशगोप इन्द्रगोपकीटः प्रमाणमस्य त्रिदशगोपमात्रः । 'प्रमाणे द्वयसच्'— इत्यादिना मात्रच् प्रत्ययः । ततः स्वार्थे कप्रत्ययः । तस्मिन् कृष्णवर्त्मनि वह्नौ दाहशक्तिमिव । श्रद्दधे विश्वस्तवान् ॥

৪২। রাজা মহর্ষির এবংবিধ বিশ্বস্ত বাক্য শ্রবণ করিয়া ইন্দ্রগোপকীটপরিমিত বহ্নিতেও দাহিকা শক্তির ন্যায় কাকপক্ষধর রাঘবেও পরাক্রম সম্ভবপর, ইহা বিশ্বাস করিলেন।

व्यादिदेश गणशोऽथ पार्श्वगान् कार्मुकाभिहरणाय मैथिलः।
तैजसस्य धनुषः प्रवृत्तये तोयदानिव सहस्रलोचनः॥४३

४३ अः। अथ मैथिलः कार्मुकाभिहरणाय पार्श्वगान् सहस्रलोचनः तैजसस्य धनुषः प्रवृत्तये तोयदानिव गणशः व्यादिदेश॥ वाच्य—सहस्रलोचनेन तोयदा इव, मैथिलेन पार्श्वगाः व्यादिदिशिरे॥

४३। अथ मैथिलः पार्श्वगान् पुरुषान् कार्मुकाभिहरणाय कार्मुकमानेतुम्। 'तुमर्थाच्च'—इति चतुर्थी। सहस्रलोचनः इन्द्रः तैजसस्य तेजोमयस्य धनुषः प्रवृत्तये आविर्भावाय तोयदान् मेघानिव गणान् गणान् गणशः। 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्प्रत्ययः। व्यादिदेश प्रजिघाय॥

৪৩। অনন্তর দেবরাজ যেমন স্বীয় তেজোময় ধনুর আবিষ্কার জন্য জলধরদিগকে আদেশ করেন, তদ্রূপ মিথিলাপতি জনক পার্শ্বচরগণকে সেই ধনুর আনয়ন নিমিত্ত অনুমতি করিলেন।

तत्प्रसुप्तभुजगेन्द्रभीषणं वीक्ष्य दाशरथिराददे धनुः।
विद्रुतक्रतुमृगानुसारिणं येन बाणमसृजद्वृषध्वजः॥ ४४

४४ अः। वृषध्वजः येन विद्रुतक्रतुमृगानुसारिणं बाणम् असृजत्, दाशरथिः प्रसुप्तभुजगेन्द्रभीषणं तत् धनुः वीक्ष्य आददे। वाच्य—दाशरथिना आददे। वृषध्वजेन विद्रुतक्रतुमृगानुसारी बाणः असृज्यत॥

४४। दाशरथिः रामः प्रसुप्तभुजगेन्द्र इव भीषणं भयङ्करं तद्धनुर्वीक्ष्य आददे जग्राह। वृषो ध्वजः चिह्नं यस्य सः शिवः येन धनुषा, क्रतुरेव मृगः, विद्रुतं पलायितं क्रतुमृगमनुसरति। ताच्छील्ये णिनिः। तं विद्रुतक्रतुमृगानुसारिणं बाणमसृजत् मुमोच॥

पौराणिकी वार्त्ता।—पुरा किल सतीविरहकातरेण भगवता रुद्रेण दक्षस्य यज्ञं विध्वंसितुम् उद्यमे, तद्यदा पिनाकपाणेः रौद्रीं मूर्त्तिम् अवलोक्य भयेन यज्ञः मृगरूपमवलम्ब्य पलायितुमारेभे, तदासौ रुद्रस्तं पलायमानम् उद्दिश्य अनेन धनुषा बाणमसृजत इति।

৪৪। ভগবান্ বৃষধ্বজ যে শরাসন দ্বারা মৃগরূপধারী পলায়মান যজ্ঞের প্রতি বাণ নিক্ষেপ করিয়াছিলেন; দশরথতনয় রাম, নিদ্রিত ভুজগরাজ বাসুকির ন্যায় অতিভীষণ সেই শরাসন দর্শন করিয়া তাহা গ্রহণ করিলেন।

आततज्यमकरोत् स संसदा विस्मयस्तिमितनेत्रमीक्षितः।
शैलसारमपि नातियत्नतः पुष्पचापमिव पेशलं स्मरः॥ ४५

৪৫ অ: । সঃ সংসদা বিস্ময়স্তিমিতনেত্রম্ ইক্ষিতঃ (সন্) শৈলসারম্ অপি (ধনুঃ) স্মরঃ পেশলং পুষ্পচাপম্ ইব নাতিযত্নতঃ আততজ্যম্ অকরোৎ ॥ বাচ্য—স্মরেণ পেশলঃ পুষ্পচাপঃ ইব, ইক্ষিতেন তেন অক্রিয়ত ।

৪৫ । স রামঃ সংসদা সভয়া বিস্ময়েন স্তিমিতে নেত্রে যস্মিন্ কর্মণি তদ্যথা স্যাৎ তথা ইক্ষিতঃ সন্ । শৈলস্য ইব সারো যস্য তচ্ছৈলসারমপি ধনুঃ । স্মরঃ পেশলং কোমলং পুষ্পচাপমিব । নাতিযত্নতঃ নাতিযত্নাৎ । নঞর্থস্য নশব্দস্য সুপ্সুপেতি সমাসঃ । আততজ্যম্ অধিজ্যম্ অকরোৎ ॥

৪৫ । মনোভবের সুকোমল কুসুমশরাসনে জ্যারোপণের ন্যায় রাম অবলীলাক্রমে শৈলতুল্য সুদৃঢ় সেই ধনুতে গুণারোপণ করিলেন । তখন সভাস্থিত লোকসকল বিস্ময়-সহকারে নির্নিমেষনয়নে তাঁহাকে নিরীক্ষণ করিতে লাগিল ।

**ভজ্যমানমতিমাত্রকর্ষণাত্তেন বজ্রপরুষস্বনং ধনুঃ ।**
**ভার্গবায় দৃঢ়মন্যবে পুনঃ ক্ষত্রমুদ্যতমিব ন্যবেদয়ৎ ॥৪৬**

৪৬ অ: । তেন অতিমাত্রকর্ষণাৎ ভজ্যমানং বজ্রপরুষস্বনং ধনুঃ দৃঢ়মন্যবে ভার্গবায় ক্ষত্রং পুনঃ উদ্যতং ন্যবেদয়ৎ ইব ॥ বাচ্য—ভজ্যমানেন বজ্রপরুষস্বনেন ধনুষা ন্যবেদ্যত ইব ।

৪৬ । তেন রামেণ অতিমাত্রকর্ষণাৎ ভজ্যমানম্ অতএব বজ্রপরুষ-স্বনম্ । বজ্রস্যেব পরুষঃ স্বনো যস্য তৎ । ধনুঃ কর্তৃ । দৃঢ়মন্যবে দৃঢ়-ক্রোধায় । 'মন্যুঃ ক্রোধে ক্রতৌ দৈন্য' ইতি বিশ্বঃ । ভার্গবায় ক্ষত্রং ক্ষত্র-কুলং পুনরুদ্যতং ন্যবেদয়দিব জ্ঞাপয়ামাসেব ॥

৪৬ । রামের অতিমাত্র কর্ষণে বজ্রসদৃশ কঠোরনিস্বন হরধনু ভগ্ন হইল । তখন ঐ শরাসনভঙ্গশব্দই যেন ক্ষত্রিয়কুলের প্রতি চিরমহাক্রুদ্ধ জামদগ্ন্যকে "পুনরায় ক্ষত্রিয়-কুল উন্নত"—এইরূপ জানাইল ।

**দৃষ্টসারমথ রুদ্রকার্মুকে বীর্য্যশুল্কমভিনন্দ্য মৈথিলঃ ।**
**রাঘবায় তনয়ামযোনিজাং রূপিণীং শ্রিয়মিব ন্যবেদয়ৎ ॥৪৭**

৪৭ অ: । অথ মৈথিলঃ রুদ্রকার্মুকে দৃষ্টসারং বীর্য্যশুল্কম্ অভিনন্দ্য রাঘবায় অযোনিজাং রূপিণীং শ্রিয়ম্ ইব (স্থিতাম্) তনয়াং ন্যবেদয়ৎ ॥ বাচ্য—মৈথিলেন রূপিণী শ্রীরিব, অযোনিজা তনয়া ন্যবেদ্যত ॥

৪৭ । অথ মৈথিলো জনকঃ রুদ্রকার্মুকে, দৃষ্টঃ সারঃ স্থিরাংশো যস্য তদ্দৃষ্টসারম্ । 'সারো বলে স্থিরাংশে চ' ইতি বিশ্বঃ । বীর্য্যমেব শুল্কং ধনুর্ভঙ্গরূপমিত্যর্থঃ । অভিনন্দ্য রাঘবায় রামায় অযোনিজাং দেবযজন-সম্ভবাং তনয়াং সীতাং রূপিণীং শ্রিয়মিব সাক্ষাল্লক্ষ্মীমিব ন্যবেদয়ৎ অর্পিতবান্, বাচেতি শেষঃ ॥

৪৭। অনন্তর মিথিলাধিপতি, রুদ্রধনু-ভঙ্গে রঘুকুলকুমার রামচন্দ্রের বল বিক্রম দর্শন করিয়া ভূয়সী প্রশংসা করিলেন এবং তাঁহার নিকট ধনুর্ভঙ্গরূপ শুল্ক (জামাতৃদেয় কন্যাশুল্ক, পণ) [পোণ] স্থাপন করিয়া সাক্ষাৎ লক্ষ্মীরূপিণী অযোনিজা তনয়া সীতা-দেবীকে তাঁহার করে অর্পণ করিলেন।

**मैथिलः सपदि सत्यसङ्गरो राघवाय तनयामयोनिजाम् ।**
**सन्निधौ द्युतिमतस्तपोनिधेरग्निसाक्षिक इवातिसृष्टवान् ॥४८**

४८ अ:। सत्यसङ्गरः मैथिलः द्युतिमतः तपोनिधेः सन्निधौ अग्निसाक्षिक इव राघवाय अयोनिजां तनयां सपदि अतिसृष्टवान् ॥ वाच्य—सत्यसङ्गरेण मैथिलेन अग्निसाक्षिकेण इव अयोनिजा तनया अतिसृष्टा ॥

४८। उक्तमेवार्थं सोपस्कारमाह—मैथिल इति। सत्यसङ्गरः सत्य-प्रतिज्ञः। 'अथ प्रतिज्ञाजिज्ञासासंविदापत्सु सङ्गरः।' इत्यमरः। मैथिलः राघवाय अयोनिजां तनयाम् द्युतिमतस्तेजस्विनः तपोनिधेः कौशिकस्य सन्निधौ। अग्निः साक्षी यस्य सः अग्निसाक्षिकः। 'शेषाद्विभाषा' इति कप्प्रत्ययः। स इव, सपदि अतिसृष्टवान् दत्तवान् ॥

৪৮। সত্যপ্রতিজ্ঞ মিথিলাপতি জনক তৎক্ষণাৎ তেজোনিধি মহর্ষি বিশ্বামিত্রের সমক্ষে যেন সাক্ষাৎ অগ্নিকে সাক্ষী করিয়া অযোনিসম্ভবা তনয়াকে রাঘবের করে উৎসর্গ করিলেন।

**प्राहिणोच्च महितं महाद्युतिः**
**कोसलाधिपतये पुरोधसम् ।**
**भृत्यभावि दुहितुः परिग्रहा-**
**द्दिश्यतां कुलमिदं निमेरिति ॥ ४९**

४९ अ:। महाद्युतिः (जनकः) 'इदं निमेः कुलं दुहितुः परिग्रहात् भृत्यभावि दिश्यताम्' इति महितं पुरोधसं कोसलाधिपतये प्राहिणोत् च ॥ वाच्य—महाद्युतिना महितः पुरोधाः प्राहीयत, दिश्यतु ॥

४९। महाद्युतिर्जनको महितं पूजितं पुरोधसं पुरोहितं कोसला-धिपतये दशरथाय प्राहिणोत् प्रहितवांश्च। किमिति? निमिर्नाम जनकानां पूर्वजः कश्चित्। इदं निमेः कुलं दुहितुः सीतायाः परिग्रहात् स्वपत्नीत्वेन स्वीकाराद्धेतोः। भृत्यस्य भावो भृत्यत्वं सोऽस्यास्तीति भृत्य-भावि दिश्यताम् अनुमन्यतामिति ॥

৪৯। পরে প্রদীপ্ততেজা জনক, অযোধ্যাপতি রাজা দশরথসমীপে পূজিত পুরো-হিতকে প্রেরণ করিলেন এবং তাঁহাকে এইরূপ নিবেদন করিলেন যে, "আপনি আমার তনয়াকে পুত্রবধূরূপে গ্রহণ করিয়া এই নিমিকুলকে ভৃত্যভাবসম্পন্ন মনে করুন।"

অন্বিয়েষ সদৃশীং স চ স্নুষাং
প্রাপ চৈনমনুকূলবাগ্দ্বিজঃ ।
সদ্য এব সুকৃতাং হি পচ্যতে
কল্পবৃক্ষফলধর্ম্মি কাঙ্ক্ষিতম্ ॥৫০

৫০ অঃ। স চ সদৃশীং স্নুষাম্ অন্বিয়েষ, অনুকূলবাক্ দ্বিজঃ চ এনং প্রাপ। কল্পবৃক্ষফলধর্ম্মি সুকৃতাং কাঙ্ক্ষিতং সদ্যঃ এব পচ্যতে হি। বাচ্য—তেন সদৃশী স্নুষা অন্বীয়ে। অনুকূলবাচা দ্বিজেন এষ প্রাপে ॥

৫০। সঃ দশরথস্য সদৃশীমনুরূপাং স্নুষামন্বিয়েষ, রামবিবাহমাচকাঙ্ক্ষ ইত্যর্থঃ। অনুকূলবাক্ স্নুষাসিদ্ধিরূপানুকূলার্থবাদী দ্বিজো জনকপুরোধাঃ এনং দশরথং প্রাপ। তথাহি—কল্পবৃক্ষফলস্য যো ধর্ম্মঃ সদ্যঃ পাকরূপঃ সোঽস্যাস্তীতি কল্পবৃক্ষফলধর্ম্মি। তৎ সুকৃতাং পুণ্যকারিণাং কাঙ্ক্ষিতং মনোরথঃ সদ্য এব পচ্যতে হি। কর্ম্মকর্ত্তরি লট্; স্বয়মেব পক্বং ভবতীত্যর্থঃ। 'কর্ম্মবৎ কর্ম্মণা তুল্যক্রিয়ে'তি কর্ম্মবদ্ভাবাৎ 'ভাবকর্ম্মণোঃ' ইত্যাত্মনেপদম্ ॥

৫০। তিনিও স্বকুলানুরূপা পুত্রবধূ অন্বেষণ করিতেছিলেন, আর অনুকূলবাদী সেই দ্বিজ রাজার সমীপে উপস্থিত, অতএব বুঝিতে হইবে,—কল্পবৃক্ষোৎপন্ন ফল যেমন সদ্যই পরিণত হয়, তদ্রূপ পুণ্যবান্ লোকের মনোরথ আপনা হইতেই সুসিদ্ধ হইয়া থাকে।

তস্য কল্পিতপুরস্ক্রিয়াবিধেঃ শুশ্রুবান্ বচনমগ্রজন্মনঃ ।
উচ্চচাল বলভিৎসখো বশী সৈন্যরেণুমুষিতার্কদীধিতিঃ ॥৫১

৫১ অঃ। বলভিৎসখঃ বশী কল্পিতপুরস্ক্রিয়াবিধেঃ তস্য অগ্রজন্মনঃ বচনং শুশ্রুবান্ সৈন্যরেণুমুষিতার্কদীধিতিঃ (সন্) উচ্চচাল। বাচ্য—বলভিৎসখেন বশিনা শুশ্রুবতা সৈন্যরেণুমুষিতার্কদীধিতিনা উচ্চেলে ॥

৫১। বলভিৎসখঃ ইন্দ্রসহচরঃ বশী স্বাধীনতাবান্। 'বশ আয়ত্ততায়াঞ্চ' ইতি বিশ্বঃ। কল্পিতপুরস্ক্রিয়াবিধেঃ কৃতপূজাবিধেঃ তস্য অগ্রজন্মনো দ্বিজস্য বচনং জনকেন সন্দিষ্টং শুশ্রুবান্ শ্রুতবান্। শৃণোতেঃ ক্বসুঃ। সৈন্যরেণুমুষিতার্কদীধিতিঃ সন্ উচ্চচাল প্রতস্থে ॥

৫১। সুরপতির প্রিয়সখা জিতেন্দ্রিয় রাজা দশরথ সেই ব্রাহ্মণের যথোচিত পূজা করিলেন এবং তাঁহার মুখে তনয়ের পরিণয় সংবাদ শ্রবণ করিয়া সৈন্যগণের চরণরেণু দ্বারা সূর্য্যমণ্ডল অবরোধপূর্ব্বক মিথিলাভিমুখে গমন করিলেন।

**आससाद मिथिलां स वेष्टयन् पीड़ितोपवनपादपां बलैः।**
**प्रीतिरोधमसहिष्ट सा पुरी स्त्रीव कान्तपरिभोगमायतम्॥५२**

५२ अः। स बलैः पीड़ितोपवनपादपां मिथिलां वेष्टयन् आससाद। सा पुरी स्त्री आयतं कान्तपरिभोगम् इव प्रीतिरोधम् असहिष्ट॥ वाच्य—तेन वेष्टयता आसेदे। तया पुर्य्या स्त्रिया आयतः कान्तपरिभोगः इव प्रीतिरोधः असाहि॥

५२। स दशरथः बलैः सैन्यैः पीड़ितोपवनपादपां मिथिलां वेष्टयन् परिधीकुर्वन् आससाद। सा पुरी, स्त्री युवतिः आयतम् अतिप्रसक्तं कान्तपरिभोगं प्रियसम्भोगमिव, प्रीत्या रोधं प्रीतिरोधम् असहिष्ट सोढ़वती। रोषरोधं तु न सहत इति भावः॥

৫২। অনন্তর রাজা সৈন্যগণ দ্বারা মিথিলা পরিবেষ্টন করিয়া তথায় উপস্থিত হইলে তাঁহার সৈন্যগণ উপবনতরুর পীড়া উৎপাদন করিতে লাগিল; যুবতিগণ যেমন গাঢ়তর প্রিয়সম্ভোগ সহ্য করে, মিথিলাপুরী তদ্রূপ প্রণয়াবরোধ সহ্য করিয়া রহিল।

**तौ समेत्य समये स्थितावुभौ भूपती वरुणवासवोपमौ।**
**कन्यकातनयकौतुकक्रियां स्वप्रभावसदृशीं वितेनतुः॥५३**

५३ अः। समये स्थितौ वरुणवासवोपमौ तौ भूपती समेत्य स्वप्रभावसदृशीं कन्यकातनयकौतुकक्रियां वितेनतुः॥ वाच्य—स्थिताभ्यां वरुणवासवोपमाभ्यां ताभ्याम् भूपतिभ्यां स्वप्रभावसदृशी कन्यकाकौतुकक्रिया वितेने।

५३। समये स्थितौ आचारनिष्ठौ। 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः। वरुणवासवौ उपमा उपमानं ययोस्तौ तथोक्तौ। तावुभौ भूपती जनकदशरथौ समेत्य स्वप्रभावसदृशीम् आत्ममहिमानुरूपां कन्यकानां सीतादीनां तनयानां रामादीनां च कौतुकक्रियां विवाहोत्सवं वितेनतुर्विस्तृतवन्तौ। तनोतेर्लिट्॥

৫৩। তখন বরুণ ও বাসবতুল্য সেই ভূপতিদ্বয় যথাসময়ে পরস্পর সমবেত হইয়া স্ব স্ব বিভবানুসারে কন্যাপুত্রের পরিণয়মহোৎসব সম্পাদন করিলেন।

**पार्थिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्मिलाम्।**
**यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे॥५४**

५४ अः। रघूद्वहः पार्थिवीम् उदवहत्, अथ लक्ष्मणः तदनुजाम् ऊर्मिलाम् (उदवहत्) यौ वरौजसौ तयोः अवरजौ तौ सुमध्यमे कुशध्वजसुते (उदवहताम्)॥ वाच्य—रघूद्वहेन पार्थिवी, लक्ष्मणेन तदनुजा ऊर्मिला उदौह्यत। याभ्यां अवरजाभ्यां वरौजोभ्यां ताभ्यां उदौह्येताम्॥

५४। उदवहतोत्युद्वहः। पचाद्यच्। रघूणामुद्वहो रघूद्वहो रामः। पृथिव्या अपत्यं स्त्री पार्थिवी। 'तस्यापत्यम्' इत्यणि 'टिड्ढा'—इति ङीप्। तां सीतामुदवहत् परिणीतवान्। अथ लक्ष्मणः तस्याः सीताया अनुजां जनकस्य औरसीम् ऊर्म्मिलाम् उदवहत्। यौ वरौजसौ तयोः रामलक्ष्मणयोः अवरजौ अनुजातौ भरतशत्रुघ्नौ तौ सुमध्यमे कुशध्वजस्य जनकानुजस्य सुते कन्यके माण्डवीं श्रुतकीर्त्तिञ्च उदवहताम्। नात्र व्युत्क्रमविवाहदोषः—भिन्नोदरत्वात्। तदुक्तम्—'पितृव्यपुत्रे सापत्न्ये परनारीसुतेषु च। विवाहाधानयज्ञादौ परिवेत्ताद्यदूषणम्॥' इति॥

৫৪। অনন্তর রঘুবর রাম, পৃথিবীজাত সীতাকে, লক্ষ্মণ তদীয় কনিষ্ঠা জনকের ঔরসজাত ঊর্ম্মিলাকে এবং মহাতেজস্বী ভরত ও শত্রুঘ্ন যথাক্রমে জনকানুজ কুশধ্বজের মাণ্ডবী ও শ্রুতকীর্ত্তি নামে ক্ষীণমধ্যা কন্যাদ্বয়কে বিবাহ করিলেন।

**ते चतुर्थसहितास्त्रयो बभुः सूनवो नववधूपरिग्रहात्।**
**सामदानविधिभेदविग्रहाः सिद्धिमन्त इव तस्य भूपतेः॥ ५५**

५५ अ:। ते चतुर्थसहिताः त्रयः सूनवः नववधूपरिग्रहात् तस्य भूपतेः सिद्धिमन्तः सामदानविधिभेदविग्रहाः इव बभुः। वाच्य—तैः चतुर्थसहितैः त्रिभिः सूनुभिः सिद्धिमद्भिः, सामदानविधिभेदविग्रहैरिव बभे।

५५। ते चतुर्थसहितास्त्रयः चत्वार इत्यर्थः। वृत्तानुसारादेवमुक्तम्। सूनवो नववधूपरिग्रहात्, सिद्धिमन्तः फलसिद्धियुक्तास्तस्य भूपतेर्दशरथस्य सामदानविधिभेदविग्रहाश्चत्वार उपाया इव बभुः। विधीयत इति विधिः, दानमेव विधिः। निग्रहो दण्डः। सूनूनामुपायैर्वधूनां सिद्धिभिश्चौपम्यमित्यनुसन्धेयम्॥

৫৫। তখন সেই রাজতনয়চতুষ্টয়, নববধূপরিগ্রহনিবন্ধন সিদ্ধিসম্পন্ন সাম দান-ভেদ দণ্ড এই চারি উপায়ের ন্যায় শোভা পাইতে লাগিলেন।

**ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन् कृतार्थताम्।**
**सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः॥ ५६**

५६ अ:। ताः नराधिपसुताः नृपात्मजैः तैः च ताभिः कृतार्थताम् अगमन्। स वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः अभवत्। वाच्य—ताभिः नराधिपसुताभिः नृपात्मजैः तैः (सूतैः) ताभिश्च कृतार्थता अगामि। तेन वरवधूसमागमेन प्रत्ययप्रकृतियोगसन्निभेन अभूयत।

५६। ता नराधिपसुता जनककन्यकाः नृपात्मजैः दशरथपुत्रैः कृतार्थतां कुलशीलवयोरूपादिसाफल्यमगमन्। ते च ताभिस्तथा। किञ्च,

स वराणां वधूनां च समागमः प्रत्ययानां प्रकृतीनाञ्च योग इव। सन्निभातीति सन्निभः अभवत्। पचाद्यच्। प्रत्ययाः सनादयः येभ्यो विधीयन्ते ताः प्रकृतयः। यथा प्रकृतिप्रत्यययोः सहैकार्थसाधनत्वं तद्वदत्रापीति भावः॥

৫৬। রাজনন্দিনীগণ রাজপুত্রদিগের সহিত সম্মিলিত হইয়া পরস্পর চরিতার্থতা লাভ করিলেন, ফলতঃ তখন সেই বরবধূসমাগম যেন প্রত্যয়প্রকৃতি-সংযোগের ন্যায় শোভা পাইতে লাগিল।

**एवमात्तरतिरात्मसम्भवांस्तान् निवेश्य चतुरोऽपि तत्र सः।**
**अध्वसु त्रिषु विसृष्टमैथिलः स्वां पुरीं दशरथो न्यवर्त्तत ॥५७**

५७ अ:। एवम् आत्तरतिः सः दशरथः तान् चतुरः अपि आत्मसम्भवान् तत्र निवेश्य त्रिषु अध्वसु (सत्सु) विसृष्टमैथिलः स्वां पुरीं न्यवर्त्तत। वाच्य—आत्तरतिना तेन दशरथेन विसृष्टमैथिलेन स्वां पुरीं न्यवृत्यत॥

५७। एवमात्तरतिः अनुरागवान् स दशरथः तान् चतुरोऽप्यात्मसम्भवान् पुत्रान् तत्र मिथिलायां निवेश्य विवाह्य। 'निवेशः शिविरोद्वाहविन्यासेषु प्रकीर्त्तितः' इति विश्वः। त्रिष्वध्वसु प्रयाणेषु सत्सु विसृष्टमैथिलः सन्। स्वां पुरीं न्यवर्त्तत। उद्देश्यक्रियापेक्षया कर्मत्वं पुर्य्याः॥

৫৭। পুত্রবৎসল নৃপতি দশরথ এইরূপে তনয়গণের পরিণয়কার্য্য নির্ব্বাহ করিয়া স্বীয় রাজধানী অযোধ্যাভিমুখে প্রত্যাগমন করিলেন, মিথিলাধিপতি জনকও দিবসত্রয়ের পথ পর্য্যন্ত তাঁহাদের অনুগমন করিয়া রাজা দশরথের নিকট বিদায় লইয়া স্বীয় রাজধানীতে প্রত্যাবৃত্ত হইলেন।

**तस्य जातु मरुतः प्रतीपगा**
**वर्त्मसु ध्वजतरुप्रमाथिनः।**
**चिक्लिशुर्भृशतया वरूथिनी-**
**मुत्तटा इव नदीरयाः स्थलीम् ॥५८**

५८ अ:। जातु वर्त्मसु ध्वजतरुप्रमाथिनः प्रतीपगाः मरुतः, उत्तटाः नदीरयाः स्थलीम् इव तस्य वरूथिनीं भृशतया चिक्लिशुः। वाच्य—उत्तटैः नदीरयैः स्थलीव ध्वजतरुप्रमाथिभिः प्रतीपगैः मरुद्भिः, वरूथिनी चिक्लिशे॥

५८। जातु कदाचिद्वर्त्मसु ध्वजा एव तरवस्तान् प्रमथ्नन्ति ये ते ध्वजतरुप्रमाथिनः, प्रतीपगाः प्रतिकूलगामिनो मरुतः। उत्तटा नदीरयाः स्थलीं अकृत्रिमभूमिमिव। 'जानपदकुण्ड'—इत्यादिना ङीप्। तस्य वरूथिनीं सेनां भृशतया भृशं चिक्लिशुः क्लिश्नन्ति स्म।

৫৮। অনন্তর নদীবেগ যেমন তীরভূমি অতিক্রম করিয়া বেলাভূমি নিপীড়িত করে, তদ্রূপ পথিমধ্যে একদিন সহসা এক প্রতিকূল বায়ু উত্থিত হইয়া ধ্বজরূপ তরুসকল উন্মূলনপূর্ব্বক মহারাজ দশরথের সৈন্যগণকে অত্যন্ত ক্লিষ্ট করিতে লাগিল।

**লক্ষ্যতে স্ম তদনন্তরং রবির্বদ্ধভীমপরিবেশমণ্ডলঃ।**
**বৈনতেয়শমিতস্য ভোগিনো ভোগবেষ্টিত ইব চ্যুতো মণিঃ॥ ৫৯**

৫৯ অঃ। তদনন্তরং বদ্ধভীমপরিবেশমণ্ডলঃ রবিঃ, বৈনতেয়শমিতস্য ভোগিনঃ ভোগবেষ্টিতঃ চ্যুতঃ মণিঃ ইব লক্ষ্যতে স্ম॥ বাচ্য—বদ্ধভীমপরিবেশমণ্ডলং বেষ্টিতং চ্যুতং মণিমিব রবিং লক্ষয়ন্তি স্ম।

**৫৯। তদনন্তরং প্রতীপপবনানন্তরং, বদ্ধং ভীমং পরিবেশস্য পরিধেঃ মণ্ডলং যস্য সঃ। 'পরিবেশস্তু পরিধিরুপসূর্য্যকমণ্ডলে' ইত্যমরঃ। রবিঃ, বৈনতেয়শমিতস্য গরুড়হতস্য ভোগিনঃ সর্পস্য ভোগেন কায়েন। 'ভোগঃ সুখে স্ত্র্যাদিভৃতাবহেশ্চ ফণকায়য়োঃ' ইত্যমরঃ। বেষ্টিতঃ, চ্যুতঃ শিরোভ্রষ্টঃ মণিরিব, লক্ষ্যতে স্ম॥**

৫৯। তদনন্তর দিবাকর গরুড়বিনাশিত সর্পের ফণাবেষ্টিত মণির ন্যায় ভয়ঙ্কর পরিবেশমণ্ডলে পরিবৃত হইয়া দৃষ্টিগোচর হইতে লাগিলেন।

**শ্যেনপক্ষপরিধূসরালকাঃ সান্ধ্যমেঘরুধিরার্দ্রবাসসঃ।**
**অঙ্গনা ইব রজস্বলা দিশো নো বভূবুরবলোকনক্ষমাঃ॥ ৬০**

৬০ অঃ। শ্যেনপক্ষপরিধূসরালকাঃ সান্ধ্যমেঘরুধিরার্দ্রবাসসঃ রজস্বলাঃ দিশঃ (রজস্বলাঃ) অঙ্গনা ইব অবলোকনক্ষমাঃ নো বভূবুঃ॥ বাচ্য—শ্যেনপক্ষপরিধূসরালকাভিঃ সান্ধ্যমেঘরুধিরার্দ্রবাসোভিঃ দিগ্‌ভিঃ রজস্বলাভিঃ অঙ্গনাভিরিব অবলোকনক্ষমাভিঃ ন বভূবে।

**৬০। শ্যেনপক্ষা এব পরিধূসরা অলকা যাসাং তাস্তথোক্তাঃ। সান্ধ্যমেঘা এব রুধিরার্দ্রাণি বাসাংসি যাসাং তাস্তথোক্তাঃ। রজো ধূলিরাসামস্তীতি রজস্বলাঃ 'রজঃকৃষ্যাসুতিপরিষদো বলচ্' ইতি বলচ্প্রত্যয়ঃ। দিশঃ রজস্বলা ঋতুমত্যঃ অঙ্গনা ইব। 'স্যাদ্রজঃ পুষ্পমার্ত্তবম্' ইত্যমরঃ। অবলোকনক্ষমা দর্শনার্হা নো বভূবুঃ। একত্রাদৃষ্টদোষাদপরত্র শাস্ত্রদোষাদিতি বিজ্ঞেয়ম্। অত্র রজোবৃষ্টিরুৎপাত উক্তঃ॥**

৬০। দিগঙ্গনাগণ শ্যেনপক্ষীর পক্ষরূপ ধূসরবর্ণ অলকা ধারণ করিল, সন্ধ্যাকালীন মেঘরূপ রক্তিমবসনে আবৃত হইল এবং ধূলিপটলে সমাকীর্ণ হইয়া রজঃস্বলার ন্যায় দর্শনের অযোগ্যা হইয়া গেল।

**ভাস্করশ্চ দিশমধ্যুবাস যাং।**
**তাং শ্রিতাঃ প্রতিভয়ং ববাশিরে।**

ক্ষত্রশোণিতপিতৃক্রিয়োচিতং
চোদয়ন্ত্য ইব ভার্গবং শিবাঃ ॥ ৬১

৬১ অঃ　ভাস্করঃ যাং দিশম্ অধ্যুবাস চ তাং শ্রিতাঃ শিবাঃ ক্ষত্রশোণিত-ক্রিয়োচিতং ভার্গবং চোদয়ন্ত্যঃ ইব প্রতিভয়ং ববাশিরে ॥ বাচ্য ভাস্করেণ যা দিক্ অধ্যূষে শ্রিতাভিঃ শিবাভিঃ চোদয়ন্তীভিঃ ববাশে ॥

৬১ । ভাস্করো যাং দিশমধ্যুবাস চ যস্যাং দিশি উষিতঃ । 'উপান্ব-ধ্যাঙ্বসঃ ইতি কর্মত্বম্ । তাং দিশং শ্রিতাঃ শিবাঃ গোমায়বঃ । 'স্ত্রিয়াং শিবা ভূরিমায়গোমায়ুমৃগধূর্তকাঃ' ইত্যমরঃ । ক্ষত্রশোণিতেন যা পিতৃ-ক্রিয়া পিতৃতর্পণং তত্রোচিতং পরিচিতং ভার্গবং চোদয়ন্ত্য ইব প্রতিভয়ং ভয়-ঙ্করং ববাশিরে ররুবুঃ । 'বাশৃ শব্দে' ইতি ধাতোর্লিট্ । 'তিরশ্চাং বাশিতং রুতম্' ইত্যমরঃ ॥

৬১ । শৃগালকুল সূর্য্যাধিষ্ঠিতপূর্ব্ব দিগ্ভাগ আশ্রয় করিয়া ক্ষত্রিয়শোণিতদ্বারা পিতৃ-তর্পণকারী পরশুরামকে প্রেরণ করিবার জন্যই যেন ঘোরতর রব করিতে প্রবৃত্ত হইল ।

তৎপ্রতীপপবনাদিবৈকৃতং
প্রেক্ষ্য শান্তিমধিকৃত্য কৃত্যবিৎ ।
অন্বযুঙ্‌ক্ত গুরুমীশ্বরঃ ক্ষিতেঃ
স্বস্তিমিত্যলঘয়ৎ স তদ্ব্যথাম্ ॥ ৬২

৬২ অঃ　তৎ প্রতীপপবনাদিবৈকৃতং প্রেক্ষ্য কৃত্যবিৎ ক্ষিতেঃ ঈশ্বরঃ শান্তিম্ অধিকৃত্য গুরুম্ অন্বযুঙ্‌ক্ত । সঃ স্বস্তিম্ ইতি তদ্ব্যথাম্ অলঘয়ৎ ॥ বাচ্য— কৃত্যবিদা ঈশ্বরেণ গুরুঃ অন্বযুজ্যত । তেন ( গুরুণা ) তদ্ব্যথা অলঘ্যত ॥

৬২ । তৎ প্রতীপপবনাদিবৈকৃতং দুর্নিমিত্তং প্রেক্ষ্য কৃত্যবিৎ কার্য্যজ্ঞঃ ক্ষিতেরীশ্বরঃ শান্তিম্ অনর্থনিবৃত্তিমধিকৃত্য উদ্দিশ্য গুরুং বশিষ্ঠম্ অন্ব-যুঙ্‌ক্ত অপৃচ্ছৎ । 'প্রশ্নোঽনুযোগঃ পৃচ্ছা চ' ইত্যমরঃ । স গুরুঃ স্বস্তিং শুভোদর্কং ভাবীতি তস্য রাজ্ঞো ব্যথামলঘয়ৎ লঘূকৃতবান্ ॥

৬২ । কার্য্যবিদ্ ক্ষিতীশ্বর দশরথ প্রাতিকূল পবনাদি দুর্নিমিত্ত সকল সন্দর্শন করিয়া শান্তিবিধান জন্য কুলগুরু বশিষ্ঠদেবকে বলিলেন, তিনিও তখন "মঙ্গল হইবে" এই কথা বলিয়া রাজার মনোবেদনা দূর করিলেন ।

তেজসঃ সপদি রাশিরুত্থিতঃ প্রাদুরাস কিল বাহিনীমুখে ।
যঃ প্রমৃজ্য নয়নানি সৈনিকৈর্লক্ষণীয়পুরুষাকৃতিশ্চিরাৎ ॥ ৬৩

६३ अ: । सपदि उत्थितः तेजसः राशिः वाहिनीमुखे प्रादुरास किल । यः सैनिकैः नयनानि प्रमृज्य चिरात् लक्षणीयपुरुषाकृतिः ( अभूत् )॥ वाच्य—उत्थितेन राशिना येन लक्षणीयपुरुषाकृतिना प्रादुरासे ॥

६३ । सपदि उत्थितः तेजसो राशिः वाहिनीमुखे सेनाग्रे प्रादुरास किल खलु । यः सैनिकैर्नयनानि प्रमृज्य चिराल्लक्षणीया भावनीया पुरुषाकृतिः यस्य स तथोक्तः । अभूदिति शेषः ॥

৬৩। তখন সৈন্যগণের সম্মুখভাগে সহসা এক তেজোরাশি প্রাদুর্ভূত হইল, সৈনিকগণ নয়নমার্জ্জন করিয়া দেখিতে পাইল, সেই তেজোরাশিই যেন এক দিব্য পুরুষশরীর ধারণ করিয়াছে।

**पित्र्यमंशमुपवीतलक्षणं मातृकञ्च धनुरूर्जितं दधत् ।**
**यः ससोम इव घर्म्मदीधितिः सद्विजिह्व इव चन्दनद्रुमः ॥६४**

६४ अ: । यः पित्र्यम् अंशम् उपवीतलक्षणं मातृकं च (अंशम्) ऊर्जितं धनुः दधत् (सन्) ससोमः घर्मदीधितिः इव सद्विजिह्वः चन्दनद्रुमः इव ( स्थितः )॥ वाच्य—येन दधता ससोमेन धर्मदीधितिना इव सद्विजिह्वेन चन्दनद्रुमेण इव भूयते ॥

६४ । उपवीतं लक्षणं चिह्नं यस्य तम् । पितुरयं पित्र्यः । 'वायुऋतुपित्रुषसो यत्' इति यत् प्रत्ययः । तम् अंशम् । धनुषा ऊर्जितम् । मातुरयं मातृकः । 'ऋतष्ठञ्' इति ठञ् प्रत्ययः । तम् अंशं च दधत् यो भार्गवः ससोमः चन्द्रयुक्तः । घर्मदीधितिः सूर्य्य इव सद्विजिह्वः ससर्पश्चन्दनद्रुम इव स्थितः ॥

৬৪। সেই পুরুষ তখন শশধরযুক্ত ভাস্কর এবং সর্পবেষ্টিত চন্দনতরুর ন্যায় পৈতৃকচিহ্ন যজ্ঞোপবীত ও মাতৃকচিহ্ন তেজোযুক্ত ধনু ধারণ করিয়া শোভা পাইতে লাগিলেন।

**येन रोषपरुषात्मनः पितुः शासने स्थितिभिदोऽपि तस्थुषा**
**वेपमानजननीशिरश्छिदा प्रागजीयत घृणा ततो मही ॥६५**

६५ अ: । येन रोषपरुषात्मनः स्थितिभिदोऽपि पितुः शासने तस्थुषा वेपमानजननीशिरश्छिदा ( सता ) प्राक् घृणा अजीयत, ततः मही ( अजीयत )॥ वाच्य—यः तस्थिवान् वेपमानजननीशिरश्छिद् घृणाम् अजयत्, महीम् (अजयत् )॥

६५ । रोषपरुष आत्मा बुद्धिर्यस्य सः । 'आत्मा जीवो धृतिर्बुद्धिः' इत्यमरः । यस्य रोषपरुषात्मनः, स्थितिभिदोऽपि मर्य्यादालङ्घिनोऽपि पितुः शासने तस्थुषा स्थितेन, वेपमानजननीशिरश्छिदा येन, प्रागघृणा अजीयत, ततोऽनन्तरं मही अजीयत । मातृहन्तुः क्षत्त्रवधात् कुतो जुगुप्सेति भावः ॥

पौराणिकी वार्त्ता ।—पुरा किल परशुरामजननी रेणुकादेवी जलमानेतुं नदीतीरं गतवती. तदानीं नद्यास्तटे जभमानौ गन्धर्वदम्पती विलोक्य तस्याः मनसि महान् विकारोऽजायत, ततः गृहप्रत्यागतां रेणुकामवलोक्य भगवान् जमदग्निः समाधियोगेन वृत्तान्तमिममवगच्छन् पत्न्याः शिरश्छेदनाय ज्येष्ठं तनयमादिदेश. स च तादृशं दुष्करं कर्म कर्त्तुं न शक्नुतवान्, ततः पितृवचनगौरवात् कनीयान् परशुरामः तमादेशम् प्रतिपालयन् कुठाराघातेन जनन्याः शिरश्चिच्छेद इति ॥

**अक्षबीजवलयेन निर्बभौ दक्षिणश्रवणसंस्थितेन यः ।**
**क्षत्रियान्तकरणैकविंशतेर्व्याजपूर्वगणनामिवोद्वहन् ॥ ६६**

६६ अः । यः दक्षिणश्रवणसंस्थितेन अक्षबीजवलयेन क्षत्रियान्तकरणैकविंशतेः व्याजपूर्वगणनाम् उद्वहन् इव निर्बभौ ॥ वाच्य—येन उद्वहता इव निर्बभे ।

**६६ । यो भार्गवः दक्षिणश्रवणे संस्थितेन अक्षबीजवलयेन अक्षमालया, क्षत्रियान्तकरणानां क्षत्रियवधानाम् एकविंशतिः एकविंशतिसंख्यायाः व्याजः अक्षमालारूपः पूर्वो यस्यास्तां गणनाम् उद्वहन्निव निर्बभौ ॥**

पौराणिकी वार्त्ता ।—पुरा किल हैहयवंशजः कार्त्तवीर्य्यार्जुनो निरागसं तापसं जमदग्निं निहतवान्, तेन प्रज्वलितकोपवह्निना परशुरामेण क्षत्रकुलं भस्मीकर्त्तुम् एकविंशतिवारान् यते ॥

৬৫—৬৬ । যিনি রোষকষায়িত মর্য্যাদালঙ্ঘনকারী পিতার আদেশবশবর্ত্তী হইয়া কম্পিতকলেবরা জননীর শিরশ্ছেদনপূর্ব্বক প্রথমে ঘৃণা এবং পরে পৃথিবী জয় করিয়াছিলেন, তিনি যেন দক্ষিণকর্ণে নিহিত অক্ষমালাচ্ছলে একবিংশতিবার ক্ষত্রিয়কুল নির্ম্মূল করণের গণনা বহন করিতেছেন ।

**तं पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितम् ।**
**बालसूनुरवलोक्य भार्गवं स्वां दशाञ्च विषसाद पार्थिवः ६७**

६७ अः । बालसूनुः पार्थिवः भार्गवं पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितं स्वां दशाञ्च अवलोक्य विषसाद ॥ वाच्य—बालसूनुना पार्थिवेन विषेदे ॥

**६७ । पितुर्जमदग्नेः वधभवेन क्षत्रियकर्त्तृकवधोद्भवेन मन्युना कोपेन राजवंशानां निधनाय नाशार्थम् । 'निधनं स्यात् कुले नाशे' इति विश्वः । दीक्षितं प्रवृत्तमित्यर्थः । तं भार्गवं स्वां दशां च अवलोक्य बालाः सूनवो यस्य स पार्थिवो विषसाद । स्वस्य अतिदौर्बल्यात् शत्रोश्चातिक्रोधात् कान्दिशीकोऽभवदित्यर्थः ॥**

৬৭ । নরপতি দশরথ, পিতৃবধজনিত ক্রোধে উদ্দীপ্ত ও রাজবংশবিনাশে প্রবৃত্ত পরশুরামকে সন্দর্শন করিয়া স্বীয় দৌর্ব্বল্য ও সন্তানগণ শিশু এই সকল মনে করিয়া নিতান্ত বিষণ্ণ হইয়া পড়িলেন ।

**नाम राम इति तुल्यमात्मजे वर्त्तमानमहिते च दारुणे ।**
**हृद्यमस्य भयदायि चाभवद्रत्नजातमिव हारसर्पयोः ॥ ६८**

६८ अ: । आत्मजे दारुणे अहिते च तुल्यं वर्त्तमानं राम इति नाम हारसर्पयोः रत्नजातम् इव अस्य हृद्यं भयदायि च अभवत् ॥ वाच्य—हृद्येन भयदायिना हारसर्पयोः वर्त्तमानेन रत्नजातेन इव अभूयत ॥

**६८ । आत्मजे पुत्रे दारुणे घोरे अहिते शत्रौ च तुल्यमविशेषेण वर्त्तमानं राम इति नाम, हारसर्पयोः वर्त्तमानं रत्नजातं रत्नजातिरिव । अस्य दशरथस्य हृद्यं हृदयङ्गमं भयदायि भयङ्करं च अभवत् ॥**

৬৮। স্বীয় তনয় ও নিদারুণ শত্রু এই উভয়েরই তুল্য 'রাম' নামটি যেন তাঁহার পক্ষে সর্প ও কণ্ঠহারে সংলগ্ন রত্নের ন্যায় অতীব প্রীতিকর ও ভয়ঙ্কর বোধ হইতে লাগিল।

**अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः ।**
**क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम् ॥ ६९**

६९ अ: ॥ सः अर्घ्यम् अर्घ्यम् इति वादिनं नृपम् अनवेक्ष्य यतः भरताग्रजः ततः क्षत्रकोपदहनार्चिषम् उदग्रतारकां दृशं सन्दधे ॥ वाच्य—तेन क्षत्रकोपदहनार्चिः उदग्रतारका दृक् सन्दधे ॥

**६९ । सः भार्गवः । 'अर्घ्यमर्घ्यम्' इति वादिनं नृपमनवेक्ष्य, यतः यत्र भरताग्रजः ततस्तत्र । 'इतराभ्योऽपि दृश्यन्ते' इति सार्वविभक्तिकस्तसिः । क्षत्रे क्षत्रकुले विषये यः कोपदहनः रोषाग्निः तस्यार्चिषं ज्वालामिव स्थिताम् । 'ज्वालाभासोर्नपुंस्यर्चिः' इत्यमरः । उदग्रा तारका कनीनिका यस्यास्ताम् । 'तारकाक्ष्णः कनीनिका' इत्यमरः । दृशं सन्दधे ॥**

৬৯। রাজা দশরথ অতিমাত্র ব্যস্ত হইয়া 'অর্ঘ্য অর্ঘ্য' এইরূপ বলিতেছেন, কিন্তু পরশুরাম সেদিকে দৃষ্টিপাত না করিয়া যেখানে ভরতাগ্রজ রামচন্দ্র অবস্থান করিতেছিলেন, সেই দিকেই ক্ষত্রিয়কোপানলের শিখাস্বরূপ উগ্রতারকাযুক্ত চক্ষু নিক্ষেপ করিলেন।

**तेन कार्मुकनिषक्तमुष्टिना राघवो विगतभीः पुरोगतः ।**
**अङ्गुलीविवरचारिणं शरं कुर्वता निजगदे युयुत्सुना ॥ ७०**

७० अ: । तेन कार्मुकनिषक्तमुष्टिना शरम् अङ्गुलीविवरचारिणं कुर्वता युयुत्सुना (सता) विगतभीः पुरोगतः राघवः निजगदे ॥ वाच्य—कार्मुकनिषक्तमुष्टिः शरम् अङ्गुलीविवरचारिणं कुर्वन् युयुत्सुः स विगतभियं राघवं निजगाद ॥

**७० । कार्मुकनिषक्तमुष्टिना युयुत्सुना योद्धुमिच्छता, शरम् अङ्गुली-**

विवरवारिणं कुर्वता, तेन भार्गवेण कर्त्रा । विगतभीः निर्भीकः सन्, पुरोगतोऽग्रगतो राघवः निजगदे उक्तः । कर्मणि लिट् ॥

৭০। অনন্তর সমরাভিলাষী পরশুরাম, একমুষ্টি শরাসনে ও অপরমুষ্টির অঙ্গুলিবিবরে বাণ সংস্থাপন করিয়া সম্মুখাগত নির্ভীক রামচন্দ্রকে বলিতে লাগিলেন।

**क्षत्रजातमपकारवैरि मे तन्निहत्य बहुशः शमं गतः ।**
**सुप्तसर्प इव दण्डघट्टनाद्रोषितोऽस्मि तव विक्रमश्रवात् ॥७१**

७१ अ:। क्षत्रजातं मे अपकारवैरि, तत् बहुशः निहत्य शमं गतः (अस्मि) (तथापि) दण्डघट्टनात् सुप्तसर्पः इव तव विक्रमश्रवात् रोषितः अस्मि ॥ वाच्य—मया शमो गतः। सुप्तसर्पेण इव रोषितेन भूयते ॥

७१। क्षत्रजातं क्षत्रजातिः मे अपकारेण पितृवधरूपेण वैरि द्वेषि। तत् क्षत्रजातं बहुशः एकविंशतिवारान् निहत्य, शमं गतोऽस्मि। तथापि—सुप्तसर्पो दण्डघट्टनादिव तव विक्रमस्य श्रवात् आकर्णनात् रोषितः रोषं प्रापितः अस्मि ॥

৭১। ক্ষত্রিয়জাতি আমার পিতৃবধরূপ অপকার করিয়া বৈরী হইয়াছে, আমি উহাদিগকে একবিংশতিবার বিনিপাত করিয়া শান্তভাব অবলম্বন করিয়াছি, কিন্তু এক্ষণে তোমার বিক্রম দেখিয়া দণ্ডঘট্টিত প্রসুপ্ত সর্পের ন্যায় রোষাবিষ্ট হইয়াছি।

**मैथिलस्य धनुरन्यपार्थिवैस्त्वं किलानमितपूर्वमक्षणोः ।**
**तन्निशम्य भवता समर्थये वीर्य्यशृङ्गमिव भग्नमात्मनः ॥७२**

७२ अ:। त्वम् अन्यपार्थिवैः अनमितपूर्वं मैथिलस्य धनुः अक्षणोः किल। तत् निशम्य भवता आत्मनः वीर्य्यशृङ्गं भग्नम् इव समर्थये॥ वाच्य—त्वया धनुः अक्षण्यत। मया समर्थ्यते ॥

७२। अन्यैः पार्थिवैः अनमितपूर्वं पूर्वमनमितम्। सुप्सुपेति-समासः। अस्य मैथिलस्य धनुः त्वम् अक्षणोः क्षतवान्। किलेति वार्त्तायाम्। 'वार्त्तासम्भाव्ययोः किल' इत्यमरः। तद्धनुर्भङ्गं निशम्य आकर्ण्य भवता आत्मनो मम वीर्य्यमेव शृङ्गं भग्नमिव समर्थये मन्ये ॥

৭২। পূর্ব্বে অন্য কোন রাজা জনকের ধনু আনত করিতে সমর্থ হয় নাই, কিন্তু শুনিলাম, তুমি তাহা অনায়াসে ভগ্ন করিয়াছ, ইহাতে তোমাকর্ত্তৃক আমার বীর্য্যশৃঙ্গই যেন ভগ্ন হইয়াছে মনে করিতেছি।

**अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात् ।**
**व्रीडमावहति मे स सम्प्रति व्यस्तवृत्तिरुदयोन्मुखे त्वयि॥७३**

৭৩ অ:। অন্যদা জগতি রাম: ইতি অযং শব্দ: উচ্চরিত: ( সন্ ) মাম্ এব অগাত্। সম্প্রতি ত্বযি উদযোন্মুখে (সতি) ব্যস্তবৃত্তি: স: (শব্দ:) মে ব্রীড়ম্ আবহতি ॥ বাচ্য—রামেণ ইতি অনেন শব্দেন উচ্চরিতেন অহম্ অগাযিষি। ব্যস্তবৃত্তিনা তেন ব্রীড়: আহ্যতে ॥

৭৩। অন্যদা অন্যস্মিন্ কালে, জগতি রাম ইত্যযং শব্দ: উচ্চরিত: সন্ মামেব অগাত্। সম্প্রতি ত্বযি উদযোন্মুখে সতি, ব্যস্তবৃত্তিঃ বিপরীতবৃত্তিঃ অন্যগামীতি যাবত্। স শব্দো মে ব্রীড়মাবহতি লজ্জাং করোতি ॥

৭৩। আরও দেখ,—পূর্ব্বে 'রাম' এই শব্দটী উচ্চারিত হইলে জগতে একমাত্র আমাকেই বুঝাইত, কিন্তু এক্ষণে অভ্যুদয়োন্মুখ তোমাতে ঐ নাম বিভক্ত হওয়ায় আমার লজ্জাবোধ হইতেছে।

**বিভ্রতোঽস্ত্রমচলেঽপ্যকুণ্ঠিতং দ্বৌ রিপূ মম মতৌ সমাগসৌ ।**
**ধেনুবত্সহরণাচ্চ হৈহযস্ত্বঞ্চ কীর্ত্তিমপহর্ত্তুমুদ্যত: ॥ ৭৪**

৭৪ অ:। অচলে অকুণ্ঠিতম্ অস্ত্রং বিভ্রত: মম দ্বৌ রিপূ সমাগসৌ মতৌ । ধেনুবত্সহরণাত্ হৈহয: কীর্ত্তিম্ অপহর্ত্তুম্ উদ্যত: ত্বঞ্চ ॥ বাচ্য—দ্বাভ্যাং রিপুভ্যাং সমাগমোভ্যাং মতাভ্যাং ভূযতে । ত্বযা উদ্যতম্ উদ্যতেন ভূযতে বা ॥

৭৪। অচলে ক্রৌঞ্চাদ্রাবপি অকুণ্ঠিতম্ অস্ত্রং বিভ্রতো মম দ্বৌ সমাগসৌ তুল্যাপরাধৌ রিপূ মতৌ। ধেনো: পিতৃহোমধেনোর্ব্বত্সস্য হরণাদ্ধেতো- র্হৈহয: কার্ত্তবীর্য্যশ্চ, কীর্ত্তিমপহর্ত্তুমুদ্যত উদ্যুক্ত: ত্বঞ্চ। বত্সহরণে ভারত-শ্লোক:—'প্রমত্তস্যাশ্রমাত্তস্য হোমধেন্বাস্ততো বলাত্। জহার বত্সং ক্রোশন্ত্যা বভঞ্জ চ মহাদ্রুমান্ ॥' ইতি ॥

**ক্ষত্রিযান্তকরণোঽপি বিক্রম-**
**স্তেন মামবতি নাজিতে ত্বযি ।**
**পাবকস্য মহিমা স গণ্যতে**
**কক্ষবজ্জ্বলতি সাগরেঽপি য: ॥ ৭৫**

৭৫ অ:। তেন ক্ষত্রিযান্তকরণ: অপি বিক্রম: ত্বযি অজিতে ( সতি ) মাং ন অবতি। পাবকস্য মহিমা স: গণ্যতে য: কক্ষবত্ সাগরে অপি জ্বলতি ॥ বাচ্য— ক্ষত্রিযান্তকরণেনাপি বিক্রমেণ অহম্ ন অব্যে। তং মহিমানং গণযতি, যেন জ্বল্যতে ॥

৭৫। তেন কারণেন। ক্রিযতে যেনাসৌ করণ: ক্ষত্রিযান্তস্য করণোঽপি বিক্রম: ত্বযি অজিতে মাং ন অবতি ন প্রীণাতি। তথাহি—পাবকস্য অগ্নের্মহিমা স গণ্যতে য: কক্ষবত্ কক্ষে ইব। 'তত্র তস্যেব' ইতি সপ্তম্যর্থে বতিঃ। সাগরেঽপি জ্বলতি ॥

৭৪—৭৫। হোমধেনুহরণে হৈহয়বংশজ কার্ত্তবীর্য্য এবং কীর্ত্তি অপহরণে উদ্যত তুমি,—তোমরা উভয়েই তুল্যাপরাধী ও আমার শত্রু; দেখ, আমি শৈলভেদেও অকুণ্ঠ অস্ত্রধারণ করিতেছি; এক্ষণে তুমি পরাজিত না হইলে ক্ষত্রিয়বধজনিত পরাক্রমে প্রীতিলাভ করিতে পারিতেছি না। শুষ্ক তৃণের ন্যায় অনল যে, সাগরেও প্রজ্বলিত হয়, তাহাই অনলের মহিমা বলিয়া পরিগণিত হইয়া থাকে।

**বিদ্ধি চাত্তবলমোজসা হরের্ঐশ্বরং ধনুরভাজি যত্ত্বয়া ।**

**খাতমূলমনিলো নদীরয়ৈঃ পাতয়ত্যপি মৃদুস্তটদ্রুমম্ ॥ ৭৬**

৭৬ অঃ। ত্বয়া যত্ ঐশ্বরং ধনুঃ অভাজি, ( তত্ ) হরেঃ ওজসা আত্তবলং চ বিদ্ধি। নদীরয়ৈঃ খাতমূলং তটদ্রুমং মৃদুঃ অপি অনিলঃ পাতয়তি ॥ বাচ্য—ত্বম্ অভাঙ্ক্ষীঃ। বিদ্যতাম্। খাতমূলঃ দ্রুমঃ অনিলেন পাত্যতে ॥

৭৬। কিঞ্চ। ঐশ্বরং ধনুর্হরের্বিষ্ণোরোজসা বলেন আত্তবলং হৃতসারঞ্চ বিদ্ধি। যদ্ধনুস্ত্বয়া অভাজি অভঞ্জি। 'ভঞ্জেশ্চ চিণি' ইতি বিভাষয়া নলোপঃ। তথাহি—নদীরয়ৈঃ খাতমূলম্ অবদারিতপাদং তটদ্রুমং মৃদুরপ্যনিলঃ পাতয়তি। ততঃ শিশুরপি রৌদ্রং ধনুরভাঙ্ক্ষমিতি মা গর্ব্বীরিতি ভাবঃ ॥

৭৬। তুমি যে হরধনু ভগ্ন করিয়াছ, তাহার সমস্ত সারই ভগবান্ নারায়ণ হরণ করিয়াছিলেন; তুমি ইহা নিশ্চয়ই জানিও—নদীবেগে যে বৃক্ষের মূল জর্জ্জরিত হইয়া গিয়াছে, মন্দসমীরণও সেইরূপ তীরতরু অনায়াসে পাতিত করিতে পারে।

**তন্মদীয়মিদমায়ুধং জ্যয়া সঙ্গময্য সশরং বিকৃষ্যতাম্ ।**

**তিষ্ঠতু প্রধনমেবমপ্যহং তুল্যবাহুতরসা জিতস্ত্বয়া ॥ ৭৭**

৭৭ অঃ। তত্ মদীয়ম্ ইদম্ আয়ুধং জ্যয়া সঙ্গময্য সশরং বিকৃষ্যতাম্। প্রধনং তিষ্ঠতু। এবম্ অপি অহং তুল্যবাহুতরসা ত্বয়া জিতঃ ॥ বাচ্য—বিকর্ষ ( ত্বম্ ) প্রধনেন স্থীয়তাম্। তুল্যবাহুতরাঃ ত্বং মাং জিতবান্ ॥

৭৭। তত্ তস্মান্মদীয়মিদম্ আয়ুধং কার্ম্মুকং জ্যয়া সঙ্গময্য সংযোজ্য। 'ল্যপি লঘুপূর্ব্বাত্' ইতি ণেরয়াদেশঃ। সশরং যথা তথা ত্বয়া বিকৃষ্যতাম্। প্রধনং রণস্তিষ্ঠতু। প্রধনং তাবদাস্তামিত্যর্থঃ। 'প্রধনং দারণে রণে' ইতি বিশ্বঃ। এবমপি মদ্ধনুঃকর্ষণেঽপ্যহং তুল্যবাহুতরসা সমবাহুবলেন। 'তরসী বলরংহসী' ইত্যমরঃ। ত্বয়া জিতঃ ॥

**কাতরোঽসি যদি বোদ্গতার্চিষা**

**তর্জ্জিতঃ পরশুধারয়া মম ।**

ज्यानिघातकठिनाङ्गुलिर्वृथा
बध्यतामभययाचनाञ्जलिः ॥ ৩৮

৩৮ অঃ। যদি বা উদ্গতার্চিষা মম পরশুধারয়া তর্জিতঃ কাতরঃ অসি, বৃথা-জ্যানিঘাতকঠিনাঙ্গুলিঃ অভয়যাচনাঞ্জলিঃ বধ্যতাম ॥ বাচ্য—তর্জিতেন কাতরেণ ভূয়তে। জ্যানিঘাতকঠিনাঙ্গুলিম্ অভয়যাচনাঞ্জলিং বধান (ত্বম্)॥

৩৮। यदि वा उद्गतार्चिषा उद्गतज्विषा मम परशुधारया तर्जितः कातरोऽसि भीतोऽसि। वृथा ज्यानिघातेन कठिना अङ्गुलयो यस्य स तथोक्तः अभययाचनाञ्जलिः अभयप्रार्थनाञ्जलिर्बध्यताम्। 'तौ युतावञ्जलिः पुमान्' इत्यमरः॥

৭৭—৭৮। যাহা হউক, এক্ষণে যুদ্ধে প্রয়োজন নাই, তুমি এই মদীয় শরাসনে গুণারোপণ ও শরসংযুক্ত করিয়া আকর্ষণ কর, তবেই তোমাকে আমার তুল্যবলশালী মনে করিয়া তোমার নিকট পরাজয় স্বীকার করিব। অথবা যদি তুমি আমার প্রদীপ্ত পরশুধারার তর্জ্জনে নিতান্ত কাতর হইয়া থাক, তবে বৃথা জ্যাঘাতকর্কশাঙ্গুলি করতল দ্বারা অঞ্জলিবন্ধনপূর্ব্বক আমার নিকট অভয় প্রার্থনা কর।

एवमुक्तवति भीमदर्शने भार्गवे स्मितविकम्पिताधरः।
तद्धनुर्ग्रहणमेव राघवः प्रत्यपद्यत समर्थमुत्तरम् ॥ ৩৯

৩৯ অঃ। ভীমদর্শনে ভার্গবে এবম্ উক্তবতি (সতি) রাঘবঃ স্মিতবিকম্পিতাধরঃ (সন্) তদ্ধনুর্গ্রহণম্ এব সমর্থম্ উত্তরং প্রত্যপদ্যত॥ বাচ্য—রাঘবেণ স্মিতবিকম্পিতাধরেণ প্রত্যপাদি।

৩৯। भीमदर्शने भार्गवे एवमुक्तवति सति, राघवः स्मितेन हासेन विकम्पिताधरः सन्, तद्धनुर्ग्रहणमेव समर्थम् उचितमुत्तरं प्रत्यपद्यत अङ्गीचकार॥

৭৯। ভীমদর্শন পরশুরাম এইরূপ বলিলে, ঈষৎ হাস্যযুক্ত কম্পিতাধর রাম, সেই ধনুর্গ্রহণ দ্বারা তাঁহার বাক্যের যথোচিত উত্তর প্রদান করিলেন।

पूर्वजन्मधनुषा समागतः
सोऽतिमात्रलघुदर्शनोऽभवत्।
केवलोऽपि सुभगो नवाम्बुदः
किं पुनस्त्रिदशचापलाञ्छितः ॥৮০

৮০ অ:। पूर्वजन्मधनुषा समागतः सः अतिमात्रलघुदर्शनः अभवत्। नवाम्बुदः केवलः अपि सुभगः किं पुनः विद्युच्चापलाञ्छितः॥ वाच्य—समागतेन अतिमात्र-लघुदर्शनेन तेन अभूयत। केवलेन नवाम्बुदेन सुभगेन (भूयते) विद्युच्चापलाञ्छि-तेन पुनः किम्॥

৮০। पूर्वजन्मनि नारायणावतारे यद्धनुस्तेन समागतः सङ्गतः सः रामः अतिमात्रम् अत्यन्तं लघुदर्शनः प्रियदर्शनः अभवत्। तथाहि—नवा-म्बुदः केवलः रिक्तोऽपि सुभगः। विद्युच्चापेन इन्द्रधनुषा लाञ्छितः चिह्नितः किं पुनः। सुभग एवेति भावः॥

৮০। তখন রাম পূর্ব্বজন্মধৃত ধনু ধারণ করিয়া সাতিশয় প্রিয়দর্শন হইলেন' একে ত নবজলধরই পরম রমণীয় হইয়া থাকে, তাহাতে আবার ইন্দ্রধনু সম্মিলিত হইলে উহা যে সমধিক শোভিত হইবে, তাহা আর বিচিত্র কি ?

**तेन भूमिनिहितैककोटि तत् कार्मुकञ्च बलिनाधिरोपितम्।**
**निष्प्रभश्च रिपुरास भूभृतां धूमशेष इव धूमकेतनः॥ ৮১**

৮১ অ:। बलिना तेन भूमिनिहितैककोटि तत् कार्मुकं च अधिरोपितम्। भूभृतां रिपुः च धूमशेषः धूमकेतनः इव निष्प्रभः आस॥ वाच्य—स बली अधिरो-पितवान्। धूमशेषेण धूमकेतनेन निष्प्रभेण रिपुणा आसे॥

৮১। बलिना तेन रामेण भूमिनिहिता एका कोटिर्यस्य तत्। कर्मणे भवतीति कार्मुकं धनुश्च। 'कर्मण उकञ्' इत्युकञ् प्रत्ययः। अधि-रोपितम्। भूभृतां रिपुर्भार्गवश्च। धूमशेषः धूमकेतनः अग्निरिव, निष्प्रभो निस्तेजस्क आस बभूव। आसेति तिङन्तप्रतिरूपकमव्ययं दीप्त्यर्थकस्यास्तेरूपं वा॥

৮১। অনন্তর মহাবলপরাক্রম রাম যেমনি অবনীতলে ধনুর অগ্রভাগ নিহিত করিয়া গুণারোপণ করিলেন,অমনি ক্ষত্রিয়গণের চিররিপু পরশুরাম ধূমাবশিষ্ট অনলের ন্যায় প্রভাহীন হইয়া পড়িলেন।

**तावुभावपि परस्परस्थितौ**
**वर्द्धमानपरिहीनतेजसौ।**
**पश्यति स्म जनता दिनात्यये**
**पार्वणौ शशिदिवाकराविव॥ ৮২**

৮২ অ:। परस्परस्थितौ वर्द्धमानपरिहीनतेजसौ तौ उभौ अपि दिनात्यये पार्वणौ शशिदिवाकरौ इव जनता पश्यति स्म॥ वाच्य—जनतया दृश्येते स्म॥

৮২। परस्परस्थितौ अन्योन्याभिमुखौ। वर्द्धमानश्च परिहीनश्चेति

অন্বয়ঃ। বর্দ্ধমানপরিহীনে তেজসী যয়োঃ তৌ উভৌ রাঘবভার্গবৌ অপি, দিনাত্যয়ে সায়ংকালে পর্ব্বণি ভবৌ পার্ব্বণৌ শশিদিবাকরৌ ইব। জনতা জনসমূহঃ। 'গ্রামজনবন্ধু সহায়েভ্যস্তল্' ইতি তল্ প্রত্যয়ঃ। পশ্যতি স্ম অপশ্যৎ। অত্র রাঘবস্য শশিনা ভার্গবস্য ভানুনা ঔপম্যং দ্রষ্টব্যম্॥

৮২। দর্শকমণ্ডলী পরস্পর অভিমুখে দণ্ডায়মান বীরদ্বয়ের মধ্যে বর্দ্ধিততেজা রামচন্দ্র ও হীনবল পরশুরামকে পর্ব্বকালীন দিনাবসানে শশি-দিবাকরের ন্যায় সন্দর্শন করিতে লাগিল।

**তং কৃপামৃদুরবেক্ষ্য ভার্গবং রাঘবঃ স্খলিতবীর্য্যমাত্মনি।**
**স্বঞ্চ সংহিতমমোঘমাশুগং ব্যাজহার হরসূনুসন্নিভঃ॥ ৮৩**

৮৩ অঃ। হরসূনুসন্নিভঃ কৃপামৃদুঃ রাঘবঃ আত্মনি স্খলিতবীর্য্যং তং ভার্গবং স্বং সংহিতম্ অমোঘম্ আশুগঞ্চ অবেক্ষ্য ব্যাজহার॥ বাচ্য—হরসূনুসন্নিভেন কৃপামৃদুনা রাঘবেণ ব্যাজহ্রে॥

৮৩। হরসূনুসন্নিভঃ স্কন্দসমঃ কৃপামৃদুঃ রাঘবঃ, আত্মনি বিষয়ে স্খলিতবীর্য্যং কুণ্ঠিতশক্তিং তং ভার্গবং স্বং স্বকীয়ং সংহিতমমোঘম্ আশুগং বাণঞ্চ অবেক্ষ্য ব্যাজহার অভাষে॥

**ন প্রহর্ত্তুমলমস্মি নির্দয়ং**
**বিপ্র ইত্যভিভবত্যপি ত্বয়ি।**
**শংস কিং গতিমনেন পত্রিণা**
**হন্মি লোকমুত তে মখার্জিতম্॥ ৮৪**

৮৪ অঃ। অভিভবতি অপি ত্বয়ি বিপ্রঃ ইতি (হেতোঃ) নির্দয়ং প্রহর্ত্তুম্ অলং ন অস্মি। অনেন পত্রিণা কিং তে গতিং হন্মি? উত মখার্জিতং লোকং হন্মি? শংস॥ বাচ্য—ময়া ন ভূয়তে। ময়া তে গতিঃ উত মখার্জিতো লোকঃ হন্যতে॥ শস্যতাং (ত্বয়া)

৮৪। অভিভবত্যপি ত্বয়ি বিপ্র ইতি হেতোঃ নির্দয়ং প্রহর্ত্তুম্ অলং শক্তো নাস্মি। কিন্তু অনেন পত্রিণা শরেণ তে গতিং গমনং হন্মি, উত মখার্জিতং লোকং স্বর্গং হন্মি, শংস ব্রূহি॥

৮৩—৮৪। কুমারসদৃশ দয়ার্দ্রহৃদয় রাম, পরশুরামকে একান্ত হীনবল ও স্বীয় সংযোজিত শর অব্যর্থ দেখিয়া কহিলেন,—আপনি আমাকে অভিভব করিলেও ব্রাহ্মণ বলিয়া আপনাকে নির্দ্দয়রূপে প্রহার করিতে ইচ্ছা করি না, এখন বলুন, মৎপরিত্যক্ত এই বাণদ্বারা আপনার স্বৈরগতি অথবা যজ্ঞার্জ্জিত স্বর্গপথ অবরোধ করি?

**প্রত্যুবাচ তমৃষির্ন তত্ত্বত-**
**স্ত্বাং ন বেদ্মি পুরুষং পুরাতনম্।**

गां गतस्य तव धाम वैष्णवं
कोपितो ह्यसि मया दिदृक्षुणा॥ ८५

८५ अ:। ऋषि: तं (रामं) प्रत्युवाच—तत्त्वत: त्वां पुरातनं पुरुषं न वेद्मि (इति) न। मया गां गतस्य तव वैष्णवं धाम दिदृक्षुणा (सता) कोपित: हि असि॥ वाच्य—ऋषिणा स प्रत्यूचे, पुरातन: पुरुषस्त्वं मया न विद्यसे न, कोपितेन भूयते।

८५। ऋषिर्भार्गवः तं रामं प्रत्युवाच। किमिति? तत्त्वतः स्वरूपतः त्वां पुरातनं पुरुषं न वेद्मीति न, किन्तु वेद्म्येव इत्यर्थः। किन्तु गां गतस्य भुवमवतीर्णस्य तव वैष्णवं धाम तेजो दिदृक्षुणा द्रष्टुमिच्छुना मया कोपितो ह्यसि॥

৮৫। তখন প্রত্যুত্তরে পরশুরাম রামচন্দ্রকে বলিলেন,—পুরাণপুরুষ বলিয়া যথার্থতঃ আমি আপনাকে বিদিত হইতে পারি নাই এমন নহে, তবে আপনি ভূতলে অবতীর্ণ হইয়াছেন, সম্প্রতি আপনার বৈষ্ণবতেজ সন্দর্শনমানসেই এইরূপে আপনাকে কোপিত করিয়াছি।

भस्मसात् कृतवतः पितृद्विषः
पात्रसाच्च वसुधां ससागराम्।
आहितो जयविपर्य्ययोऽपि मे
श्लाघ्य एव परमेष्ठिना त्वया॥ ८६

८६ अ:। पितृद्विष: भस्मसात्, ससागरां वसुधां च पात्रसात् कृतवत: मे परमेष्ठिना त्वया आहित: जयविपर्य्यय: अपि श्लाघ्य एव॥ वाच्य—आहितेन जयविपर्य्ययेण श्लाघ्येन भूयते॥

८६। पितृद्विषः पितृवैरिणो भस्मसात् कृतवतः कोपेन भस्मीकुर्वतः। 'विभाषा साति कार्त्स्न्ये' इति सातिप्रत्ययः। ससागरां वसुधाञ्च पात्रसात् पात्राधीनं देयं कृतवतः। 'देये त्रा च' इति चकारात् सातिः। कृतकृत्यस्य मे परमेष्ठिना परमपुरुषेण त्वया आहितः कृतो जयविपर्य्ययः पराजयोऽपि श्लाघ्य आघ्यास्य एव॥

৮৬। আমি পিতৃবৈরিগণকে ভস্মসাৎ ও সসাগরা ধরিত্রীকে পাত্রসাৎ করিয়া কৃতকৃত্য হইয়াছি, আপনি সনাতন পরম পুরুষ, আপনি যে আমাকে পরাভব করিলেন, এক্ষণে ইহা আমার পক্ষে অতীব শ্লাঘনীয়ই হইয়াছে।

तद्गतिं मतिमतां वरेप्सितां
पुण्यतीर्थगमनाय रक्ष मे।

पीड़यिष्यति न मां खिलीकृता
स्वर्गपद्धतिरभोगलोलुपम् ॥ ८७

८७ अः । तत् ( हे ) मतिमतां वर ! पुण्यतीर्थगमनाय ईप्सितां मे गतिं रक्ष । खिलीकृता स्वर्गपद्धतिः अभोगलोलुपं मां न पीड़यिष्यति ॥ वाच्य—ईप्सिता मे गतिः रक्ष्यताम् । अभोगलोलुपः अहं खिलीकृतया स्वर्गपद्धत्या न पीड़यिष्ये ॥

८७ । तत् तस्मात् कारणात् हे मतिमतां वर ! पुण्यतीर्थगमनाय आप्तुमिष्टाम् ईप्सितां मे गतिं रक्ष पालय । किन्तु खिलीकृता दुर्गमीकृता अपि स्वर्गपद्धतिः अभोगलोलुपं भोगनिःस्पृहं मां न पीड़यिष्यति, अतस्तामेव जहीत्यर्थः ॥

८७ । আমি ভোগবাসনায় একান্তই পরাঙ্মুখ হইয়াছি, অতএব স্বর্গপথ অবরুদ্ধ হওয়া আমার পক্ষে পীড়াজনক নহে, কিন্তু হে সুধীবর ! পুণ্যতীর্থ গমনের নিমিত্ত আমার অভীষ্ট স্বৈরগতি রক্ষা করুন ।

प्रत्यपद्यत तथेति राघवः प्राङ्मुखश्च विससर्ज सायकम् ।
भार्गवस्य सुकृतोऽपि सोऽभवत् स्वर्गमार्गपरिघो दुरत्ययः॥८८

८८ अः । राघवः तथेति प्रत्यपद्यत प्राङ्मुखः ( सन् ) सायकं विससर्ज च । सः ( सायकः ) सुकृतः अपि भार्गवस्य दुरत्ययः स्वर्गमार्गपरिघः अभवत् ॥ वाच्य—राघवेण तथेति प्रत्यपद्यत । प्राङ्मुखेन सायको विसृष्टे । दुरत्ययेन स्वर्गमार्गपरिघेण अभूयत ॥

८८ । राघवः तथेति प्रत्यपद्यत अङ्गीकृतवान् । प्राङ्मुखः इन्द्रदिङ्मुखः सायकं विससर्ज च । स सायकः सुकृतोऽपि साधुकारिणोऽपि । करोतेः क्विप् । भार्गवस्य दुरत्ययो दुरतिक्रमः स्वर्गमार्गस्य परिघः प्रतिबन्धः अभवत् ॥

৮৮ । রাঘব "তাহাই হউক" বলিয়া তাঁহার বাক্যে অঙ্গীকারপূর্ব্বক পূর্ব্বমুখ হইয়া শর পরিত্যাগ করিলেন ; তখন সেই শর পুণ্যবান্ পরশুরামের দুরতিক্রম স্বর্গপথ অবরুদ্ধ করিল ।

राघवोऽपि चरणौ तपोनिधेः
क्षम्यतामिति वदन् समस्पृशत् ।
निर्जितेषु तरसा तरस्विनां
शत्रुषु प्रणतिरेव कीर्त्तये ॥ ८९

८९ अः । राघवः अपि क्षम्यताम् इति वदन् तपोनिधेः चरणौ समस्पृशत् ।

तरस्विनां तरसा निर्जितेषु शत्रुषु प्रणतिः कीर्त्तये एव ( भवति ) ॥ वाच्य—राघवेण वदता समस्पृश्येताम्। प्रणत्या भूयते ॥

८९। राघवोऽपि 'क्षम्यताम्' इति वदन् तपोनिधेर्भार्गवस्य चरणौ समस्पृशत् प्रणनाम। तथाहि—तरस्विनां बलवतां तरसा बलेन निर्जितेषु शत्रुषु प्रणतिरेव कीर्त्तये भवतीति शेषः ॥

৮৯। রামও তখন "ক্ষমা করুন" এই বলিয়া তপোনিধি সেই পরশুরামের চরণ-দ্বয় স্পর্শ করিলেন। বাহুবলপরাজিত শত্রুর সমীপে প্রণত হওয়া বীরগণের পক্ষে কীর্ত্তিরই কথা, সন্দেহ নাই।

राजसत्वमवधूय मातृकं पित्र्यमस्मि गमितः शमं यदा।
नन्वनिन्दितफलो मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः ॥९०

९० अः। यदा मातृकं राजसत्वम् अवधूय पित्र्यं शमं गमितः अस्मि, तदा त्वया मम अनिन्दितफलः अयं निग्रहः अपि अनुग्रहीकृतः ननु ॥ वाच्य—शमं गमितेन मया भूयते। त्वम् अनिन्दितफलं निग्रहमपि इमम् अनुग्रहीकृतवान् ॥

९०। मातुरागतं मातृकं राजसत्वं रजोगुणप्रधानत्वम् अवधूय पितुरागतं पित्र्यं शमं यदा गमितोऽस्मि। तदा त्वया मम. अपेक्षितत्वात् अनिन्दितम् अगर्हितं फलं स्वर्गहानिलक्षणं यस्य सोऽयं निग्रहः अपकारः अपि अनुग्रहीकृतः ननु उपकारीकृतः खलु ॥

৯০। পরশুরাম বলিলেন,—হে রাম! আপনি আমাকে মাতৃসম্বন্ধীয় রাজসিক প্রকৃতি পরিহার করাইয়া যে, পৈতৃক শান্তিগুণ অবলম্বন করাইয়াছেন; ইহাতে অনিন্দিত ফলজনক স্বর্গপথরোধরূপ এই নিগ্রহ আমার পক্ষে অনুগ্রহস্বরূপ হইয়াছে।

साधयाम्यहमविघ्नमस्तु ते
देवकार्य्यमुपपादयिष्यतः।
ऊचिवानिति वचः सलक्ष्मणं
लक्ष्मणाग्रजमृषिस्तिरोदधे ॥ ९१

९१ अः। अहं साधयामि। देवकार्य्यम् उपपादयिष्यतः ते अविघ्नम् अस्तु। सलक्ष्मणं लक्ष्मणाग्रजम् इति वचः ऊचिवान् ऋषिः तिरोदधे ॥ वाच्य—मया साध्यते अविघ्नेन भूयताम्। ऊचुषा ऋषिणा तिरोदधे ॥

९१। अहं साधयामि गच्छामि। देवकार्य्यमुपपादयिष्यतः सम्पादयिष्यतस्ते अविघ्नमस्तु विघ्नाभावोऽस्तु। 'अव्ययं विभक्ति'—इत्यादिना अर्थाभावे अव्ययीभावः। सह लक्ष्मणेन सलक्ष्मणं तम्। 'तेन सहेति

তুল্যযোগী' ইতি বহুব্রীহিঃ। লক্ষ্মণাগ্রজং রামম্ ইতি বচঃ অভিধায় উক্তবান্। ব্রূঞঃ ক্বসুঃ। স্তিরোধানে অন্তর্দধে ॥

পৌরাণিকী বার্ত্তা। পুরা কিল তপোবলদৃপ্তেন দশকন্ধরেণ পরিপীড়িতাঃ সেন্দ্রা দেবগণাঃ ক্ষীরোদশায়িনো ভগবতো নারায়ণস্য শরণমাগত্য বিবিধৈঃ স্তবৈঃ তং তুষ্টুবুঃ, তেন হি প্রসন্নঃ স ভগবান্ দেবাসুরৈরপি অবধ্যং তং নিশাচরং বিনাশয়িতুং নররূপেণ ধরায়ামবততার ইতি ॥

৯১। হে রাঘব! আপনি দেবকার্য্যসাধনের জন্য এই ধরাধামে অবতীর্ণ হইয়াছেন, আপনার মঙ্গল হউক; আমি চলিলাম, ঋষি পরশুরাম সলক্ষ্মণ রামচন্দ্রকে এই কথা বলিয়া অন্তর্হিত হইলেন।

তস্মিন্ গতে বিজয়িনং পরিরভ্য রামং
স্নেহাদমন্যত পিতা পুনরেব জাতম্ ।
তস্যাভবৎ ক্ষণশুচঃ পরিতোষলাভঃ
কক্ষাগ্নিলঙ্ঘিততরোরিব বৃষ্টিপাতঃ ॥ ৯২

৯২ অঃ' তস্মিন্ গতে (সতি) পিতা বিজয়িনং রামং স্নেহাৎ পরিরভ্য পুনঃ জাতম্ এব অমন্যত। ক্ষণশুচঃ তস্য পরিতোষলাভঃ কক্ষাগ্নিলঙ্ঘিততরোঃ বৃষ্টিপাতঃ ইব অভবত্॥ বাচ্য—পিত্রা পুনরেব জাতঃ (রামঃ) অমন্যত। বৃষ্টিপাতেন ইব পরিতোষলাভেন অভূয়ত ॥

৯২। তস্মিন্ ভার্গবে গতে সতি, বিজয়িনং রামং পিতা স্নেহাৎ পরিরভ্য আলিঙ্গ্য, পুনর্জাতমিব অমন্যত। ক্ষণং শুগ্ যস্যেতি বিগ্রহঃ। ক্ষণশুচস্তস্য দশরথস্য পরিতোষলাভঃ সন্তোষপ্রাপ্তিঃ, কক্ষাগ্নিনা দাবানলেন। 'কক্ষঃ শুষ্ককাননবীরুধোঃ' ইতি বিশ্বঃ। লঙ্ঘিতস্য অভিহতস্য তরোঃ বৃষ্টিপাত ইব, অভবত্ ॥

৯২। পরশুরাম প্রস্থান করিলে, পিতা দশরথ বিজয়ী রামকে আলিঙ্গন করিয়া, স্নেহবশতঃ মনে করিলেন যেন রামচন্দ্রের পুনর্জ্জন্মলাভ হইল এবং তিনি দাবানল সমাক্রান্ত বৃক্ষের উপর বৃষ্টিপাতের ন্যায় ক্ষণস্থায়ী শোকের পর পরিতোষ প্রাপ্ত হইলেন।

অথ পথি গময়িত্বা কৢপ্তরম্যোপকার্য্যে
কতিচিদবনিপালঃ শর্ব্বরীঃ শর্ব্বকল্পঃ।
পুরমবিশদযোধ্যাং মৈথিলীদর্শনীনাং
কুবলয়িতগবাক্ষাং লোচনৈরঙ্গনানাম্ ॥ ৯৩

ইতি শ্রীমহাকবিকালিদাসকৃতৌ রঘুবংশে সীতাপরিণয়ো নাম
একাদশঃ সর্গঃ ॥ ১১

९२ अः । अथ शर्वकल्पः अवनिपालः क्लृप्तरम्योपकार्ये पथि कतिचित् शर्वरीः गमयित्वा मैथिलीदर्शनीनाम् अङ्गनानां लोचनैः कुवलयितगवाक्षाम् अयोध्यां पुरम् अविशत् ॥ वाच्य—शर्वकल्पेन अवनिपालेन कुवलयितगवाक्षा अयोध्या पूः अविश्यत ॥

९२ । अथ ईषदसमाप्तः शर्वः शर्वकल्पः । 'ईषदसमाप्तौ'—इति कल्पप्प्रत्ययः । अवनिपालः क्लृप्ता रम्या नवा उपकार्या यस्मिन् सः तस्मिन् पथि कतिचित् शर्वरीः रात्रीः गमयित्वा मैथिलीदर्शनीनाम् अङ्गनानां लोचनैः कुवलयानि येषां सञ्जातानि कुवलयिताः । 'तदस्य सञ्जातं तारकादिभ्यः इतच्' इति इतच्प्रत्ययः । कुवलयिता गवाक्षा यस्यास्तां पुरम् अयोध्याम् अविशत् प्रविष्टवान् ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे
महाकाव्ये सीतापरिणयो नाम एकादशः सर्गः ॥ ११

৯৩। অনন্তর শিবোপম অবনীপতি দশরথ পথিমধ্যে পরিচারকগণকর্তৃক বিরচিত পটমণ্ডপে কয়েক রাত্রি অতিবাহিত করিয়া নিজ রাজধানী অযোধ্যাপুরে প্রবেশ করিলেন। তখন জনকনন্দিনীর সন্দর্শনমানসে পুরনারীগণ গবাক্ষবিবরে দৃষ্টিনিক্ষেপ করায় বোধ হইল যেন গবাক্ষসকলে কুবলয়কুল বিকসিত হইয়া রহিয়াছে।

একাদশ সর্গ সমাপ্ত ॥ ১১

---

## द्वादशः सर्गः

-:0:-

निर्विष्टविषयस्नेहः स दशान्तमुपेयिवान् ।
आसीदासन्ननिर्वाणः प्रदीपार्चिरिवोषसि ॥ १

१ अः। निर्विष्टविषयस्नेहः दशान्तम् उपेयिवान् सः उषसि प्रदीपार्चिः इव आसन्ननिर्वाणः आसीत्। वाच्य—निर्विष्टविषयस्नेहेन उपेयुषा प्रदीपार्चिषा इव, आसन्ननिर्वाणेन तेन अभूयत ॥

वन्दामहे महोद्दण्डदोर्दण्डौ रघुनन्दनौ ॥
तेजोनिर्जितमार्त्तण्डमण्डलौ लोकनन्दनौ ॥

१। स्नेहयन्ति प्रीणयन्ति पुरुषमिति स्नेहाः। पचाद्यच्। स्निह्यन्ति पुरुषा येषु इति वा स्नेहाः। अधिकरणार्थे घञ्। विषयाः शब्दादयः त एव स्नेहाः निर्विष्टा भुक्ता विषयस्नेहाः येन स तथोक्तः। "निर्वेशो भृति-भोगयो": इति विश्वः। दशा जीवनावस्था तस्य अन्तं वार्द्धक्यम् उपेयिवान् स दशरथः। उषसि प्रदीपार्चिरिव दीपज्वालेव। आसन्नं निर्वाणं मोक्षो यस्य सः तथोक्तः आसीत्। अर्चिःपक्षे तु विषयो देश आश्रयः भाजन-मिति यावत्। 'विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च' इति विश्वः। स्नेहः तैलादिः। 'स्नेहस्तैलादिकरसे द्रवे स्यात् सौहृदेऽपि च' इति विश्वः। दशा वर्त्तिका। 'दशा वर्त्ताववस्थायाम्' इति विश्वः। निर्वाणं विनाशः। 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति यादवः ॥

১। ঊষাকালের দীপশিখা যেমন পাত্রস্থিত তৈল ও বর্ত্তি নিঃশেষিত করিয়া নির্ব্বাণোন্মুখ হয়, রাজা দশরথও তদ্রূপ পার্থিব বিষয়মমতা পরিত্যাগপূর্ব্বক অন্তিম-দশায় উপনীত হইয়া মোক্ষপ্রাপ্তির সমীপবর্ত্তী হইলেন।

तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।
कैकेयीशङ्कयेवाह पलितच्छद्मना जरा ॥ २

२ अः। जरा कैकेयीशङ्कया इव पलितच्छद्मना कर्णमूलम् आगत्य, 'रामे श्रीः न्यस्यताम्' इति तम् आह ॥ वाच्य जरया "रामे श्रियं न्यस्यत" इति स उच्यते ॥

२। जरा कैकेयीशङ्कयेव। पलितस्य केशादिशौक्ल्यस्य छद्मना मिषेण। 'पलितं जरसा शौक्ल्यं केशादौ' इत्यमरः। कर्णमूलं कर्णोपकण्ठम् आगत्य रामे श्रीः राजलक्ष्मीः न्यस्यतां निधीयताम् इति तमाह।

दशरथो वृद्धोऽहम् इति विचार्य्य रामस्य यौवराज्याभिषेकं चकाङ्क्ष इत्यर्थः ॥

२। জরা কৈকেয়ীভয়ে ব্যস্ত হইয়া যেন পলিতচ্ছলে তাঁহার কর্ণমূলে উপস্থিত হইয়া "রামচন্দ্রকে রাজ্যলক্ষ্মী প্রদান কর" এই কথা বলিল।

सा पौरान् पौरकान्तस्य रामस्याभ्युदयश्रुतिः।
प्रत्येकं ह्लादयाञ्चक्रे कुल्येवोद्यानपादपान् ॥ ३

३ अः। पौरकान्तस्य रामस्य सा अभ्युदयश्रुतिः कुल्या उद्यानपादपान् इव पौरान् प्रत्येकं ह्लादयाञ्चक्रे ॥ वाच्य—तया अभ्युदयश्रुत्या कुल्यया उद्यानपादपा इव पौराः (ह्लादयाञ्चक्रिरे) ॥

३। सा पौरकान्तस्य रामस्य अभ्युदयश्रुतिः अभिषेकवार्त्ता, कुल्या कृत्रिमा सरित्। 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः। उद्यानपादपान् इव, पौरान् प्रत्येकं ह्लादयाञ्चक्रे ॥

৩। অনন্তর প্রজাপ্রিয় রামের রাজ্যাভিষেকবার্ত্তা বিঘোষিত হইলে, কৃত্রিম সরিৎ যেরূপ উদ্যানস্থিত তরুসকলকে প্রফুল্ল করে, তদ্রূপ সেই অভিষেকবার্ত্তা প্রত্যেক পুরবাসিগণকে পুলকিত করিল।

तस्याभिषेकसम्भारं कल्पितं क्रूरनिश्चया।
दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः ॥ ४

४ अः। क्रूरनिश्चया कैकेयी तस्य कल्पितम् अभिषेकसम्भारं शोकोष्णैः पार्थिवाश्रुभिः दूषयामास ॥ वाच्य—क्रूरनिश्चयया कैकेय्या कल्पितः अभिषेकसम्भारः दूषयामासे ॥

४। क्रूरनिश्चया कैकेयी तस्य रामस्य कल्पितं सम्भृतम् अभिषेकस्य सम्भारम् उपकरणं शोकोष्णैः पार्थिवाश्रुभिः दूषयामास। स्वदुःखमूलेन राजशोकेन प्रतिबबन्धेत्यर्थः ॥

৪। ক্রূরস্বভাবা কৈকেয়ী, রামচন্দ্রের অভিষেকনিমিত্ত সমাহৃত দ্রব্যসম্ভার নরপতি দশরথের শোকোষ্ণ নয়নবারিধারা কলুষিত করিল।

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥ ५

५ अः। सा चण्डी भर्त्रा आश्वासिता (सती) तत्संश्रुतौ वरौ इन्द्रसिक्ता भूः बिलमग्नौ उरगौ इव उद्ववाम किल ॥ वाच्य—आश्वासितया तया चण्ड्या इन्द्रसिक्तया भुवा उद्ववमाते [उद्वेमाते] ॥

५। चण्डी अतिकोपना। 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः। सा किल भर्त्रा आश्वासिता अनुनीता सती तेन भर्त्रा संश्रुतौ प्रतिज्ञातौ वरौ,

उद्भूतेव सिक्ता अभिवृष्टा भूः विले वल्मीकादौ मग्नौ उरगौ इव । उद्ववाम उज्जगार ॥

৫। কোপনস্বভাবা কৈকেয়ী পতিকর্ত্তৃক তদ্রূপ আশ্বাসিত হইয়া পূর্ব্বপ্রতিশ্রুত বরদ্বয় যাচ্ঞা করিল। বোধ হইল—বর্ষাকালীন মেঘধারাসিক্ত ভূমি যেন বল্মীকাদির বিবরস্থিত সর্প দুইটি উদ্গিরণ করিয়াছিল।

तयोश्चतुर्दशैकेन रामं प्राव्राजयत् समाः ।
द्वितीयेन सुतस्यैच्छद्वैधव्यैकफलां श्रियम् ॥ ৬

৬ অ:। (सा) तयोः एकेन रामं चतुर्दश समाः प्राव्राजयत्, द्वितीयेन वैधव्यैकफलां सुतस्य श्रियम् ऐच्छत् ॥ वाच्य—रामः प्राव्राज्यत। वैधव्यैकफला श्रीः ऐष्यत ॥

৬। सा तयोः वरयोः मध्ये एकेन वरेण रामं चतुर्दशसमाः संवत्सरान्। अत्यन्तसंयोगे द्वितीया। प्राव्राजयत् प्रावासयत्। द्वितीयेन वरेण सुतस्य भरतस्य वैधव्यैकफलां स्ववैधव्यमात्रफलां न तूपभोगफलाम् इति भावः। श्रियमैच्छदियेष ॥

पौराणिकी वार्त्ता।—अथ कदाचित् समरे असुरपराक्रममसहिष्णुर्मघवा दशरथं साहाय्यार्थमामन्त्रयामास, वासवसखः सोऽपि राजा तदानीमिन्द्रप्रार्थनया असुरैः समं युयुधे, अस्मिन्नेव समये कैकेयी जयश्रियं लभमानमपि वाणविक्षताङ्गं राजानं बहुशः शुश्रूषामास, तेन परितुष्टः स राजा तस्यै द्वौ वरौ दातुमङ्गीचकार। किन्तु मन्थराप्रणोदिता क्रूरनिश्चया कैकेयी समयमपेक्षमाणा तदानीं न तद्वरद्वयमग्रहीत्। इदानीं लब्धावसरा कैकेयी एकेन रामस्य द्वादश समाः वनवासरूपमपरेण स्वतनयस्य राज्यप्राप्तिरूपं वरद्वयं ययाच इति ॥

৬। সেই বরদ্বয়ের মধ্যে একটীতে চতুর্দ্দশবৎসর রামের বনবাস, দ্বিতীয়টীতে স্বীয় বৈধব্যবিধায়ক ভরতের রাজ্যাভিষেক অভিলাষ করিলেন।

पित्रा दत्तां रुदन् रामः प्राङ्मही प्रत्यपद्यत ।
पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत् ॥ ৭

৭ অ:। रामः रुदन् (सन्) प्राक् पित्रा दत्तां महीं प्रत्यपद्यत, पश्चात् वनाय गच्छ इति तत् आज्ञाम् मुदितः (सन्) अग्रहीत् ॥ वाच्य—रामेण प्राक् दत्ता मही रुदता प्रत्यपद्यत, गम्यताम् इति आज्ञा अग्राहि ॥

৭। रामः प्राक् पित्रा दत्तां महीं रुदन् प्रत्यपद्यत अङ्गीचकार। स्वत्यागदुःखादिति भावः। पश्चात् वनाय गच्छ इति एवंरूपां तदाज्ञां पित्राज्ञां मुदितः अग्रहीत् पित्राज्ञाकरणलाभादिति भावः ॥

৭। রাজা নিজ অধিকার পরিত্যাগ করিতেছেন বলিয়া রাম প্রথমতঃ রোদন করিতে করিতে পিতৃদত্ত পৃথিবী গ্রহণ করিলেন, পরে “বনগমন কর” এই আজ্ঞা শুনিয়া হর্ষসহকারে তাহা গ্রহণ করিলেন।

दधतो मङ्गलक्षौमे वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥ ८

८ अ: । मङ्गलक्षौमे दधतः वल्कले वसानस्य च तस्य समं मुखरागं जनाः विस्मिताः ददृशुः ॥ वाच्य—विस्मितैः जनैः मुखरागो ददृशे ॥

८ । मङ्गलक्षौमे दधतो वल्कले च वसानस्य आच्छादयतश्च तस्य रामस्य सममेकविधं मुखरागं मुखवर्णं जना विस्मिता ददृशुः । सुखदुःखयोरविकृत इति भावः ॥

৮। রাম যখন রাজ্যাভিষেকজন্য মঙ্গলময় ক্ষৌমযুগল এবং আবার যখন বনবাস নিমিত্ত বল্কল-পরিধান করিলেন, তখন পুরবাসিগণ তাঁহার একইরূপ মুখরাগ সন্দর্শন করিয়া বিস্মিত হইয়াছিল।

स सीतालक्ष्मणसखः सत्याद्गुरुमलोपयन् ।
विवेश दण्डकारण्यं प्रत्येकञ्च सतां मनः ॥ ९

९ अ: । सः गुरुं सत्यात् अलोपयन् सीतालक्ष्मणसखः ( सन् ) दण्डकारण्यं सतां मनः च प्रत्येकं विवेश ॥ वाच्य—अलोपयता सीतालक्ष्मणसखेन तेन ( रामेण ) विविशे ॥

९ । स रामः गुरुं पितरं सत्यात् वरदानरूपात् अलोपयन् अभ्रंशयन् सीतालक्ष्मणयोः सखेति विग्रहः । ताभ्यां सहितः सन् दण्डकारण्यं विवेश, सतां मनश्च प्रत्येकं विवेश । पितृभक्त्या सर्व्वे सन्तः सन्तुष्टा इति भावः ॥

৯। অনন্তর রাম পিতৃসত্য পালনজন্য সীতা ও লক্ষ্মণসহ দণ্ডকারণ্যে প্রবেশ করিলেন, ইহাতে মনে হইল—যেন ইহাঁরা প্রত্যেক সাধুদিগের মনোমধ্যে প্রবিষ্ট হইলেন।

राजापि तद्वियोगार्त्तः स्मृत्वा शापं स्वकर्मजम् ।
शरीरत्यागमात्रेण शुद्धिलाभममन्यत ॥ १०

१० अ: । राजा अपि तद्वियोगार्त्तः ( सन् ) स्वकर्मजं शापं स्मृत्वा शरीरत्यागमात्रेण शुद्धिलाभम् अमन्यत ॥ वाच्य— तद्वियोगार्त्तेन राज्ञापि शुद्धिलाभः अमन्यत ॥

१० । तद्वियोगार्त्तः पुत्रवियोगदुःखितः राजा अपि स्वकर्मणा मुनि-पुत्रवधरूपेण जातः स्वकर्मजातः शापं पुत्रशोकजं मरणात्मकं स्मृत्वा शरीरत्यागमात्रेण देहत्यागेनैव शुद्धिलाभं प्रायश्चित्तम् अमन्यत । मृत इत्यर्थः ॥ ०

১০। পুত্রবিরহকাতর রাজা দশরথও মুনিপুত্রবধনিবন্ধন স্বীয় কর্মের অভিশাপ স্মরণপূর্বক শরীর পরিত্যাগ করাই স্বকৃত পাপের উচিত প্রায়শ্চিত্ত মনে করিলেন।

विप्रोषितकुमारं तद्राज्यमस्तमितेश्वरम् ।
रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥ ११

११ अ: । विप्रोषितकुमारम् अस्तमितेश्वरं तत् राज्यं रन्ध्रान्वेषणदक्षाणां द्विषाम् आमिषतां ययौ ॥ वाच्य—विप्रोषितकुमारेण अस्तमितेश्वरेण तेन राज्येन आमिषता ययै ॥

११। विप्रोषिता: प्रवासं गता: कुमारा यस्मात् तथोक्तम् । अस्तमितो मृत ईश्वरो राजा यस्य तत्तथोक्तं तद्राज्यं रन्ध्रान्वेषणदक्षाणां द्विषाम् आमिषतां भोग्यवस्तुतां ययौ । 'आमिषं भोग्यवस्तुनि' इति केशव: ॥

১১। কুমারগণ বনগমন এবং রাজা দশরথ শরীর পরিত্যাগ করিলে, সেই কোশলরাজ্য যেন ছিদ্রান্বেষণনিপুণ রিপুগণের প্রলোভসামগ্রী হইয়া উঠিল।

अथानाथा: प्रकृतयो मातृबन्धुनिवासिनम् ।
मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभि: ॥ १२

१२ अ: । अथ अनाथा: प्रकृतय: मातृबन्धुनिवासिनं भरतं स्तम्भिताश्रुभि: मौलै: आनाययामासु: ॥ वाच्य—अनाथाभि: मातृबन्धुनिवासी भरत: आनाययामासे ॥

१२। अथ अनाथा: प्रकृतय: अमात्या: । 'प्रकृति: सहजे योनावमात्ये परमात्मनि' इति विश्व: । मातृबन्धुनिवासिनं भरतं स्तम्भिताश्रुभि: पितृमरणगुप्त्यर्थमिति भाव: । मौलै: आप्तै: सचिवै: आनाययामासु: आगमयाञ्चक्रु: ॥

১২। অনন্তর প্রভুহীন অমাত্যগণ অশ্রুসংবরণপূর্বক রাজার মৃত্যু গোপন করিতে সমর্থ এইরূপ বিশ্বস্ত সচিবগণ দ্বারা মাতুলালয়বাসী ভরতকে আনয়ন করাইলেন।

श्रुत्वा तथाविधं मृत्युं कैकेयीतनय: पितु: ।
मातुर्न केवलं स्वस्या: श्रियोऽप्यासीत् पराङ्मुख: ॥ १३

१३ अ: । कैकेयीतनय: पितु: तथाविधं मृत्युं श्रुत्वा स्वस्या: मातु: केवलं न (किन्तु) श्रिय: अपि पराङ्मुख: आसीत् ॥ वाच्य—कैकेयीतनयेन पराङ्मुखेण अभूयत ॥

१३। कैकेयीतनयो भरत: पितु: तथाविधं स्वमातृमूलं मृत्युं मरणं श्रुत्वा स्वस्या मातु: केवलं मातुरेव पराङ्मुख: न, किन्तु श्रिय: अपि पराङ्मुख: आसीत् ॥

১৩। কৈকেয়ীতনয় ভরত অযোধ্যায় উপস্থিত হইয়া স্বীয় জননীর দোষেই পিতার

মৃত্যু হইয়াছে এই সংবাদ শ্রবণ করিয়া কেবল মাতার প্রতি বিরক্ত হইলেন, এমন নহে, রাজ্যলক্ষ্মী-গ্রহণেও পরাঙ্মুখ হইয়াছিলেন।

ससैन्यश्चान्वगाद्रामं दर्शितानाश्रमालयैः।
तस्य पश्यन् ससौमित्रेरुदश्रुर्वसतिद्रुमान्॥ १४

१४ अः। (सः) ससैन्यः आश्रमालयैः दर्शितान् ससौमित्रेः तस्य वसतिद्रुमान् पश्यन् उदश्रुः (सन्) रामम् अन्वगात् च॥ वाच्य—ससैन्येन पश्यता उदश्रुणा (भरतेन) रामः अन्वगायि॥

१४। ससैन्यो भरतः रामम् अन्वगाच्च। किं कुर्वन्? आश्रमालयैः वनवासिभिः दर्शितान् एते रामनिवासा इति कथितान् ससौमित्रेः लक्ष्मणसहितस्य तस्य रामस्य वसतिद्रुमान् आवासवृक्षान् पश्यन् उदश्रुः रुदन्॥

১৪। অনন্তর ভরত সজলনয়নে আশ্রমবাসী মুনিগণ প্রদর্শিত রামলক্ষ্মণের বাসস্থানস্থিত তরুসকল নিরীক্ষণ করিতে করিতে সৈন্যগণ সমভিব্যাহারে রামের অনুগমন করিলেন।

चित्रकूटवनस्थञ्च कथितस्वर्गतिर्गुरोः।
लक्ष्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा॥ १५

१५ अः। गुरोः कथितस्वर्गतिः (सः) चित्रकूटवनस्थं तं च अनुच्छिष्टसम्पदा लक्ष्म्या निमन्त्रयाञ्चक्रे॥ वाच्य—कथितस्वर्गतिना चित्रकूटवनस्थः स निमन्त्रयाञ्चक्रे॥

१५। चित्रकूटवनस्थं तं रामञ्च गुरोः पितुः कथितस्वर्गतिः कथितपितृमरणः सन्नित्यर्थः। अनुच्छिष्टाः अननुभूतश्रिष्टा सम्पद्गुणोत्कर्षौ यस्याः सा। 'सम्पद्भूतौ गुणोत्कर्षे' इति केशवः। तया लक्ष्म्या करणेन निमन्त्रयाञ्चक्रे आहूतवान्॥

১৫। তিনি চিত্রকূটবনস্থিত রামচন্দ্রের সমীপে গমনপূর্ব্বক পিতার স্বর্গগমনবৃত্তান্ত জ্ঞাপন করিয়া অভুক্ত রাজ্যলক্ষ্মী উপভোগের জন্য তাঁহাকে সনির্ব্বন্ধ অনুরোধ করিলেন।

स हि प्रथमजे तस्मिन्नकृतश्रीपरिग्रहे।
परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः॥ १६

१६ अः। सः हि तस्मिन् प्रथमजे अकृतश्रीपरिग्रहे भुवः स्वीकरणात् आत्मानं परिवेत्तारं मेने॥ वाच्य—तेन आत्मा परिवेत्ता मेने॥

१६। स हि भरतः प्रथमजे अग्रजे तस्मिन् रामे अकृतश्रीपरिग्रहे सति स्वयं भुवः स्वीकरणादात्मानं परिवेत्तारं मेने। 'परिवेत्तानुजोऽनूढे

ज्येष्ठे दारपरिग्रहात्' इत्यमरः। भूपरिग्रहोऽपि दारपरिग्रहसम इति भावः ॥

১৬। অগ্রজ রামচন্দ্র রাজ্যলক্ষ্মী গ্রহণে অসম্মত হইলে জ্যেষ্ঠসত্ত্বে বধূরূপা গ্রহণ করায় ভরত আপনাকে পরিবেত্তা বলিয়া মনে করিলেন।

तमशक्यमपाक्रष्टुं निदेशात् स्वर्गिणः पितुः ।
ययाचे पादुके पश्चात् कर्त्तुं राज्याधिदेवते ॥ १७

१७ अ:। स्वर्गिणः पितुः निदेशात् अपाक्रष्टुम् अशक्यं तं पश्चात् पादुके राज्याधिदेवते कर्त्तुं ययाचे ॥ वाच्य—( तेन ) अशक्यः स ययाचे ॥

१७। स्वर्गिणः पितुर्निदेशात् अपाक्रष्टुं निवर्त्तयितुमशक्यं तं रामं पश्चाद्राज्याधिदेवते स्वामिन्यौ कर्त्तुं पादुके ययाचे ॥

১৭। কিন্তু তিনি স্বর্গগত পিতার আদেশ অতিক্রম করিতে না পারিয়াই তখন রাজ্যের অধিষ্ঠাত্রী দেবতা করিবার জন্য তাঁহার পাদুকাযুগল প্রার্থনা করিলেন।

स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाविशत् पुरीम् ।
नन्दिग्रामगतस्तस्य राज्यं न्यासमिवाभुनक् ॥ १८

१८ अ:। सः भ्रात्रा तथा इति उक्त्वा विसृष्टः नन्दिग्रामगतः ( सन् ) तस्य राज्यं न्यासम् इव अभुनक् ॥ वाच्य—भ्रात्रा विसृष्टेन तेन पुरी नैवाविश्यत, नन्दिग्रामगतेन ( तेन ) अभुज्यत ॥

१८। स भरतः भ्रात्रा रामेण तथेत्युक्त्वा विसृष्टः सन् पुरीमयोध्यां नाविशदेव। किन्तु नन्दिग्रामगतः सन् तस्य रामस्य राज्यं न्यासमिव निक्षेपमिव अभुनक् अपालयत्, न तु उपभुक्तवानित्यर्थः। अन्यथा 'भुजोऽनवने' इत्यात्मनेपदप्रसङ्गः। भुजेर्लङ् ॥

১৮। রামচন্দ্র তখন "তাহাই হউক" এই কথা বলিয়া পাদুকাযুগল প্রদানপূর্ব্বক ভরতকে বিদায় দিলেন, ভরতও অযোধ্যাপুরে প্রবেশ না করিয়া নন্দিগ্রামে গমন করিলেন এবং তথায় অবস্থানপূর্ব্বক অপরের গচ্ছিত ধন রক্ষার ন্যায় রাজ্যশাসন করিতে লাগিলেন।

दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ १९

१९ अ:। ज्येष्ठे दृढभक्तिः राज्यतृष्णापराङ्मुखः भरतः इति ( उक्तानुष्ठानेन ) मातुः पापस्य प्रायश्चित्तम् इव अकरोत् ॥ वाच्य—दृढभक्तिना राज्यतृष्णापराङ्मुखेण, भरतेन अक्रियत ॥

१९। ज्येष्ठे दृढभक्तिः राज्यतृष्णापराङ्मुखो भरत इति पूर्वोक्तानुष्ठानेन मातुः पापस्य प्रायश्चित्तं तदपनोदकं कर्म अकरोदिव। इत्युत्-

प्रेक्षा। दृढ़भक्तिरित्यत्र दृढ़शब्दस्य 'स्त्रियाः पुंवत्'-इत्यादिना पुंवद्भावो दुर्घटः। 'अप्रियादिषु' इति निषेधात्। भक्तिशब्दस्य प्रियादिषु पाठात्। अतो दृढं भक्तिरस्येति नपुंसकपूर्वपदो बहुव्रीहिरिति गणव्याख्याने दृढ़-भक्तिरित्येवमादिषु पूर्वपदस्य नपुंसकस्य विवक्षितत्वात् सिद्धमिति समाधे-यम्। वृत्तिकारस्तु—दीर्घनिवृत्तिमात्रपरो दृढ़भक्तिशब्दो लिङ्गविशेषस्य अनुपकारत्वात् स्त्रीत्वमविवक्षितमेव, तस्मादस्त्रीलिङ्गत्वात् दृढ़भक्तिशब्दस्यायं प्रयोग इत्यभिप्रायः। न्यासकारोऽप्येवम्। भोजराजस्तु—कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिपाठात् भवानीभक्तिरित्यादौ कर्मसाधनत्वात् पुंवद्भाव-प्रतिषेधः। दृढ़भक्तिरित्यादौ तु भावसाधनत्वात् पुंवद्भावसिद्धिः पूर्वपदस्य इत्याह॥

১৯। অগ্রজের প্রতি দৃঢ়ভক্তিবশতঃ ভরত রাজ্যতৃষ্ণা-পরাঙ্মুখ হইয়া যেন স্বীয় জননীকৃত পাপের প্রায়শ্চিত্তই করিতে লাগিলেন।

रामोऽपि सह वैदेह्या वने वन्येन वर्त्तयन्।
चचार सानुजः शान्तो वृद्धेक्ष्वाकुव्रतं युवा॥ २०

२० अः। सानुजः शान्तः रामः अपि वैदेह्या सह वने वन्येन वर्त्तयन् युवा (एव) वृद्धेक्ष्वाकुव्रतं चचार॥ वाच्य—वर्त्तयता सानुजेन शान्तेन यूना रामेण चेरे॥

२०। सानुजः शान्तो रामोऽपि वैदेह्या सह वने वन्येन वनभवेन कन्दमूलादिना वर्त्तयन् वृत्तिं कुर्वन् जीवन् वृद्धेक्ष्वाकूणां व्रतं वनवासा-त्मकं युवा यौवनस्थ एव चचार॥

২০। এ দিকে প্রশান্তচিত্ত রামও অনুজ লক্ষ্মণ এবং জানকীর সহিত বনজাত ফলমূল ভক্ষণে দিনযাপনপূর্ব্বক যৌবনেই বৃদ্ধ ইক্ষ্বাকুবংশীয়গণের ব্রত আচরণ করিতে লাগিলেন।

प्रभावस्तम्भितच्छायमाश्रितः स वनस्पतिम्।
कदाचिदङ्के सीतायाः शिश्ये किञ्चिदिव श्रमात्॥२१

२१ अः। सः कदाचित् प्रभावस्तम्भितच्छायं वनस्पतिम् आश्रितः (सन्) किञ्चित् श्रमात् इव सीतायाः अङ्के शिश्ये॥ वाच्य—आश्रितेन तेन शिश्ये॥

२१। स रामः कदाचित् प्रभावेण स्वमहिम्ना स्तम्भिता स्थिरीकृता छाया यस्य तं वनस्पतिमाश्रितः सन् किञ्चिदीषच्छ्रमादिव सीताया अङ्के शिश्ये सुष्वाप॥

ऐन्द्रिः किल नखैस्तस्या विददार स्तनौ द्विजः।
प्रियोपभोगचिह्नेषु पौरोभाग्यमिवाचरन्॥ २२

२२ अ:। ऐन्द्रिः द्विजः तस्याः स्तनौ प्रियोपभोगचिह्नेषु पौरोभाग्यम् इव आचरन् नखैः विददार किल॥ वाच्य—पौरभाग्यमाचरता इव ऐन्द्रिणा द्विजेन विददाते॥

२२। ऐन्द्रिः इन्द्रस्य पुत्रो द्विजः पक्षी काकः तस्याः सीतायाः स्तनौ प्रियस्य रामस्य उपभोगचिह्नेषु तत्कृतनखक्षतेषु इत्यर्थः। पुरोभागिनो दोषैकदर्शिनः कर्म्म पौरोभाग्यम्। 'दोषैकदृक् पुरोभागी' इत्यमरः। दुःश्लिष्टदोषघातम् आचरन् कुर्वन्निव नखैर्विददार विलिलेख। किल इति ऐतिह्ये॥

২১—২২। এক সময় রাম স্বীয়প্রভাবে বৃক্ষচ্ছায়া স্তম্ভিত করিয়া যেন ঈষৎ শ্রান্তিবশতঃ তরুতলে সীতার অঙ্কশয্যায় শয়ন করিলেন। এই সময় জয়ন্তনামা বায়স রামকৃতসম্ভোগচিহ্নে দোশদর্শী হইয়াই যেন নখ দ্বারা সীতার স্তনদ্বয় বিদারণ করিল।

तस्मिन्नास्थदिषीकास्त्रं रामो रामावबोधितः।
आत्मानं मुमुचे तस्मादेकनेत्रव्ययेन सः॥ २३

२३ अ:। रामावबोधितः रामः तस्मिन् इषीकास्त्रम् आस्थत्। सः एकनेत्रव्ययेन तस्मात् आत्मानं मुमुचे॥ वाच्य—रामावबोधितेन रामेण आस्थि। तेन आत्मा मुमुचे॥

२३। रामया सीतया अवबोधितो रामः तस्मिन् काके इषीकास्त्रं काशास्त्रम्। 'इषीका काशमुच्यते' इति हलायुधः। आस्थत् अस्यतिस्म। 'असु क्षेपणे' इति धातोर्लुङ्। ''अस्यतिवक्तिख्यातिभ्योऽङ्'' इत्यङ्प्रत्ययः। 'अस्यतेस्थुक् इति' थुगागमः। सः काकः एकनेत्रस्य व्ययेन दानेन तस्मात् अस्त्रात् आत्मानं मुमुचे मुक्तवान्। मुचेः कर्त्तरि लिट्। 'धेनुं मुमोच' इतिवत् प्रयोगः॥

২৩। রাম সীতার প্রযত্নে জাগরিত হইয়া তৎক্ষণাৎ কাকের প্রতি ঈষিকাস্ত্র নিক্ষেপ করিলেন, কাক তখন একটীমাত্র নেত্র অর্পণ করিয়া ঈষিকাস্ত্র হইতে জীবন রক্ষা করিল।

रामस्त्वासन्नदेशत्वाद्भरतागमनं पुनः।
आशङ्क्योत्सुकसारङ्गां चित्रकूटस्थलीं जहौ॥ २४

२४ अ:। रामः तु आसन्नदेशत्वात् पुनः भरतागमनम् आशङ्क्य उत्सुकसारङ्गां चित्रकूटस्थलीं जहौ॥ वाच्य—रामेण उत्सुकसारङ्गा चित्रकूटस्थली जहे॥

२४। रामस्तु आसन्नदेशत्वाद्धेतोः पुनर्भरतागमनमाशङ्क्य उत्सुक-

সারঙ্গাম্ উৎকণ্ঠিতহরিণাং চিত্রকূটস্থলীং জহৌ তত্যাজ । আসন্নশ্চাসৌ দেশশ্চেতি বিগ্রহঃ ॥

২৪। অযোধ্যার অতিনিকটবর্ত্তী বলিয়া ভরত পুনরায় তথায় আগমন করিতে পারেন, এই আশঙ্কায় রাম চিত্রকূট পরিত্যাগ করিলেন, তখন তাঁহাদের বিরহে তত্রত্য মৃগগণ সাতিশয় উৎকণ্ঠিত হইল।

**প্রযযাবাতিথেয়েষু বসন্ ঋষিকুলেষু সঃ ।**
**দক্ষিণাং দিশমৃক্ষেষু বার্ষিকেষ্বিব ভাস্করঃ ॥ ২৫**

২৫ অঃ। সঃ আতিথেয়েষু ঋষিকুলেষু বার্ষিকেষু ঋক্ষেষু ভাস্করঃ ইব বসন্ দক্ষিণাং দিশং প্রযযৌ। বাচ্য—বসতা ভাস্করেণ ইব তেন রামেণ দক্ষিণা দিক্ প্রযযে ॥

২৫। সঃ রামঃ। অতিথিষু সাধূনি আতিথেয়ানি। ‘পথ্যতিথিবসতিস্বপতের্ঢঞ্’ ইতি ঢঞ্প্রত্যয়ঃ। তেষু ঋষিকুলেষু ঋষ্যাশ্রমেষু, ‘কুলং কুল্যে গণে দেহে গেহে জনপদেঽন্বয়ে’ ইতি হৈমঃ। বর্ষাসু ভবানি বার্ষিকাণি। ‘বর্ষাভ্যষ্ঠক্’ ইতি ঠক্প্রত্যয়ঃ। তেষু ঋক্ষেষু নক্ষত্রেষু রাশিষু বা ভাস্কর ইব বসন্ দক্ষিণাং দিশং প্রযযৌ ॥

২৫। দিবাকর যেরূপ ক্রমশঃ বর্ষাকালীন রাশিসকল সংক্রমণপূর্ব্বক দক্ষিণদিকে গমন করেন, রামও তদ্রূপ অতিথিপ্রিয় ঋষিগণের আশ্রমে বিশ্রাম করিতে করিতে দক্ষিণদিকে গমন করিতে লাগিলেন।

**বভৌ তমনুগচ্ছন্তী বিদেহাধিপতেঃ সুতা ।**
**প্রতিষিদ্ধাপি কৈকেয্যা লক্ষ্মীরিব গুণোন্মুখী ॥ ২৬**

২৬ অঃ। তম্ অনুগচ্ছন্তী বিদেহাধিপতেঃ সুতা কৈকেয্যা প্রতিষিদ্ধা (অপি) গুণোন্মুখী লক্ষ্মীঃ ইব বভৌ ॥ বাচ্য—গুণোন্মুখ্যা লক্ষ্ম্যা ইব প্রতিষিদ্ধয়াপি অনুগচ্ছন্ত্যা সুতয়া বভে ॥

২৬। তং রামম্ অনুগচ্ছন্তী বিদেহাধিপতেঃ সুতা সীতা কৈকেয্যা প্রতিষিদ্ধা নিবারিতা অপি গুণোন্মুখী গুণোৎসুকা লক্ষ্মীঃ রাজলক্ষ্মীঃ ইব বভৌ ॥

২৬। বিদেহদুহিতা সীতাদেবী রামের অনুগমন করায় মনে হইল—রাজলক্ষ্মী কৈকেয়ী কর্ত্তৃক নিবারিতা হইয়াও যেন রামগুণের পক্ষপাতিনী হইয়াই তাঁহার অনুসরণ করিতেছেন।

**অনসূয়াতিসৃষ্টেন পুণ্যগন্ধেন কাননম্ ।**
**সা চকারাঙ্গরাগেণ পুষ্পোচ্চলিতষট্পদম্ ॥ ২৭**

२७ अ:। सा अनसूयातिसृष्टेन पुण्यगन्धेन अङ्गरागेण काननं पुष्पोच्चलितषट्पदं चकार॥ वाच्य—तया चक्रे॥

२७। सा सीता अनसूयया अत्रिभार्य्यया अतिसृष्टेन दत्तेन पुण्य-गन्धेन अङ्गरागेण काननं वनम्। पुष्पेभ्य उच्चलिता निर्गताः षट्पदा यस्मिन् तत् तथाभूतं चकार॥

২৭। অত্রিপত্নী অনসূয়া সীতার অঙ্গরাগ রচনা করিলেন, ঐ অঙ্গরাগের পুণ্যগন্ধে কাননভূমি এতই আমোদিত হইল যে অলিকুল পুষ্প পরিত্যাগ করিয়া ইতস্ততঃ প্রধাবিত হইল।

सन्ध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः।
अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः॥ २८

२८ अः। सन्ध्याभ्रकपिशः विराधः नाम राक्षसः, ग्रहः इन्दोः इव, तस्य रामस्य मार्गम् आवृत्य अतिष्ठत्॥ वाच्य—सन्ध्याभ्रकपिशेन विराधेन राक्षसेन ग्रहेण अस्थीयत॥

२८। सन्ध्याभ्रकपिशः विराधो नाम राक्षसः, ग्रहः राहुः इन्दोरिव, तस्य रामस्य मार्गम् अध्वानम् आवृत्य अवरुध्य अतिष्ठत्॥

২৮। রাহু যেরূপ সুধাকরের পথ অবরোধ করে, সন্ধ্যাকালীন মেঘবৎ কপিশবর্ণ রাক্ষস বিরাধ তদ্রূপ রামের পথ অবরোধ করিয়া দণ্ডায়মান হইল।

स जहार तयोर्मध्ये मैथिलीं लोकशोषणः।
नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे॥ २९

२९ अः। लोकशोषणः सः तयोः मध्ये मैथिलीं, नभोनभस्ययोः अन्तरे वृष्टिम् अवग्रहः इव जहार॥ वाच्य—तेन लोकशोषणेन मैथिली, वृष्टिः अवग्रहेण इव जह्रे॥

२९। लोकस्य शोषणः शोषकः स राक्षसः तयोः रामलक्ष्मणयोर्मध्ये मैथिलीम् नभोनभस्ययोः श्रावणभाद्रपदयोरन्तरे मध्ये वृष्टिम् अवग्रहः वर्षप्रतिबन्ध इव जहार। 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः॥

২৯। অবগ্রহ যেমন শ্রাবণ ও ভাদ্রমাসের মধ্যবর্ত্তী বৃষ্টি হরণ করে, তদ্রূপ লোক-নাশক রাক্ষস বিরাধ, রাম লক্ষ্মণের মধ্যগত সীতাদেবীকে হরণ করিল।

तं विनिष्पिष्य काकुत्स्थौ पुरा दूषयति स्थलीम्।
गन्धेनाशुचिना चेति वसुधायां निचख्नतुः॥३०

३० अः। काकुत्स्थौ तं विनिष्पिष्य अशुचिना गन्धेन स्थलीं पुरा दूषयति इति वसुधायां निचख्नतुः च। वाच्य—काकुत्स्थाभ्यां निचख्ने। तेन स्थली दूष्यते॥

३०। काकुत्स्थस्य गोत्रापत्ये पुमांसौ काकुत्स्थौ रामलक्ष्मणौ तं विराधं विनिक्षिप्य हत्वा, अशुचिना अपवित्रेण गन्धेन सत्त्वोमाश्रमभुवं पुरा दूषयति दूषयिष्यतीति हेतोः। 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट्। वसुधायां निचखनुतुः भूमौ खनित्वा निक्षिप्तवन्तौ च॥

৩০। তখন রাম ও লক্ষ্মণ ঐ বিরাধকে বিনাশ করিয়া, উহার মৃতদেহের পূতি-গন্ধে পাছে আশ্রমপদ দূষিত হয়, এই আশঙ্কায় উহাকে মৃত্তিকামধ্যে প্রোথিত করিলেন।

पञ्चवट्यां ततो रामः शासनात् कुम्भजन्मनः।
अनपोढ़स्थितिस्तस्थौ विन्ध्याद्रिः प्रकृताविव॥ ३१

३१ अः। ततः रामः कुम्भजन्मनः शासनात् पञ्चवट्यां विन्ध्याद्रिः प्रकृतौ इव अनपोढ़स्थितिः (सन्) तस्थौ॥ वाच्य—रामेण विन्ध्याद्रिणा अनपोढ़स्थितिना तस्थे।

३१। ततो रामः कुम्भजन्मनोऽगस्त्यस्य शासनात्, पञ्चानां वटानां समाहारः पञ्चवटी। 'तद्धितार्थ—इति तत्पुरुषः, 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायां 'द्विगोः' इति ङीप्। 'द्विगुरेकवचनम्' इत्येकवचनम्। तस्यां पञ्चवट्यां विन्ध्याद्रिः प्रकृतौ वृद्धेः पूर्वावस्थायामिव, अनपोढ़स्थितिः अनतिक्रान्तमर्य्यादः तस्थौ॥

৩১। অনন্তর মহর্ষি অগস্ত্যের আদেশে বিন্ধ্যপর্ব্বত যেরূপ বর্দ্ধিত না হইয়া সাম্যা-বস্থায় অবস্থিত ছিল, মর্য্যাদারক্ষক রাম তদ্রূপ অগস্ত্যের আদেশে আর অগ্রসর না হইয়া পঞ্চবটীতে বাস করিতে লাগিলেন।

रावणावरजा तत्र राघवं मदनातुरा।
अभिपेदे निदाघार्त्ता व्यालीव मलयद्रुमम्॥३२

३२ अः। तत्र मदनातुरा रावणावरजा राघवं निदाघार्त्ता व्याली मलयद्रुमम् इव अभिपेदे। वाच्य—मदनातुरया रावणावरजया (शूर्पणखया) राघवः निदाघार्त्तया, व्याल्या मलयद्रुम इव अभिपेदे।

३२। तत्र पञ्चवट्यां मदनातुरा रावणावरजा शूर्पणखा। 'पूर्व-पदात् संज्ञायाम्' इति णत्वम्। राघवं निदाघार्त्ता घर्मतप्ता व्याकुला व्याली भुजङ्गी मलयद्रुमं चन्दनद्रुमम् इव अभिपेदे प्राप॥

৩২। নিদাঘপীড়িতা ভুজঙ্গী যেমন চন্দনতরুসমীপে গমন করে, মদনাতুরা রাবণানুজা শূর্পণখা তদ্রূপ এক সময় রামচন্দ্রের নিকট গমন করিল।

सा सीतासन्निधावेव तं वव्रे कथितान्वया।
अत्यारूढ़ो हि नारीणामकालज्ञो मनोभवः॥३३

३३ अ:। सा सीतासन्निधौ एव कथितान्वया ( सती ) तं वव्रे। हि ( तथाहि ) अत्यारूढ़: नारीणां मनोभव: अकालज्ञ: ( भवति )। वाच्य—कथितान्वयया तया स वव्रे। अकालज्ञेन मनोभवेन अत्यारूढ़ेन भूयते।

३३। सा शूर्पणखा सीतासन्निधावेव कथितान्वया कथितस्ववंशा सती तं रामं वव्रे वृतवती। तथाहि—अत्यारूढ़ोऽतिप्रवृद्धो नारीणां मनोभवः कामः कालज्ञोऽवसरज्ञो न भवतीत्यकालज्ञो हि॥

৩৩। সেই নিশাচরী আত্মপরিচয় প্রদানপূর্ব্বক সীতাসমীপেই রামচন্দ্রকে বিবাহার্থ বরণ করিল। কামিনীদিগের অতিমাত্রবর্দ্ধিত কামপীড়া কখনই কালাকাল বিচার করিতে পারে না।

कलत्रवानहं वाले कनीयांसं भजस्व मे।
इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम्॥ ३४

३४ अ:। वृषस्कन्ध: राम: वृषस्यन्तीं तां ( राचसीम् ) 'हे वाले! अहं कलत्रवान् मे कनीयांसं भजस्व' इति शशास॥ वाच्य—कलत्रवता वृषस्कन्धेन मया, (भूयते) त्वया कनीयान् भज्यतामिति रामेण सा वृषस्यन्ती शशासे॥

३४। वृष: पुमान्। 'वृष: स्याद्वासवे धर्मे सौरभेये च शुक्रले। पुंराशिभेदयो: शृङ्ग्यां मूषकश्रेष्ठयोरपि' इति विश्व:। वृषं पुरुषमात्मार्थमिच्छतीति वृषस्यन्ती कामुकी। 'वृषस्यन्ती च कामुकी' इत्यमर:। 'सुप आत्मन: क्यच्' इति क्यच्प्रत्यय:, 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि' इत्यसुगागम:, ततो लट: शत्रादेश:, 'उगितश्च' इति ङीप्। श्लोकार्थस्तु—वृषस्कन्धो रामो वृषस्यन्तीं तां राक्षसीं 'हे वाले! अहं कलत्रवान्, मे कनीयांसं कनिष्ठं भजस्व' इति शशास आज्ञापितवान्॥

৩৪। তখন বৃষস্কন্ধ রাম সেই কামুকী শূর্পণখাকে আদেশ করিলেন,- বালে! আমার পত্নী আছে, তুমি আমার কনিষ্ঠ লক্ষ্মণকে ভজনা কর।

ज्येष्ठाभिगमनात् पूर्व्वं तेनाप्यनभिनन्दिता।
साभूद्रामाश्रया भूयो नदीवोभयकूलभाक्॥ ३५

३५ अ:। पूर्वं ज्येष्ठाभिगमनात् तेन ( लक्ष्मणेन ) अपि अनभिनन्दिता सा भूय: रामाश्रया ( सती ) उभयकूलभाक् नदी इव अभूत्। वाच्य—अनभिनन्दितया रामाश्रयया तया ( राचस्या ) उभयकूलभाजा नद्या इव अभावि॥

३५। पूर्वं ज्येष्ठाभिगमनात् तेन लक्ष्मणेनापि अनभिनन्दिता नाङ्गीकृता भूयो रामाश्रया सा राक्षसी उभे कूले भजतीति उभयकूलभाक्

नदीव अभूत्। सा हि यातायाताभ्यां पर्य्यायेण कूलद्वयगामिनी नदी-सदृशी अभूदित्यर्थः॥

৩৫। অনন্তর শূর্পণখা লক্ষ্মণসমীপে গমন করিলে, পূর্ব্বে জ্যেষ্ঠের নিকট বিবাহার্থ গমন করিয়াছিল বলিয়া, তিনিও তাহাকে অঙ্গীকার করিলেন না, তখন উভয়কূল-গামিনী নদীর ন্যায় পুনর্ব্বার রামের নিকট গমন করিল।

संरम्भं मैथिलीहासः क्षणसौम्यां निनाय ताम्।
निवातस्तिमितां वेलां चन्द्रोदय इवोदधेः॥३६

३६ अः। मैथिलीहासः क्षणसौम्यां तां निवातस्तिमिताम् उदधेः वेलां चन्द्रोदयः इव संरम्भं निनाय॥ वाच्य—मैथिलीहासेन क्षणसौम्या सा, निवातस्तिमिता वेला चन्द्रोदयेन इव निन्ये॥

३६। मैथिलीहासः क्षणं सौम्यां सौम्याकारां तां राक्षसीं, निवातेन स्तिमितां निश्चलाम् उदधेर्वेलाम् अम्बुविकृतिम् अम्बुपूरमित्यर्थः। 'अब्ध्य-म्बुविकृती वेला' इत्यमरः। चन्द्रोदय इव संरम्भं सङ्क्षोभं निनाय॥

৩৬। তখন এই ব্যাপার দর্শনে সীতা ঈষৎ হাস্য করিলেন, তদ্দর্শনে সেই ক্ষণ-কালের জন্য সৌম্যমূর্ত্তিধারিণী রাক্ষসী পবনের সঞ্চারাভাবে নিশ্চল জলধিজলরাশি যেরূপ চন্দ্রোদয়ে উচ্ছলিত হয় তদ্রূপ বিকৃতভাবপ্রাপ্ত হইল।

फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम्।
मृग्याः परिभवो व्याघ्र्यामित्यवेहि त्वया कृतम्॥३७
इत्युक्त्वा मैथिलीं भर्तुरङ्के निर्विशतीं भयात्।
रूपं शूर्पणखा नाम्नः सदृशं प्रत्यपद्यत॥३८

३७—३८ अः। अस्य उपहासस्य फलं सद्यः प्राप्स्यसि, मां पश्य, त्वया कृतं व्याघ्र्यां मृग्याः परि-भवः इति अवेहि। भयात् भर्तुः अङ्के निर्विशतीं मैथिलीम् इत्युक्त्वा शूर्पणखा नाम्नः सदृशं रूपं प्रत्यपद्यत। वाच्य—त्वया प्राप्स्यते, अहं दृश्ये (त्वया) व्याघ्र्यां मृग्याः परिभवः इति अवेयताम् (त्वया)। शूर्पणखया॥

३७। श्लोकद्वयेनान्वयः। अस्य उपहासस्य फलं सद्यः सम्प्रत्येव प्राप्स्यसि, मां पश्य, त्वया कर्त्र्या कृतमुपहासरूपं कर्म्म व्याघ्र्यां विषये मृग्याः कर्त्र्याः परिभव इति अवेहि॥

३८। भयात् भर्त्तुरङ्के निर्विशतीम् आलिङ्गन्तीं मैथिलीमित्युक्त्वा शूर्प-णखा नाम्नः सदृशं शूर्पाकारनखयुक्तमित्यर्थः। रूपमाकारं प्रत्यपद्यत स्वीचकार अदर्शयदित्यर्थः॥

৩৭। সে সীতাকে বলিল,—তুমি অবিলম্বেই এই উপহাসের ফল পাইবে!

মৃগী কর্তৃক ব্যাঘ্রীর পরিভবের ন্যায় আমার প্রতি তোমার এই উপহাস মনে করিও। আমি কেমন তাহা দেখিতে পাইবে!

৩৮। এই কথা বলিয়া সে "শূর্পণখা" এই নামানুরূপ বিকৃতরূপ ধারণ করিল, তখন জনকনন্দিনী ভীতা হইয়া পতির ক্রোড়ে প্রবেশ করিলেন।

**লক্ষ্মণঃ প্রথমং শ্রুত্বা কোকিলামঞ্জুবাদিনীম্ ।**
**শিবাঘোরস্বনাং পশ্চাদ্বুবুধে বিকৃতেতি তাম্ ॥৩৯**

৩৯ অ:। লক্ষ্মণঃ প্রথমং কোকিলামঞ্জুবাদিনীং পশ্চাৎ শিবাঘোরস্বনাং তাং শ্রুত্বা বিকৃতা ইতি বুবুধে ॥ বাচ্য—লক্ষ্মণেন ॥

৩৯। লক্ষ্মণঃ প্রথমং কোকিলাবৎ মঞ্জুবাদিনীং পশ্চাৎ শিবাবদ্-ঘোরস্বনাং তাং শূর্পণখাং শ্রুত্বা তস্যাঃ স্বনং শ্রুত্বেত্যর্থঃ। সুস্বনঃ শঙ্খঃ শ্রূয়ত ইতিবৎ প্রয়োগঃ। বিকৃতা মায়াবিনীতি বুবুধে বুদ্ধবান্। কর্ত্তরি লিট্ ॥

৩৯। লক্ষ্মণ প্রথম তাহার কোকিলার ন্যায় মধুর স্বর শুনিয়াছিলেন, পরে শৃগালীর ন্যায় ঘোররব শুনিয়া তাহাকে মায়াবিনী বলিয়া জানিতে পারিলেন।

**পর্ণশালামথ ক্ষিপ্রং বিকৃষ্টাসিঃ প্রবিশ্য সঃ ।**
**বৈরূপ্যপৌনরুক্ত্যেন ভীষণাং তামযোজয়ৎ ॥৪০**

৪০ অ:। অথ সঃ বিকৃষ্টাসিঃ (সন্) ক্ষিপ্রং পর্ণশালাং প্রবিশ্য ভীষণাং তাং বৈরূপ্যপৌনরুক্ত্যেন অযোজয়ৎ ॥ বাচ্য—বিকৃষ্টাসিনা তেন ভীষণা সা অযোজ্যত ॥

৪০। অথ স লক্ষ্মণঃ বিকৃষ্টাসিঃ কোশোদ্ধৃতখড়্গঃ সন্ ক্ষিপ্রং পর্ণশালাং প্রবিশ্য। ভীষয়তীতি ভীষণাম্। নন্দ্যাদিত্বাল্লুঃ কর্ত্তরি। তাং রাক্ষসীং বৈরূপ্যস্য পৌনরুক্ত্যম্। লক্ষণয়া দ্বৈগুণ্যম্। তেন অযোজয়ৎ যোজিতবান্। স্বভাবত এব বিকৃতাং তাং কর্ণাদিচ্ছেদেন পুনরতিবিকৃতাম্ অকরোৎ ইত্যর্থঃ ॥

৪০। অনন্তর লক্ষ্মণ তৎক্ষণাৎ কোষ হইতে অসি নিষ্কাষিত করিয়া সত্বর পর্ণশালায় প্রবেশপূর্ব্বক সেই স্বভাবতঃ বিরূপা নিশাচরীর নাসা কর্ণ ছেদন করিয়া তাহাকে আরও ভয়ঙ্কররূপা করিলেন।

**সা বক্রনখধারিণ্যা বেণুকর্কশপর্ব্বয়া ।**
**অঙ্কুশাকারয়াঙ্গুল্যা তাবতর্জয়দম্বরে ॥৪১**

৪১ অ:। সা অম্বরে (স্থিতা সতী) বক্রনখধারিণ্যা বেণুকর্কশপর্ব্বয়া অঙ্কুশাকারয়া অঙ্গুল্যা তৌ অতর্জয়ৎ। বাচ্য—তয়া তৌ অতর্জ্যেতাম্ ॥

৪০। সা, বক্রনখং ধারয়তীতি বক্রনখধারিণী তয়া বেণুবৎ কর্কশ-

पर्वया अतएव अङ्कुशस्याकार इव आकारो यस्याः सा तया अङ्गुल्या तौ राघवौ अम्बरे व्योम्नि स्थिता। 'अम्बरं व्योम्नि वाससि' इत्यमरः। अतर्जयत् अभर्त्सयत् 'तर्ज भर्त्सने' इति धातोश्चौरादिकादनुदात्तेत्त्वादात्मनेपदेन भाव्यं, तथापि चक्षिङो ङित्करणाज्ज्ञापकादनुदात्तेत्त्वनिमित्तस्य अनित्यत्वात् परस्मैपदमूह्यमित्युक्तमाख्यातचन्द्रिकायाम्। तर्जयते भर्त्सयते तर्जयतीत्यपि च दृश्यते कविष्विति॥

प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम्।
रामोपक्रममाचख्यौ रक्षःपरिभवं नवम्॥४२

४२ अः। (सा) जनस्थानम् आशु प्राप्य खरादिभ्यः तथाविधं रामोपक्रमं नवं रक्षःपरिभवम् आचख्यौ च॥ वाच्य—तथाविधः रामोपक्रमः नवः रक्षःपरिभवः आचख्ये॥

४२। सा आशु जनस्थानं प्राप्य खरादिभ्यो राक्षसेभ्यस्तथाविधं स्वाङ्गच्छेदात्मकम् उपक्रम्यत इत्युपक्रमः। कर्मणि घञ् प्रत्ययः। रामस्य कर्त्तुरुपक्रमः रामोपक्रमं रामेणादावुपक्रान्तमित्यर्थः। 'उपज्ञोपक्रमं रामेणादावुपक्रान्तमित्यर्थः। 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति क्लीवत्वम्। तत् नवं रक्षसां कर्मभूतानां परिभवम् आचख्यौ च॥

৪১ ৪২। তখন সেই বক্রনখধারিণী শূর্পণখা বংশবৎ কর্কশ পর্ব্ববিশিষ্ট অঙ্কুশাকার অঙ্গুলিদ্বারা অম্বরতল হইতে রামলক্ষ্মণকে তর্জ্জন করিল এবং সত্বর জনস্থানে গমন করিয়া খর-দূষণের নিকট এই অভিনব রাক্ষসপরিভব জ্ঞাপন করিল।

मुखावयवलूनां तां नैर्ऋता यत् पुरो दधुः।
रामाभियायिनां तेषां तदेवाभूदमङ्गलम्॥ ४३

४३ अः। नैर्ऋताः मुखावयवलूनां तां पुरः दधुः (इति) यत् तत् एव रामाभियायिनां तेषाम् अमङ्गलम् अभूत्॥ वाच्य—नैर्ऋतैः मुखावयवलूना सा पुरो दधे। अमङ्गलेन अभावि॥

४३। नैर्ऋता राक्षसाः। 'नैर्ऋतो यातुरक्षसी' इत्यमरः। मुखावयवेषु कर्णादिषु लूनां छिन्नां तां पुरो दधुः अग्रे चक्रुः इति यत् तदेव रामाभियायिनां राममभिद्रवतां तेषाममङ्गलम् अभूत्॥

৪৩। রামের সহিত যুদ্ধযাত্রাকালে রাক্ষসগণ নাসাকর্ণরহিত শূর্পণখাকে যে অগ্রে করিয়া গমন করিয়াছিল, ইহাই তাহাদিগের অমঙ্গলসূচক হইয়াছিল।

उदायुधानापततस्तान् दृप्तान् प्रेक्ष्य राघवः।
निदधे विजयाशंसां चापे सीताञ्च लक्ष्मणे॥४४

४४ अ: । उदायुधान् आपततः इमान् तान् प्रेक्ष्य राघवः चापे विजयाशंसां लक्ष्मणे सीतां च निदधे । वाच्य—राघवेण विजयाशंसा, सीता च निदधे ॥

४४ । उदायुधान् उद्यतायुधान् आपतत आगच्छतः इमांस्तान् खरादीन् प्रेक्ष्य राघवः चापे विजयस्य आशंसाम् आशां लक्ष्मणे सीतां च निदधे । सीतारक्षणे लक्ष्मणं नियुज्य स्वयं युद्धाय संनद्ध इति भावः ॥

৪৪ । রাঘব উদ্যতায়ুধ গর্ব্বিত সেই রাক্ষসগণকে আসিতে দেখিয়া সীতার রক্ষণভার লক্ষ্মণে এবং বিজয়াশা স্বীয় শরাসনে সংস্থাপিত করিলেন ।

एको दाशरथिः कामं यातुधानाः सहस्रशः ।
ते तु यावन्त एवाजौ तावांश्च ददृशे स तैः ॥ ४५

४५ अ: । दाशरथिः एकः यातुधानाः कामं सहस्रशः ( सन्ति ) । तैः सः आजौ ते ( यातुधानाः ) यावन्तः एव तावान् च ददृशे । वाच्य—एकेन दाशरथिना, यातुधानैः तैः यावद्भिः भूयते । ते तं तावन्तं ददृशुः ॥

४५ । दाशरथिः रामः एकोऽद्वितीयः । यातुधानाः कामं सहस्रशः सन्तीति शेषः । तैर्यातुधानैस्तु सः रामः आजौ ते यातुधाना यावन्तः यावत्संख्यका एव तावान् तावत्संख्यकाश्च ददृशे ॥

৪৫ । রাম একাকী, রাক্ষস সহস্র সহস্র ; কিন্তু যুদ্ধভূমিতে তাহারা যতগুলি আসিয়াছিল, তাহারা তাহাদের সমানসংখ্যক রামই দেখিতে লাগিল ।

असज्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम् ।
न चक्षमे शुभाचारः स दूषणमिवात्मनः ॥४६

४६ अ: । अथ शुभाचारः सः काकुत्स्थः असज्जनेन प्रयुक्तं दूषणम् ( दूषणाख्यम् ) आत्मनः ( दूषणम् ) इव, न चक्षमे । वाच्य—काकुत्स्थेन शुभाचारेण तेन ॥

४६ । अथ शुभाचारः रणे साधुचारी सद्वृत्तश्च सः काकुत्स्थः असज्जनेन दुर्जनेन रक्षोजनेन च प्रयुक्तं प्रेषितमुच्चारितं च दूषणं दूषणाख्यं राक्षसम् आत्मनो दूषणं दोषमिव न चक्षमे न सेहे प्रतिकर्त्तुं प्रवृत्त इत्यर्थः

৪৬ । অনন্তর শুভাচারপরায়ণ কাকুৎস্থ রাম, অসজ্জন-কীর্ত্তিত নিজ দূষণের ন্যায় রাক্ষস দূষণকে ক্ষমা করিলেন না ।

तं शरैः प्रतिजग्राह खरत्रिशिरसौ च सः ।
क्रमशस्ते पुनस्तस्य चापात् सममिवोद्ययुः ॥४७

४७ अः। सः तं खरत्रिशिरसौ च शरैः प्रतिजग्राह। क्रमशः (प्रयुक्ताः अपि) तस्य ते (शराः) पुनः चापात् समम् इव उदययुः॥ वाच्य—तेन सः खरत्रिशिरसौ च प्रतिजगृहिरे। तैः समम् उदययौ॥

४७। स रामः तं दूषणं खरत्रिशिरसौ च शरैः प्रतिजग्राह प्रतिजहार इत्यर्थः। क्रमशो यथाक्रमम् प्रयुक्ता अपीति शेषः। तस्य ते शराः पुनश्चापात् समं युगपदिव उदययुः अतिलघुहस्तत्वादिति भावः॥

৪৭। তিনি সেই দূষণ, খর এবং ত্রিশিরাকে শরনিকর দ্বারা সংহার করিলেন, তাঁহার শরজাল পর্য্যায়ক্রমে প্রযুক্ত হইলেও তখন মনে হইতে লাগিল—যেন শরাসন হইতে উহারা এককালেই নিঃসৃত হইতেছে।

तैस्त्रयाणां शितैर्बाणैर्यथापूर्व्वविशुद्धिभिः।
आयुर्देहातिगैः पीतं रुधिरन्तु पतत्त्रिभिः॥ ४८

४८ अः। देहातिगैः यथापूर्व्वविशुद्धिभिः शितैः तैः बाणैः त्रयाणाम् आयुः (पीतं) रुधिरं तु पतत्त्रिभिः पीतम्॥ वाच्य—देहातिगाः यथापूर्व्वविशुद्धयः शिताः ते बाणाः पतत्त्रिणः पीतवन्तः॥

४८। देहमतीत्य भित्वा गच्छन्तीति देहातिगाः तैः, यथास्थिता पूर्व्वविशुद्धिर्येषां तैः, अतिवेगत्वेन देहभेदात् प्रागिव रुधिरलेपरहितै-रित्यर्थः। शितैस्तीक्ष्णैस्तैर्बाणैः त्रयाणां खरादीनाम् आयुः पीतं, रुधिरन्तु पतत्त्रिभिः पीतम्॥

৪৮। তাঁহার শাণিত শরসকল ঐ রাক্ষসত্রয়ের শরীরে বিদ্ধ হইয়া তাহাদের আয়ু গ্রাস করিল। তৎপর পক্ষিগণ তাহাদের রুধির পান করিল। সেই সকল শর এরূপ বেগে রাক্ষসশরীর ভেদ করিল যে, উহারা পূর্ব্ববৎ বিশুদ্ধাবস্থায়ই রহিয়া গেল,—উহাদের গাত্রে বিন্দুমাত্রও শোণিত স্পর্শ করিল না।

तस्मिन् रामशरोत्कृत्ते बले महति रक्षसाम्।
उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किञ्चन॥ ४९

४९ अः। तस्मिन् रामशरोत्कृत्ते महति रक्षसां बले उत्थितं कबन्धेभ्यः अन्यत् किञ्चन न ददृशे॥ वाच्य—(जनाः न ददृशुः)॥

४९। तस्मिन् रामशरैः उत्कृत्ते छिन्ने महति रक्षसां बले उत्थित-मुत्थानक्रियाविशिष्टं प्राणिनां कबन्धेभ्यः शिरोहीनशरीरेभ्यः। 'कबन्धो-ऽस्त्री क्रियायुक्तमपमूर्द्ध कलेवरम्' इत्यमरः। अन्यच्च अन्यत् किञ्चन न ददृशे। कबन्धेभ्य इत्यत्र 'अन्यारात्—' इति पञ्चमी। निःशेषं हतमित्यर्थः॥

৪৯। রামশরচ্ছিন্ন সেই বিপুল রাক্ষস-সেনার মধ্যে সমুত্থিত কবন্ধগণ ভিন্ন আর কিছুই পরিলক্ষিত হইল না।

**सा बाणवर्षिणं रामं योधयित्वा सुरद्विषाम् ।**
**अप्रबोधाय सुष्वाप गृध्रच्छाये वरूथिनी ॥ ५०**

५० अ:। सा सुरद्विषां वरूथिनी बाणवर्षिणं रामं योधयित्वा गृध्रच्छाये अप्रबोधाय सुष्वाप ॥ वाच्य—तया वरूथिन्या। सुषुपे ॥

**५०। सा सुरद्विषां वरूथिनी सेना, बाणवर्षिणं रामं योधयित्वा युद्धं कारयित्वा गृध्राणां छाया गृध्रच्छायम्। 'छाया बाहुल्ये' इति क्लीवत्वम्। तस्मिन्नप्रबोधाय अपुनर्बोधाय सुष्वाप ममारेत्यर्थ:। अत्र सुरतश्रान्तकान्तासमाधिर्ध्वन्यते ॥**

৫০। সুরদ্বেষী রাক্ষসসৈন্য শরবর্ষী একাকী রামের সহিত যুদ্ধ করিয়া গৃধ্রদিগের পক্ষচ্ছায়ায় চিরনিদ্রিত হইল।

**राघवास्त्रविदीर्णानां रावणं प्रति रक्षसाम् ।**
**तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराभवत् ॥ ५१**

५१ अ:। एका शूर्पणखा एव रावणं प्रति राघवास्त्रविदीर्णानां तेषां रक्षसां दुष्प्रवृत्तिहरा अभवत् ॥ वाच्य—एकया शूर्पणखया एव दुष्प्रवृत्तिहरया अभूयत ॥

**५१। एका शूर्पवन्नखानि यस्या: सा शूर्पणखा। 'पूर्वपदात् संज्ञायाम्—' इति णत्वम्। 'नखमुखात् संज्ञायाम्' इति ङीप्प्रतिषेध:। सैव रावणं प्रति राघवास्त्रैर्विदीर्णानां हतानां तेषां रक्षसां खरादीनां दुष्प्रवृत्तिं वार्तां हरति प्रापयतीति दुष्प्रवृत्तिहरा अभवत्। 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्यय: ॥**

৫১। সে যুদ্ধে একটীমাত্র রাক্ষসও অবশিষ্ট রহিল না, তখন একমাত্র শূর্পণখাই রাঘবাস্ত্রবিদীর্ণ রাক্ষসদিগের নিধনবার্তা রাবণকে জ্ঞাপন করিল।

**निग्रहात् स्वसुराप्तानां वधाच्च धनदानुज: ।**
**रामेण निहितं मेने पदं दशसु मूर्द्धसु ॥ ५२**

५२ अ:। धनदानुज: स्वसु: निग्रहात् आप्तानां वधात् च रामेण दशसु मूर्द्धसु पदं निहितं मेने ॥ वाच्य—धनदानुजेन ॥

**५२। स्वसु: शूर्पणखाया: निग्रहात् अङ्गच्छेदात् आप्तानां बन्धूनां खरादीनां वधाच्च कारणात् धनदानुजो रावण:, रामेण दशसु मूर्द्धसु पदं पादं निहितं मेने ॥**

৫২। ভগিনীর নিগ্রহ ও বান্ধবগণের নিধনবার্ত্তা শ্রবণ করিয়া কুবেরানুজ রাবণ মনে করিল, রাম তাহার দশটী মস্তকেই পদাঘাত করিয়াছেন।

**रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।**
**जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥ ५३**

५३ अ:। सः मृगरूपेण रक्षसा राघवौ वञ्चयित्वा पक्षीन्द्रप्रयासक्षणविघ्नितः (सन्) सीतां जहार ॥ वाच्य—पक्षीन्द्रप्रयासक्षणविघ्नितेन, तेन सीता जह्रे ॥

**५३। स रावणः मृगरूपेण रक्षसा मारीचेन राघवौ वञ्चयित्वा प्रतार्य्य, पक्षीन्द्रस्य जटायुषः प्रयासेन युद्धरूपेण क्षणं विघ्नितः सञ्जातविघ्नः सन्, सीतां जहार ॥**

৫৩। অনন্তর রাবণ মৃগরূপধারী মারীচ দ্বারা রামলক্ষ্মণকে প্রতারিত করিয়া বৈদেহীকে হরণ করিল, তখন পক্ষিরাজ জটায়ুর চেষ্টাতে ক্ষণকালের জন্য রাবণের বিঘ্ন উপস্থিত হইয়াছিল।

**तौ सीतान्वेषिणौ गृध्रं लूनपक्षमपश्यताम् ।**
**प्राणैर्दशरथप्रीतेरनृणं कण्ठवर्त्तिभिः ॥ ५४**

५४ अ:। सीतान्वेषिणौ तौ लूनपक्षं कण्ठवर्त्तिभिः प्राणैः दशरथप्रीतेः अनृणं गृध्रम् अपश्यताम् ॥ वाच्य—सीतान्वेषिभ्यां ताभ्यां लूनपक्षः अनृणः गृध्रः अदृश्यत ॥

**५४। सीतान्वेषिणौ तौ राघवौ लूनपक्षं रावणेन छिन्नपक्षं कण्ठवर्त्तिभिः प्राणैः, दशरथप्रीतेर्दशरथसख्यस्य अनृणम् ऋणैर्विमुक्तं गृध्रं जटायुषम् अपश्यतां दृष्टवन्तौ । दृशेर्लङि रूपम् ॥**

৫৪। তখন রাম ও লক্ষ্মণ সীতার অন্বেষণ করিতে করিতে ছিন্নপক্ষ পক্ষিরাজ জটায়ুকে দেখিতে পাইলেন; তৎকালে জটায়ু যেন কণ্ঠাগতপ্রাণ রাজা দশরথের সৌহার্দ্দিঋণ হইতে মুক্ত হইলেন।

**स रावणहृतां ताभ्यां वचसाचष्ट मैथिलीम् ।**
**आत्मनः सुमहत्कर्म व्रणैरावेद्य संस्थितः ॥ ५५**

५५ अ:। सः रावणहृतां मैथिलीं ताभ्यां वचसा आचष्ट, आत्मनः सुमहत्कर्म्म व्रणैः आवेद्य संस्थितः ॥ वाच्य—रावणहृता मैथिली आख्यायत तेन, संस्थितम् ॥

**५५। सः जटायुः रावणहृतां मैथिलीं ताभ्यां रामलक्ष्मणाभ्याम् । 'क्रियाग्रहणमपि कर्त्तव्यम्' इति सम्प्रदानत्वाच्चतुर्थी । वचसा वाग्वृत्त्या आचष्ट । आत्मनः सुमहत्कर्म युद्धरूपं व्रणैरावेद्य संस्थितः मृतः ।**

৫৫। সেই পক্ষিরাজ জটায়ু "রাবণ জনকনন্দিনীকে অপহরণ করিয়াছে" এই কথা রাম ও লক্ষ্মণ সমীপে কীর্ত্তন করিলেন এবং ব্রণাদি (যুদ্ধক্ষত) প্রদর্শন দ্বারা নিজের যুদ্ধরূপ মহৎ কার্য্য নিবেদনপূর্ব্বক পঞ্চত্ব প্রাপ্ত হইলেন।

**तयोस्तस्मिन्नवीभूतपितृव्यापत्तिशोकयोः ।**
**पितरीवाग्निसंस्कारात् परा ववृतिरे क्रियाः ॥ ५६**

৫৬ অ:। নবীভূত-পিতৃব্যাপত্তিশোকয়োঃ তয়োঃ তস্মিন্ পিতরি ইব অগ্নিসংস্কারাৎ পরাঃ ক্রিয়াঃ ববৃতিরে॥ বাচ্য—পরাভিঃ ক্রিয়াভিঃ ববৃতে॥

৫৬। व्यापत्तिः मरणम् । नवीभूतः पितृव्यापत्तिशोको ययोस्तौ तयोः राघवयोः तस्मिन् गृध्रे पितरीव अग्निसंस्कारादग्निसंस्कारमारभ्य परा उत्तराः क्रिया ववृतिरे प्रवर्त्तन्त। तस्य पितृवदौर्द्ध्वदैहिकं चक्रातुरित्यर्थः।

৫৬। জটায়ু কলেবর পরিত্যাগ করিলে রামলক্ষ্মণের পিতৃবিয়োগশোক যেন পুনরায় নবীভূত হইয়া উপস্থিত হইল এবং তাঁহারা পিতার ন্যায় জটায়ুর অগ্নিসংস্কারাদি ঔর্দ্ধদেহিক ক্রিয়াসকল সম্পাদন করিলেন।

**वधनिर्धूतशापस्य कबन्धस्योपदेशतः ।**
**मुमूर्च्छ सख्यं रामस्य समानव्यसने हरौ ॥ ५७**

৫৭ অ:। বধনির্ধূতশাপস্য কবন্ধস্য উপদেশতঃ রামস্য সমানব্যসনে হরৌ সখ্যং মুমূর্চ্ছ॥ বাচ্য—সখ্যেন মুমূর্চ্ছে॥

৫৭। वधेन रामकृतेन निर्धूतशापस्य देवभुवं गतस्य कबन्धस्य रक्षोविशेषस्य उपदेशतः रामस्य समानव्यसने समानापदि सख्यार्थिनीत्यर्थः। हरौ कपौ सुग्रीवे। 'शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः। सख्यं मुमूर्च्छ ववृधे॥

৫৭। রাম যে কবন্ধ নামক এক রাক্ষসকে বিনাশ করিয়াছিলেন, সেই শাপমুক্ত কবন্ধের উপদেশানুসারে তিনি সমদুঃখভাজন সুগ্রীবের সহিত মিত্রতা করিলেন।

**स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।**
**धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥ ५८**

৫৮ অ:। বীরঃ সঃ বালিনং হত্বা চিরকাঙ্ক্ষিতে তৎপদে ধাতোঃ স্থানে আদেশম্ ইব সুগ্রীবং সংন্যবেশয়ৎ॥ বাচ্য—তেন বীরেণ আদেশ ইব সুগ্রীবঃ সংন্যবেশ্যত॥

৫৮। वीरः स रामः वालिनं सुग्रीवाग्रजं हत्वा चिरकाङ्क्षिते तत्पदे वालिस्थाने धातोः स्थाने आदेशमिव आदेशभूतं—धात्वन्तरमिवेत्यर्थः।

सुग्रीवं संन्यवेशयत् स्थापितवान् । यथा 'अस्तेर्भूः' इत्यस्तिधातोः स्थाने आदेशो भूधातुरस्तिकार्य्यमशेषं समभिधत्ते तद्वदिति भावः । आदेशो नाम शब्दान्तरस्य स्थाने विधीयमानं शब्दान्तरमभिधीयते ।

५८। অনন্তর বীর রাম বালীকে বধ করিয়া ধাতুস্থানে আদেশের ন্যায় চিরাকাঙ্ক্ষিত বালীর স্থানে সুগ্রীবকে সংস্থাপন করিলেন।

**इतस्ततश्च वैदेहीमन्वेष्टुं भर्त्तृ-चोदिताः ।**
**कपयश्चेरुरार्त्तस्य रामस्येव मनोरथाः ॥ ५९**

५९ अः। कपयः भर्त्तृचोदिताः (सन्तः) आर्त्तस्य रामस्य मनोरथा इव इतस्ततः वैदेहीम् अन्वेष्टुं चेरुः च ॥ वाच्य—भर्त्तृचोदितैः कपिभिः मनोरथैरिव चेरे ॥

५९। वैदेहीम् अन्वेष्टुं मार्गितुं भर्त्रा सुग्रीवेण चोदिताः प्रयुक्ताः कपयः हनुमत्प्रमुखाः । आर्त्तस्य विरहातुरस्य रामस्य मनोरथाः कामा इव । इतस्ततश्चेरुः नानादेशेषु बभ्रमुश्च ।

५९। কপীন্দ্র সুগ্রীবকর্তৃক আদিষ্ট বানরগণ, বিরহকাতর রামের মনোরথের ন্যায় চারিদিকে সীতার অন্বেষণ জন্য বিচরণ আরম্ভ করিল।

**प्रवृत्तावुपलब्धायां तस्याः सम्पातिदर्शनात् ।**
**मारुतिः सागरं तीर्णः संसारमिव निर्म्ममः ॥ ६०**

६० अः। मारुतिः सम्पातिदर्शनात् तस्याः प्रवृत्तौ उपलब्धायां निर्ममः संसारम् इव सागरं तीर्णः ॥ वाच्य—मारुतिना सागरः निर्ममेण संसार इव तीर्णः ॥

६०। सम्पातिर्नाम जटायुषो ज्यायान् भ्राता तस्य दर्शनात् तन्मुखादिति भावः । तस्याः सीतायाः प्रवृत्तौ वार्त्तायाम् । 'वार्त्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । उपलब्धायां ज्ञातायाम् सत्याम् । मारुतस्यापत्यं पुमान् मारुतिः हनुमान् । सागरम् । ममेत्येतदव्ययं ममतावाचि तद्रहितो निर्म्ममो निःस्पृहः संसारम् अविद्याबन्धनमिव तीर्णः ततार । तरतेः कर्त्तरि क्तः ।

৬০। মমতাহীন ব্যক্তি যেরূপ নির্ব্বিঘ্নে সংসার-সাগর পার হয়, সম্পাতির মুখে জানকীর বার্ত্তা অবগত হইয়া হনুমান্ তদ্রূপ সাগর উত্তীর্ণ হইল।

**दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता ।**
**जानकी विषवल्लीभिः परीतेव महौषधिः ॥ ६१**

६१ अः। लङ्कायां विचिन्वता तेन विषवल्लीभिः परीता महौषधिरिव राक्षसीवृता जानकी दृष्टा। वाच्य—विचिन्वन् स राक्षसीवृतां जानकीं विषवल्लीभिः परीतां महौषधिमिव दृष्टवान् ॥

৬১। লঙ্কায়াং রাবণরাজধান্যাং বিচিন্বতা মৃগয়মাণেন তেন মারুতিনা, রাক্ষসীভির্বৃতা জানকী, বিষবল্লীভিঃ পরীতা পরিবৃতা মহৌষধিঃ সঞ্জীবনী লতেব দৃষ্টা।

**তস্যৈ ভর্ত্তুরভিজ্ঞানমঙ্গুলীয়ং দদৌ কপিঃ।**

**প্রত্যুদ্গতমিবানুষ্ণৈস্তদানন্দাশ্রুবিন্দুভিঃ॥ ৬২**

৬২ অঃ। অনুষ্ণৈঃ তদানন্দাশ্রুবিন্দুভিঃ প্রত্যুদ্গতমিব কপিঃ ভর্ত্তুঃ অভিজ্ঞানম্ অঙ্গুলীয়ং তস্যৈ দদৌ॥ বাচ্য—কপিনা দদে॥

৬২। কপিঃ হনুমান্ ভর্ত্তুঃ রামস্য সম্বন্ধি অভিজ্ঞানং প্রত্যভিজ্ঞানসাধকমঙ্গুলীয়ম্ ঊর্মিকাম্। 'অঙ্গুলীয়কমূর্মিকা' ইত্যমরঃ। 'জিহ্বামূলাঙ্গুলেশ্ছঃ' ইতি ছপ্রত্যয়ঃ। তস্যৈ জানক্যৈ দদৌ। কিংবিধমঙ্গুলীয়ম্? অনুষ্ণৈঃ শীতলৈঃ তস্যা আনন্দাশ্রুবিন্দুভিঃ প্রত্যুদ্গতমিব স্থিতম্। ভর্ত্রভিজ্ঞানদর্শনাদানন্দবাষ্পো জাত ইত্যর্থঃ।

৬১—৬২। অনন্তর হনুমান্ লঙ্কাপুরে অন্বেষণ করিতে করিতে বিষলতাপরিবেষ্টিত মহৌষধির ন্যায় জানকীকে দেখিয়া রামের অভিজ্ঞানসূচক অঙ্গুরীয়ক তাঁহার হস্তে প্রদান করিল। তখন জানকীর সুশীতল আনন্দাশ্রুবিন্দুই যেন সেই অঙ্গুরীয়কের প্রত্যুদ্গমন করিল।

**নির্বাপ্য প্রিয়সন্দেশৈঃ সীতামক্ষবধোদ্ধতঃ।**

**স দদাহ পুরীং লঙ্কাং ক্ষণসোঢ়ারিনিগ্রহঃ॥ ৬৩**

৬৩ অঃ। সঃ প্রিয়সন্দেশৈঃ সীতাং নির্বাপ্য অক্ষবধোদ্ধতঃ ক্ষণসোঢ়ারিনিগ্রহঃ (সন্) লঙ্কাং পুরীং দদাহ॥ বাচ্য—অক্ষবধোদ্ধতেন ক্ষণসোঢ়ারিনিগ্রহেণ তেন পুরী লঙ্কা দেহে॥

৬৩। স কপিঃ প্রিয়স্য রামস্য সন্দেশৈর্বাচিকৈঃ সীতাং নির্বাপ্য সুখয়িত্বা অক্ষস্য রাবণকুমারস্য বধেন উদ্ধতঃ দৃপ্তঃ সন্ ক্ষণং সোঢ়ঃ অরেরিন্দ্রজিতঃ কর্ত্তুঃ নিগ্রহো বাধা ব্রহ্মাস্ত্রবন্ধরূপা যেন স তথোক্তঃ সন্, লঙ্কাং পুরীং দদাহ ভস্মীচকার।

৬৩। হনুমান্ প্রিয়সংবাদদ্বারা সীতাকে সান্ত্বনা করিল এবং অক্ষনামক রাক্ষসের বধসাধন করিয়া সাতিশয় উদ্ধত হইয়া উঠিল, তখন সেই হনুমান্ ক্ষণকালের জন্য ইন্দ্রজিতের নিগ্রহ সহ্য করিয়া লঙ্কাপুরী ভস্মসাৎ করিল।

**প্রত্যভিজ্ঞানরত্নঞ্চ রামায়াদর্শয়ৎ কৃতী।**

**হৃদয়ং স্বয়মায়াতং বৈদেহ্যা ইব মূর্ত্তিমৎ॥ ৬৪**

৬৪ অ:। কৃতী স্বয়ম্ আযাতং মূর্ত্তিমত্ বৈদেহ্যা হৃদয়মিব (স্থিতম্) প্রত্যভিজ্ঞানরত্নং চ রামায় অদর্শয়ত্ ॥ বাচ্য—কৃতিনা অদর্শ্যত ॥

৬৪। কৃতী কৃতকৃত্যঃ কপিঃ স্বয়মাযাতং মূর্ত্তিমদ্বৈদেহ্যা হৃদয়মিব স্থিতং তস্যা এব প্রত্যভিজ্ঞানরত্নঞ্চ রামায় অদর্শয়ত্।

৬৪। হনুমান্ এইরূপে কৃতকার্য্য হইয়া সাক্ষাৎ জানকীর হৃদয়স্বরূপ তদীয় প্রত্যভিজ্ঞানরত্ন রামচন্দ্রকে প্রদর্শন করাইল।

স প্রাপ হৃদযন্যস্তমণিস্পর্শনিমীলিতঃ।
অপয়োধরসংসর্গাং প্রিয়ালিঙ্গননির্বৃতিম্ ॥ ৬৫

৬৫ অ:। হৃদয়ন্যস্তমণিস্পর্শনিমীলিতঃ সঃ অপয়োধরসংসর্গাং প্রিয়ালিঙ্গননির্বৃতিং প্রাপ ॥ বাচ্য—হৃদয়ন্যস্তমণিস্পর্শনিমীলিতেন তেন অপয়োধরসংসর্গা প্রিয়ালিঙ্গননির্বৃতিঃ প্রাপি ॥

৬৫। হৃদয়ে বক্ষসি ন্যস্তস্য কৃতস্য মণেঃ অভিজ্ঞানরত্নস্য স্পর্শেন নিমীলিতঃ মোহিতঃ স রামঃ। অবিদ্যমানঃ পয়োধরসংসর্গঃ স্তনস্পর্শঃ যস্যাস্তাং তথাভূতাং প্রিয়ায়া আলিঙ্গনেন যা নির্বৃতিরানন্দস্তাং প্রাপ।

৬৫। রামচন্দ্র তখন সেই জানকীপ্রদত্ত প্রত্যভিজ্ঞান-মণি হৃদয়ে ধারণ করিয়া স্পর্শসুখে একান্ত অধীর হইলেন এবং ক্ষণকালের জন্য স্তনস্পর্শশূন্য প্রিয়তমার আলিঙ্গন-সুখ অনুভব করিলেন।

শ্রুত্বা রামঃ প্রিয়োদন্তং মেনে তত্সঙ্গমোৎসুকঃ।
মহার্ণবপরিক্ষেপং লঙ্কায়াঃ পরিখালঘুম্ ॥ ৬৬

৬৬ অ:। রামঃ প্রিয়োদন্তং শ্রুত্বা তত্সঙ্গমোৎসুকঃ (সন্) লঙ্কায়াঃ মহার্ণবপরিক্ষেপং পরিখালঘুং মেনে ॥ বাচ্য—তত্সঙ্গমোৎসুকেন রামেণ মহার্ণবপরিক্ষেপঃ পরিখালঘুঃ মেনে ॥

৬৬। প্রিয়ায়া উদন্তং বার্তাম্। 'উদন্তঃ সাধুবার্তয়োঃ' ইতি বিশ্বঃ। শ্রুত্বা তস্যাঃ সীতায়াঃ সঙ্গমে উৎসুকো রামঃ, লঙ্কায়াঃ সম্বন্ধী যঃ মহার্ণব এব পরিক্ষেপঃ পরিবেষ্টঃ তম্ পরিখালঘুং দুর্গবেষ্টনবত্ সুতরং মেনে।

৬৬। রাম, সীতার কুশলসংবাদ শ্রবণ করিয়া তাঁহার সহিত সম্মিলনে সমুৎসুক হইলেন এবং লঙ্কাবেষ্টনকারী মহাসাগরকে পরিখার ন্যায় অনায়াসে পার হইবার উপযুক্ত মনে করিলেন।

স প্রতস্থেঽরিনাশায় হরিসৈন্যৈরনুদ্রুতঃ।
ন কেবলং ভুবঃ পৃষ্ঠে ব্যোম্নি সম্বাধবর্ত্তিভিঃ ॥ ৬৭

৬৭ অ। সঃ কেবলং ভুবঃ পৃষ্ঠে ন, ব্যোম্নি (চ), সম্বাধবর্ত্তিভিঃ হরিসৈন্যৈঃ অনুদ্রুতঃ (সন্) অরিনাশায় প্রতস্থে। বাচ্য—অনুদ্রুতেন তেন রামেণ প্রতস্থে ॥

৬৭। কেবলমেকং ভুবঃ পৃষ্ঠে ভূতলে ন, কিন্তু ব্যোম্নি চ সম্বাধবর্তিভিঃ সঙ্কটগামিভির্স্তৈর্বিভিন্ন্যৈঃ কপিবলৈঃ অনুদ্রুতঃ অন্বিতঃ সন্, সঃ রামঃ অরিনাশায় প্রতস্থে চচাল।

৬৭। তিনি শত্রুবিনাশবাসনায় তথা হইতে নির্গত হইলেন, বানরসৈন্যগণ তাঁহার পশ্চাৎ পশ্চাৎ চলিল; এই সকল সৈন্যের কেবল ভূতলে নহে, আকাশমণ্ডলেও স্থান সঙ্কুলন হইল না।

**নিবিষ্টমুদধেঃ কূলে তং প্রপেদে বিভীষণঃ।**
**স্নেহাদ্রাক্ষসলক্ষ্মীব বুদ্ধিমাবিশ্য চোদিতঃ॥ ৬৮**

৬৮ অঃ। বিভীষণঃ রাক্ষসলক্ষ্ম্যা স্নেহাৎ বুদ্ধিম্ আবিশ্য চোদিত ইব (সন্) উদধেঃ কূলে নিবিষ্টং তং প্রপেদে॥ বাচ্য—বিভীষণেন চোদিতেন নিবিষ্টঃ সঃ প্রপেদে॥

৬৮। উদধেঃ কূলে নিবিষ্টং তং রামং বিশেষেণ ভীষয়তে শত্রূনিতি বিভীষণো রাবণানুজঃ। রাক্ষসলক্ষ্ম্যা স্নেহাদ্‌বুদ্ধিং কর্ত্তব্যতাজ্ঞানম্ আবিশ্য চোদিতঃ প্রণোদিত ইব প্রপেদে প্রাপ্তঃ।

৬৮। অনন্তর রাম সাগরতীরে সেনাসন্নিবেশ করিলেন, এই অবসরে বিভীষণ আসিয়া তাঁহার নিকট উপস্থিত হইলেন; তখন মনে হইল যেন স্নেহবশতঃ রাক্ষসলক্ষ্মীই বিভীষণের বুদ্ধি আশ্রয় করিয়া তাঁহাকে প্রেরণ করিয়াছিলেন।

**তস্মৈ নিশাচরৈশ্বর্য্যং প্রতিশুশ্রাব রাঘবঃ।**
**কালে খলু সমারব্ধাঃ ফলং বধ্নন্তি নীতয়ঃ॥ ৬৯**

৬৯ অঃ। রাঘবঃ তস্মৈ নিশাচরৈশ্বর্য্যং প্রতিশুশ্রাব। কালে সমারব্ধাঃ নীতয়ঃ ফলং বধ্নন্তি খলু॥ বাচ্য—রাঘবেণ প্রতিশুশ্রুবে। সমারব্ধাভিঃ নীতিভিঃ বধ্যতে॥

৬৯। রাঘবঃ তস্মৈ বিভীষণায়। 'প্রত্যাঙ্‌ভ্যাং শ্রুবঃ পূর্বস্য কর্ত্তা' ইতি সম্প্রদানত্বাচ্চতুর্থী। নিশাচরৈশ্বর্য্যং রাক্ষসাধিপত্যং প্রতিশুশ্রাব প্রতিজ্ঞাতবান্। তথাহি—কালে অবসরে সমারব্ধাঃ প্রক্রান্তা নীতয়ঃ ফলং বধ্নন্তি গৃহ্ণন্তি জনয়ন্তীত্যর্থঃ, খলু।

৬৯। রাঘব ধার্ম্মিক বিভীষণকে রাক্ষস-রাজ্য প্রদান করিবেন বলিয়া অঙ্গীকার করিলেন; ফলতঃ নীতি যথাকালে প্রযুক্ত হইলেই ফলদায়ক হইয়া থাকে।

**স সেতুং বন্ধয়ামাস প্লবগৈর্লবণাম্ভসি।**
**রসাতলাদিবোন্মগ্নং শেষং স্বপ্নায় শার্ঙ্গিণঃ॥ ৭০**

৭০ অঃ। সঃ লবণাম্ভসি প্লবগৈঃ শার্ঙ্গিণঃ স্বপ্নায় রসাতলাৎ উন্মগ্নং শেষম্ ইব সেতুং বন্ধয়ামাস॥ বাচ্য—উন্মগ্নঃ শেষ ইব তেন সেতুঃ বন্ধয়ামাসে॥

७०। सः रामः। लवणं क्षारम् अम्भो यस्य असौ लवणाम्भाः तस्मिन् लवणाब्धौ प्लवगैः प्रयोज्यैः। शार्ङ्गिणो विष्णोः स्वप्नाय शयनाय रसातलात् पातालात् उन्मग्नम् उत्थितं शेषमिव स्थितम् सेतुं बन्धयामास।

৭০। রামচন্দ্র বানরসৈন্য দ্বারা লবণজলধিতে এক সেতু বন্ধন করিয়াছিলেন, তদ্দর্শনে মনে হইতে লাগিল—যেন নারায়ণের শয়নজন্য শেষনাগ রসাতল হইতে মস্তক উত্তোলন করিয়াছেন।

तेनोत्तीर्य्य पथा लङ्कां रोधयामास पिङ्गलैः।
द्वितीयं हेमप्राकारं कुर्वद्भिरिव वानरैः॥ ७१

७१ अ:। तेन पथा उत्तीर्य पिङ्गलैः (अत एव) द्वितीयं हेमप्राकारं कुर्वद्भिः इव (स्थितैः) वानरैः लङ्कां रोधयामास॥ वाच्य—(रामेण) लङ्का रोधयामासे॥

७१। रामस्तेन पथा सेतुमार्गेण उत्तीर्य्य सागरमिति शेषः। पिङ्गलैः सुवर्णवर्णैः अत एव द्वितीयं हेमप्राकारं कुर्वद्भिरिव स्थितैः वानरैः लङ्कां रोधयामास।

৭১। রাম সেই সেতুপথে উত্তীর্ণ হইয়া পিঙ্গলবর্ণ কপিসৈন্য দ্বারা লঙ্কাপুরী অবরোধ করিলেন, তখন বোধ হইল—যেন ঐ বানরগণ দ্বারা লঙ্কার আর একটি স্বর্ণ প্রাচীর নির্ম্মিত হইয়াছে।

रणः प्रववृते तत्र भीमः प्लवगरक्षसाम्।
दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः॥ ७२
पादपाविद्धपरिघः शिलानिष्पिष्टमुद्गरः।
अतिशस्त्रनखन्यासः शैलरुग्नमतङ्गजः॥ ७३

७२—७३ अ:। तत्र प्लवगरक्षसां भीमः दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः पादपाविद्ध-परिघः शिलानिष्पिष्टमुद्गरः अतिशस्त्रनखन्यासः शैलरुग्नमतङ्गजः रणः प्रववृते॥ वाच्य—भीमेन दिग्विजृम्भित...घोषणेन...परिघेण...मुद्गरेण अतिशस्त्रनखन्यासेन शैलरुग्नमतङ्गजेन रणेन प्रववृते॥

७२। तत्र लङ्कायां प्लवगानां रक्षसाञ्च भीमः भयङ्करः दिग्विजृम्भितं काकुत्स्थपौलस्त्ययोः रामरावणयोः जयघोषणं जयशब्दो यस्मिन् स तथोक्तः रणः प्रववृते प्रवृत्तः। 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः।

७३। किम्विधो रणः—पादपैः वृक्षैराविद्धा भग्नाः परिघा लौहबद्ध-काष्ठानि यस्मिन् सः तथोक्तः। 'परिघः परिघातनः' इत्यमरः। शिलाभि-र्निष्पिष्टाः चूर्णिता मुद्गरा अयोघना यस्मिन् स तथोक्तः। 'द्रुघणे मुद्गरघनौ'

इत्यमरः । अतिशस्त्राः शस्त्राण्यतिक्रान्ता नखन्यासा यस्मिन् सः तथोक्तः । शैलै रुग्णा भग्ना मतङ्गजा यस्मिन् सः तथोक्तः ।

৭২। তখন রাক্ষস ও বানরে ভীষণ সমর আরম্ভ হইল এবং রাম ও রাবণের জয়শব্দে দিক্‌সকল প্রতিধ্বনিত হইতে লাগিল।

৭৩। সেই যুদ্ধে পাদপদ্বারা পরিঘাস্ত্র বিচূর্ণিত ও শিলাদ্বারা মুদ্গর নিষ্পিষ্ট হইতে লাগিল এবং রাক্ষসগণের শস্ত্রাঘাত হইতেও বানরদিগের নখাঘাত সমধিক ভীষণ হইয়া উঠিল ; এমন কি, হস্তিগণপর্য্যন্ত প্রস্তরপ্রহারে চূর্ণিত হইয়া গেল।

अथ रामशिरश्छेददर्शनोद्भ्रान्तचेतनाम् ।
सीतां मायेति शंसन्ती त्रिजटा समजीवयत् ॥ ৭৪

৭৪ অ: । অথ ত্রিজটা রামশিরশ্ছেদদর্শনোদ্‌ভ্রান্তচেতনাং সীতাং মায়েতি শংসন্তী সমজীবয়ৎ ॥ বাচ্য—শংসন্ত্যা ত্রিজটয়া রামশিরশ্ছেদদর্শনোদ্‌ভ্রান্তচেতনা সীতা সমজীব্যত ॥

৭৪। अथ अनन्तरम् । छिद्यत इति छेदः खण्डः, शिर एव छेद इति विग्रहः । रामशिरश्छेदस्य विद्युज्जिह्वाख्यराक्षसमायानिर्मितस्य दर्शनेन उद्भ्रान्तचेतनां गतसंज्ञां सीतां, त्रिजटा नाम काचित् सीतापक्षपातिनी राक्षसी, 'मायाकल्पितं न त्वेतत् सत्यम्' इति शंसन्ती ब्रुवाणा । 'शप्श्यनोर्नित्यम्' इति नित्यं नुमागमः । समजीवयत् ।

৭৪। অনন্তর একদিন সীতা রামের ছিন্নমস্তক দর্শনে অচেতন হইয়া পড়িলেন, "ইহা রাক্ষসগণের মায়াকল্পিত" এই কথা বলিয়া ত্রিজটা রাক্ষসী সান্ত্বনাদানে তাঁহার সংজ্ঞা লাভ করাইল।

कामं जीवति मे नाथ इति सा विजहौ शुचम् ।
प्राङ्मत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता ॥৭৫

৭৫ অ: । সা 'মে নাথ: জীবতি' ইতি ( হেতো: ) শুচং কামং বিজহৌ । (কিন্তু) প্রাক্ অস্য অন্তং সত্যং মত্বা জীবিতা অস্মি ইতি ( হেতো: ) লজ্জিতা ॥ বাচ্য—নাথেন জীব্যতে ইতি তয়া শুক্ বিজহে । জীবিতয়া (ভূয়তে) ইতি লজ্জিতয়া (ভূয়তে) ॥

৭৫। सा सीता, 'मे नाथो जीवति' इति हेतोः शुचं शोकं कामं विजहौ । किन्तु 'प्राक् पूर्वम् अस्य नाथस्य अन्तं नाशं सत्यं यथार्थं मत्वा जीविता जीवितवत्यस्मि' इति हेतोः लज्जिता लज्जावती । कर्त्तरि क्तः । दुःखादपि दुःसहो लज्जाभर इति भावः ॥

৭৫। প্রিয়তম জীবিত আছেন, ইহা নিঃসন্দেহ জানিতে পারিয়া সীতা শোক পরিত্যাগ করিলেন, কিন্তু পূর্ব্বে রাম জীবিত নাই, ইহা সত্য বলিয়া ধারণা হওয়াও যে তাঁহার জীবন যায় নাই, এজন্য তিনি লজ্জিতা হইলেন।

**गरुड़ापातविश्लिष्टमेघनादास्त्रबन्धनः ।**
**दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाभवत् ॥ ७६**

७६ अ: । गरुड़ापातविश्लिष्टमेघनादास्त्रबन्धन: क्षणक्लेश: दाशरथ्यो: स्वप्नवृत्त: इव अभवत् ॥ वाच्य—गरुड़ापातविश्लिष्टमेघनादास्त्रबन्धनेन क्षणक्लेशेन स्वप्नवृत्तेन इव अभूयत ॥

७६ । गरुड़स्ताक्ष्यः तस्य आपातेन आगमनेन विश्लिष्टं मेघनादस्य इन्द्रजितः अस्त्रेण नागपाशेन बन्धनं यस्मिन् सः तथोक्तः, क्षणक्लेशः दाशरथ्योः रामलक्ष्मणयोः स्वप्नवृत्तः स्वप्नावस्थायां भूत इव अभवत् ॥

৭৬। একদিন সমরে রাম ও লক্ষ্মণ রাবণতনয় মেঘনাদের নাগপাশে আবদ্ধ হন, কিন্তু গরুড়ের আগমনে ঐ বন্ধন উন্মুক্ত হইয়া গিয়াছিল; সুতরাং সে বন্ধন তাঁহাদের স্বপ্নবৃত্তান্তের মতন ক্ষণকালের জন্য ক্লেশকর হইয়াছিল।

**ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम् ॥**
**रामस्त्वनाहतोऽप्यासीद् विदीर्णहृदयः शुचा ॥ ७७**

७७ अ: । तत: पौलस्त्य: शक्त्या लक्ष्मणं वक्षसि बिभेद । राम: तु अनाहत: अपि शुचा विदीर्णहृदय: आसीत् ॥ वाच्य—पौलस्त्येन लक्ष्मण: बिभिदे । अनाहतेनापि रामेण विदीर्णहृदयेन अभूयत ॥

७७ । ततः पौलस्त्यो रावणः शक्त्या कासूनामकेन आयुधेन । 'कासू-सामर्थ्ययोः शक्तिः' इत्यमर । लक्ष्मणं वक्षसि बिभेद विदारयामास । रामस्तु अनाहतोऽपि अहतोऽपि शुचा शोकेन विदीर्णहृदय आसीत् ॥

৭৭। অনন্তর একদিন রাবণ শক্তিদ্বারা লক্ষ্মণের বক্ষঃস্থল ভেদ করেন, তৎকালে রাম অনাহত হইলেও শোকে তাঁহার হৃদয় বিদীর্ণ হইয়াছিল।

**स मारुतिसमानीतमहौषधिहतव्यथः ।**
**लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्य्यकं शरैः ॥ ७८**

७८ अ: । स: मारुतिसमानीतमहौषधिहतव्यथ: ( सन् ) पुन: शरै: लङ्कास्त्रीणां विलापाचार्य्यकं चक्रे ॥ वाच्य—मारुतिसमानीतमहौषधिहतव्यथेन तेन ॥

७८ । सः लक्ष्मणः मारुतिना मरुत्सुतेन हनूमता समानीतया महौषध्या । सञ्जीवन्या हतव्यथः सन्, पुनः शरैः लङ्कास्त्रीणां विलापे परिदेवने । 'विलापः परिदेवनम्' इत्यमरः । आचार्य्यकम् आचार्य्यकम । 'योपधात् गुरूपोत्तमाद् वुञ्' इति वुञ् । चक्रे । पुनरपि राक्षसान् जघानेति व्यज्यते ॥

৭৮। পবননন্দন হনূমান্ কর্ত্তৃক আনীত মহৌষধিদ্বারা লক্ষ্মণের ব্যথা দূরীভূত হইল এবং তিনি পুনরায় শরদ্বারা রাক্ষসগণকে বিনাশ করিয়া তদীয় পত্নীগণের বিলাপ শিক্ষা দিতে লাগিলেন।

**स नादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम् ।**

**मेघस्येव शरत्कालो न किञ्चित्पर्य्यशेषयत् ॥ ७९**

७९ अ:। स: शरत्काल: मेघस्य इव, मेघनादस्य नादम् इन्द्रायुधप्रभं धनुश्च किञ्चित् (अपि) न पर्य्यशेषयत् ॥ वाच्य—तेन शरत्कालेन नाद: पर्य्यशेष्यत ॥

७९। सः लक्ष्मणः, शरत्कालो मेघस्येव, मेघनादस्य इन्द्रजितः नादं सिंहनादम्। अन्यत्र गर्जितं च। इन्द्रायुधप्रभं शक्रधनुःप्रभं धनुश्च किञ्चिदल्पमपि न पर्य्यशेषयत् नावशेषितवान्, तमवधीदित्यर्थः ॥

৭৯। শরৎকালে যেরূপ মেঘগর্জ্জন ও ইন্দ্রধনু বিলুপ্ত হয়, তিনিও তদ্রূপ মেঘনাদের নাদ ও ইন্দ্রায়ুধসদৃশ ধনু ইহার কিছুমাত্র অবশিষ্ট রাখিলেন না।

**कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः ।**

**रुरोध रामं शृङ्गीव टङ्कच्छिन्नमनःशिलः ॥ ८०**

८० अ:। कपीन्द्रेण स्वसुः तुल्यावस्थः कृत: कुम्भकर्ण: टङ्कच्छिन्नमन:शिल: शृङ्गी इव रामं रुरोध ॥ वाच्य—कपीन्द्र: कुम्भकर्णं तुल्यावस्थं कृतवान्। टङ्कच्छिन्नमन:शिलेन शृङ्गिणा इव (तेन) राम: रुरुधे ॥

८०। कपीन्द्रेण सुग्रीवेण स्वसुः शूर्पणखाया तुल्यावस्थः नासाकर्णच्छेदेन सदृशः कृतः। कुम्भकर्णः टङ्केन शिलाभेदकशस्त्रेण छिन्ना मनःशिला रक्तवर्णधातुविशेषः यस्य स तथोक्तः। 'टङ्कः पाषाणभेदनः' इति, 'धातुर्मनःशिलाद्यद्रेः' इति च अमरः। शृङ्गी शिखरीव, रामं रुरोध ॥

৮০। অনন্তর বানররাজ সুগ্রীব কুম্ভকর্ণের নাসাকর্ণচ্ছেদনে তাহাকে তদীয় ভগিনী শূর্পণখার অনুরূপ করিলে তখন টঙ্কাস্ত্রবিদলিত মনঃশিলারাগরঞ্জিত পর্ব্বতশৃঙ্গসদৃশ কুম্ভকর্ণ রামচন্দ্রকে অবরোধ করিলেন।

**अकाले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान् ।**

**रामेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः ॥ ८१**

८१ अ:। प्रियस्वप्न: भवान् भ्रात्रा अकाले वृथा बोधित: इति इव असौ रामेषुभि: दीर्घनिद्रां प्रवेशित: ॥ वाच्य—भ्राता प्रियस्वप्नं भवन्तं बोधितवान्। रामेषव: अमुं दीर्घनिद्रां प्रवेशितवन्त: ॥

८१। प्रियस्वप्नः इष्टनिद्रः अनुजः भवान्, वृथा भ्राता रावणेन अकाले बोधितः इतीव असौ कुम्भकर्णः रामेषुभिः रामवाणैः दीर्घनिद्रां मरणं

प्रवेशितः गमितः। यथा लोकेषु इष्टवस्तुविनाशात् दुःखितस्य ततोऽपि भूयिष्ठमुपपाद्यते तद्वदिति भावः॥

৮১। "তুমি অতীব নিদ্রাপ্রিয়, তদীয় ভ্রাতা দশানন বৃথা অকালে তোমায় জাগরিত করিয়াছে" রামশর এই কথা বলিয়াই যেন তাহাকে চিরনিদ্রায় অভিভূত করিল।

इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु।
रजांसि समरोत्थानि तच्छोणितनदीष्विव॥ ८२

८२ अ.। इतराणि रक्षांसि अपि वानरकोटिषु समरोत्थानि रजांसि तच्छोणितनदीषु इव पेतुः॥ वाच्य—इतरैः रक्षोभिः समरोत्थैः रजोभिः पेते॥

८२। इतराणि रक्षांसि अपि वानरकोटिषु. समरोत्थानि रजांसि तेषां रक्षसां शोणितनदीषु रक्तप्रवाहेषु इव, पेतुः निपत्य मृतानीत्यर्थः॥

৮২। সমরোত্থিত ধূলিজাল যেমন নিশাচরগণের শোণিত নদীতে পতিত হইতে লাগিল, তদ্রূপ রাক্ষসগণও অসংখ্য বানরসৈন্যের উপর পতিত হইয়া প্রাণত্যাগ করিল।

निर्ययावथ पौलस्त्यः पुनर्युद्धाय मन्दिरात्।
अरावणमरामं वा जगदद्येति निश्चितः॥ ८३

८३ अ.। अथ पौलस्त्यः अद्य जगत् अरावणम् अरामं वा इति निश्चितः (सन्) पुनः युद्धाय मन्दिरात् निर्ययौ॥ वाच्य—अरावणेन अरामेण वा जगता (भूयते)। इति निश्चितेन पौलस्त्येन निर्यये॥

८३। अथ पौलस्त्यो रावणः। अद्य जगत् अरावणं रावणशून्यम् अरामं रामशून्यं वा भवेदिति निश्चितो निश्चितवान्। कर्त्तरि क्तः। विजयमरणयोरन्यतरनिश्चयवान् पुनर्युद्धाय मन्दिरात् निर्ययौ निर्जगाम॥

৮৩। অনন্তর "আজ ধরা অরাবণ বা রামহীন হইবে" এরূপ নিশ্চয় করিয়া রাবণ যুদ্ধনিমিত্ত পুর হইতে নিষ্ক্রান্ত হইল।

रामं पदातिमालोक्य लङ्केशञ्च वरूथिनम्।
हरियुग्यं रथं तस्मै प्रजिघाय पुरन्दरः॥ ८४

८४ अ.। रामं पदातिं लङ्केशं च वरूथिनम् अवलोक्य पुरन्दरः हरियुग्यं रथं तस्मै प्रजिघाय॥ वाच्य—पुरन्दरेण प्रजिघ्ये॥

८४। पादाभ्यामततीति पदातिः। तं पादचारिणं रामम्। वरूथो रथगुप्तिः। 'रथगुप्तिर्वरूथो ना' इत्यमरः। अत्र वरूथेन रथो लक्ष्यते। वरूथिनं रथिनं लङ्केशं च आलोक्य पुरन्दरः इन्द्रः। युगं वहन्तीति युग्या

रथाश्वाः। 'तद्वहति रथयुगप्रासङ्गम' इति यत्प्रत्ययः। हरियुग्यं कपिलवर्णाश्वम्। 'शुक्राहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः। रथं तस्मै रामाय प्रणिधाय प्रहितवान् ॥

৮৪। অনন্তর পুরন্দর সমরে রামকে পাদচারী ও রাবণকে রথারূঢ় দেখিয়া রামের নিমিত্ত অশ্বযুক্ত এক রথ প্রেরণ করিলেন।

तमाधूतध्वजपटं व्योमगङ्गोर्मिवायुभिः
देवसूतभुजालम्बी जैत्रमध्यास्त राघवः ॥ ८५

८५ अः। राघवः देवसूतभुजालम्बी (सन्) व्योमगङ्गोर्मिवायुभिः आधूतध्वजपटं जैत्रं तम् अध्यास्त ॥ वाच्य—देवसूतभुजालम्बिना राघवेण आधूतध्वजपटः जैत्रः सः अध्यास्यत ॥

८५। राघवः व्योमगङ्गोर्मिवायुभिराधूतध्वजपटम्, मार्गवशादिति भावः। जेता एव जैत्रो जयनशीलः। तं जैत्रम्। जेतृशब्दात् तृन्नन्तात् 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण् प्रत्यय। तं रथं देवसूतभुजालम्बी मातलिहस्तावलम्बः सन् अध्यास्त अधिष्ठितवान्। आसेर्लङ् ॥

৮৫। অনন্তর রাঘব দেবসারথি মাতলির হস্তধারণ করিয়া আকাশ গঙ্গার তরঙ্গোত্থিত সমীরণে কম্পিতধ্বজকেতন সেই জয়শীল রথে আরোহণ করিলেন।

मातलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम्।
यत्रोत्पलदलक्लैव्यमस्त्राण्यापुः सुरद्विषाम् ॥ ८६

८६ अः। मातलिः माहेन्द्रं तनुच्छदं तस्य आमुमोच। यत्र सुरद्विषाम् अस्त्राणि उत्पलदलक्लैव्यं आपुः ॥ वाच्य—मातलिना माहेन्द्रः तनुच्छदः आमुमुचे। अस्त्रैः आपे ॥

८६। मातलिः इन्द्रसारथिः माहेन्द्रम्। तनुः छाद्यतेऽनेन इति तनुच्छदो वर्म्म। 'पुंसि संज्ञायां घः प्रायेण' इति घः। तं तस्य रामस्य आमुमोच आसञ्जयामास। यत्र तनुच्छदे सुरद्विषामस्त्राणि उत्पलदलानां यत् क्लैव्यं नपुंसकत्वं तदापुः ॥

৮৬। যে বর্ম্মে অসুরদিগের শরনিকরও উৎপলদলের ন্যায় বিফল হয়, মাতলি সেই অভেদ্য ইন্দ্রবর্ম্মদ্বারা রামচন্দ্রের শরীর আবৃত করিয়া দিলেন।

अन्योन्यदर्शनप्राप्तविक्रमावसरं चिरात्।
रामरावणयोर्युद्धं चरितार्थमिवाभवत् ॥ ८७

८७ अः। चिरात् अन्योन्यदर्शनप्राप्तविक्रमावसरं रामरावणयोः युद्धं चरितार्थम् इव अभवत् ॥ वाच्य—अन्योन्यदर्शनप्राप्तविक्रमावसरेण चरितार्थेन इव युद्धेन अभूयत ॥

८७। चिरादन्योन्यदर्शनेन प्राप्तविक्रमावसरं रामरावणयोर्युद्धं योधनं चरितार्थं सफलम् अभवदिव। प्राक् पराक्रमावसरदौर्बल्यात् विफलस्य अद्य तल्लाभात् साफल्यम् उत्प्रेक्ष्यते॥

৮৭। রাম ও রাবণ পরস্পর সাক্ষাৎকারে বিক্রমপ্রকাশের অবসর প্রাপ্ত হওয়ায় যেন "রাম-রাবণের যুদ্ধ" এই কথাটী চরিতার্থই হইল।

भुजमूर्द्धोरुवाहुल्यादेकोऽपि धनदानुजः।
ददृशे ह्ययथापूर्वो मातृवंश इव स्थितः॥ ८८

८८ अ:। अयथापूर्वः एकः अपि (सन्) धनदानुजः भुजमूर्द्धोरुवाहुल्यात् मातृवंशे स्थितः इव ददृशे॥ वाच्य—(जनाः) एकमपि धनदानुजम् अयथापूर्वं स्थितं ददृशुः॥

८८। यथाभूतः पूर्वं यथापूर्वः। सुप्सुपेति समासः। यथापूर्वो न भवतीति अयथापूर्वः। निहतबन्धुत्वाद्रक्षःपरिवारशून्य इत्यर्थः। अतएव एकोऽपि सन् धनदानुजो रावणः। भुजाश्च मूर्द्धानश्च उरवः पादाश्च भुजमूर्द्धोरु। प्राण्यङ्गत्वाद्द्वन्द्वैकवद्भावः। तस्य बाहुल्याद्बहुत्वाद्धेतोः। तद्बहुत्वे यादवः—'दशास्यो विंशतिभुजश्चतुष्पान्मातृमन्दिरे' इति। मातृवंशे मातृसम्बन्धिनि वर्गे स्थित इव ददृशे दृष्टो हि। 'वंशो वेणौ कुले वर्गे' इति विश्वः। अत्र रावणमातुः रक्षोजातित्वात्तद्वर्गो रक्षोवर्ग इति लभ्यते। अतश्चैकोऽप्यनेकरक्षःपरिवृत इति लक्ष्यत इत्यर्थः॥

৮৮। পুত্রমিত্রাদির বিনাশে রাবণ একাকী হইলেও কর, চরণ ও মস্তকবাহুল্যে রাক্ষসগণ-পরিবেষ্টিতের ন্যায় পরিলক্ষিত হইল।

जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम्।
रामस्तुलितकैलासमरातिं बह्वमन्यत॥ ८९

८९ अ:। रामः लोकपालानां जेतारं स्वमुखैः अर्चितेश्वरं तुलितकैलासम् अरातिं बहु अमन्यत॥ वाच्य—रामेण जेता अर्चितेश्वरः तुलितकैलासः अरातिः अमन्यत॥

८९। लोकपालानाम् इन्द्रादीनां जेतारम्। 'कर्त्तृकर्मणोः कृति' इति कर्मणि षष्ठी। स्वमुखैः स्वशिरोभिः अर्चितेश्वरं तुलितकैलासम् उत्क्षिप्तरुद्राद्रिं तमेवं शौर्य्यवीर्य्यसत्त्वसम्पन्नं महावीर्य्यम् अरातिं शत्रुं रामो गुणग्राहित्वाज्जेतव्योत्कर्षस्य जेतुः स्वोत्कर्षहेतुत्वाच्च बहु अमन्यत साधु मद्विक्रमस्यायं पर्य्याप्तो विषय इति बहुमानमकरोदित्यर्थः। बहु इति क्रियाविशेषणम्॥

৮৯। যে রাবণ ইন্দ্রাদিলোকপালগণকে যুদ্ধে পরাজিত, স্বীয় মস্তকদ্বারা ঈশ্বর

মহাদেবকে প্রসন্ন ও ভুজবীর্য্যপ্রভাবে কৈলাসশৈলের উৎপাটন করিয়াছিল, শত্রু হইলেও রাম সমরে তাহার প্রতি সাতিশয় সমাদর প্রদর্শন করিলেন।

तस्य स्फुरति पौलस्त्यः सीतासङ्गमशंसिनि ।
निचखानाधिकक्रोधः शरं सव्येतरे भुजे ॥ ९०

৯০ অ:। অধিকক্রোধ: পৌলস্ত্য: স্ফুরতি সীতাসঙ্গমশংসিনি তস্য সব্যেতরে ভুজে শরং নিচখান ॥ বাচ্য—অধিকক্রোধেন পৌলস্ত্যেন শর: নিচখ্নে ॥

९० । अधिकक्रोधः पौलस्त्यः स्फुरति स्पन्दमाने अतएव सीतासङ्गमशंसिनि तस्य रामस्य सव्यः इतरो यस्मात् सव्येतरे दक्षिणे । 'न बहुव्रीहौ' इतीतरशब्दस्य सर्वनामसंज्ञाप्रतिषेधः । भुजे शरं निचखान निखातवान् ॥

৯০। রামের যে দক্ষিণ কর স্ফুরিত হইয়া সীতাসমাগম সূচিত করিতেছিল, একান্ত ক্রোধপরায়ণ রাবণ সেই দক্ষিণকরে একটী শর নিক্ষেপ করিল।

रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः ।
विवेश भुजमाख्यातुमुरगेभ्य इव प्रियम् ॥ ९१

৯১ অ:। রামাস্ত: আশুগ: রাবণস্য হৃদয়ং ভিত্ত্বা উরগেভ্য: প্রিয়ম্ আখ্যাতুম্ ইব ভুবং বিবেশ ॥ বাচ্য—রামাস্তেন আশুগেন ভূ: বিবিশে ॥

९१ । रामेणास्तः क्षिप्तः आशुगो बाणः । विश्रवसोऽपत्यं पुमान् रावणः । विश्रवःशब्दादपत्येऽर्थे अण् प्रत्यये सति 'विश्रवसो विश्रवणरवणौ' इति रावणादेशः । तस्य रावणस्यापि हृदयं वक्षो भित्त्वा विदार्य । उरगेभ्यः पातालवासिभ्यः प्रियम् आख्यातुमिव, भुवं विवेश ॥

৯১। তখন রামনিক্ষিপ্ত সায়কও রাবণের হৃদয় ভেদ করিয়া যেন সর্পগণকে তাহার নিধনরূপ প্রিয় সংবাদ জ্ঞাপন করিবার জন্য ভূগর্ভে প্রবিষ্ট হইল।

वचसैव तयोर्वाक्यमस्त्रमस्त्रेण निघ्नतोः ।
अन्योन्यजयसंरम्भो ववृधे वादिनोरिव ॥ ९२

৯২ অ:। বাক্যং বচসা ইব অস্ত্রম্ অস্ত্রেণ নিঘ্নতো: তয়ো: বাদিনো: ইব অন্যোন্যজয়সংরম্ভ: ববৃধে ॥ বাচ্য—অন্যোন্যজয়সংরম্ভেণ ববৃধে ॥

९२ । वाक्यं वचसैव अस्त्रमस्त्रेण निघ्नतोः प्रतिकुर्वतोस्तयो रामरावणयोः, वादिनोः कथकयोरिव, अन्योन्यविषये जयसंरम्भो ववृधे ॥

৯২। তখন তাঁহাদের উভয়ের মধ্যে বাক্যদ্বারা বাক্যের এবং অস্ত্রদ্বারা অস্ত্রের প্রতিসংহার চলিতে থাকিলে পরস্পর জিগীষাশীল বাদিদ্বয়ের ন্যায় তাঁহাদের বিজয়চেষ্টা পরস্পর বর্দ্ধিত হইতে লাগিল।

विक्रमव्यतिहारेण सामान्याभूद्द्वयोरपि ।
जयश्रीरन्तरा वेदिर्मत्तवारणयोरिव ॥९३

९३ अ: । जयश्री: विक्रमव्यतिहारेण द्वयो: अपि अन्तरा वेदि: मत्तवारणयो: इव सामान्या अभूत् ॥ वाच्य—जयश्रिया वेद्या सामान्यया अभावि ॥

९३ । जयश्रीः विक्रमस्य व्यतिहारेण पर्य्यायक्रमेण तयोर्द्वयोरपि अन्तरा मध्ये । अव्ययमेतत् । वेदिः वेद्याकारा भित्तिः मत्तवारणयोरिव सामान्या साधारणा अभूत्, नत्वन्यतरनियतेत्यर्थः । अत्र मत्तवारणयोरित्यत्र च 'अन्तरान्तरेण युक्ते' इति द्वितीया न भवति । अन्तराशब्दस्योक्तरीत्या अन्यत्रान्वयात् । मध्ये कामपि भित्तिं कृत्वा गजौ योधयन्तीति प्रसिद्धिः ॥

৯৩। যুদ্ধস্থলে মত্তমাতঙ্গদ্বয়ের মধ্যবর্ত্তী বেদী যেরূপ কাহারও নিয়ত অধিকৃত হয় না, তদ্রূপ পর্য্যায়ক্রমে জয় পরাজয় হওয়ায় তাঁহাদের উভয়েরই জয়শ্রী তুল্যরূপ হইয়াছিল।

कृतप्रतिकृतप्रीतैस्तयोर्मुक्तां सुरासुरैः ।
परस्परशरव्राताः पुष्पवृष्टिं न सेहिरे ॥९४

९४ अ: । कृतप्रतिकृतप्रीतै: सुरासुरै: तयो: मुक्तां पुष्पवृष्टिं परस्परशरव्राता: न सेहिरे ॥ वाच्य—परस्परशरव्रातै: मुक्ता पुष्पवृष्टि: न सेहे ॥

९४ । कृतं स्वयमस्त्रप्रयोगः प्रतिकृतं परकृतप्रतीकारः ताभ्यां प्रीतैः सुरासुरैः यथासंख्यं तयोः रामरावणयोः मुक्तां पुष्पवृष्टिं, द्वयीम् इति शेषः । परस्परं शरव्राताः न सेहिरे । अहमेवालं किं त्वयेति चान्तराल एव इतरेतरबाणवृष्टिः इतरेतरपुष्पवृष्टिम् अवारयत् इत्यर्थः ॥

৯৪। সুরাসুরগণ তাঁহাদের অস্ত্রপ্রয়োগ ও প্রতিকারদর্শনে প্রীত হইয়া পুষ্পবৃষ্টি করিলেন, কিন্তু বীরদ্বয়ের অস্ত্রজালে উহা অবরুদ্ধ হওয়ায় মনে হইল, পরস্পরের শরসমূহ যেন তাহা সহ্য করিতে পারিল না।

अयःशङ्कुचितां रक्षःशतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत् ॥९५

९५ अ: । अथ रक्ष: अयःशङ्कुचितां शतघ्नीं हृतां वैवस्वतस्य कूटशाल्मलिम् इव शत्रवे अक्षिपत् ॥ वाच्य—रक्षसा अयःशङ्कुचिता शतघ्नी हृता कूटशाल्मलिरिव अक्षिप्यत ॥

९५ । अथ रक्षो रावणः अयसः शङ्कुभिः कीलैः चितां कीर्णां शतघ्नीं लौहकण्टककीलितयष्टिविशेषाम् । 'शतघ्नी तु चतुस्ताला लौहकण्टकसञ्चिता । यष्टिः' इति केशवः । हृतां विजयलब्धां, वैवस्वतस्य अन्तकस्य कूटशाल्मलिमिव, शत्रवे राघवाय अक्षिपत् क्षिप्तवान् । कूटशाल्मलिरिव कूटशाल्मलिरिति व्युत्पत्त्या वैवस्वतगदायाः गौणीसंज्ञा । कूटशाल्मलिर्नाम

एकमूलप्रकृतिः कण्टकीवृक्षविशेषः। 'रोचनः कूटशाल्मलिः' इत्यमरः। तत्सादृश्यञ्च गदायाः अयःशङ्कुचितत्वात् अनुसन्धेयम्॥

राघवो रथमप्राप्तां तामाशाञ्च सुरद्विषाम्।
अर्द्धचन्द्रमुखैर्बाणैश्चिच्छेद कदलीमुखम्॥९६

९६ अ:। राघवः रथम् अप्राप्तां तां सुरद्विषाम् आशां च, अर्द्धचन्द्रमुखैः बाणैः कदलीसुखं चिच्छेद॥ वाच्य—राघवेण अप्राप्ता सा (शतघ्नी) आशा च चिच्छिदे॥

९६। राघवः रथम् अप्राप्तां तां शतघ्नीं सुरद्विषां रक्षसाम् आशां विजयतृष्णाञ्च। 'आशा तृष्णा दिशः प्रोक्ता' इति विश्वः। अर्द्धचन्द्र इव मुखं येषां तैः बाणैः कदलीवत् सुखं यथा तथा चिच्छेद। अथवा कदल्यामिव सुखम् अक्लेशः यस्मिन् कर्मणि तदिति विग्रहः॥

৯৫—৯৬। রাক্ষসরাজ রাবণ যমরাজের গদার ন্যায় স্বীয় বিজয়লক্ষ্মী লৌহশঙ্কুনিচিত শতঘ্নী রামের প্রতি নিক্ষেপ করিল; রাম ঐ শতঘ্নী রথের সমীপে আসিতে না আসিতেই রাক্ষসদিগের জয়াশার সহিত অর্দ্ধচন্দ্রমুখ বাণদ্বারা কদলীর ন্যায় অবলীলাক্রমে উহা ছেদন করিয়া ফেলিলেন।

अमोघं सन्दधे चास्मै धनुष्येकधनुर्धरः।
ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम्॥९७

९७ अ:। एकधनुर्धरः प्रियाशोकशल्यनिष्कर्षणौषधम् अमोघं ब्राह्मम् अस्त्रम् अस्मै च धनुषि सन्दधे॥ वाच्य—एकधनुर्धरेण सन्दधे॥

९७। एकः अद्वितीयः धनुर्धरः रामः प्रियायाः शोकम् एव शल्यं तस्य निष्कषणम् उद्धारकं यत् औषधं तत् अमोघं ब्राह्मं ब्रह्मदेवताकम् अस्त्रम् अभिमन्त्रितं बाणम् अस्मै रावणाय च, तद्वधार्थमित्यर्थः, धनुषि सन्दधे॥

৯৭। অনন্তর অদ্বিতীয় ধনুর্দ্ধর রাম, রাবণকে লক্ষ্য করিয়া সীতার শোকশল্য উদ্ধারের মহৌষধ স্বরূপ অমোঘ ব্রহ্মাস্ত্র সন্ধান করিলেন।

तद्व्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम्।
वपुर्महोरगस्येव करालफणमण्डलम्॥९८

९८ अ:। व्योम्नि शतधा भिन्नं दीप्तिमन्मुखं तत् (अस्त्रं) करालफणमण्डलं महोरगस्य वपुः इव ददृशे। वाच्य—ददृशुः (जनाः)।

९८। व्योम्नि शतधा भिन्नं प्रसृतं, दीप्तिमन्ति मुखानि यस्य तत् अस्त्रम्। करालं भीषणं तुङ्गं वा फणमण्डलं यस्य तत्तथोक्तम्। 'करालो दन्तुरे तुङ्गे करालो भीषणेऽपि च' इति विश्वः। महोरगस्य शेषस्य वपुरिव, ददृशे दृष्टम्॥

৯৮। তখন সেই প্রদীপ্তমুখ ব্রহ্মাস্ত্র আকাশমণ্ডলে শতধা ভিন্ন হইয়া ভীষণ ফণা-মণ্ডলশালী নাগরাজ বাসুকির শরীরের ন্যায় পরিলক্ষিত হইতে লাগিল।

**तेन मन्त्रप्रयुक्तेन निमेषार्द्धादपातयत्।**

**स रावणशिरःपङ्क्तिमज्ञातव्रणवेदनाम् ॥९९**

९९ अ:। सः मन्त्रप्रयुक्तेन तेन (अस्त्रेण) अज्ञातव्रणवेदनां रावणशिरःपङ्क्तिं निमेषार्द्धात् अपातयत्॥ वाच्य—तेन अज्ञातव्रणवेदना रावणशिरःपङ्क्तिः अपात्यत॥

९९। स रामो मन्त्रप्रयुक्तेन तेन अस्त्रेण अज्ञातव्रणवेदनाम् अतिशैघ्र्यात् अननुभूतव्रणदुःखां रावणशिरःपङ्क्तिं निमेषार्द्धात् अपातयत् पातयामास॥

৯৯। তিনি মন্ত্রপ্রযুক্ত ব্রহ্মাস্ত্র দ্বারা অর্দ্ধনিমেষমধ্যে রাবণের মস্তকশ্রেণী পাতিত করিলেন, এতই শীঘ্র উহা সম্পাদিত হইল যে, রাবণ শিরশ্ছেদনজন্য অণুমাত্রও বেদনা অনুভব করিল না।

**बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः।**

**रराज रक्षःकायस्य कण्ठच्छेदपरम्परा ॥१००**

१००, अ:। पतिष्यतः रक्षःकायस्य कण्ठच्छेदपरम्परा वीचिभिन्ना अप्सु बालार्कप्रतिमा इव रराज॥ वाच्य—कण्ठच्छेदपरम्परया वीचिभिन्नया बालार्कप्रतिमया इव रेजे॥

१००। पतिष्यत आसन्नपातस्य रक्षःकायस्य रावणकलेवरस्य। छिद्यन्त इति छेदाः खण्डाः। कण्ठानां ये छेदाः तेषां परम्परा पङ्क्तिः, वीचिभिः भिन्ना नानाकृता अप्सु बालार्कस्य प्रतिमा प्रतिविम्बमिव रराज। अर्कस्य बालविशेषणम् आरुण्यसिद्ध्यर्थमिति भावः॥

১০০। নবোদিত সূর্য্যকিরণ জলের উপর পতিত হইয়া তরঙ্গদ্বারা যেরূপ বিভিন্ন হয়, রাক্ষসরাজ রাবণের শরীর ভূতলে পতিত হইবার পূর্ব্বে তদীয় মস্তকশ্রেণীও যেন তদ্রূপ শোভাধারণ করিল।

**मरुतां पश्यतां तस्य शिरांसि पतितान्यपि।**

**मनो नातिविशश्वास पुनःसन्धानशङ्किनाम् ॥१०१**

१०१ अ:। पतितानि तस्य शिरांसि पश्यताम् अपि पुनः सन्धानशङ्किनां मरुतां मनः न अतिविशश्वास॥ वाच्य—मनसा न अतिविशश्वसे॥

१०१। पतितानि तस्य रावणस्य शिरांसि पश्यतामपि पुनःसन्धानशङ्किनां, पूर्वं तथा दर्शनादिति भावः। मरुताम् अमराणाम्। 'मरुतौ पवनामरौ' इत्यमरः मनो न अतिविशश्वास अतिविश्वासं न प्राप॥

১০১। সেই রাক্ষসরাজ রাবণের মস্তকসকল ভূতলে পতিত দেখিয়াও পুনরায় মিলনাশঙ্কায় দেবগণের মনে সম্পূর্ণ বিশ্বাস জন্মিল না।

अथ मदगुरुपक्षैर्लोकपालद्विपाना-
मनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय ।
उपनतमणिबन्धे मूर्ध्नि पौलस्त्यशत्रोः
सुरभि सुरविमुक्तं पुष्पवर्षं पपात ॥१०२

१०२ अ:। अथ मदगुरुपक्षैः अलिवृन्दैः लोकपालद्विपानां गण्डभित्तीः विहाय अनुगतं सुरभि सुरविमुक्तं पुष्पवर्षम्, उपनतमणिबन्धे पौलस्त्यशत्रोः मूर्ध्नि पपात ॥ वाच्य—अनुगतेन सुरभिणा सुरविमुक्तेन पुष्पवर्षेण पेते ॥

१०२। अथ मदेन गजगण्डसञ्चारसंक्रान्तेन गुरुपक्षैः भारायमाणपक्षैः अलिवृन्दैः लोकपालद्विपानाम् ऐरावतादीनां गगनवर्त्तिनां गण्डभित्तीः विहाय अनुगतम् अनुद्रुतं सुरभि सुगन्धि। 'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः। गन्धोत्पले सौरभेय्यां सल्लकीमातृभेदयोः॥ सुगन्धौ च मनोज्ञे च वाच्यवत् सुरभि स्मृतम्॥' इति विश्वः। सुरविमुक्तं पुष्पवर्षम् उपनतः आसन्नः मणिबन्धः राज्याभिषेकसमये भावी यस्य तस्मिन् पौलस्त्यशत्रोः रामस्य मूर्ध्नि पपात। इदमेव राज्याभिषेकसूचकमिति भावः॥

১০২। অনন্তর রাবণবিজেতা রামচন্দ্রের মস্তকের উপর আসন্নরাজ্যাভিষেকসূচক সুরগণের কুসুমবৃষ্টি পতিত হইল তখন মত্তদিগ্‌গজগণের মদবারিপ্রভাবে ভারাক্রান্ত-পক্ষপুট অলিকুল তাহাদের গণ্ডস্থল পরিত্যাগ করিয়া ঐ কুসুমসৌরভের অনুসরণ করিতে লাগিল।

यन्ता हरेः सपदि संहृतकार्मुकज्य-
मापृच्छ्य राघवमनुष्ठितदेवकार्य्यम् ।
नामाङ्करावणशराङ्कितकेतुयष्टि-
मूर्द्ध्वं रथं हरिसहस्रयुजं निनाय ॥१०३

१०३ अ:। हरेः यन्ता सपदि संहृतकार्मुकज्यम् अनुष्ठितदेवकार्य्यं राघवम् आपृच्छ्य नामाङ्करावणशराङ्कितकेतुयष्टिं हरिसहस्रयुजं रथम् ऊर्द्ध्वं निनाय ॥ वाच्य—यन्त्रा नामाङ्करावणशराङ्कितकेतुयष्टिः हरिसहस्रयुक् रथः निन्ये ॥

१०३। हरेः इन्द्रस्य यन्ता मातलिः सपदि संहृतकार्मुकज्यम् अनुष्ठितं देवकार्य्यं रावणवधरूपं येन तं राघवमापृच्छ्य साधु यामीति आमन्त्र्य, नामाङ्कैः नामाक्षरचिह्नैः रावणशरैः अङ्किता चिह्निता केतुयष्टिः ध्वजदण्डो यस्य तम्। हरीणां वाजिनां सहस्रेण युज्यत इति हरिसहस्रयुक् तम्। 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। हरिः' इत्युभयत्रापि अमरः। रथम् ऊर्द्ध्वं निनाय नीतवान्॥

১০৩। রঘুকুলতিলক রামচন্দ্র এইরূপে সুরকার্য্য সম্পাদন করিয়া তৎক্ষণাৎ স্বীয় শরাসনের গুণ উন্মোচন করিলেন, মাতলিও তখন রামচন্দ্রের নিকট বিদায় লইয়া রাবণের নামাঙ্কিত শরজালচিহ্নিত ধ্বজযষ্টিসম্পন্ন সহস্র অশ্বযুক্ত রথ লইয়া আকাশপথে গমন করিলেন।

**रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां**
**प्रियसुहृदि विभीषणे सङ्गमय्य श्रियं वैरिणः।**
**रविसुतसहितेन तेनानुयातः ससौमित्रिणा**
**भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम्॥ १०४**

**इति श्रीमहाकविकालिदासकृतौ रघुवंशे रावणवधो नाम द्वादशः सर्गः॥ १२।**

१०४ अः। रघुपतिः अपि जातवेदोविशुद्धां प्रियां प्रगृह्य, प्रियसुहृदि विभीषणे वैरिणः श्रियं सङ्गमय्य रविसुतसहितेन ससौमित्रिणा तेन अनुयातः भुजविजितविमानरत्नाधिरूढः (सन्) पुरीं प्रतस्थे॥ वाच्य—अनुयातेन भुजविजितविमानरत्नाधिरूढेन रघुपतिना पुरी प्रतस्थे॥

१०४। रघुपतिरपि जातवेदसि अग्नौ विशुद्धां जातशुद्धिं प्रियां सीतां प्रगृह्य स्वीकृत्य। प्रियसुहृदि विभीषणे वैरिणो रावणस्य श्रियं राज्यलक्ष्मीं सङ्गमय्य सङ्गतां कृत्वा। गमेर्ण्यन्ताल्ल्यप्प्रत्ययः। 'मितां ह्रस्वः' इति ह्रस्वः, 'ल्यपि लघुपूर्वात्' इति णेरयादेशः। रविसुतसहितेन सुग्रीवयुक्तेन ससौमित्रिणा सलक्ष्मणेन तेन विभीषणेनानुयातोऽनुगतः सन्। विमानं रत्नमिव विमानरत्नमिति उपमितसमासः। भुजविजितं यद्विमानरत्नं पुष्पकं तदारूढः सन्। पुरीम् अयोध्यां प्रतस्थे। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। अत्र प्रस्थानक्रियाया अकर्म्मकत्वेऽपि तदङ्गभूतोद्देशक्रियापेक्षया सकर्म्मकत्वम्। अस्ति च धातूनां क्रियान्तरोपसर्जनकस्वार्थाभिधायकत्वम्। यथा 'कुसूलान् पचति' इत्यादौ आदानक्रियागर्भः पाको विधीयत इति॥

**इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये रावणवधो नाम द्वादशः सर्गः॥ १२**

১০৪। অনন্তর রামও অগ্নিপরীক্ষায় বিশুদ্ধা প্রিয়তমা জানকীকে গ্রহণ করিয়া প্রিয়সুহৃৎ বিভীষণকে রাক্ষসরাজলক্ষ্মী সমর্পণপূর্ব্বক লক্ষ্মণ, সুগ্রীব ও বিভীষণ সমভিব্যাহারে স্বীয়ভুজবিজিত বিমানে আরোহণ করিয়া অযোধ্যাভিমুখে যাত্রা করিলেন।

দ্বাদশ সর্গ সমাপ্ত॥ ১২

# त्रयोदशः सर्गः ।



अथात्मनः शब्दगुणं गुणज्ञः
पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां
रामाभिधानो हरिरित्युवाच ॥ १

१ अ: । अथ गुणज्ञ: स: रामाभिधान: हरि: शब्दगुणम् आत्मन: पदम् विमानेन विगाहमान: ( सन् ) रत्नाकरम् वीक्ष्य मिथ: जायाम् इति उवाच ॥ वाच्य—गुणज्ञेन विगाहमानेन तेन रामाभिधानेन हरिणा जाया ऊचे ।

त्रैलोक्यशल्योद्धरणाय सिन्धोश्चकार बन्धं मरणं रिपूणाम् ।
पुण्यप्रणामं भुवनाभिरामं रामं विरामं विपदामुपासे ॥

१ । अथ प्रस्थानानन्तरम् जानातीति ज्ञः । 'इगुपध'—इत्यादिना कप्रत्ययः । गुणानां ज्ञः गुणज्ञः । रत्नाकरादिवर्ण्यैश्वर्यगुणाभिज्ञ इत्यर्थः ; स रामाभिधानो हरिः विष्णुः, शब्दो गुणो यस्य तच्छब्दगुणम् आत्मनः स्वस्य पदं विष्णुपदम् आकाशमित्यर्थः । 'वियद्विष्णुपदम्' इत्यमरः । 'शब्दगुणमाकाशम्' इति तार्किकाः । विमानेन पुष्पकेण विगाहमानः । रत्नाकरं वीक्ष्य मिथो रहसि । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । जायां पत्नीं सीतामिति वक्ष्यमाणप्रकारेणोवाच । रामस्य हरिरित्यभिधानं निरंकुशमहिमद्योतनार्थम् । मिथोग्रहणं गोष्ठीविश्रम्भनसूचनार्थम् ॥

वैदेहि पश्यामलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम् ।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् ॥ २

२ अ: । ( हे ) वैदेहि ! आ मलयात् मत्सेतुना विभक्तं फेनिलम् अम्बुराशिं छायापथेन ( विभक्तम् ) शरत्प्रसन्नम् आविष्कृतचारुतारम् आकाशम् इव पश्य ॥ वाच्य—वैदेहि ! विभक्त: फेनिल: अम्बुराशि:, छायापथेन विभक्त: शरत्प्रसन्न: आविष्कृतचारुतार: आकाश इव त्वया दृश्यताम् ॥

२ । हे वैदेहि ! सीते ! आ मलयात् मलयपर्यन्तम् । 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । पदद्वयं चैतत् । मत्सेतुना विभक्तं द्विधा·

कृतम्। अत्यायतसेतुना इत्यर्थः। हर्षाधिक्याच्च मत्पग्रहणम्। फेनिलं फेनवन्तम्। 'फेनादिलच्च' इति इलच्प्रत्ययः। क्षिप्रकारी चायमिति भावः, अम्बुराशिं, छायापथेन विभक्तं शरत्प्रसन्नम् आविष्कृतचारुतारम् आकाशमिव पश्य। मम महानयं प्रयासः त्वदर्थं इति हृदयम्। छायापथो नाम ज्योतिश्चक्रमध्यवर्त्ती कश्चित्तिरश्चीनोऽवकाशः॥

১—২। অনন্তর গুণজ্ঞ নারায়ণাংশসম্ভূত রামনামধারী হরি, পুষ্পকরথে আরোহণপূর্ব্বক নির্জ্জন আকাশপথে প্রয়াণকালে রত্নাকরকে নিরীক্ষণ করিয়া প্রিয়তমা সীতাকে কহিলেন,—হে বৈদেহি! ঐ দেখ, ছায়াপথদ্বারা নির্ম্মল তারকাপরিপূর্ণ শরৎকালীন সুপ্রসন্ন আকাশের ন্যায় আমার নির্ম্মিত সেতুদ্বারা বিভক্ত হইয়া ফেনরাজিবিরাজিত জলধিও মলয়শৈল দ্বিধা বিভক্ত হইয়া রমণীয় শোভা ধারণ করিয়াছে।

गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं संक्रमिते तुरङ्गे।
तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलायं परिवर्द्धितो नः॥ ३

३ अ:। यियक्षोः गुरोः मेध्ये तुरङ्गे कपिलेन रसातलं संक्रमिते (सति) तदर्थम् उर्वीम् अवदारयद्भिः नः पूर्वैः अयं परिवर्द्धितः किल॥ वाच्य—उर्वीमवदारयद्भिः नः पूर्वैः (पुरुषाः) इमं परिवर्द्धितवन्तः॥

३। यियक्षोः यष्टुमिच्छोः। यजेः सन्नन्तादुप्रत्ययः। गुरोः सगरस्य मेध्ये अश्वमेधार्हे तुरङ्गे हये कपिलेन मुनिना रसातलं संक्रमिते सति। तदर्थमुर्वीमवदारयद्भिः खनद्भिः नोऽस्माकं पूर्वैः वृद्धैः सगरसुतैः अयं समुद्रः परिवर्द्धितः किल। किलेति ऐतिह्ये। अतो नः पूज्य इति भावः। यद्यपि तुरङ्गहारी शतक्रतुः तथापि तस्य कपिलसमीपे दर्शनात् स एवेति तेषां भ्रान्तिः। तन्मत्वैव कविना कपिलेन इति निर्दिष्टम्॥

৩। মহর্ষি কপিল, যজ্ঞার্থী সগররাজের অতি পবিত্র অশ্বমেধের অশ্ব লইয়া পাতালতলে প্রবেশ করিলে আমাদের পূর্ব্বপুরুষ সগরতনয়গণ সেই যজ্ঞীয় তুরঙ্গমের অন্বেষণ জন্য পৃথিবী খনন করিয়া এই সাগর সংবর্দ্ধিত করিয়াছেন।

गर्भं दधत्यर्कमरीचयोऽस्माद्विवृद्धिमत्राश्नुवते वसूनि।
अविन्धनं वह्निमसौ बिभर्त्ति प्रह्लादनं ज्योतिरजन्यनेन॥ ४

४ अ:। अर्कमरीचयः अस्मात् गर्भम् दधति, अत्र वसूनि विवृद्धिम् अश्नुवते, असौ अविन्धनं वह्निं बिभर्त्ति। अनेन प्रह्लादनं ज्योतिः अजनि॥ वाच्य—अर्कमरीचिभिः गर्भः धीयते, वसुभिः विवृद्धिः अश्यते। अमुना अविन्धनः वह्निः भ्रियते। अयं प्रह्लादनं ज्योतिः अजीजनत्॥

४। अर्कमरीचयः अस्मादब्धेः अपादानात् गर्भम् अम्मयं दधति। वृष्ट्यर्थमित्यर्थः। अयमर्थो दशमसर्गे 'ताभिः गर्भः—इत्यत्र स्पष्टीकृतः।

अयं लोकोपकारीति भावः। अत्राब्धौ वसूनि धनानि। 'धने रत्ने वसु स्मृतम्' इति विश्वः। विवृद्धिम् अश्नुवते प्राप्नुवन्ति सम्पद्यानित्यर्थः। असौ आप इन्धनं दाह्यं यस्य तद्दाहकं वह्निं बिभर्त्ति। अपकारिण्याश्रितं न त्यजति इति भावः। अनेन प्रह्लादनम् आह्लादकं ज्योतिश्चन्द्रः अजनि जनितम्। जनेर्ण्यन्तात् कर्मणि लुङ्। सौम्य इति भावः॥

৪। দিবাকর-রশ্মিসমূহ ইহা হইতেই জল আকর্ষণ করিয়া গর্ভধারণ করে, ইহাতেই রত্ননিচয় পরিবর্দ্ধিত হইতেছে, এই সাগরই বাড়বানল বহন করিতেছে এবং ইহা হইতেই আহ্লাদকর সুধাকর সমুদ্ভূত হইয়াছে।

तां तामवस्थां प्रतिपद्यमानं
स्थितं दश व्याप्य दिशो महिम्ना।
विष्णोरिवास्यानवधारणीय-
मीदृक्तया रूपमियत्तया वा॥ ५

৫ অ:। तां ताम् अवस्थां प्रतिपद्यमानं महिम्ना दश दिशः व्याप्य स्थितं विष्णोः इव अस्य रूपम् ईदृक्तया इयत्तया वा अनवधारणीयम्॥ বাচ্য—( न अवधारयेयुः जनाः )

५। तां तामनेकाम्। 'नित्यवीप्सयोः' इति वीप्सायां द्विरुक्तिः। अवस्थाम् अक्षोभाद्यवस्थाम्। विष्णुपक्षे सत्त्वाद्यवस्थाम्। प्रतिपद्यमानं भजमानं महिम्ना दश दिशो व्याप्य स्थितं विष्णोः इव अस्य रत्नाकरस्य रूपं स्वरूपमुक्तरीत्या बहुप्रकारत्वाद्व्यापकत्वाच्च ईदृक्तया इयत्तया वा प्रकारतः परिमाणतश्च अनवधारणीयं दुर्निरूपम्॥

৫। সত্ত্ব রজস্তমঃ প্রভৃতি বিবিধ অবস্থাপন্ন সর্ব্বব্যাপী বিষ্ণুর যেরূপ স্বরূপ বর্ণন বা ইয়ত্তা করা যায় না, স্বীয় মহিমা দ্বারা অক্ষোভণীয়তা প্রভৃতি অবস্থাসম্পন্ন দশদিগ্‌-ব্যাপী এই মহার্ণবেরও তদ্রূপ রূপনিরূপণ বা ইয়ত্তা হয় না।

नाभिप्ररूढाम्बुरुहासनेन
संस्तूयमानः प्रथमेन धात्रा।
अमुं युगान्तोचितयोगनिद्रः
संहृत्य लोकान् पुरुषोऽधिशेते॥ ६

৬ অ:। युगान्तोचितयोगनिद्रः पुरुषः लोकान् संहृत्य नाभिप्ररूढाम्बुरुहासनेन प्रथमेन धात्रा संस्तूयमानः ( सन् ) अमुम् अधिशेते॥ বাচ্য—युगान्तोचितयोगनिद्रेण पुरुषेण संस्तूयमानेन, असौ अधिशय्यते॥

६। युगान्ते कल्पान्ते उचिता परिचिता योग: स्वात्मनिष्ठैव निद्रैव निद्रा यस्य स पुरुषो विष्णु: लोकान् संहृत्य। नाभ्यां प्ररूढं यदम्बुरुहं पद्मं तदासनेन तन्नाभिकमलासनेन प्रथमेन धात्रा दक्षादीनामपि स्रष्ट्रा पितामहेन संस्तूयमान: सन् अमुम् अधिशेते अमुष्मिन् शेते इत्यर्थ: । कल्पान्तेऽपि अस्तीति भाव: ॥

৬। আদিপুরুষ ভগবান্ বিষ্ণু প্রলয়কালে নিখিললোক সংহারপূর্ব্বক স্বীয় নাভিমণ্ডল হইতে উত্থিত কমলরূপ আসনে সমাসীন প্রথম-বিধাতা চতুর্ম্মুখ কর্ত্তৃক সংস্তুত হইয়া যোগনিদ্রা আশ্রয় করতঃ ইহারই ক্রোড়ে শয়ন করিয়াছিলেন।

**पक्षच्छिदा गोत्रभिदात्तगन्धा: शरण्यमेनं शतशो महीध्रा: ।**
**नृपा इवोपप्लविन: परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते ॥ ७**

७ अ: । पक्षच्छिदा गोत्रभिदा आत्तगन्धा: महीध्रा: शतश: शरण्यम् एनं परेभ्य: उपप्लविन: नृपा धर्मोत्तरं मध्यमम् इव आश्रयन्ते ॥ वाच्य—आत्तगन्धै: महीध्रै: एष शरण्य:, उपप्लविभि: नृपै: धर्मोत्तर: मध्यम: ( भूपाल: ) इव आश्रीयते ॥

७। पक्षच्छिदा गोत्रभिदा इन्द्रेण। उभयत्र 'सत्सूद्विष'—इत्यादिना क्विप्। आत्तगन्धा हृतगर्वा: अभिभूता इत्यर्थ: । 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयो:' इति विश्व: । 'आत्तगर्वोऽभिभूत: स्यात्' इत्यमर: । महीं धारयन्तीति महीध्रा: पर्वता: । मूलविभुजादित्वात् कप्रत्यय: । शतं शतं शतश: । शरण्यं रक्षणसमर्थम् एनं समुद्रम् । परेभ्य: शत्रुभ्य: उपप्लविनो भयवन्तो नृपा: धर्मोत्तरं धर्मप्रधानं मध्यमं मध्यमभूपालमिव आश्रयन्ते। 'अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तर:' इति कामन्दक: । आर्त्तबन्धुरिति भाव: ॥

৭। নৃপগণ যেমন শত্রু হইতে ভীত হইয়া ধর্ম্মপরায়ণ মধ্যস্থের আশ্রয় লয়েন, শত শত মহীধরও তদ্রূপ পর্ব্বতপক্ষচ্ছেদী দেবরাজ কর্ত্তৃক পরাভূত হইয়া ইহারই গর্ভে আশ্রয় গ্রহণ করিয়াছিল।

**रसातलादादिभवेन पुंसा भुव: प्रयुक्तोद्वहनक्रियाया: ।**
**अस्याच्छमम्भ: प्रलयप्रवृद्धं मुहूर्त्तवक्त्राभरणं बभूव ॥ ८**

८ अ: । आदिभवेन पुंसा रसातलात् प्रयुक्तोद्वहनक्रियाया: भुव: प्रलयप्रवृद्धम् अस्य अच्छम् अम्भ: मुहूर्त्तवक्त्राभरणं बभूव ॥ वाच्य —प्रलयप्रवृद्धेन अच्छेन अम्भसा मुहूर्त्तवक्त्राभरणेन बभूवे ॥

८। आदिभवेन पुंसा आदिवराहेण रसातलात् प्रयुक्तोद्वहनक्रियाया: कृतोद्धरणक्रियाया: । विवाहक्रिया च व्यज्यते । भुवो भूदेवताया: प्रलये

प्रलयम् अस्याः रक्षकम् अभः मुहूर्त्तं वक्त्राभरणं लज्जारक्षणार्थं मुखावगुण्ठनं बभूव। तदुक्तम्—'उद्धृतासि वराहेण कृष्णेन शतबाहुना' इति॥

৮। আদিপুরুষ ভগবান্ বরাহদেব যখন রসাতল হইতে বসুন্ধরার উদ্ধার করেন, তখন ইহার প্রলয়কালসংবর্দ্ধিত অতীব স্ফীত জলরাশি মুহূর্ত্তের জন্য ঐ বসুন্ধরার মুখমণ্ডলে অবগুণ্ঠনরূপে শোভা পাইয়াছিল।

**मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरङ्गाधरदानदक्षः।**
**अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धूः॥९**

९ अः। अनन्यसामान्यकलत्रवृत्तिः तरङ्गाधरदानदक्षः असौ मुखार्पणेषु प्रकृतिप्रगल्भाः सिन्धूः स्वयं पिबति पाययते च॥ वाच्य—अनन्यसाधारणकलत्रवृत्तिना तरङ्गाधरदानदक्षेण अमुना सिन्धवः पीयन्ते पाय्यन्ते च॥

९। अन्येषां पुंसां सामान्या साधारणा न भवतीति अनन्यसामान्या कलत्रेषु वृत्तिर्भोगरूपा यस्य स तथोक्तः। इममेवार्थं प्रतिपादयति—तरङ्ग इव अधरस्तस्य दाने समर्पणे दक्षश्चतुरः असौ समुद्रः मुखार्पणेषु प्रकृत्या सख्यादिप्रेषणं विना प्रगल्भा धृष्टाः सिन्धूः नदीः। 'सिन्धुः समुद्रे नद्यां च' इति विश्वः। स्वयं पिबति पाययते च। तरङ्गाधरमिति शेषः। 'न पादम्याङ्यम'—इत्यादिना पिबतेर्ण्यन्तान्नित्यं परस्मैपदनिषेधः। 'गतिबुद्धिप्रत्यवसानार्थ'—इत्यादिना सिन्धूनां कर्मत्वम्। दम्पत्योः युगपत्परस्पराधरपानमनन्यसाधारणमिति भावः॥

৯। দেখ, এই সরিৎপতির প্রিয়াসম্ভোগ অনন্যসাধারণ, কেননা তরঙ্গরূপ অধরসুধাদানে সুনিপুণ এই সাগর স্বীয় মুখার্পণে তরঙ্গিণীকে প্রগল্ভিত করিয়া স্বয়ং তাহাদের অধরসুধা পান করিতেছে এবং তাহাদিগকেও পান করাইতেছে।

**ससत्त्वमादाय नदीमुखाम्भः**
**सम्मीलयन्तो विवृताननत्वात्।**
**अमी शिरोभिस्तिमयः सरन्ध्रै-**
**रूर्द्ध्वं वितन्वन्ति जलप्रवाहान्॥ १०**

१० अः। अमी तिमयः विवृताननत्वात् ससत्त्वं नदीमुखाम्भः आदाय सम्मीलयन्तः (सन्तः) सरन्ध्रैः शिरोभिः जलप्रवाहान् ऊर्द्ध्वं वितन्वन्ति॥ वाच्य—अमीभिः तिमिभिः सम्मीलयद्भिः जलप्रवाहाः वितन्यन्ते॥

१०। अमी तिमयो मत्स्यविशेषाः। तदुक्तम्—'अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः' इति। विवृताननत्वाद् व्यात्तमुखत्वाद्धेतोः।

आननं विवृत्येत्यर्थ:। ससत्वं मत्स्यादिप्राणिसहितं नदीमुखाम्भ आदाय सम्मीलयन्त: चञ्चुपुटानि सङ्कटयन्त: सन्त: सरन्ध्रै: शिरोभि: जलप्रवाहान् ऊर्द्ध्वं वितन्वन्ति। जलयन्त्रक्रीड़ासमाधि: व्यज्यते॥

१०। ঐ দেখ, তিমিমৎস্যগণ অন্যান্য মৎস্যসহ নদীসঙ্গমস্থলের জল গ্রহণ করিয়া এক একবার মুখ মুদ্রিত, আবার কখন মুখ ব্যাদান করিয়া মস্তকস্থিত রন্ধ্র দ্বারা উহা ঊর্দ্ধে ক্ষেপণ করিতেছে।

**मातङ्गनक्रै: सहसोत्पतद्भिर्भिन्नान् द्विधा पश्य समुद्रफेनान्।**
**कपोलसंसर्पितया य एषां व्रजन्ति कर्णक्षणचामरत्वम्॥ ११**

११ अ:। सहसा उत्पतद्भि: मातङ्गनक्रै: द्विधा भिन्नान् समुद्रफेनान् पश्य। ये एषां कपोल-संसर्पितया कर्णक्षणचामरत्वम् व्रजन्ति॥ वाच्य—त्वया द्विधा भिन्ना: समुद्रफेना: दृश्यन्ताम्। यै: व्रज्यते॥

११। सहसोत्पतद्भि: मातङ्गनक्रै: मातङ्गाकारै: ग्राहै: द्विधा भिन्नान् समुद्रफेनान् पश्य। ये फेना एषां जलमातङ्गनक्राणां कपोलेषु संसर्पितया संसर्पणेन हेतुना कर्णेषु क्षणं चामरत्वं व्रजन्ति॥

১১। আরও দেখ - মাতঙ্গাকৃতি জলচরসকল সহসা উৎপতিত হওয়ায় দ্বিধা বিভক্ত সমুদ্রের ফেনরাশি জলকরিকুলের কপোলস্থলে সংলগ্ন হইয়া ক্ষণকাল কর্ণস্থলে চামরের শোভা পাইতেছে।

**वेलानिलाय प्रसृता भुजङ्गा महोर्मिविस्फूर्जथुनिर्विशेषा:।**
**सूर्य्यांशुसम्पर्कसमृद्धरागैर्व्यज्यन्त एते मणिभि: फणस्थै:॥१२**

१२ अ:। वेलानिलाय प्रसृता: महोर्मिविस्फूर्जथुनिर्विशेषा: एते भुजङ्गा: सूर्य्यांशुसम्पर्कसमृद्ध-रागै: फणस्थै: मणिभि: व्यज्यन्ते॥ वाच्य—सूर्य्यांशुसम्पर्क-समृद्धरागा: फणस्था: मणय: प्रसृतान् महोर्मिविस्फूर्जथुनिर्विशेषान् एतान् भुजङ्गान् व्यञ्जन्ति॥

१२। वेलानिलाय वेलानिलं पातुमित्यर्थ:। 'क्रियार्थोपपद'—इत्यादिना चतुर्थी। प्रसृता निर्गता महोर्मीणां विस्फूर्जथु: उद्रेक:। 'ट्वितो-ऽथुच्' इत्यथुच्प्रत्यय:। तस्मान्निर्विशेषा: तुल्यदेहभेदा एते भुजङ्गा: सूर्य्यांशुसम्पर्केण समृद्धरागै: प्रवृद्धकान्तिभि: फणस्थै: मणिभि: व्यज्यन्ते ज्ञायन्ते॥

১২। প্রিয়ে ঐ দেখ,—ভুজঙ্গগণ তীরভূমির সমীরণ-সেবনজন্য প্রধাবিত হইতেছে, ইহাতে সাগরের উত্তাল তরঙ্গের সহিত উহাদের শরীরের কিছুমাত্র ভেদ লক্ষিত হইতেছে না; কেবল ফণামণ্ডলস্থিত মণিসমূহ অরুণকিরণে প্রদীপ্ত হওয়াতেই উহা-দিগকে সর্প বলিয়া জানা যাইতেছে।

**तवाधरस्पर्द्धिषु विद्रुमेषु पर्य्यस्तमेतत् सहसोर्मिवेगात्।**
**ऊर्द्ध्वाङ्कुरप्रोतमुखं कथञ्चित् क्लेशादपक्रामति शङ्खयूथम्॥१३**

१३ अ:। तव अधरस्पर्द्धिषु विद्रुमेषु सहसा ऊर्मिवेगात् पर्य्यस्तम् ऊर्द्धाङ्कुरप्रोतमुखम् एतत् शङ्खयूथं कथञ्चित् क्लेशात् अपक्रामति ॥ वाच्य—पर्य्यस्तेन ऊर्द्धाङ्कुरप्रोतमुखेन एतेन शङ्खयूथेन अपक्राम्यते ॥

१३। तवाधरस्पर्द्धिषु अधरसदृशेषु इत्यर्थः। विद्रुमेषु प्रवालेषु सहसोर्म्मिवेगात् पर्य्यस्तं प्रोत्क्षिप्तम् ऊर्द्धाङ्कुरैः विद्रुमप्ररोहैः प्रोतमुखं स्यूत-वदनम् एतत् शङ्खानां यूथं वृन्दं कथञ्चित् क्लेशादपक्रामति विलम्बादप-सरति इत्यर्थः ॥

১৩। প্রিয়ে! শঙ্খযূথ ত্বদীয় অধররাগসদৃশ রক্তবর্ণ প্রবালমধ্যে বীচিবেগে সহসা উত্থিত হইয়া প্রবালের উন্মুখ অঙ্কুরনিকরে উহাদের মুখ গ্রথিত হওয়ায় যেন অতিকষ্টে বহির্গত হইতেছে।

प्रवृत्तमात्रेण पयांसि पातुमावर्त्तवेगाद् भ्रमता घनेन ।
आभाति भूयिष्ठमयं समुद्रः प्रमथ्यमानो गिरिणेव भूयः ॥ १४

१४ अ:। पयांसि पातुं प्रवृत्तमात्रेण आवर्त्तवेगात् भ्रमता घनेन अयं समुद्रः भूयः गिरिणा प्रमथ्यमानः इव भूयिष्ठम् आभाति ॥ वाच्य—प्रमथ्यमानेन अनेन समुद्रेण आभायते ॥

१४। पयांसि पातुं प्रवृत्त एव प्रवृत्तमात्रो न तु पीतवान् तेन; आवर्त्तवेगात्, 'स्यादावर्त्तोऽम्भसां भ्रमः' इत्यमरः, भ्रमता घनेन अयं समुद्रो भूयः पुनरपि गिरिणा मन्दरेण प्रमथ्यमान इव भूयिष्ठम् अत्यन्तमाभाति ॥

১৪। মেঘগণ জলপানে প্রবৃত্ত হইবামাত্রই সহসা সাগরের আবর্ত্তে ঘূর্ণায়মান হওয়ায় মনে হইতেছে,—আবার যেন মন্দর-পর্ব্বতদ্বারা সাগর মথিত হইতেছে।

दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला ।
आभाति वेला लवणाम्बुराशेर्धारानिबद्धेव कलङ्करेखा ॥ १५

१५ अ:। अयश्चक्रनिभस्य लवणाम्बुराशेः दूरात् तन्वी तमालतालीवनराजिनीला वेला धारानिबद्धा कलङ्करेखा इव आभाति ॥ वाच्य—तन्व्या तमालतालीवनराजिनीलया वेलया धारानिबद्धया कलङ्करेखया इव आभायते ॥

१५। अयश्चक्रनिभस्य लवणाम्बुराशेः दूरात् तन्वी अणुत्वेन अवभास-माना तमालतालीवनराजिभिः नीला वेला तीरभूमिः धारानिबद्धा चक्रा-श्रिता कलङ्करेखा मालिन्यरेखेव आभाति। 'मालिन्यरेखान्तु कलङ्क-माहुः' इति दण्डी ॥

১৫। দূর হইতে সূক্ষ্মরূপে প্রতীয়মান তমাল ও তালীবনশ্রেণীতে নীলবর্ণাভ বেলাভূমি যেন লৌহচক্রসদৃশ লবণজলরাশির ধারাবাহিক কলঙ্করেখার ন্যায় শোভা পাইতেছে।

वेलानिलः केतकरेणुभिस्ते सम्भावयत्याननमायताक्षि।
मामक्षमं मण्डनकालहानेर्वेत्तीव विम्बाधरबद्धतृष्णाम्॥ १६

१६ अः। (हे) आयताक्षि! वेलानिलः केतकरेणुभिः ते आननं सम्भावयति। विम्बाधर-बद्धतृष्णां मां मण्डनकालहानेः अक्षमं वेत्ति इव॥ वाच्य—वेलानिलेन सम्भाव्यते। तेन विम्बाधर-बद्धतृष्णः अक्षमः अहं विद्यै॥

१६। हे आयताक्षि! 'वेला स्यात् तीरनीरयोः' इति। वेलानिलः केतकरेणुभिः ते आननं सम्भावयति। किमर्थमित्यपेक्षायाम् उत्प्रेक्ष्यते—विम्बाधरे बद्धतृष्णां मां मण्डनेन आभरणक्रियया कालहानिः विलम्बः तस्या अक्षमम् असहमानम्। कर्मणि षष्ठी। कालहानिमसहमानं वेत्तीव वेत्ति किम्? नो चेत् कथं सम्भावयेदित्यर्थः॥

১৬। আয়তনয়নে! তীরভূমির সমীরণ তোমার বিম্বাধরপানে বদ্ধতৃষ্ণ ও ভূষণপরিধানার্থ কালবিলম্ব সহ্য করিতে আমাকে একান্ত অসমর্থ জানিয়াই যেন কেতক-কুসুমরেণু দ্বারা তোমার মুখমণ্ডল বিমণ্ডিত করিতেছে।

एते वयं सैकतभिन्नशुक्ति-
पर्य्यस्तमुक्तापटलं पयोधेः।
प्राप्ता मुहूर्त्तेन विमानवेगात्
कूलं फलावर्जितपूगमालम्॥ १७

१७ अः। एते वयं सैकतभिन्नशुक्तिपर्य्यस्तमुक्तापटलं फलावर्जितपूगमालं पयोधेः कूलं विमान-वेगात् मुहूर्त्तेन प्राप्ताः॥ वाच्य—एतैः अस्माभिः प्राप्तम्॥

१७। एते वयं सैकतेषु भिन्नाभिः स्फुटिताभिः शुक्तिभिः पर्य्यस्तानि परितः क्षिप्तानि मुक्तानां पटलानि यस्मिन् तत् तथोक्तं फलैरावर्जिता आनमिताः पूगमाला यस्मिन् तत् पयोधेः कूलं विमानवेगात् मुहूर्त्तेन प्राप्ताः॥

১৭। হে প্রিয়ে! আমরা বেগগামী বিমানারোহণে মুহূর্ত্তমধ্যে এই সাগরতীরে উপনীত হইলাম, এখানে সিকতাময় পুলিনে বিদীর্ণ শুক্তি হইতে নিপতিত মুক্তাজাল ইতস্ততঃ বিক্ষিপ্ত ও পূগশ্রেণী ফলভরে অবনত হইয়া রহিয়াছে।

कुरुष्व तावत् करभोरु पश्चा-
न्मार्गे मृगप्रेक्षिणि दृष्टिपातम्।
एषा विदूरीभवतः समुद्रात्
सकानना निष्पततीव भूमिः॥ १८

१८ अ:। (हे) करभोरु! (हे) मृगप्रेक्षिणि! तावत् पश्चात् मार्गे दृष्टिपातं कुरुष्व। एषा सकानना भूमि: विदूरीभवत: समुद्रात् निष्पतति इव ॥ वाच्य—(त्वया) दृष्टिपात: क्रियताम्। सकाननया एतया भूम्या निष्पतत्या इव भूयते ॥

१८। 'मणिबन्धादाकनिष्ठं करस्य करभो बहि:' इत्यमर:। करभ इव ऊरू यस्या: सा करभोरु:। 'ऊरूत्तरपदादौपम्ये' इत्यूङ्। तस्या: सम्बुद्धि:, हे करभोरु। मृगवत् प्रेक्षत इति विग्रह:। हे मृगप्रेक्षिणि! तावत् पश्चात् मार्गे लङ्घिताध्वनि दृष्टिपातं कुरुष्व। एषा सकानना भूमि: विदूरीभवत: समुद्रात् निष्पतति निष्क्रामतीति। विदूरशब्दात् विश्लेष-निम्नात् च्वि: ॥

১৮। অয়ি করভোরু মৃগাক্ষি! একবার পশ্চাদ্দিকে দৃষ্টিনিক্ষেপ কর, দেখিবে,—আমরা সাগর হইতে যত দূরে গিয়া পড়িতেছি, বোধ হইতেছে,—কানন-ভূমিও যেন ততই সমুদ্র হইতে নির্গত হইতেছে।

क्वचित् पथा सञ्चरते सुराणां
क्वचिद्घनानां पततां क्वचिच्च।
यथाविधो मे मनसोऽभिलाष:
प्रवर्त्तते पश्य तथा विमानम् ॥ १९

१९ अ:। विमानं मे मनसो अभिलाष: यथाविध: तथा प्रवर्त्तते—क्वचित् सुराणां क्वचित् पततां क्वचित् घनानां च पथा सञ्चरते—पश्य ॥ वाच्य—यथाविधेन अभिलाषेण भूयते। तथा विमानेन प्रवृत्यते..., सञ्चर्य्यते। त्वया दृश्यताम् ॥

१९। हे देवि! विमानं पुष्पकं मे मनसोऽभिलाषो यथाविधस्तथा प्रवर्त्तते पश्य। क्वचित् सुराणां पथा सञ्चरते। क्वचित् घनानां क्वचित् पततां पक्षिणाञ्च पथा सञ्चरते। 'समस्तृतीयायुक्तात्' इति सम्पूर्वात् चरतेरात्मनेपदम् ॥

১৯। প্রিয়ে! আবার দেখ,—এই বিমান আমার অভিলাষানুরূপ কখন দেব-পথে, কখন মেঘপথে, আবার কখন বিহগপথে গমন করিতেছে।

असौ महेन्द्रद्विपदानगन्धिस्त्रिमार्गगावीचिविमर्दशीत:।
आकाशवायुर्दिनयौवनोत्थानाचामति स्वेदलवान्मुखे ते॥२०

२० अ:। महेन्द्रद्विपदानगन्धि: त्रिमार्गगावीचिविमर्दशीत: असौ आकाशवायु: दिनयौवनोत्थान् स्वेदलवान् ते मुखे आचामति ॥ वाच्य—महेन्द्रद्विपदानगन्धिना त्रिमार्गगावीचिविमर्दशीतेन अमुना आकाशवायुना दिनयौवनोत्था: स्वेदलवा: आचम्यन्ते ॥

२०। महेन्द्रद्विपदानगन्धिः ऐरावतमदगन्धिः। त्रिभिर्मार्गैः गच्छति इति त्रिमार्गगा गङ्गा। 'तद्धितार्थ'—इत्यादिनोत्तरपदसमासः। तस्या वीचीनां विमर्दैन सम्पर्केण शीतः असौ आकाशवायुः दिनयौवनोत्थान् मध्याह्नसम्भवान् ते मुखे स्वेदलवान् आचामति हरति। अनेन सुरपथसञ्चारो दर्शितः॥

২০। ঐ দেখ,—স্বর্গগঙ্গার তরঙ্গসম্পর্কে সুশীতল ঐরাবত-মদগন্ধি আকাশসমীরণ তোমার আননসংলগ্ন মধ্যাহ্নকালসম্ভূত স্বেদবিন্দু অপনয়ন করিতেছে।

**करेण वातायनलम्बितेन स्पृष्टस्त्वया चण्डि कुतूहलिन्या।**
**आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते॥ २१**

२१ अः। (हे) चण्डि! कुतूहलिन्या त्वया वातायनलम्बितेन करेण स्पृष्टः उद्भिन्नविद्युद्वलयः घनः ते द्वितीयम् आभरणम् आमुञ्चति इव॥ वाच्य—स्पृष्टेन उद्भिन्नविद्युद्वलयेन घनेन आमुच्यते इव॥

२१। हे चण्डि! कोपने। 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः। कुतूहलिन्या विनोदायिन्या त्वया कर्त्र्या, वातायने गवाक्षे लम्बितेन अवलम्बितेन करेण स्पृष्टः उद्भिन्नविद्युद्वलयः घनः, ते द्वितीयमाभरणं वलयम् आमुञ्चतीव अर्पयतीव। चण्डि इत्यनेन कोपनशीलत्वात् भीतः क्षिप्रं त्वां मुञ्चति मेघ इति व्यज्यते॥

২১। হে কোপনে! কুতূহলবশতঃ যেমন তুমি বিমানের গবাক্ষদেশে কর প্রসারণ করিয়া মেঘ স্পর্শ করিতে উদ্যত হইয়াছ, অমনি বিদ্যুদ্‌বলয়ধারী মেঘ যেন তোমার করে দ্বিতীয় আভরণ পরিধান করাইয়া দিতেছে।

**अमी जनस्थानमपोढविघ्नं**
**मत्वा समारब्धनवोटजानि।**
**अध्यासते चीरभृतो यथास्वं**
**चिरोज्झितान्याश्रममण्डलानि॥ २२**

२२ अः। अमी चीरभृतः जनस्थानम् अपोढविघ्नं मत्वा समारब्धनवोटजानि चिरोज्झितानि आश्रममण्डलानि यथास्वम् अध्यासते॥ वाच्य—अमीभिः चीरभृद्भिः अध्यास्यन्ते॥

२२। अमी चीरभृतः तापसा जनस्थानम् अपोढविघ्नम् अपास्तविघ्नं मत्वा ज्ञात्वा समारब्धा नवा उटजाः पर्णशाला येषु तानि। 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः। चिरोज्झितानि राक्षसभयादित्यर्थः। आश्रममण्डलानि आश्रमविभागान् यथास्वं स्वमनतिक्रम्य अध्यासतेऽधितिष्ठन्ति॥

২২। প্রিয়ে! ঐ দেখ,—চীরধারী ঋষিসকল রাক্ষসসঙ্কুল জনস্থানকে নিরাপদ্ জানিয়া চিরপরিত্যক্ত আশ্রমে স্ব স্ব বাসস্থানে আবার নূতন নূতন পর্ণকুটীর নির্ম্মাণপূর্ব্বক স্বচ্ছন্দে বাস করিতেছেন।

**সৈষা স্থলী যত্র বিচিন্বতা ত্বাং ভ্রষ্টং ময়া নূপুরমেকমুর্ব্ব্যাম্ ।**
**অদৃশ্যত ত্বচ্চরণারবিন্দবিশ্লেষদুঃখাদিব বদ্ধমৌনম্ ॥ ২৩**

২৩ অঃ। সা স্থলী এষা, যত্র ত্বাং বিচিন্বতা ময়া ত্বচ্চরণারবিন্দবিশ্লেষদুঃখাৎ ইব বদ্ধমৌনম্ উর্ব্ব্যাং ভ্রষ্টম্ একং নূপুরম্ অদৃশ্যত ॥ বাচ্য—এতয়া তয়া স্থল্যা ভূয়তে। বিচিন্বন্ অহম্ অপশ্যম্ ॥

২৩। সা পূর্ব্বানুভূতা স্থল্যেষা দৃশ্যত ইত্যর্থঃ। যত্র স্থল্যাং ত্বাং বিচিন্বতা অন্বিষ্যতা ময়া, ত্বচ্চরণারবিন্দাত্ন্দেন যো বিশ্লেষো বিয়োগস্তেন যদ্দুঃখং তস্মাদিব বদ্ধমৌনং নিঃশব্দম্। উর্ব্ব্যাং ভ্রষ্টমেকং নূপুরং মঞ্জীরঃ। 'মঞ্জীরো নূপুরোঽস্ত্রিয়াম্' ইত্যমরঃ। অদৃশ্যত দৃষ্টম্। হেতূৎপ্রেক্ষা ॥

২৩। প্রিয়ে! দেখ দেখ,—এই সেই বনস্থলী, যেখানে তোমাকে অন্বেষণ করিতে করিতে ভূতলে পতিত একটী নূপুর দেখিতে পাইয়াছিলাম, তখন আমার মনে হইয়াছিল যেন উহা তোমার চরণকমল হইতে স্খলিত হইয়া দুঃখবশতই মৌনাবলম্বন করিয়াছিল।

**ত্বং রক্ষসা ভীরু যতোঽপনীতা তং মার্গমেতাঃ কৃপয়া লতা মে ।**
**অদর্শয়ন্ বক্তুমশক্নুবত্যঃ শাখাভিরাবর্জিতপল্লবাভিঃ ॥ ২৪**

২৪ অঃ। (হে) ভীরু! ত্বং রক্ষসা যতঃ অপনীতা তং মার্গং বক্তুম্ অশক্নুবত্যঃ এতাঃ লতাঃ আবর্জিতপল্লবাভিঃ শাখাভিঃ কৃপয়া মে অদর্শয়ন্ ॥ বাচ্য—রক্ষঃ ত্বাম্ অপনীতবান্ এতাভিঃ অশক্নুবতীভিঃ লতাভিঃ স মার্গঃ অদর্শ্যত ॥

২৪। হে ভীরু ভয়শীলে! 'ঊঙুতঃ' ইত্যূঙ্। ততো নদীত্বাৎ সম্বুদ্ধৌ হ্রস্বঃ। ত্বং রক্ষসা রাবণেন যতো যেন মার্গেণ। সার্ব্ববিভক্তিকস্তসিঃ। অপনীতা অপহৃতা তং মার্গং বাগিন্দ্রিয়াভাবাৎ বক্তুম্ অশক্নুবত্য এতা লতা বীরুধঃ। আবর্জিতা নমিতাঃ পল্লবাঃ পাণিস্থানীয়াঃ যাভিঃ তাভিঃ শাখাভিঃ স্বাশ্রয়ভূতাভিঃ কৃপয়া মে অদর্শয়ন্, হস্তচেষ্টয়া অসূচয়ন্নিত্যর্থঃ। 'শাখা বৃক্ষান্তরে ভুজে' ইতি বিশ্বঃ। লতাদীনামপি জ্ঞানমস্ত্যেব। তদুক্তং মনুনা—'অন্তঃসংজ্ঞা ভবন্ত্যেতে সুখদুঃখসমন্বিতাঃ' ইতি ॥

২৪। অয়ি ভীরু! নিশাচর দশানন তোমাকে যে পথ দিয়া অপহরণ করিয়াছিল, সেই পথস্থিত লতাসকল বাক্যদ্বারা তাহা বলিতে অসমর্থ হইলেও আমার প্রতি করুণা প্রকাশ করিয়া অবনত পল্লবদ্বারা ঐ পথ বলিয়া দিয়াছিল।

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षा-
स्तवागतिज्ञं समबोधयन्माम्।
व्यापारयन्त्यो दिशि दक्षिणस्या-
मुत्पक्ष्मराजीनि विलोचनानि॥ २५

२५ अ:। मृग्य: च दर्भाङ्कुरनिर्व्यपेक्षा: उत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां दिशि व्यापारयन्त्य: तव अगतिज्ञं मां समबोधयन्॥ वाच्य—दर्भाङ्कुरनिर्व्यपेक्षाभि: व्यापारयन्तीभि: मृगीभि: अगतिज्ञ: अहं समबोध्ये।

२५। दर्भाङ्कुरेषु भक्ष्येषु निर्व्यपेक्षा निस्पृहा: मृग्य: मृगाङ्गना च उत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां दिशि व्यापारयन्त्य: प्रवर्त्तयन्त्य: सत्य: तवागतिज्ञं गत्यनभिज्ञं मां समबोधयन्। दृष्टिचेष्टया त्वद्गतिमबोधयन् इत्यर्थ:

২৫। মৃগীগণ কুশাঙ্কুরের প্রতি স্পৃহাহীন হইয়া পক্ষ্মপংক্তি উন্মোচনপূর্ব্বক নিজ নিজ নয়ন দক্ষিণদিকে পাতিত করিয়া আকাশপথে ত্বদীয় গতির অনভিজ্ঞ আমাকে যেন পথ বলিয়া দিয়াছিল।

एतद्गिरेर्माल्यवत: पुरस्तादाविर्भवत्यम्बरलेखि शृङ्गम्।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम्॥२६

२६ अ:। माल्यवतो गिरे: अम्बरलेखि एतत् शृङ्गं पुरस्तात् आविर्भवति। यत्र घनै: नवं पय:, मया च त्वद्वियोगाश्रु समं विसृष्टम्॥ वाच्य—अम्बरलेखिना शृङ्गेण आविर्भूयते। घना: (विसृष्टवन्त:), अहञ्च विसृष्टवान्॥

२६। माल्यवतो नाम गिरेरम्बरलेखि अभ्रङ्कषं शृङ्गमेतत् पुरस्तादग्रे आविर्भवति। यत्र शृङ्गे घनैर्मेघै: नवं पय:, मया त्वद्विप्रयोगेण यदश्रु तच्च समं युगपद्विसृष्टम्। मेघदर्शनात् वर्षतुल्यमश्रु विमुक्तमिति भाव:॥

২৬। ঐ দেখ, সম্মুখস্থ মাল্যবান্ পর্ব্বতের এক শৃঙ্গ আকাশ স্পর্শ করিয়া আবির্ভূত হইয়াছে, ঐ স্থানে মেঘগণের নূতনজলধারা ও তোমার বিরহজনিত মদীয় অশ্রুবিন্দু এককালেই পতিত হইয়াছিল।

गन्धश्च धाराहतपल्वलानां
कादम्बमर्द्धोद्गतकेसरञ्च।
स्निग्धाश्च केका: शिखिनां बभूवु-
र्यस्मिन्नसह्यानि विना त्वया मे॥ २७

२७ अ:। यस्मिन् धाराहतपल्वलानां गन्ध: च अर्द्धोद्गतकेसरं कादम्बं च स्निग्धा: शिखिनां केका: च (एतानि) त्वया विना मे असह्यानि बभूवु:॥ वाच्य—गन्धेन, अर्द्धोद्गतकेसरेण, कादम्बेन, स्निग्धाभि: केकाभि: एतै: असह्यै: बभूवे॥

२७। यस्मिन् शृङ्गे धाराभिः वर्षधाराभि: आहतानां पल्वलानां गन्धश्च। अर्द्धोद्गतकेसरं कादम्बं नीपकुसुमं च। स्निग्धाः मधुरा: शिखिनां बर्हिणाम्। 'शिखिनौ बर्हिवर्हिणौ' इत्यमर:। केकाश्च। त्वया विना मे असह्यानि बभूवु:। 'नपुंसकमनपुंसकेन' इति नपुंसकैकशेष:॥

২৭। ঐ স্থানের বর্ষাকালীন সলিলধারাসিক্ত পল্বলের গন্ধ, অর্দ্ধস্ফুট কদম্বকুসুম এবং ময়ূরগণের মধুর কেকারব; তোমার বিরহে এই সকল আমার একান্ত অসহ্য হইয়াছিল।

पूर्वानुभूतं स्मरता च यत्र
कम्पोत्तरं भीरु! तवोपगूढ़म्।
गुहाविसारीण्यतिवाहितानि
मया कथञ्चिद् घनगर्जितानि॥ २८

२८ अ:। हे भीरु! यत्र पूर्वानुभूतं कम्पोत्तरं तव उपगूढ़ं स्मरता मया गुहा-विसारीणि घनगर्जितानि कथञ्चित् अतिवाहितानि॥ वाच्य—स्मरन् अहम् अति-वाहितवान्॥

२८। किञ्च हे भीरु! यत्र शृङ्गे पूर्वानुभूतं कम्पोत्तरं कम्पप्रधानं तवोपगूढ़म् उपगूहनं स्मरता मया गुहाविसारीणि घनगर्जितानि कथञ्चित् अतिवाहितानि, स्मारकत्वेन उद्दीपकत्वात् क्लेशेन गमितानीत्यर्थः॥

২৮। অয়ি ভয়শালে! এই শৈলশৃঙ্গে পূর্ব্বানুভূত তোমার সেই সকম্প আলিঙ্গন স্মরণ করিয়া গুহাগামী মেঘগর্জ্জন আমি অতিকষ্টে সহ্য করিয়াছিলাম।

आसारसिक्तक्षितिवाष्पयोगान्मामक्षिणोद्यत्र विभिन्नकोशै:।
विड़म्ब्यमाना नवकन्दलैस्ते विवाहधूमारुणलोचनश्री:॥ २९

२९ अ:। यत्र विभिन्नकोशै: नवकन्दलै: आसारसिक्तक्षितिवाष्पयोगात् विड़-म्ब्यमाना ते विवाहधूमारुणलोचनश्री: माम् अक्षिणोत्॥ वाच्य—विड़म्ब्यमानया विवाहधूमारुणलोचनश्रिया अहं अक्षीये॥

२९। यत्र शृङ्गे विभिन्नकोशै: विकसितकुड्मलै: नवकन्दलैः कन्दली-पुष्पै: अरुणवर्णैः आसारेण धारासम्पातेन। 'धारासम्पात आसार:' इत्य-मरः। सिक्ताया: क्षिते: वाष्पस्य धूमवर्णस्य योगात् हेतो: विड़म्ब्यमाना अनुक्रियमाणा ते विवाहधूमेन अरुणा लोचनश्री:। सादृश्यात् स्मर्यमाणा इति शेषः। माम् अक्षिणोत् अपीडयत्॥

২৯। এই পর্ব্বতশৃঙ্গের বিকসিত নূতন কদলীকুসুমসমূহ, নবজলধারাসিক্ত ভূমি হইতে উত্থিত ধূমবর্ণ বাষ্পের সহিত মিলিত হওয়ায় পরিণয়কালে হুতাশনের ধূমদ্বারা অরুণ বর্ণ ত্বদীয় নয়নকান্তির অনুকরণ করিয়া আমাকে নিতান্ত সন্তাপিত করিয়াছিল।

**उपान्तवानीरवनोपगूढान्यालक्ष्यपारिप्लवसारसानि ।**

**दूरावतीर्णा पिबतीव खेदादमूनि पम्पासलिलानि दृष्टिः॥३०**

३० अः। उपान्तवानीरवनोपगूढानि आलक्ष्यपारिप्लवसारसानि अमूनि पम्पा-सलिलानि दूरावतीर्णा मे दृष्टिः खेदात् पिबति इव ॥ वाच्य—दूरावतीर्णया दृष्ट्या पीयन्ते ॥

३०। उपान्तवानीरवनोपगूढानि पार्श्ववञ्जुलवनच्छन्नानि आलक्ष्या ईषल्लक्ष्याः पारिप्लवाः चञ्चलाः सारसा येषु तानि अमूनि पम्पासलिलानि पम्पासरोजलानि दूरादवतीर्णा मे दृष्टिः अतएव खेदात् पिबतीव। न विहातुमुत्सहत इत्यर्थः ॥

৩০। দূর হইতে অবতীর্ণ মদীয় দৃষ্টি যেন অবতরণ ক্লেশবশতঃ চতুর্দ্দিকে বেতসবনে পরিবৃত ঈষৎ প্রতীয়মান চপল সারসসমাকুল পম্পাসরোবরসলিল পান করিতেছিল।

**अत्रावियुक्तानि रथाङ्गनाम्ना-**
**मन्योन्यदत्तोत्पलकेसराणि ।**
**द्वन्द्वानि दूरान्तरवर्त्तिना ते**
**मया प्रिये सस्पृहमीक्षितानि ॥३१**

३१ अः। (हे) प्रिये! अत्र अन्योन्यदत्तोत्पलकेसराणि अवियुक्तानि रथाङ्गनाम्नां द्वन्द्वानि ते दूरान्तरवर्त्तिना मया सस्पृहम् ईक्षितानि ॥ वाच्य—दूरान्तरवर्त्ती अहम् ईक्षितवान् ॥

३१। अत्र पम्पासरसि अन्योन्यस्मै दत्तोत्पलकेसराणि अवियुक्तानि रथाङ्गनाम्नां द्वन्द्वानि चक्रवाकमिथुनानि ते तव दूरान्तरवर्त्तिना दूरदेश-वर्त्तिना मया हे प्रिये! सस्पृहं साभिलाषमीक्षितानि। तदानीं त्वाम-स्मार्षमित्यर्थः ॥

৩১। হে প্রিয়ে! আমি যখন তোমা হইতে অতিদূরে অবস্থান করিতেছিলাম, তখন ঐ পম্পাসরোবরে চিরসম্মিলিত চক্রবাকমিথুনের পরস্পর পদ্মকেশরদান সতৃষ্ণ-নয়নে নিরীক্ষণ করিতাম।

**इमां तटाशोकलतां च तन्वीं**
**स्तनाभिरामस्तबकाभिनम्राम् ।**

ত্বৎপ্রাপ্তিবুদ্ধ্যা পরিরব্ধুকামঃ
সৌমিত্রিণা সাস্রুরহং নিষিদ্ধঃ ॥৩২

৩২ অঃ। ( কিঞ্চ ) স্তনাভিরামস্তবকাভিনম্রাং তন্বীম্ ইমাং তটাশোকলতাং ত্বৎপ্রাপ্তিবুদ্ধ্যা পরিরব্ধুকামঃ অহং সৌমিত্রিণা সাস্রুঃ নিষিদ্ধঃ ॥ বাচ্য—সৌমিত্রিঃ পরিরব্ধুকামং সাস্রু মাং নিষিদ্ধবান্ ॥

৩২। কিঞ্চ, স্তনবদভিরামাভ্যাং স্তবকাভ্যাম্ অভিনম্রাং তন্বীমিমাং তটাশোকস্য লতাম্ অতঃ ত্বৎপ্রাপ্তিবুদ্ধ্যা ত্বমেব প্রাপ্তেতি ভ্রান্ত্যা পরিরব্ধুম্ আলিঙ্গিতুং কামো যস্য সঃ অহং সৌমিত্রিণা লক্ষ্মণেন সাস্রুঃ নিষিদ্ধঃ। নেয়ং সীতেতি নিবারিতঃ। পরিরব্ধুকাম ইত্যত্র 'তুমঃ কামমনসোরপি' ইতি বচনাৎ মকারলোপঃ ॥

৩২। স্তনের ন্যায় মনোরম স্তবক দ্বারা অবনত ঐ তীরস্থিত ক্ষীণ অশোকতরু নিরীক্ষণ করিয়া 'তোমাকে পাইলাম' এই বিবেচনায় যখন উহাকে আলিঙ্গন করিতে উদ্যত হইতাম, তখন লক্ষ্মণ 'এ সীতা নহে' বলিয়া আমাকে নিষেধ করিত এবং তৎকালে নয়নজলে আমার বক্ষঃস্থল সিক্ত হইত।

অমূর্বিমানান্তরলম্বিনীনাং
শ্রুত্বা স্বনং কাঞ্চনকিঙ্কিণীনাম্ ।
প্রত্যুদ্ব্রজন্তীব খমুৎপতন্ত্যো
গোদাবরীসারসপঙ্‌ক্তয়স্ত্বাম্ ॥ ৩৩

৩৩ অঃ। বিমানান্তরলম্বিনীনাং কাঞ্চনকিঙ্কিণীনাং স্বনং শ্রুত্বা খম্ উৎপতন্ত্যঃ অমূঃ গোদাবরীসারসপঙ্‌ক্তয়ঃ ত্বাং প্রত্যুদ্ব্রজন্তি ইব ॥ বাচ্য—উৎপতন্তীভিঃ অমূভিঃ গোদাবরীসারসপঙ্‌ক্তিভিঃ ত্বং প্রত্যুদ্ব্রজ্যসে ইব ॥

৩৩। বিমানস্য অন্তরেষু অবকাশেষু লম্বন্তে যাঃ তাসাং কাঞ্চনকিঙ্কিণীনাং স্বনং শ্রুত্বা স্বযূথশব্দভ্রমাৎ খম্ আকাশম্ উৎপতন্ত্যঃ অমূঃ গোদাবরীসারসপঙ্‌ক্তয়ঃ ত্বাং প্রত্যুদ্ব্রজন্তীব ॥

৩৩। গোদাবরীতীরবাসী এই সারসশ্রেণী, বিমানমধ্যবিলম্বিত স্বর্ণকিঙ্কিণীর রব শ্রবণ করিয়া আকাশপথে উত্থিত হইয়া যেন তোমারই প্রত্যুদ্গমন করিতেছে।

এষা ত্বয়া পেশলমধ্যয়াপি ঘটাম্বুসংবর্দ্ধিতবালচূতা ।
আনন্দয়ত্যুন্মুখকৃষ্ণসারা দৃষ্টা চিরাৎ পঞ্চবটী মনো মে॥৩৪

৩৪ অঃ। পেশলমধ্যয়া অপি ত্বয়া ঘটাম্বুসংবর্দ্ধিতবালচূতা উন্মুখকৃষ্ণসারা

चिरात् दृष्टा एषा पञ्चवटी मे मनः आनन्दयति ॥ वाच्य—घटाम्बुसंवर्द्धितबाल-चूतया उन्मुखकृष्णसारया दृष्टया एतया पञ्चवट्या आनन्द्यते ॥

२४। पेशलमध्ययापि भाराक्षमयापि इत्यर्थः। त्वया घटाम्बुभिः संवर्द्धिता बालचूता यस्याः सा । उन्मुखा अस्मदभिमुखाः त्वत्संवर्द्धिता एव कृष्णसारा यस्याः सा चिराद्दृष्टा एषा पञ्चवटी मे मनः आनन्दयति आह्लादयति। पञ्चवटीशब्दः पूर्वमेव व्याख्यातः ॥

৩৪। তোমার কটীদেশ সাতিশয় সুকুমার হইলেও তুমি কলস দ্বারা সলিল সেচন করিয়া যে স্থানের নবজাত সহকার তরুগণকে সংবর্দ্ধিত করিয়াছিলে এবং যেখানে কৃষ্ণসার মৃগগণ ঊর্দ্ধমুখ হইয়া আমাদিগের প্রতি দৃষ্টিপাত করিতেছে, বহুকালের পর সেই পঞ্চবটী দর্শন করিয়া আমার মন আনন্দরসে আপ্লুত হইতেছে।

अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्द्धा स्मरामि वानीरगृहेषु सुप्तः ॥ ३५

३५ अः। अत्र अनुगोदं मृगयानिवृत्तः तरङ्गवातेन विनीतखेदः रहः त्वदुत्सङ्ग-निषण्णमूर्द्धा ( सन् ) वानीरगृहेषु सुप्तः स्मरामि ॥ वाच्य—मृगयानिवृत्तेन विनीत-खेदेन त्वदुत्सङ्गनिषण्णमूर्ध्ना सुप्तं स्मर्य्यते ॥

३५। अत्र पञ्चवट्याम् । गोदा गोदावरी तस्याः समीपे अनुगोदम् । 'अनुर्यत्समया' इति अव्ययीभावः। मृगयायाः निवृत्तः तरङ्गवातेन विनीतखेदः। रहो रहसि । अत्यन्तसंयोगे द्वितीया। त्वदुत्सङ्गनिषण्ण-मूर्द्धा सन् अहं वानीरगृहेषु सुप्तः स्मरामि । वाक्यार्थः कर्म । सुप्त इति यत् तत् स्मरामीत्यर्थः ॥

৩৫। হে প্রিয়ে! আমি মৃগয়া হইতে প্রতিনিবৃত্ত হইয়া গোদাবরীর তরঙ্গ-সম্পর্কে শীতলসমীরণ দ্বারা মৃগয়াজনিত শ্রম অপনয়নপূর্ব্বক এই পঞ্চবটীবনের নির্জ্জন বেতসগৃহে তোমার ক্রোড়দেশে মস্তক রাখিয়া যে শয়ন করিতাম, এক্ষণে তাহা আমার বেশ স্মরণ হইতেছে।

भ्रूभेदमात्रेण पदान्मघोनः
प्रभ्रंशयां यो नहुषं चकार ।
तस्याविलाम्भःपरिशुद्धिहेतो-
र्भौमो मुनेः स्थानपरिग्रहोऽयम् ॥ ३६

३६ अः। यः भ्रूभेदमात्रेण नहुषं मघोनः पदात् प्रभ्रंशयां चकार, आविलाम्भः-परिशुद्धिहेतोः तस्य मुनेः भौमः अयं स्थानपरिग्रहः ( दृश्यते ) ॥ वाच्य—येन नहुषः प्रभ्रंशयाञ्चक्रे, भौमेन अनेन स्थानपरिग्रहेण भूयते ॥

३६। यो मुनिर्भ्रूभेदमात्रेण भ्रूभङ्गमात्रेणैव नहुषं राजानं मघोनः पदात् इन्द्रत्वात् प्रभ्रंशयाञ्चकार प्रभ्रंशयति स्म। आविलाम्भःपरिशुद्धिहेतोः कलुषजलप्रसादहेतोः तस्य मुनेः अगस्त्यस्य। अगस्त्योदये शरदि जलं प्रसीदति इत्युक्तं प्राक्। भूमौ भवो भौमः स्थानपरिग्रहः आश्रमोऽयं दृश्यते इति शेषः। भौम इत्यनेन दिव्योऽपि अस्ति इत्युक्तम्। परिगृह्यत-इति परिग्रहः। स्थानमेव परिग्रह इति विग्रहः॥

पौराणिकी वार्त्ता।—पुरा किल असुरपीड़ितः पलायमानः शचीपतिः हिमवती गुहामाश्रित्य आत्मानं जुगोप, तदान्ये देवाः स्वर्गराज्यपरिरक्षणार्थं भूमण्डलात् नरदेवं नहुषमारोपयामासुः, स्वर्गराज्ये अधिष्ठितः स तदानीं शचीं लब्धुकामः ताम् आहूतवान्, सा च कथमहं मानुषस्य पत्नी भविष्यामीति भयात् वेपमाना नहुषं प्रत्यवदत्—"राजन्! ऋषिगणवाहितेन यानेन विना भवतः सकाशं गन्तुं कथमपि नालमस्मी"ति, श्रुत्वेदं मदनवशगो राजा नहुषः यदा अगस्त्यादीन् तत्कार्य्य-साधनार्थं प्रवर्त्तयितुमारेभे तदा स मुनिरगस्त्यः शापेन तं पुनस्त्रिदशालयतः पातयामास॥

৩৬। যিনি ভ্রূভঙ্গী মাত্রেই রাজা নহুষকে ইন্দ্রপদ হইতে পরিভ্রষ্ট করিয়াছিলেন, যাঁহার উদয়ে সলিল নির্ম্মল হয়, ঐ সেই মহর্ষি অগস্ত্যের ভূপৃষ্ঠস্থিত এই আশ্রমপদ দৃষ্টিগোচর হইতেছে।

त्रेताग्निधूमाग्रमनिन्द्यकीर्त्ते-
स्तस्येदमाक्रान्तविमानमार्गम्।
घ्रात्वा हविर्गन्धि रजोविमुक्तः
समश्नुते मे लघिमानमात्मा॥ ३७

३७ अः। अनिन्द्यकीर्त्तेः तस्य आक्रान्तविमानमार्गं हविर्गन्धि त्रेताग्निधूमाग्रं घ्रात्वा रजोविमुक्तः मे आत्मा लघिमानं समश्नुते॥ वाच्य—रजोविमुक्तेन आत्मना लघिमा समश्यते॥

३७। अनिन्द्यकीर्त्तेः तस्य अगस्त्यस्य आक्रान्तविमानमार्गं, हविर्गन्धोऽस्य अस्तीति हविर्गन्धि, त्रय एव त्रेता अग्नित्रयम्। 'अग्नित्रयमिदं त्रेता' इत्यमरः। पृषोदरादित्वात्साधुः। त्रेताग्नेर्धूमाग्रमिदं घ्रात्वा आघ्राय रजसोगुणाद्विमुक्तो मे मम आत्मा अन्तःकरणं लघिमानं लघुत्वगुणं समश्नुते प्राप्नोति॥

৩৭। অনিন্দ্যকীর্ত্তি সেই মহর্ষির গার্হপত্যাদি অগ্নিত্রয়ের আকাশস্পর্শী হবির্গন্ধি ধূমশিখা আঘ্রাণ করিয়া আমার অন্তঃকরণ রজোবিহীন হওয়ায় যেন বিশুদ্ধভাব প্রাপ্ত হইয়াছে।

एतन्मुनेर्मानिनि शातकर्णेः
पञ्चाप्सरो नाम विहारवारि।

आभाति पर्य्यन्तवनं विदूरा-
न्मेघान्तरालक्ष्यमिवेन्दुबिम्बम् ॥ ३८

३८ अः। (हे) मानिनि! शातकर्णेः पञ्चाप्सरो नाम पर्य्यन्तवनम् एतत् विहारवारि विदूरात् मेघान्तरालक्ष्यम् इन्दुबिम्बम् इव आभाति॥ वाच्य—पञ्चाप्सरो नाम्ना पर्य्यन्तवनेन एतेन विहारवारिणा मेघान्तरालक्ष्येण इन्दुबिम्बेन इव आभायते॥

३८। हे मानिनि! शातकर्णेर्मुनेः सम्बन्धि पञ्चाप्सरो नाम पञ्चाप्सर इति प्रसिद्धम्। पञ्च अप्सरसो यस्मिन्निति विग्रहः। पर्य्यन्तेषु वनानि यस्य तत् पर्य्यन्तवनम् एतद्विहारवारिक्रीड़ासरो विदूरात्, मेघानामन्तरे मध्ये आलक्ष्यम् ईषद्दृश्यम्। 'आ ईषदर्थेऽभिव्याप्तौ' इत्यमरः। इन्दुबिम्बमिव आभाति॥

৩৮। অয়ি মানিনি! ঐ যে শাতকর্ণি মুনির পঞ্চাপ্সর নামক বিহারসরোবর পরিদৃষ্ট হইতেছে, চতুর্দ্দিকে কাননদ্বারা পরিবেষ্টিত হওয়ায় উহা যেন দূর হইতে মেঘাচ্ছন্ন ঈষৎ প্রতীয়মান সুধাংশুবিম্বের ন্যায় শোভা পাইতেছে।

पुरा स दर्भाङ्कुरमात्रवृत्तिश्चरन् मृगैः सार्द्धमृषिर्मघोना।
समाधिभीतेन किलोपनीतः पञ्चाप्सरोयौवनकूटबन्धम् ॥ ३९

३९ अः। पुरा दर्भाङ्कुरमात्रवृत्तिः मृगैः सार्द्धं चरन् सः ऋषिः समाधिभीतेन मघोना पञ्चाप्सरोयौवनकूटबन्धम् उपनीतः॥ वाच्य—समाधिभीतः मघवा दर्भाङ्कुरमात्रवृत्तिं चरन्तम् ऋषिं पञ्चाप्सरोयौवनकूटबन्धम् उपनीतवान्॥

३९। पुरा पूर्वस्मिन् काले दर्भाङ्कुरमात्रवृत्तिः तन्मात्राहारः मृगैः सार्द्धं सह चरन् स ऋषिः समाधेः तपसो भीतेन मघोना इन्द्रेण पञ्चानाम् अप्सरसां यौवनम्। 'तद्धितार्थ'—इत्यादिनोत्तरपदसमासः। तदेव कूटबन्धं कपटयन्त्रमुपनीतः। 'उन्माथः कूटयन्त्रं स्यात्' इत्यमरः। किलेति ऐतिह्ये। मृगसाहचर्य्यात् मृगवदेव बद्ध इति भावः॥

৩৯। পূর্ব্বকালে এই শাতকর্ণি মুনি মৃগগণসহ বিচরণ ও কুশাঙ্কুর মাত্র আহার করিয়া তপস্যা করেন, ইঁহার সমাধিদর্শনে ভীত হইয়া দেবরাজ ইন্দ্র পাঁচটী অপ্সরার যৌবনরূপ কূটযন্ত্র বিস্তার করিয়াছিলেন।

तस्यायमन्तर्हितसौधभाजः प्रसक्तसङ्गीतमृदङ्गघोषः।
वियद्गतः पुष्पकचन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः करोति ॥ ४०

४० अः। अन्तर्हितसौधभाजः तस्य अयं प्रसक्तसङ्गीतमृदङ्गघोषः वियद्गतः (सन्) पुष्पकचन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः करोति॥ वाच्य—अनेन प्रसक्तसङ्गीतमृदङ्गघोषेण वियद्गतेन क्रियन्ते॥

৪০। অন্তর্হিতসৌধভাজঃ জলান্তর্গতপ্রাসাদগতস্য তস্য শাতকর্ণেঃ অয়ং প্রসক্তঃ সন্ততঃ সঙ্গীতমৃদঙ্গঘোষো বিয়দ্গতঃ সন্ পুষ্পকস্য চন্দ্রশালাঃ শিরোগৃহাণি। 'চন্দ্রশালা শিরোগৃহম্' ইতি হলায়ুধঃ। ক্ষণং প্রতিশ্রুদ্ভিঃ প্রতিধ্বানৈঃ মুখরা ধ্বনন্তীঃ করোতি। 'স্ত্রী প্রতিশ্রুৎপ্রতিধ্বানৌ' ইত্যমরঃ ॥

৪। সম্প্রতি সলিলান্তর্গত প্রাসাদে অধিষ্ঠিত সেই ঋষি শাতকর্ণি সতত মৃদঙ্গের সমস্বর ও লয়যুক্ত সঙ্গীতধ্বনি করিতেছেন, উঁহার ঐ ধ্বনি আকাশগামী হইয়া ক্ষণকাল পুষ্পকরথের চূড়াগৃহ মুখরিত করিতেছে।

হবির্ভুজামেধবতাং চতুর্ণাং মধ্যে ললাটন্তপসপ্তসপ্তিঃ ।
অসৌ তপস্যত্যপরস্তপস্বী নাম্না সুতীক্ষ্ণশ্চরিতেন দান্তঃ ॥৪১

৪১ অঃ। নাম্না সুতীক্ষ্ণঃ চরিতেন দান্তঃ অসৌ অপরঃ তপস্বী এধবতাং চতুর্ণাং হবির্ভুজাম্ অগ্নীনাং মধ্যে ললাটন্তপসপ্তসপ্তিঃ (সন্) তপস্যতি ॥ বাচ্য—নাম্না সুতীক্ষ্ণেণ দান্তেন অমুনা অপরেণ তপস্বিনা ললাটন্তপসপ্তসপ্তিনা তপস্যতে ॥

৪১। নাম্না সুতীক্ষ্ণঃ সুতীক্ষ্ণনামা চরিতেন দান্তঃ সৌম্যোঽসৌ অপরঃ তপস্বী এধবতাম্ ইন্ধনবতাম্। 'কাষ্ঠং দার্বিন্ধনন্ত্বেধঃ' ইত্যমরঃ। চতুর্ণাং হবির্ভুজামগ্নীনাং মধ্যে ললাটং তপতীতি, ললাটন্তপঃ সূর্য্যঃ। 'অসূর্য্যললাটয়োর্দৃশিতপোঃ' ইতি খশ্প্রত্যয়ঃ, 'অরুর্দ্বিষৎ'—ইত্যাদিনা মুমাগমঃ। ললাটন্তপঃ সপ্তসপ্তিঃ সপ্তাশ্বঃ সূর্য্যো যস্য স তথোক্তঃ সন্ তপস্যতি তপশ্চরতি। 'কর্মণো রোমন্থতপোভ্যাং বর্ত্তিচরোঃ' ইতি ক্যঙ্। 'তপসঃ পরস্মৈপদং চ' ইতি বক্তব্যম্ ॥

৪১। প্রিয়ে! ঐ দেখ আর এক তপস্বী সূর্য্যাভিমুখ হইয়া চতুর্দ্দিকে প্রজ্বলিত হুতাশন চতুষ্টয়ের মধ্যে আস্থানপূর্ব্বক তপস্যা করিতেছেন, ইঁহার নাম বটে সুতীক্ষ্ণ, কিন্তু ইনি শান্তচরিত্র।

অমুং সহাসপ্রহিতেক্ষণানি ব্যাজার্দ্ধসন্দর্শিতমেখলানি ।
নালং বিকর্ত্তুং জনিতেন্দ্রশঙ্কং সুরাঙ্গনাবিভ্রমচেষ্টিতানি ॥৪২

৪২ অঃ। সহাসপ্রহিতেক্ষণানি ব্যাজার্দ্ধসন্দর্শিতমেখলানি সুরাঙ্গনাবিভ্রমচেষ্টিতানি জনিতেন্দ্রশঙ্কম্ অমুং বিকর্ত্তুং ন অলং (বভূবুঃ) ॥ বাচ্য—জনিতেন্দ্রশঙ্কম্ অমুং ব্যাজার্দ্ধসন্দর্শিতমেখলৈঃ সহাসপ্রহিতেক্ষণৈঃ সুরাঙ্গনাবিভ্রমচেষ্টিতৈঃ বিকর্ত্তুং নালং (ভূয়তে) ॥

৪২। জনিতেন্দ্রশঙ্কং তপসেতি শেষঃ। অমুং সুতীক্ষ্ণং সহাসং প্রহিতানি ঈক্ষণানি দৃষ্টয়ো যেষু তানি, ব্যাজেন কেনচিন্মিষেণ। 'পুংস্যর্দ্ধোঽর্দ্ধং সমেঽংশকে' ইতি বিশ্বঃ। অর্দ্ধম্ ঈষৎ সন্দর্শিতা মেখলা যেষু তানি সুরাঙ্গনানাম্ ইন্দ্রপ্রেষিতানাং বিভ্রমা বিলাসা এব চেষ্টিতানি বিকর্ত্তুং স্খলয়িতুমলং সমর্থানি ন বভূবুরিতি শেষঃ ॥

४२। ইঁহার তপস্যাদর্শনে শঙ্কিত হইয়া তপোভঙ্গের জন্য সুররাজ ইন্দ্র অপ্সরা-গণকে প্রেরণ করেন, কিন্তু উঁহাদের হাস্যযুক্ত কটাক্ষপাত ও ছলক্রমে বস্ত্রান্তর্গত মেখলাদামপ্রদর্শন প্রভৃতি বিলাসচেষ্টা ইঁহার যোগভঙ্গ করিতে সমর্থ হয় নাই।

**एषोऽक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावम्।**
**सभाजने मे भुजमूर्द्ध्ववाहुः सव्येतरं प्राध्वमितः प्रयुङ्क्ते॥ ४३**

४३ अ:। ऊर्द्ध्ववाहुः एषः अक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावं सव्येतरं भुजं मे सभाजने इतः प्राध्वं प्रयुङ्क्ते॥ वाच्य—ऊर्द्ध्ववाहुना एतेन अक्षमालावलयः कण्डूयिता कुशसूचि-लावः सव्येतरः भुजः प्रयुज्यते॥

४३। ऊर्द्ध्ववाहुः एषः सुतीक्ष्णः अक्षमालैव वलयं यस्य तं मृगाणां कण्डूयितारं, कुशा एव सूचयस्ता लुनातीति कुशसूचिलावः तम्। 'कर्मण्यण्' इत्यण्। एभिर्विशेषणैः जपशीलत्वं भूतदया कर्म्मक्षमत्वञ्च द्योत्यते। सव्यादितरं दक्षिणं भुजं मे मम सभाजने सम्माननिमित्ते। 'निमित्तात् कर्म्मयोगे' इति सप्तमी। इतः प्राध्वं प्रह्वतानुकूलवन्धं प्रयुङ्क्ते। 'आनुकूल्यार्थकं प्राध्वम्' इत्यमरः। अव्ययञ्चैतत्॥

४৩। ঐ দেখ, ঐ ঊর্দ্ধবাহু তপস্বীর যে হস্তদ্বারা মৃগগণের কণ্ডূয়ন এবং কুশচ্ছেদন ব্যাপার সম্পাদিত হয়, অক্ষমালাবলয়ধারী সেই দক্ষিণহস্ত আমার প্রতি সম্মানপ্রদর্শন জন্য এইদিকে প্রযুক্ত হইতেছে।

**वाचंयमत्वात् प्रणतिं ममैष कम्पेन किञ्चित् प्रतिगृह्य मूर्ध्नः।**
**दृष्टिं विमानव्यवधानमुक्तां पुनः सहस्रार्चिषि सन्निधत्ते॥ ४४**

४४ अ:। एषः वाचंयमत्वात् मम प्रणतिं किञ्चित् मूर्ध्नः कम्पेन प्रतिगृह्य विमानव्यवधानमुक्तां दृष्टिं पुनः सहस्रार्चिषि सन्निधत्ते॥ वाच्य—एतेन विमानव्यवधानमुक्ता दृष्टिः सन्निधीयते॥

४४। एष सुतीक्ष्णः। वाचं यच्छतीति वाचंयमो मौनव्रती। 'वाचि यमो व्रते' इति खच्प्रत्ययः 'वाचंयमपुरन्दरौ च' इति मुम्। तस्य भावः तस्मात् मम प्रणतिं किञ्चिन्मूर्ध्नः कम्पेन प्रतिगृह्य विमानेन व्यवधानं तिरोधानं तस्मान्मुक्ताम्। 'अपेतापोढमुक्तपतित'—इत्यादिना पञ्चमीसमासः। दृष्टिं पुनः सहस्रार्चिषि सूर्य्ये सन्निधत्ते। सम्यग् धत्त इत्यर्थः। अन्यथा अकर्म्मकत्वप्रसङ्गात्॥

৪৪। ঐ মুনি মৌনব্রতী বলিয়া ঈষৎ মস্তককম্পন দ্বারা আমার প্রণাম গ্রহণ করিয়া বিমান-ব্যবধান নির্ম্মুক্ত স্বীয় দৃষ্টি পুনরায় সূর্য্যমণ্ডলে ন্যস্ত করিতেছেন।

**अदः शरण्यं शरभङ्गनाम्न-**
**स्तपोवनं पावनमाहिताग्नेः।**

चिराय सन्तर्प्य समिद्भिरग्निं
यो मन्त्रपूतां तनुमप्यहौषीत् ॥ ४५

४५ अ: । आहिताग्नेः शरभङ्गनाम्नः मुनेः अदः शरण्यं पावनं तपोवनं, यः (शरभङ्गः) चिराय अग्निं समिद्भिः सन्तर्प्य मन्त्रपूतां तनुम् अपि अहौषीत् ॥ वाच्य—अमुना शरण्येन पावनेन तपोवनेन (भूयते) ; येन मन्त्रपूता तनुः अहावि ॥

४५ । शरणे रक्षणे साधु शरण्यम् । पावयतीति पावनम् । अदो दृश्यमानं तपोवनम् आहिताग्नेः शरभङ्गनाम्नो मुनेः सम्बन्धि । यः शरभङ्ग-श्चिराय अग्निं समिद्भिः सन्तर्प्य तर्पयित्वा ततो मन्त्रैः पूतां शुद्धां तनुमपि अहौषीत् हुतवान् । जुहोतेर्लुङ् ॥

৪৫ । ঐ দেখ, সাগ্নিক শরভঙ্গ নামক মুনির শরণ্য পূত তপোবন দৃষ্টিগোচর হইতেছে ; ইনি বহুকাল সমিধদ্বারা হুতাশনের তৃপ্তিসাধন করিয়া সেই হুতাশনেই স্বীয় মন্ত্রপূত শরীরকেও আহুতি প্রদান করিয়াছেন।

छायाविनीताध्वपरिश्रमेषु भूयिष्ठसम्भाव्यफलेष्वमीषु ।
तस्यातिथीनामधुना सपर्य्या स्थिता सुपुत्रेष्विव पादपेषु ॥ ४६

४६ अ: । अधुना तस्य अतिथीनां सपर्य्या छायाविनीताध्वपरिश्रमेषु भूयिष्ठसम्भाव्यफलेषु अमीषु पादपेषु सुपुत्रेषु इव स्थिता ॥ वाच्य—सपर्य्यया स्थितया (भूयते) ॥

४६ । अधुना अस्मिन् काले तस्य शरभङ्गस्य सम्बन्धिनी अतिथीनां सपर्य्या अतिथिपूजा । पूजा नमस्यापचितिः सपर्य्यार्च्चार्हणाः समा इत्यमरः । छायाभिः विनीतः अपनीतः अध्वपरिश्रमो यैस्तेषु भूयिष्ठानि बहुतमानि सम्भाव्यानि श्लाघ्यानि फलानि येषां तेषु अमीषु पादपेषु आश्रमवृक्षेषु सुपुत्रेषु इव स्थिता । तत्पुत्रैरिव पादपैः अनुष्ठीयत इत्यर्थः ॥

৪৬ । অদ্যাপি সেই শরভঙ্গ ঋষির বহুফলশালী আশ্রমতরুসকল ছায়াদানে অতিথি-গণের পথশ্রম অপনোদন এবং ফলদানে তৃপ্তিসাধন প্রভৃতি শুশ্রূষাদ্বারা যেন তাঁহার পুত্রের ন্যায় কার্য্য করিতেছে।

धारास्वनोद्गारिदरीमुखोऽसौ शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः ।
बध्नाति मे बन्धुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ॥ ४७

४७ अ: । (हे) बन्धुरगात्रि ! धारास्वनोद्गारिदरीमुखः शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः असौ चित्रकूटः दृप्तः ककुद्मान् इव मे चक्षुः बध्नाति ॥ वाच्य—धारास्वनोद्गारिदरीमुखेण शृङ्गाग्रलग्नाम्बुदवप्रपङ्केण अमुना चित्रकूटेन दृप्तेन ककुद्मता इव बध्यते ॥

४७ । धारा निर्झरधाराः । यद्वा धारया सातत्येन स्वनोद्गारि दरी एव मुखं यस्य सः, शृङ्गं शिखरं विषाणञ्च, यस्याग्रे लग्नः अम्बुद एव वप्रपङ्को वप्रक्रीड़ासक्तपङ्को यस्य सः, असौ चित्रकूटः हे बन्धुरगात्रि ! उन्नतानताङ्गि ! 'बन्धुरं तून्नतानतम्' इत्यमरः । दृप्तः ककुद्मान् वृषभ इव मे चक्षुर्यम्भाति न मन्यासक्तं करोति ॥

४१ । যাহার কন্দররূপমুখে নিপতিত নির্ঝরধারাধ্বনিরূপ রব শ্রুত হইতেছে, শিখররূপ বিষাণের অগ্রভাগ জলধররূপ বপ্রক্রীড়ার কর্দম সংলগ্ন রহিয়াছে ; হে বন্ধুরগাত্রি ! ঐ দেখ, চিত্রকূটপর্ব্বত গর্ব্বিত বৃষভের ন্যায় আমার দৃষ্টি আকৃষ্ট করিতেছে ।

एषा प्रसन्नस्तिमितप्रवाहा
सरिद्विदूरान्तरभावतन्वी ।
मन्दाकिनी भाति नगोपकण्ठे
मुक्तावली कण्ठगतेव भूमेः ॥ ४८

४८ अः । प्रसन्नस्तिमितप्रवाहा विदूरान्तरभावतन्वी मन्दाकिनी ( नाम ) एषा सरित् नगोपकण्ठे भूमेः कण्ठगता मुक्तावली इव भाति ॥ वाच्य—प्रसन्नस्तिमितप्रवाहया विदूरान्तरभावतन्व्या मन्दाकिन्या एतया सरिता कण्ठगतया मुक्तावल्या इव भाव्यते ॥

४८ । प्रसन्नो निर्म्मलः स्तिमितो निःस्पन्दः प्रवाहो यस्याः सा विदूरस्य अन्तरस्य मध्यवर्त्त्यवकाशस्य भावात् तन्वी दूरदेशवर्त्तित्वात् तनुत्वेनावभासमाना मन्दाकिनी नाम काचित् चित्रकूटनिकटगा एषा सरित् नगोपकण्ठे भूमेः कण्ठगता मुक्तावलीव भाति । अत्र नगस्य शिरस्त्वं तदुपकण्ठस्य कण्ठत्वञ्च गम्यते ॥

৪৮ । ঐ দেখ, স্বচ্ছজলা ও স্থিরপ্রবাহা সুরসরিৎ মন্দাকিনী, চিত্রকূটসন্নিহিত ভূমির কণ্ঠলগ্ন মুক্তামালার ন্যায় শোভা পাইতেছেন ; এবং অতি দূরবর্ত্তী বলিয়া উহা অতি সূক্ষ্মের ন্যায় পরিলক্ষিত হইতেছে ।

अयं सुजातोऽनुगिरं तमालः प्रवालमादाय सुगन्धि यस्य ।
यवाङ्कुरापाण्डुकपोलशोभी मयावतंसः परिकल्पितस्ते ॥४९

४९ अः । अनुगिरम् अयं सुजातः तमालः ( दृश्यते ) यस्य सुगन्धि प्रवालम् आदाय मया ते यवाङ्कुरापाण्डुकपोलशोभी अवतंसः परिकल्पितः ॥ वाच्य—सुजातम् इमं तमालं ( पश्यति ) । यवाङ्कुरापाण्डुकपोलशोभिनम् अवतंसम् अहं कल्पितवान् ॥

४९ । गिरेः समीपेऽनुगिरम् । 'गिरेश्च सेनकस्य' इति समासान्तष्टच्प्रत्ययः । सुजातः स तमालोऽयं दृश्यते । यस्य तमालस्य शोभनो

गन्धो यस्य तत् सुगन्धि। 'गन्धस्य—'इत्यादिनेकार: समासान्त:। प्रवालं पल्लवमादाय मया ते यवाङ्कुरवदापाण्डौ कपोले शोभते य: सोऽवतंस: परिकल्पित:॥

৪৯। ঐ চিত্রকূটের নিকট অত্যুত্তম তমালতরু নিরীক্ষিত হইতেছে, উহার সুগন্ধি পল্লব লইয়া আমি তোমার যবাঙ্কুরের ন্যায় ধবলকান্ত কপোলদেশে কর্ণভূষণ অর্পণ করিয়াছিলাম।

अनिग्रहत्रासविनीतसत्वमपुष्पलिङ्गात् फलबन्धिवृक्षम्।
वनं तप:साधनमेतदत्रेराविष्कृतोदग्रतरप्रभावम्॥ ५०

५०। अनिग्रहत्रासविनीतसत्वम् अपुष्पलिङ्गात् फलबन्धिवृक्षम् आविष्कृतोदग्रतरप्रभावम् अत्रे: तप:साधनम् एतत् वनम्॥ वाच्य—अनिग्रहत्रासविनीतसत्त्वेन फलबन्धिवृक्षेण आविष्कृतोदग्रतरप्रभावेण तप:साधनेन एतेन वनेन (भूयते)॥

५०। अनिग्रहत्रासा दण्डभयरहिता अपि विनीता: सत्त्वा जन्तवो यस्मिंस्तत्। अपुष्पलिङ्गात् पुष्परूपनिमित्तं विनैव फलबन्धिन: फलग्राहिणो वृक्षा यस्मिंस्तत्। अतएवाविष्कृतोदग्रतरप्रभावं अत्रेर्मुनेस्तपस: साधनं वनमेतत्॥

৫০। ঐ দেখ, অত্রিমুনির প্রভূতপ্রভাবসম্পন্ন তপোবন, অত্রত্য জন্তুগণ দণ্ডভয়-বিরহিত হইয়াও শান্তভাব ধারণ করিয়াছে এবং এখানকার তরুসকল পুষ্পোদ্গম ব্যতিরেকেও ফল প্রসব করিয়া থাকে।

अत्राभिषेकाय तपोधनानां
सप्तर्षिहस्तोद्धृतहेमपद्माम्।
प्रवर्त्तयामास किलानसूया
त्रिस्रोतसं त्र्यम्बकमौलिमालाम्॥ ५१

५१ अ:। अत्र अनसूया सप्तर्षिहस्तोद्धृतहेमपद्मां त्र्यम्बकमौलिमालां त्रिस्रोतसं तपोधनानाम् अभिषेकाय प्रवर्त्तयामास किल॥ वाच्य—अनसूयया सप्तर्षिहस्तोद्धृतहेमपद्मा त्र्यम्बकमौलिमाला त्रिस्रोता: प्रवर्त्तयामासे॥

५१। अत्र वने अनसूया अत्रिपत्नी। सप्त च ते ऋषयश्च सप्तर्षय:। 'दिक्संख्ये संज्ञायाम्' इति तत्पुरुषसमास:। तेषां हस्तै: उद्धृतानि हेमपद्मानि यस्यास्तां त्र्यम्बकमौलिमालां हरशिर:स्रजं त्रिस्रोतसं भागीरथीं तपोधनानाम् ऋषीणामभिषेकाय स्नानाय प्रवर्तयामास प्रवाहयामास। किलेति ऐतिह्ये॥

৫১। সপ্তর্ষিগণ স্বহস্তে যাহার কনককমল উত্তোলন করেন এবং যিনি শঙ্করের শিরোমালাস্বরূপ; অত্রিপত্নী অনসূয়া মুনিগণের অভিষেক সাধনজন্য সেই মন্দাকিনীকে এইখানেই প্রবাহিত করিয়াছিলেন।

वीरासनैर्ध्यानजुषामृषीणा-
ममी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति
योगाधिरूढ़ा इव शाखिनोऽपि ॥ ५२

५२ अ: । वीरासनैः ध्यानजुषाम् ऋषीणां समध्यासितवेदिमध्या अमी शाखिनः अपि निवात-निष्कम्पतया योगाधिरूढ़ाः इव विभान्ति ॥ वाच्य—समध्यासितवेदिमध्यैः योगाधिरूढ़ैरिव अमीभिः शाखिभिः विभायते ॥

५२ । वीरासनैर्जयसाधनैः । ध्यानं जुषन्ते सेवन्त इति ध्यानजुषः तेषां तैरुपविश्य ध्यायतामृषीणां सम्बन्धिनः समध्यासितवेदिमध्याः । इदं वीरासनस्थानीयम् । अमी शाखिनः अपि निवातनिष्कम्पतया योगाधिरूढ़ा इव ध्यानभाज इव । ध्यायन्तः अपि निश्चलाङ्गा भवन्ति । वीरासने वशिष्ठः —'एकपादमथैकस्मिन् विन्यस्योरुणि संस्थितम् । इतरस्मिंस्तथा चान्यं वीरासनमुदाहृतम् ॥' इति ॥

৫২। ঐ দেখ, বীরাসন বন্ধনপূর্ব্বক ঋষিগণ ধ্যানপরায়ণ হইয়া রহিয়াছেন, উঁহা-দিগের অধ্যুষিত বেদীমধ্যস্থিত বৃক্ষগণও যেন বায়ুর অভাবে স্থিরভাব অবলম্বন করিয়া যোগারূঢ় মুনিগণের ন্যায় শোভা পাইতেছে।

त्वया पुरस्तादुपयाचितो यः
सोऽयं वटः श्याम इति प्रतीतः ।
राशिर्मणीनामिव गारुड़ानां
सपद्मरागः फलितो विभाति ॥ ५३

५३ अ: । त्वया पुरस्तात् यः उपयाचितः, श्याम इति प्रतीतः सः अयं वटः फलितः ( सन् ) सपद्मरागः गारुड़ानां मणीनां राशिः इव विभाति ॥ वाच्य—त्वं यम् उपयाचितवती । श्यामेन इति प्रतीतेन तेन वटेन अनेन फलितेन ( सता ) सपद्मरागेण राशिनेव विभायते ॥

५३ । त्वया पुरस्तात् पूर्वं य उपयाचितः प्रार्थितः । तथाच रामायणे —'न्यग्रोधं तमुपस्थाय वैदेही वाक्यमब्रवीत् । नमस्तेऽस्तु महावृक्ष पारयेन्मे व्रतं पतिः ॥' इति । श्याम इति प्रतीतः स वटोऽयं फलितः सन् सपद्म-रागो गारुड़ानां मणीनां मरकतानां राशिरिव विभाति ॥

৫৩। হে প্রিয়ে! পূর্ব্বে তুমি যাঁহার নিকট স্বীয় অভীষ্টসিদ্ধির জন্য প্রার্থনা করিয়াছিলে, ঐ দেখ, সেই প্রথিত শ্যামবট দৃষ্টিগোচর হইতেছে; এই তরুবর ফলিত হওয়ায় পদ্মরাগসহকৃত বিষধরগণের নীলকান্তমণিশ্রেণীর ন্যায় শোভা পাইতেছে।

क्वचित् प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव ॥ ५४

५४ अः। क्वचित् प्रभालेपिभिः इन्द्रनीलैः अनुविद्धा मुक्तामयी यष्टिः इव। अन्यत्र इन्दीवरैः उत्खचितान्तरा सितपङ्कजानां माला इव ॥ वाच्य—अनुविद्धया मुक्तामय्या यष्ट्या इव, उत्खचितान्तरया मालया इव विभायते ॥

५४। 'क्वचित्—'इत्यादिभिश्चतुर्भिः श्लोकैः प्रयागे गङ्गायमुनासङ्गमं वर्णयति—क्वचिदिति। हे अनवद्याङ्गि! यमुनातरङ्गैर्भिन्नप्रवाहा व्यामिश्रीघा गङ्गा जाह्नवी विभाति, त्वं पश्य। केव, क्वचित् प्रदेशे प्रभया लिम्पन्ति सन्निहितमिति प्रभालेपिभिरिन्द्रनीलैरनुविद्धा, सह गुम्फिता मुक्तामयी यष्टिरिव हारावलिरिव विभाति। अन्यत्र प्रदेशे इन्दीवरैर्नीलोत्पलैरुत्खचितान्तरा सह ग्रथिता सितपङ्कजानां पुण्डरीकाणां मालेव विभातीति सर्वत्र सम्बन्धः ॥

क्वचित् खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥ ५५

५५ अः। क्वचित् कादम्बसंसर्गवती प्रियमानसानां खगानां पङ्क्तिः इव। अन्यत्र कालागुरुदत्तपत्रा भुवः चन्दनकल्पिता भक्तिः इव ॥ वाच्य—कादम्बसंसर्गवत्या पङ्क्त्या इव, कालागुरुदत्तपत्रया चन्दनकल्पितया भक्त्या इव ॥

५५। क्वचित् कादम्बसंसर्गवती नीलहंससंसृष्टा प्रियं मानसं नाम सरो येषां तेषां खगानां राजहंसानां पङ्क्तिरिव। 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः। अन्यत्र कालगुरुणा दत्तपत्रा रचितमकरिका भुवश्चन्दनकल्पिता भक्तिरिव ॥

क्वचित् प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥ ५६

५६ अः। क्वचित् छायाविलीनैः तमोभिः शबलीकृता चान्द्रमसी प्रभा इव। अन्यत्र रन्ध्रेषु आलक्ष्यनभःप्रदेशा शुभ्रा शरदभ्रलेखा इव ॥ वाच्य—शबलीकृतया चान्द्रमस्या प्रभ इव। आलक्ष्यनभःप्रदेशया, शुभ्रया शरदभ्रलेखया इव (विभायते) ॥

५६। क्वचित् छायासु विलीनैः स्थितैस्तमोभिः शबलीकृता कर्बुरी-

रता चान्द्रमसी प्रभा चन्द्रिकेव। अन्यत्र रन्ध्रे आलक्ष्यनभःप्रदेशा शुभ्रा शरदभ्रलेखा शरन्मेघपङ्क्तिरिव॥

क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य।
पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः॥५७

५७ अ:। क्वचित् कृष्णोरगभूषणा भस्माङ्गरागा ईश्वरस्य तनुः इव। यमुनातरङ्गैः भिन्नप्रवाहा गङ्गा विभाति, (हे) अनवद्याङ्गि! (त्वम्) पश्य॥ वाच्य—कृष्णोरगभूषणया भस्माङ्गरागया तन्वा इव, भिन्नप्रवाहया गङ्गया विभायते। त्वया दृश्यताम्॥

५७। क्वचित् कृष्णोरगभूषणा भस्माङ्गरागा ईश्वरस्य तनुरिव विभाति। शेषो व्याख्यातः। कलापकम्।

৫৪—৫৭। হে অনিন্দিতগাত্রি! দেখ দেখ, গঙ্গাপ্রবাহ যমুনা তরঙ্গে সঙ্গত হইয়া—কোথাও সমুজ্জ্বল ইন্দ্রনীলমণিদ্বারা গ্রথিত মুক্তাহারের ন্যায় কোথাও বা নীলোৎপলে খচিত শ্বেতকমলমালার ন্যায়; কোনস্থলে নীলহংসপংক্তিসমন্বিত মানসপ্রিয় রাজহংসশ্রেণীর ন্যায়, অন্য কোনস্থলে কালাগুরুরচিত পত্রাবলী সহিত ভূমির ভক্তি-চন্দনতিলকরচনার ন্যায়; কোনস্থানে ছায়াশ্রিত অন্ধকারে শবলীকৃত জ্যোৎস্নার ন্যায়, কোথাও বা স্থানে স্থানে নীল নভোমণ্ডলদর্শিনী শারদীয় বিমল মেঘমালার ন্যায়; আবার কোনও স্থানে যেন কৃষ্ণভুজঙ্গভূষিত ভস্মরাগলিপ্ত ভগবান্ ভূপতির তনুর ন্যায় শোভা পাইতেছে।

समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात्।
तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः॥५८

५८ अ:। अत्र समुद्रपत्न्योः जलसन्निपाते अभिषेकात् पूतात्मनां तनुत्यजां तत्त्वावबोधेन विना अपि भूयः शरीरबन्धः नास्ति किल॥ वाच्य—शरीरबन्धेन न भूयते॥

५८। अत्र समुद्रपत्न्योर्गङ्गायमुनयोर्जलसन्निपाते सङ्गमेऽभिषेकात् स्नानात् पूतात्मनां तनुत्यजां शुद्धात्मनां तत्त्वावबोधेन तत्त्वज्ञानेन विनापि प्रारब्धशरीरत्यागानन्तरं भूयः पुनः शरीरबन्धः शरीरयोगो नास्ति किल। अन्यत्र ज्ञानादेव मुक्तिः। अत्र तु स्नानादेव मुक्तिरित्यर्थः॥

যাঁহারা এই সমুদ্রপত্নী গঙ্গা ও যমুনার সঙ্গমস্থলে অবগাহনপূর্ব্বক তনুত্যাগ করেন, সেই পূতাত্মাদিগের তত্ত্বজ্ঞানভিন্নই পুনর্জ্জন্ম নিবৃত্তি হইয়া থাকে।

पुरं निषादाधिपतेरिदं तद्-
यस्मिन् मया मौलमणिं विहाय।
जटासु बद्धास्वरुदत् सुमन्त्रः
कैकेयि कामाः फलितास्तवेति॥ ५९

५९ अ: । निषादाधिपते: तत् पुरम् इदं, यस्मिन् मया मौलिमणिं विहाय जटासु बद्धासु (सतीषु) सुमन्त्र: । (हे) कैकेयि ! तव कामा: फलिता: इति अरुदत् ॥ वाच्य—तेन पुरेण अनेन (भूयते), सुमन्त्रेण च । कामै: फलितै: (अभूयत) इति अरुद्यत ॥

५९ । निषादाधिपतेर्गुहस्य तत् पुरमिदम् । यस्मिन् पुरे मया मौलिमणिं विहाय जटासु बद्धासु रचितासु सतीषु सुमन्त्र: 'हे कैकेयि ! तव कामा मनोरथा: फलिता: सफला जाता:' इत्यरुदत् । 'रुदिर् अश्रुविमोचने' इति धातोर्लङ् ॥

৫৯। আমি যেখানে মস্তকমণি পরিত্যাগপূর্ব্বক জটাবন্ধন করিলে সারথি সুমন্ত্র রোদন করিতে করিতে বলিয়াছিলেন,—"হা কৈকেয়ি ! তোমার মনোরথ সিদ্ধ হইল" ঐ সেই নিষাদাধিপতি গুহের নগর দৃষ্ট হইতেছে ।

पयोधरै: पुण्यजनाङ्गनानां निर्विष्टहेमाम्बुजरेणु यस्या: ।
ब्राह्मं सर: कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति ॥ ६०

६० अ: । आप्तवाच: बुद्धे: अव्यक्तम् इव पुण्यजनाङ्गनानां पयोधरै: निर्विष्टहेमाम्बुजरेणु ब्राह्मं सर:, यस्या: कारणम् उदाहरन्ति ॥ वाच्य—आप्तवाग्भि: उदाक्रियते ॥

६० । पुण्यजनाङ्गनानां यक्षस्त्रीणां पयोधरै: स्तनैर्निर्विष्ट उपभुक्तो हेमाम्बुजरेणुर्यस्य तत् । तत्र ता: क्रीडन्तीति व्यज्यते । ब्रह्मण इदं ब्राह्मम् । 'नस्तद्धिते' इति टिलोप: । ब्राह्मं सरो मानसाख्यं यस्या: सरय्वा: बुद्धेर्महत्तत्त्वस्य अव्यक्तं प्रधानमिव कारणम् । आप्तस्य वाच आप्तवाचो वेदा: । यद्वा बहुव्रीहिणा मुनय: । उदाहरन्ति प्रचक्षते ॥

जलानि या तीरनिखातयूपा वहत्ययोध्यामनु राजधानीम् ।
तुरङ्गमेधावभृतावतीर्णैरिक्ष्वाकुभि: पुण्यतरीकृतानि ॥ ६१

६१ अ: । तीरनिखातयूपा या तुरङ्गमेधावभृतावतीर्णै: इक्ष्वाकुभि: पुण्यतरीकृतानि जलानि अयोध्यां राजधानीम् अनु वहति ॥ वाच्य—तीरनिखातयूपया यया उह्यते ॥

६१ । यूप: संस्कृत: पशुबन्धनार्थो दारुविशेष: । तीरनिखातयूपा या सरयू: तुरङ्गमेधा अश्वमेधास्तेषु अवभृतार्थमेवावतीर्णैरवरूढै: इक्ष्वाकुभि: इक्ष्वाकुगोत्रापत्यै: पूर्वै: । तद्राजत्वादणो लुक् । पुण्यतरीकृतानि अतिशयेन पुण्यानि कृतानि जलानि अयोध्यां राजधानीं नगरीमनु समीपे । मया लक्षित-येत्यर्थ: । अनुशब्दस्य 'लक्षणेत्थम्भूत—' इत्यादिना कर्मप्रवचनीयत्वात् तद्योगे द्वितीया । वहति प्रापयति ॥

यां सैकतोत्सङ्गसुखोचितानां
प्राज्यै: पयोभि: परिवर्द्धितानाम् ।

सामान्यधात्रीमिव मानसं मे
सम्भावयत्युत्तरकोशलानाम् ॥६२

६२ अ: । यां मे मानसं ( कर्त्तृ ) सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्द्धितानाम् उत्तरकोशलानां सामान्यधात्रीम् इव सम्भावयति ॥ वाच्य—मानसेन या सामान्यधात्रीव सम्भाव्यते ॥

६२। यां सरयूं मे मानसं कर्त्तृ, सैकतं पुलिनम् तदेवोत्सङ्गः, तत्र यत् सुखं तत्रोचितानां, प्राज्यैः प्रभूतैः पयोभिः अम्बुभिः क्षीरैश्च । 'पयः क्षीरं पयोम्बु च' इत्यमरः । परिवर्द्धितानां पुष्टानाम् उत्तरकोशलानामुत्तरकोशलेश्वराणां सामान्यधात्रीं साधारणमातरमिव सम्भावयति 'धात्री जनन्यामलकी वसुमत्युपमातृषु' इति विश्वः ॥

सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता ।
दूरे वसन्तं शिशिरानिलैर्मां तरङ्गहस्तैरुपगूहतीव ॥ ६३

६३ अ: । मान्येन राज्ञा वियुक्ता सा इयं सरयूः मदीया जननी इव दूरे वसन्तं मां शिशिरानिलैः तरङ्गहस्तैः उपगूहति इव ॥ वाच्य—मान्यः स राजा मदीयां जननीम् इव ताम् इमां सरयूं वियुक्तवान् । यया वसन् अहम् उपगूह्ये ॥

६३। मदीया जननी कौसल्येव मान्येन पूज्येन तेन राज्ञा दशरथेन वियुक्ता सेयं सरयूः दूरे वसन्तं प्रोष्य आगच्छन्तमित्यर्थः, मां पुत्रभूतं शिशिरानिलैस्तरङ्गैरेव हस्तैः उपगूहतीव आलिङ्गतीव ॥

৬০—৬৩। প্রিয়ে! যাঁহার স্বর্ণকমলরেণু যক্ষরমণীগণের স্তনযুগলে সংলগ্ন হইয়া থাকে, প্রকৃতি যেরূপ মহত্তত্ত্বের কারণ, সেইরূপ মহর্ষিগণ মানসসরোবরকে যাঁহার উৎপত্তিস্থান বলিয়া থাকেন; যাঁহার তীরভূমিতে যজ্ঞীয় যূপসকল নিখাত রহিয়াছে, যাঁহার জলপ্রবাহ রাজধানী অযোধ্যার উপকণ্ঠ দিয়া প্রবাহিত, ইক্ষ্বাকুবংশীয়গণ অশ্বমেধান্তে অবভৃতস্নানের নিমিত্ত অবতরণ করিয়া যাঁহার জল সমধিক পবিত্র করিয়াছেন; অযোধ্যাবাসীরা যাঁহার সিকতাময় ক্রোড়দেশে অবস্থানপূর্ব্বক পরম সুখভোগ করিয়া যাঁহার প্রচুর পয়ঃপানে সংবর্দ্ধিত হইতেছেন, এবং আমার মতে যিনি সকলেরই ধাত্রীরূপে পরিগণিত; ঐ দেখ, মদীয় জননীর ন্যায় পূজ্যা সেই সরযূ রাজা দশরথ কর্ত্তৃক বিরহিত হইয়া বনবাস হইতে প্রতিনিবৃত্ত পুত্রের ন্যায় আমাকে সুশীতল সমীরণসম্পৃক্ত তরঙ্গরূপ করদ্বারা যেন আলিঙ্গন করিতেছেন।

विरक्तसन्ध्याकपिशं पुरस्ताद्यतो रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥६४

६४ अ: । विरक्तसन्ध्याकपिशं पार्थिवं रजः पुरस्तात् यतः उज्जिहीते ( ततः ) हनूमत्कथित-

प्रवृत्तिः भरतः ससैन्यः ( सन् ) मां प्रत्युद्गतः ( इति ) शङ्के ॥ वाच्य—विरक्तसन्ध्याकपिशेन पार्थिवेन रजसा उद्गम्यते।—...प्रवृत्तिना भरतेन ससैन्येन सता प्रत्युद्गतेन इति मया शङ्क्यते।

६४। विरक्ता अतिरिक्ता या सन्ध्या तद्वत् कपिशं ताम्रवर्णं पृथिव्या इदं पार्थिवं रजो धूलिः पुरस्तादग्रे यतो यस्मात् कारणादुज्जिहीते उद्गच्छति, तस्मात् हनूरस्यास्तीति हनूमान्। 'शवादीनाञ्च' इति दीर्घः। तेन कथिता प्रवृत्तिरस्मदागमनवार्त्ता यस्मै स भरतः ससैन्यः सन् मां प्रत्युद्गत इति शङ्के तर्कयामि। 'शङ्का भयवितर्कयोः' इति शब्दार्णवः। अत्र यत्तदोर्नित्यसम्बन्धात् तच्छब्दलाभः॥

৬৪। ঐ দেখ, সম্মুখে সূর্য্যকিরণরঞ্জিত সন্ধ্যাকালের ন্যায় কপিশবর্ণ পার্থিব ধূলিজাল উড্ডীন হইতেছে; ইহাতে মনে হয়, ভরত হনুমানের মুখে আমাদের আগমনবার্ত্তা বিদিত হইয়া সসৈন্যে আমাদিগের প্রত্যুদ্গমন করিতেছে।

अद्धा श्रियं पालितसङ्गराय
प्रत्यर्पयिष्यत्यनघां स साधुः।
हत्वा निवृत्ताय मृधे खरादीन्
संरक्षितां त्वामिव लक्ष्मणो मे ॥६५

६५ अः। साधुः सः (भरतः) पालितसङ्गराय मे अनघां संरक्षितां श्रियं, लक्ष्मणः खरादीन् हत्वा निवृत्ताय ( मे संरक्षिताम् अनघां ) त्वाम् इव प्रत्यर्पयिष्यति अद्धा॥ वाच्य—साधुना तेन अनघा श्रीः, लक्ष्मणेन संरक्षिता त्वमिव प्रत्यर्पयिष्यते॥

६५। किञ्च। साधुः सज्जनः, स भरतः। 'साधुर्वार्द्धुषिके चारौ सज्जने चापि वाच्यवत्' इति विश्वः। पालितसङ्गराय पालितपितृप्रतिज्ञाय मे मह्यमनघामदोषां भोगाभावादनुच्छिष्टां किन्तु संरक्षितां श्रियम्। मृधे युद्धे खरादीन् हत्वा निवृत्ताय मे लक्ष्मणः संरक्षितामनघां त्वामिव प्रत्यर्पयिष्यति अद्धा सत्यम्। 'सत्ये त्वद्धाञ्जसा द्वयम्' इत्यमरः॥

৬৫। আমি সমরে খরাদি রাক্ষসগণকে নিহত করিয়া প্রতিনিবৃত্ত হইলে, লক্ষ্মণ যেরূপ তোমাকে আমার করে প্রত্যর্পণ করিয়াছিল, তদ্রূপ ঐ সাধু ভরত সত্যসত্যই আমাকে পিতার আদেশপালনপূর্ব্বক প্রত্যাবৃত্ত দেখিয়া অনুচ্ছিষ্ট রাজ্যলক্ষ্মী প্রদান করিবে।

असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापितवाहिनीकः।
वृद्धैरमात्यैः सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति॥६६

६६ अः। पदातिः चीरवासाः असौ भरतः पश्चात् अवस्थापितवाहिनीकः ( सन् ) गुरुं पुरस्कृत्य वृद्धैः अमात्यैः सह अर्घ्यपाणिः ( सन् ) मां अभ्युपैति॥ वाच्य—अमुना पदातिना चीरवाससा भरतेन अवस्थापितवाहिनीकेन अर्घ्यपाणिना ( सता ) अहम् अभ्युपेये॥

६६। असौ पदातिः पादचारी चीरवासा वल्कलवसनो भरतः पश्चात् पृष्ठभागेऽवस्थापिता वाहिनी सेना येन स तथोक्तः तम्। 'तद्य् तश्च' इति कप्। गुरुं वशिष्ठं पुरस्कृत्य वृद्धैरमात्यैः सह अर्घ्यं पाणिः सन् मामभ्युपैति।

৬৬। ঐ দেখ, চীরধারী ভরত পশ্চাদ্ভাগে সৈন্যগণ সংস্থাপনপূর্ব্বক কুলগুরু বশিষ্ঠদেবকে অগ্রে করিয়া বৃদ্ধ অমাত্যগণসহ অর্ঘ্যহস্তে পাদচারে আগমন করিতেছে।

**पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्कगतामभोक्ता ।**

**इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ॥६७**

६७ अ:। यः पित्रा विसृष्टाम् अङ्कगताम् अपि श्रियं युवा (अपि) मदपेक्षया अभोक्ता ( सन् ) इयन्ति वर्षाणि तया (श्रिया स्त्रिया च) सह उग्रम् आसिधारं ( नाम ) व्रतम् अभ्यस्यति इव ॥ वाच्य— येन यूनापि अभोक्ता ( सता ) अभ्यस्यते ॥

६७। यो भरतः पित्रा विसृष्टां दत्ताम् अङ्कमुत्सङ्गं च गतामपि यां श्रियं युवापि मदपेक्षया मद्भक्त्या अभोक्ता सन्। 'न लोक—' इति षष्ठी-निषेधः। इयन्ति वर्षाणि एतावतो वत्सरान्। अत्यन्तसंयोगे द्वितीया। तया श्रिया सह। स्त्रियेति च गम्यते। उग्रं दुश्चरमासिधारं नाम व्रतमभ्यस्यतीव वर्त्तयतीव। 'युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत्। अन्तर्निवृत्तसङ्गः स्यादासिधारव्रतं हि तत्।' इति यादवः। इदञ्चासिधारा-चंक्रमणतुल्यत्वादासिधारव्रतमित्युक्तम्।

৬৭। ঐ ভারত যুবা হইয়াও পিতৃদত্ত অঙ্কগত রাজলক্ষ্মী আমার অপেক্ষায় উপভোগ না করিয়া এই চতুর্দ্দশ বৎসরকাল তাঁহার সহিত যেন অতি কঠোর আসিধার ব্রত পালন করিতেছে।

**एतावदुक्तवति दाशरथौ तदीया-**

**मिच्छां विमानमधिदेवतया विदित्वा ।**

**ज्योतिष्पथादवततार सविस्मयाभि-**

**रुद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः ६८**

६८ अ:। दाशरथौ एतावत् उक्तवति (सति) विमानं (कर्त्तृ) तदीयाम् इच्छाम् अधिदेवतया विदित्वा सविस्मयाभिः भरतानुगाभिः प्रकृतिभिः उद्वीक्षितं ( सत् ) ज्योतिष्पथात् अवततार ॥ वाच्य— विमानेन उद्वीक्षितेन अवतेरे ॥

६८। दाशरथौ रामे एतावदुक्तवति सति विमानं पुष्पकं कर्तृ, तदीयां रामसम्बन्धिनीमिच्छां अधिदेवतया मिषेण विदित्वा तत्प्रेरितं सदित्यर्थः। सविस्मयाभिर्भरतानुगाभिः प्रकृतिभिः प्रजाभिः उद्वीक्षितं सत् ज्योतिष्पथादाकाशादवततार ॥

৬৮। রাম এইরূপ বলিতেছেন, এমন সময় বিমান অধিদেবতাদ্বারা তাঁহার মনোভাব জানিতে পারিয়া আকাশপথ হইতে অবতরণ করিল; তৎকালে ভরতের অনুগামী প্রজাগণ ঊর্দ্ধমুখ হইয়া সবিস্ময়ে ঐ বিমান নিরীক্ষণ করিতে লাগিল।

तस्मात् पुरःसरविभीषणदर्शितेन
सेवाविचक्षणहरीश्वरदत्तहस्तः।
यानादवातरददूरमहीतलेन
मार्गेण भङ्गिरचितस्फटिकेन रामः॥६९

६९ अ:। रामः सेवाविचक्षणहरीश्वरदत्तहस्तः (सन्) पुरःसरविभीषणदर्शितेन अदूरमहीतलेन भङ्गिरचितस्फटिकेन मार्गेण तस्मात् यानात् अवातरत्॥ वाच्य—सेवाविचक्षणहरीश्वरदत्तहस्तेन रामेण अवातर्य्यत॥

६९। रामः सेवायां विचक्षणः कुशलो हरीश्वरः सुग्रीवस्तेन दत्तो हस्तो हस्तावलम्बो यस्य तादृशः सन्। स्थलज्ञत्वात् पुरःसरो विभीषणस्तेन दर्शितेन अदूरमासन्नं महीतलं यस्य तेन भङ्गिभिः विच्छित्तिभिः रचितस्फटिकेन सोपानपर्व्वणा मार्गेण तस्माद् यानात् पुष्पकादवातरत् अवतीर्णवान्, तरतेर्लङ्॥

৬৯। তখন রামচন্দ্র শুশ্রূষানিপুণ সুগ্রীবের করধারণ করিয়া সম্মুখবর্ত্তী বিভীষণ-প্রদর্শিত ভূতলসন্নিহিত মনোহরাকারে স্ফটিকরচিত সোপানপরম্পরাদ্বারা বিমান হইতে অবতরণ করিলেন।

इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य
स भ्रातरं भरतमर्घ्यपरिग्रहान्ते।
पर्य्यश्रुरस्वजत मूर्धनि चोपजघ्रौ
तद्भक्त्यपोढ़पितृराज्यमहाभिषेके॥७०

७० अ:। सः प्रयतः इक्ष्वाकुवंशगुरवे प्रणम्य अर्घ्यपरिग्रहान्ते पर्य्यश्रुः (सन्) भ्रातरं भरतम् अस्वजत तद्भक्त्यपोढ़पितृराज्यमहाभिषेके मूर्द्ध्नि उपजघ्रौ च। वाच्य—तेन प्रयतेन पर्य्यश्रुणा (रामेण) सभ्राता भरतः अस्वज्यत। उपजघ्रे॥

७०। प्रयतः स रामः इक्ष्वाकुवंशगुरवे वशिष्ठाय प्रणम्य नमस्कृत्य अर्घ्यस्य परिग्रहः स्वीकारस्तस्यान्ते पर्य्यश्रुः परिगतानन्दवाष्पः सन् भ्रातरं भरतमस्वजत आलिङ्गत। तस्मिन् रामे भक्त्या अपोढ़ः परिहृतः पितृराज्यमहाभिषेको येन तस्मिन् मूर्द्धनि उपजघ्रौ च। 'घ्रा गन्धोपादाने लिटि रूपम्॥

৭০। রাম ভূতলে অবতরণ করিয়া প্রথমে ইক্ষাকুকুলগুরু বশিষ্ঠকে প্রণাম

করিলেন; পরে ক্রমে ভরতপ্রদত্ত অর্ঘ্যগ্রহণ ও হর্ষাশ্রুনয়নে ভরতকে আলিঙ্গন করিয়া জ্যেষ্ঠের প্রতি ভক্তিভাববশতঃ রাজ্যাভিষেকে পরাঙ্মুখ ভরতের মস্তকাঘ্রাণ করিলেন।

श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च
प्लक्षान् प्ररोहजटिलानिव मन्त्रिवृद्धान्।
अन्वग्रहीत् प्रणमतः शुभदृष्टिपातै-
र्वार्त्तानुयोगमधुराक्षरया च वाचा ॥७१

७१ अ:। श्मश्रुप्रवृद्धिजनिताननविक्रियान् (अतएव) प्ररोहजटिलान् प्लक्षान् इव (स्थितान्) प्रणमतः मन्त्रिवृद्धान् च शुभदृष्टिपातैः वार्त्तानुयोगमधुराक्षरया वाचा च अन्वग्रहीत्॥ वाच्य—तेन श्मश्रुप्रवृद्धिजनिताननविक्रियाः प्ररोहजटिलाः प्लक्षाः प्रणमन्तः मन्त्रिवृद्धा अन्वगृह्यन्त।

७१। श्मश्रूणां मुखरोम्णां प्रवृद्धा संस्काराभावादतिवृद्ध्या जनिता आननेषु विक्रिया विकृतिर्येषां तान् अतएव प्ररोहैः शाखावलम्बिभिः अधोमुखैर्मूलैः जटिलान् जटावतः प्लक्षान् न्यग्रोधानिव स्थितान् प्रणमतो मन्त्रिवृद्धांश्च शुभैः कृपार्द्रैर्दृष्टिपातैः वार्त्तस्यानुयोगेन कुशलप्रश्नेन मधुराक्षरया वाचा चान्वग्रहीत् अनुग्रहीतवान्॥

৭১। রাম প্ররোহ-জটিল বটতরুর ন্যায় বর্দ্ধিতশ্মশ্রু বিকৃতানন প্রণত বৃদ্ধমন্ত্রিগণের প্রতি অনুকূলদৃষ্টিপাতপূর্ব্বক কুশলপ্রশ্ন ও মধুর সম্ভাষণাদিদ্বারা অনুগ্রহ প্রকাশ করিলেন।

दुर्जातबन्धुरयमृक्षहरीश्वरो मे
पौलस्त्य एष समरेषु पुरःप्रहर्त्ता।
इत्यादृतेन कथितौ रघुनन्दनेन
व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥७२

७२ अ:। 'अयं मे दुर्जातबन्धुः ऋक्षहरीश्वरः एष समरेषु पुरःप्रहर्त्ता पौलस्त्यः' इति आदृतेन रघुनन्दनेन कथितौ उभौ भरतः लक्ष्मणं व्युत्क्रम्य ववन्दे॥ वाच्य—अनेन दुर्जातबन्धुना ऋक्षहरीश्वरेण, एतेन प्रहर्त्रा पौलस्त्येन इति भरतेन ववन्दाते॥

७२। अयं मे दुर्जातबन्धुरापद्बन्धुः। 'दुर्जातं व्यसनं प्रोक्तम्' इति विश्वः। ऋक्षहरीश्वरः सुग्रीवः। एष समरेषु पुरःप्रहर्त्ता पौलस्त्यो विभीषणः। इत्यादृतेनादरवता। कर्त्तरि क्तः। रघूणां नन्दनेन रामेण कथितावुभौ विभीषणसुग्रीवौ लक्ष्मणमनुजमपि व्युत्क्रम्य आलिङ्गनादिभिरसम्भाव्य भरतो ववन्दे॥

৭২। "ভল্লুক ও বানরদিগের অধিপতি এই সুগ্রীব আমার বিপৎকালের পরম-

বন্ধু, আর পৌলস্ত্যনন্দন বিভীষণ সমরভূমিতে আমার সম্মুখে থাকিয়া যুদ্ধ করিয়াছিলেন" রাম এইরূপ পরিচয় প্রদান করিলে ভরত, লক্ষ্মণকে অতিক্রম করিয়া অগ্রে সুগ্রীব ও বিভীষণকে বন্দনা করিলেন।

सौमित्रिणा तदनु संससृजे स चैन-
मुत्थाप्य नम्रशिरसं भृशमालिलिङ्ग।
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन
क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ॥७३

७३ अ:। तदनु स: (भरत:) सौमित्रिणा संससृजे। नम्रशिरसम् एनम् उत्थाप्य रूढेन्द्रजित्प्रहरणव्रणकर्कशेन अस्य उर:स्थलेन भुजमध्यं क्लिश्यन् इव भृशम् आलिलिङ्ग च। वाच्य— सौमित्रि: तं संससृजे। तौ न क्लिश्यता नम्रशिरा: एष: आलिलिङ्गे।

७३। तदनु सुग्रीवादिवन्दनानन्तरं स भरतः सौमित्रिणा संससृजे सङ्गतः। 'सृज विसर्गे' दैवादिकात् कर्त्तरि लिट्। नम्रशिरसं प्रणतमेनं सौमित्रिमुत्थाप्य भृशं गाढ़मालिलिङ्ग च। किं कुर्वन्? रूढ़ेन्द्रजित्-प्रहरणव्रणैः कर्कशेन अस्य सौमित्रेरुरःस्थलेन भुजमध्यं स्वकीयं क्लिश्यन्निव पीड़यन्निव। क्लिश्नातिरयं सकर्म्मकः। 'क्लिश्नाति भुवनत्रयम्' इति दर्शनात्। ननु रामायणे -'ततो लक्ष्मणमासाद्य वैदेहीञ्च परन्तपः। अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत्॥' इति भरतस्य कनिष्ठं प्रतीयते। किमर्थं ज्यैष्ठमवलम्ब्य, आजंघेन श्लोको व्याख्यातः? सत्यम्। किन्तु रामायणश्लोकार्थः टीकाकृतोक्तः श्रूयताम्। ततो लक्ष्मणमासाद्य'—इत्यादि श्लोके आसादनं लक्ष्मणवैदेह्योः, अभिवादनन्तु वैदेह्या एव। अन्यथा पूर्वोक्तं भरतस्य ज्यैष्ठं विरुध्यत इति॥

৭৩। অনন্তর ভরত লক্ষ্মণসমীপে উপস্থিত হইলে লক্ষ্মণ তাঁহাকে প্রণাম করিলেন; ভরতও তাঁহাকে উত্থাপিত করিয়া ইন্দ্রজিৎপ্রহারজনিত ব্রণদ্বারা কর্কশ তদীয় বক্ষঃস্থল স্বীয় বক্ষঃস্থলদ্বারা গাঢ়তর নিপীড়নপূর্ব্বক আলিঙ্গন করিলেন।

रामाज्ञया हरिचमूपतयस्तदानीं
कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान्।
तेषु क्षरत्सु बहुधा मदवारिधाराः
शैलाधिरोहणसुखान्युपलेभिरे ते ॥७४

७४ अ:। तदानीं हरिचमूपतय: रामाज्ञया मनुष्यवपु: कृत्वा गजेन्द्रान् आरुरुहु:, बहुधा मदवारिधारा: क्षरत्सु तेषु ते शैलाधिरोहणसुखानि उपलेभिरे। वाच्य—हरिचमूपतिभि: गजेन्द्रा: आरुरुहिरे तै:॥

७४। तदानीं हरिचमूपतयो रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रान् आरुरुहुः। बहुधा मदवारिधाराः क्षरत्सु वर्षत्सु तेषु गजेन्द्रेषु ते कपियूथनाथाः शैलाधिरोहणसुखानि उपलेभिरेऽनुबभूवुः॥

৭৪। বানরসেনাপতি সুগ্রীব রামের আদেশে মনুষ্যশরীর ধারণ করিয়া হস্তিপৃষ্ঠে আরোহণ করিল, তৎকালে ঐ গজেন্দ্রগণের অত্যন্ত মদধারা ক্ষরিত হওয়ায় সুগ্রীব পর্ব্বতারোহণের সুখ অনুভব করিতে লাগিল।

सानुप्लवः प्रभुरपि क्षणदाचराणां
भेजे रथान् दशरथप्रभवानुशिष्टः।
मायाविकल्परचितैरपि ये तदीयै-
र्न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभाः॥७५

७५ अ:। सानुप्लवः क्षणदाचराणां प्रभुः अपि दशरथप्रभवानुशिष्टः (सन्) रथान् भेजे। ये (रथाः) मायाविकल्परचितैः अपि तदीयैः स्यन्दनैः तुलितकृत्रिमभक्तिशोभाः न (भवन्ति)॥ वाच्य— सानुप्लवेन प्रभुणापि दशरथप्रभवानुशिष्टेन रथाः भेजिरे। यैः तुलितकृत्रिमभक्तिशोभैः भूयते॥

७५। सानुप्लवः सानुगः। 'अभिसारस्त्वनुसरः सहायोऽनुप्लवोऽनुगः' इति यादवः। क्षणदाचराणां प्रभुर्विभीषणोऽपि प्रभवति अस्मादिति प्रभवो जनकः दशरथः प्रभवो यस्य स दशरथप्रभवो रामः तेनानुशिष्टः आज्ञप्तः सन् रथान् भेजे। तानेव विशिनष्टि—ये रथा मायाविकल्परचितैः सङ्कल्प-विशेषनिर्मितैरपि तदीयैः विभीषणीयैः स्यन्दनैः रथैः तुलितकृत्रिम-भक्तिशोभाः तुलिता समीकृता कृत्रिमा क्रियया निर्वृत्ता भक्तीनां शोभा येषां ते तथोक्ता न भवन्ति। तेऽपि तत्साम्यं न लभन्ते इत्यर्थः। कृत्रिमेत्यत्र 'ड्वितः क्त्रिः' इति क्त्रिप्रत्ययः। 'क्त्रेर्मम् नित्यम्' इति ममागमः॥

৭৫। রাক্ষসরাজ বিভীষণও দাশরথির আদেশে অনুচরগণসহ রথে আরোহণ করিলেন; তাঁহার রথ মায়াবিশেষদ্বারা রচিত হইলেও রচনাচাতুর্য্যে রামচন্দ্র-নির্দ্দিষ্ট রথের সাদৃশ্যলাভে সমর্থ হইল না।

भूयस्ततो रघुपतिर्विलसत्पताक-
मध्यास्त कामगति सावरजो विमानम्।
दोषातनं बुधबृहस्पतियोगदृश्य-
स्तारापतिस्तरलविद्युदिवाभ्रवृन्दम्॥७६

७६ अ:। ततः रघुपतिः सावरजः (सन्) विलसत्पताकं कामगति विमानं भूयः बुधबृहस्पति-योगदृश्यः तारापतिः दोषातनं तरलविद्युत् अभ्रवृन्दम् इव अध्यास्त॥ वाच्य—सावरजेन रघुपतिना बुधबृहस्पतियोगदृश्येन तारापतिना अध्यास्यत॥

৭৬ । ततो रघुपतिः सावरजो भरतलक्ष्मणसहितः सन्, विलसत्-पताकं कामेनेच्छानुसारेण गतिर्यस्य तद्विमानं भूयः पुनरपि बुधबृहस्पतिभ्यां योगेन दृश्यो दर्शनीयः तारापतिः चन्द्रो दोषातनम् "सायं चिरं प्राह्ण"— इत्यादिना दोषाशब्दात् अव्ययात् ट्यु प्रत्ययः तरलविद्युच्चञ्चलतड़िदभ्रवृन्द-मिव अध्यास्त अधिष्ठितवान् ।

৭৬। অনন্তর রাম, ভরত ও লক্ষ্মণসহ পতাকাপরিশোভিত এক কামগামী রথে পুনরায় আরোহণ করিলেন; তৎকালে বোধ হইল যেন তারাপতি চন্দ্র, বুধ ও বৃহস্পতির সহিত যোগহেতু চপলবিদ্যুৎসমন্বিত গগনমণ্ডলস্থিত রাত্রিকালীন জলদবৃন্দে আরোহণ করিতেছেন।

तत्रेश्वरेण जगतां प्रलयादिवोर्वीं
वर्षात्ययेन रुचमभ्रघनादिवेन्दोः ।
रामेण मैथिलसुतां दशकण्ठकृच्छ्रात्
प्रत्युद्धृतां धृतिमतीं भरतो ववन्दे ॥৭৭

৭৭ অ: । भरतः जगताम् ईश्वरेण प्रलयात् उर्वीम् इव वर्षात्ययेन अभ्रघनात् इन्दोः रुचम् इव रामेण दशकण्ठकृच्छ्रात् प्रत्युद्धृतां धृतिमतीं मैथिलसुतां ववन्दे ॥ वाच्य—उर्वीम् इव रुक् इव प्रत्युद्धृता धृतिमती मैथिलसुता भरतेन ववन्दे ॥

৭৭ । तत्र विमाने । जगतामीश्वरेण आदिवराहेण प्रलयादुर्वीमिव वर्षात्ययेन शरदागमेन अभ्रघनात् मेघसङ्घातादिन्दोः रुचं चन्द्रिकामिव रामेण दशकण्ठ एव कृच्छ्रं सङ्कटं तस्मात् प्रत्युद्धृतां धृतिमतीं सन्तोषवतीं मैथिल-सुतां सीतां भरतो ववन्द ॥

৭৭। প্রলয়কালে ভগবান্ হরি যেমন আদিবরাহরূপ ধারণপূর্ব্বক জলধিমগ্ন বসুন্ধরার উদ্ধার করিয়াছিলেন, শরৎকাল যেরূপ গাঢ়তর মেঘাবরণ উন্মোচন করিয়া জ্যোৎস্না প্রকাশিত করে, তদ্রূপ রামচন্দ্র রাক্ষসরূপ মহাসঙ্কট হইতে যে সীতাকে উদ্ধার করিয়াছিলেন; ভরত ধৈর্য্যশালিনী সেই সীতাদেবীকে প্রথমে প্রণাম করিলেন।

लङ्केश्वरप्रणतिभङ्गदृढव्रतं तद्-
वन्द्यं युगं चरणयोर्जनकात्मजायाः ।
ज्येष्ठानुवृत्तिजटिलञ्च शिरोऽस्य साधो-
रन्योन्यपावनमभूदुभयं समेत्य ॥৭৮

৭৮ অ: । लङ्केश्वरप्रणतिभङ्गदृढव्रतं वन्द्यं तत् जनकात्मजायाः चरणयोः युगं,—ज्येष्ठानुवृत्ति-

जटिलं साधोः अस्य (भरतस्य) शिरः च,—(इति) उभयं समेत्य अन्योन्यपावनम् अभूत्॥ वाच्य—लङ्केश्वरप्रणतिभङ्गदृढ़व्रतेन वन्द्येन तेन युगेन ज्येष्ठानुवृत्तिजटिलेन शिरसा, अन्योन्यपावनेन उभयेन अभावि॥

७८। लङ्केश्वरस्य रावणस्य प्रणतीनां भङ्गेन निरासेन दृढ़व्रतम् अखण्डितपातिव्रत्यम् अतएव वन्द्यं तत् जनकात्मजायाः चरणयोर्युगं ज्येष्ठानुवृत्त्या जटिलं जटायुक्तं साधोः सज्जनस्य अस्य भरतस्य शिरश्च इत्युभयं समेत्य मिलित्वा अन्योन्यस्य पावनं शोधकम् अभूत्॥

৭৮। যিনি দশাননের প্রণিপাতভঙ্গে দৃঢ়প্রতিজ্ঞ হইয়া স্বীয় পাতিব্রত্য অক্ষুণ্ণ রাখিয়াছিলেন, সেই সীতার চরণযুগল এবং অগ্রজের অনুবৃত্তি নিবন্ধন সদাশয় ভরতের মস্তক—এই উভয় একত্র মিলিত হইয়া পরস্পরকে পবিত্র করিল।

क्रोशार्द्धं प्रकृतिपुरःसरेण गत्वा
काकुत्स्थः स्तिमितजवेन पुष्पकेण।
शत्रुघ्नप्रतिविहितोपकार्य्यमार्य्यः
साकेतोपवनमुदारमध्युवास॥७९

इति श्रीमहाकविकालिदासकृतौ रघुवंशे महाकाव्ये दण्डकाप्रत्यागमनो नाम त्रयोदशः सर्गः॥१३

७९ अः। आर्य्यः काकुत्स्थः प्रकृतिपुरःसरेण स्तिमितजवेन पुष्पकेण क्रोशार्द्धं गत्वा शत्रुघ्नप्रतिविहितोपकार्य्यम् उदारं साकेतोपवनम् अध्युवास॥ वाच्य—आर्य्येण काकुत्स्थेन अध्यूषे॥

७९। आर्य्यः पूज्यः काकुत्स्थो रामः प्रकृतयः प्रजाः पुरःसराः यस्य तेन स्तिमितजवेन मन्दवेगेन पुष्पकेण, क्रोशोऽध्वपरिमाणविशेषः, क्रोशार्द्धं क्रोशैकदेशं गत्वा शत्रुघ्नेन प्रतिविहिताः सज्जिता उपकार्य्याः पटभवनानि यस्मिन् तदुदारं महत् साकेतस्य अयोध्याया उपवनमध्युवास अधितष्ठौ। 'साकेतः स्यादयोध्यायां कोशला नन्दिनी तथा' इति यादवः॥

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथसूरि-विरचितया सञ्जीवनी समाख्यया व्याख्यया समेतो महाकवि-श्रीकालिदासकृतौ रघुवंशे महाकाव्ये दण्डकाप्रत्यागमनो नाम त्रयोदशः सर्गः॥१३

৭৯। অনন্তর আর্য্য রামচন্দ্র প্রজাগণকে বিমানের অগ্রে রাখিয়া ধীরে ধীরে অর্দ্ধক্রোশ পথ গমনপূর্ব্বক স্বীয় রাজধানী অযোধ্যার মনোরম উপবনে শত্রুঘ্নবিরচিত পটমণ্ডপে অবস্থান করিতে লাগিলেন।

ত্রয়োদশ সর্গ সমাপ্ত॥ ১৩

## चतुर्दशः सर्गः ।

**भर्त्तुः प्रणाशादथ शोचनीयं दशान्तरं तत्र समं प्रपन्ने ।**
**अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरोर्व्रतत्यौ ॥१**

१ अः । अथ तत्र दाशरथी उपघ्नतरोः छेदात् व्रतत्यौ इव भर्त्तुः प्रणाशात् शोचनीयं दशान्तरं प्रपन्ने जनन्यौ समम् अपश्यताम् ॥ वाच्य—दाशरथिभ्याम् अदृश्येताम् ॥

सञ्जीवनं मैथिलकन्यकायाः सौन्दर्य्यसर्वस्वमहानिधानम् ।
शशाङ्कपङ्केरुहयोः समानं रामस्य वन्दे रमणीयमास्यम् ॥

१। अथ उपवनाधिष्ठानानन्तरं दाशरथी रामलक्ष्मणौ, उपघ्नतरोः आश्रयवृक्षस्य 'उपघ्न आश्रये' इति निपातः। छेदात् व्रतत्यौ लते इव, 'वल्ली तु व्रततिर्लता' इत्यमरः। भर्त्तुः दशरथस्य प्रणाशात् शोचनीयं दशान्तरम् अवस्थान्तरम्, 'अवस्थायां वस्त्रान्ते स्याद्दशापि' इति विश्वः। प्रपन्ने प्राप्ते जनन्यौ कौशल्यासुमित्रे तत्र साकेतोपवने समं युगपदपश्यताम्। दृशेः कर्त्तरि लङ् ॥

১। আশ্রয়তরু ছিন্ন হইলে লতা যেরূপ দুরবস্থা প্রাপ্ত হয়, রাম লক্ষ্মণ তদ্রূপ স্বামিবিনাশনিবন্ধন সাতিশয় শোচনীয় অবস্থাপন্ন জননী কৌশল্যা ও সুমিত্রাকে অযোধ্যার উপবনমধ্যে সন্দর্শন করিলেন।

**उभावुभाभ्यां प्रणतौ हतारी यथाक्रमं विक्रमशोभिनौ तौ ।**
**विस्पष्टमस्रान्धतया न दृष्टौ ज्ञातौ सुतस्पर्शसुखोपलम्भात् ॥२**

२ अः। यथाक्रमं प्रणतौ हतारी विक्रमशोभिनौ तौ उभौ उभाभ्याम् अस्रान्धतया विस्पष्टं न दृष्टौ, (किन्तु) सुतस्पर्शसुखोपलम्भात् ज्ञातौ ॥ वाच्य—उभे दृष्टवत्यौ। ज्ञातवत्यौ ॥

२। यथाक्रमं स्वस्वमातृपूर्वकं प्रणतौ नमस्कृतवन्तौ हतारी हतशत्रुकौ विक्रमशोभिनौ तौ उभौ रामलक्ष्मणौ उभाभ्यां मातृभ्याम् अस्रैः अश्रुभिः अन्धतया हेतुना, 'अस्रमश्रु च शोणितम्' इति यादवः। विस्पष्टं न दृष्टौ, किन्तु सुतस्पर्शेन यत् सुखं तस्य उपलम्भादनुभवाज्ज्ञातौ ॥

২। তখন নিহতবৈরী মহাবলপরাক্রম ভ্রাতৃদ্বয় যথাক্রমে উভয় জননীকেই প্রণাম করিলেন, কিন্তু বাষ্পভারে তাঁহারা অন্ধপ্রায় হওয়ায় স্পষ্টরূপে তাঁহাদিগকে দেখিতে পাইলেন না ; কেবল স্পর্শসুখদ্বারাই পুত্র বলিয়া জানিতে পারিলেন।

**आनन्दजः शोकजमश्रु बाष्पस्तयोरशीतं शिशिरो बिभेद ।**
**गङ्गासरय्वोर्जलमुष्णतप्तं हिमाद्रिनिस्यन्द इवावतीर्णः ॥३**

३ अ: । तयो: आनन्दज: शिशिर: बाष्प: उष्णतप्तं गङ्गासरय्वोर्जलम् अवतीर्णः हिमाद्रिनिस्यन्द: इव, शोकजम् अशीतम् अश्रु बिभेद ॥ वाच्य—आनन्दजेन शिशिरेण बाष्पेण अवतीर्णेन हिमाद्रिनिस्यन्देन इव बिभिदे ॥

३ । तयोः मात्रोः आनन्दजः शिशिरो बाष्पः शोकजम् अशीतमुष्णमश्रु उष्णतप्तं ग्रीष्मतप्तं गङ्गासरय्वोः जलं कर्म । अवतीर्णो हिमाद्रेः निस्यन्दो निर्झर इव बिभेद । आनन्देन शोकस्तिरस्कृत इत्यर्थः ॥

৩। হিমালয়ের নির্ঝরবারি নিপতিত হইলে যেমন জাহ্নবী ও সরযূর নিদাঘসন্তপ্ত জলরাশি সুশীতল হয়, তদ্রূপ সেই কৌশল্যা ও সুমিত্রার আনন্দজাত সুশীতল নয়নজল নির্গত হওয়ায় তাঁহাদের শোকাশ্রুর উষ্ণতা বিনষ্ট হইল।

**ते पुत्रयोर्नैर्ऋतशस्त्रमार्गानार्द्रानिवाङ्गे सदयं स्पृशन्त्यौ ।**
**अपीप्सितं क्षत्रकुलाङ्गनानां न वीरसूशब्दमकामयेताम् ॥४**

४ अ: । ते पुत्रयो: अङ्गे नैर्ऋतशस्त्रमार्गान् आर्द्रान् इव सदयं स्पृशन्त्यौ क्षत्रकुलाङ्गनानाम् ईप्सितम् अपि वीरसूशब्दं न अकामयेताम् ॥ वाच्य—स्पृशन्तीभ्यां ताभ्याम् ईप्सित: वीरसूशब्द: नाकाम्यत ॥

४ । ते मातरौ पुत्रयोः अङ्गे शरीरे नैर्ऋतशस्त्राणां राक्षसशस्त्राणां मार्गान् व्रणान् आर्द्रान् सरसानिव सदयं स्पृशन्त्यौ क्षत्रकुलाङ्गनानाम् ईप्सितमिष्टमपि वीरसूः वीरमातेति शब्दं न अकामयेताम् । वीरप्रसवो दुःखहेतुरिति भावः ।

৪। অনন্তর তাঁহারা সকরুণভাবে তনয়দ্বয়ের শরীরে রাক্ষসশস্ত্রজনিত ক্ষতচিহ্ন আর্দ্রবৎ স্পর্শ করিয়া ক্ষত্রিয়-কুলকামিনীগণের অভীপ্সিত "বীরপ্রসবিত্রী" শব্দের প্রতি সাতিশয় হতাদর হইলেন।

**क्लेशावहा भर्त्तुरलक्षणाहं सीतेति नाम स्वमुदीरयन्ती ।**
**स्वर्गप्रतिष्ठस्य गुरोर्महिष्यावभक्तिभेदेन वधूर्ववन्दे ॥५**

५ अ: । भर्त्तु: क्लेशावहा अलक्षणा अहं सीतेति स्वं नाम उदीरयन्ती स्वर्गप्रतिष्ठस्य गुरो: महिष्यौ वधू: अभक्तिभेदेन ववन्दे ॥ वाच्य—'क्लेशावहा अलक्षणा अहं सीता' इति उदीरयन्त्या वध्वा ववन्दाते ॥

५ । आवहति इति आवहा । भर्त्तुः क्लेशावहा क्लेशकारिणी, अतएव अलक्षणा अहं सीतेति स्वं नाम उदीरयन्ती स्वर्गः प्रतिष्ठा आस्पदं यस्य

तस्य स्वर्गस्थितस्य गुरोः श्वशुरस्य महिष्यौ श्वश्र्वौ वधूः स्नुषा 'वधूः स्नुषा वधूर्जाया' इत्यमरः। अभक्तिभेदेन ववन्दे। स्वर्गप्रतिष्ठस्य इत्यनेन श्वश्र्वोः वैधव्यदर्शनदुःखं सूचितम् ॥

उत्तिष्ठ वत्से ननु सानुजोऽसौ
वृत्तेन भर्त्ता शुचिना तवैव ।
कृच्छ्रं महत्तीर्ण इति प्रियार्हां
तामूचतुस्ते प्रियमप्यमिथ्या ॥६

६ अः। ते, 'ननु वत्से! उत्तिष्ठ; असौ सानुजः भर्त्ता तव एव शुचिना वृत्तेन महत् कृच्छ्रं तीर्णः' इति प्रियार्हां तां (वधूं) प्रियम् अपि अमिथ्या ऊचतुः॥ वाच्य—'उत्थीयतां (त्वया) सानुजेन असुना भर्त्रा तीर्णं इति ताभ्यां प्रियमप्यमिथ्या ऊचे ॥

६। ननु वत्से! उत्तिष्ठ असौ सानुजो भर्त्ता तवैव शुचिना वृत्तेन महत् कृच्छ्रं दुःखं तीर्णः तीर्णवान् इति प्रियार्हां तां वधूं प्रियमपि अमिथ्या सत्यं ते श्वश्र्वौ ऊचतुः। उभयं दुर्वचमिति भावः।

৫—৬। তদনন্তর বধূ বিদেহনন্দিনী "আমি পতির ক্লেশদায়িনী অশুভলক্ষণা সীতা" এইরূপ স্বীয় নাম উচ্চারণ করিয়া স্বর্গগত মহীপতির মহিষীদ্বয়কে ভক্তিসহকারে প্রণাম করিলেন। তাঁহারা—"হে বৎসে! গাত্রোত্থান কর, তোমারই পূতচরিত্রপ্রভাবে এই রামলক্ষ্মণ ক্লেশকর মহাসঙ্কট হইতে উত্তীর্ণ হইয়াছে" এইরূপ সত্য ও প্রিয়বাক্যে পুত্রবধূকে সান্ত্বনা করিলেন।

अथाभिषेकं रघुवंशकेतोः प्रारब्धमानन्दजलैर्जनन्योः ।
निर्वर्त्तयामासुरमात्यवृद्धास्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥७

७ अः। अमात्यवृद्धाः जनन्योः आनन्दजलैः प्रारब्धं रघुवंशकेतोः अभिषेकं तीर्थाहृतैः काञ्चनकुम्भतोयैः निर्वर्त्तयामासुः॥ वाच्य—अमात्यवृद्धैः प्रारब्धः अभिषेकः निर्वर्त्तयामासे ॥

७। अथ जनन्योरानन्दजलैः आनन्दवाष्पैः प्रारब्धं प्रक्रान्तं रघुवंशकेतोः रामस्य अभिषेकम् अमात्यवृद्धाः तीर्थेभ्यो गङ्गाप्रमुखेभ्यः आहृतैः आनीतैः काञ्चनकुम्भतोयैः निर्वर्त्तयामासुः निष्पादयामासुः॥

৭। প্রথমে জননীদ্বয়ের আনন্দাশ্রুদ্বারাই রঘুবংশভূষণ রামচন্দ্রের অভিষেক আরম্ভ হয়, তারপর গঙ্গাদিতীর্থ হইতে আনীত কাঞ্চনকলসপূর্ণ জলদ্বারা বৃদ্ধ অমাত্যগণ তাঁহার সেই রাজ্যাভিষেক ব্যাপার সম্পন্ন করেন।

सरित्समुद्रान्सरसीश्च गत्वा रक्षःकपीन्द्रैरुपपादितानि ।
तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः ॥८

८ अ:। रक्ष:कपीन्द्रैः सरित्समुद्रान् सरसीः च गत्वा उपपादितानि जलानि जिष्णोः तस्य मूर्ध्नि विन्ध्यस्य (मूर्ध्नि) मेघप्रभवाः आपः इव अपतन्॥ वाच्य—उपपादितैः जलैः मेघप्रभवैः अद्भिरिव अपत्यत॥

८। रक्षःकपीन्द्रैः सरितो गङ्गाद्याः समुद्रान् पूर्वादीन् सरसीः मानसादींश्च गत्वा उपपादितानि उपनीतानि जलानि जिष्णोर्जयशीलस्य 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुप्रत्ययः। तस्य रामस्य मूर्ध्नि विन्ध्यस्य विन्ध्याद्रेः मूर्ध्नि मेघप्रभवा आप इव अपतन्॥

৮। প্রধান প্রধান রাক্ষস ও বানরগণ বহু সরিৎ সমুদ্র ও সরোবরে গমন করিয়া প্রচুরতর তীর্থবারি আনয়ন করিয়াছিল, উহা এককালে জয়শীল রামের মস্তকে নিপতিত হওয়ায় বিন্ধ্যগিরির শিখরে বৃষ্টিপাতের ন্যায় প্রতীয়মান হইতে লাগিল।

तपस्विवेशक्रिययापि तावद् यः प्रेक्षणीयः सुतरां बभूव।
राजेन्द्रनेपथ्यविधानशोभा तस्योदितासीत्पुनरुक्तदोषा ॥९

९ अ:। यः तपस्विवेशक्रियया अपि सुतरां प्रेक्षणीयः बभूव, तस्य उदिता राजेन्द्रनेपथ्यविधानशोभा पुनरुक्तदोषा आसीत्॥ वाच्य—येन प्रेक्षणीयेन बभूवे। राजेन्द्रनेपथ्यविधानशोभया उदितया पुनरुक्तदोषया अभूयत॥

९। यो रामः तपस्विवेशक्रिययापि तपस्विवेशरचनयापि सुतराम् अत्यन्तं प्रेक्षणीयः तावद्दर्शनीय एव बभूव, तस्य राजेन्द्रनेपथ्यविधानेन राजवेषरचनया उदिता या शोभा सा पुनरुक्तं नाम दोषो यस्याः सा पुनरुक्तदोषा द्विगुणा आसीत्॥

৯। পূর্ব্বে রাম বনবাস সময়ে তপস্বিবেশ রচনা করিয়া যেরূপ শোভিত হইয়াছিলেন, অভিষেককালে আজ রাজযোগ্য বেশভূষা পরিধান করিয়া যে তদপেক্ষা অধিকতর শোভা ধারণ করিয়াছেন, ইহা বলিলে পুনরুক্তি দোষ ঘটে।

स मौलरक्षोहरिभिः ससैन्यस्तूर्य्यस्वनानन्दितपौरवर्गः।
विवेश सौधोद्गतलाजवर्षामुत्तोरणामन्वयराजधानीम् ॥१०

१० अ:। सः ससैन्यः तूर्य्यस्वनानन्दितपौरवर्गः (सन्) मौलरक्षोहरिभिः (सह) सौधोद्गतलाजवर्षाम् उत्तोरणाम् अन्वयराजधानीं विवेश॥ वाच्य—तेन रामेण ससैन्येन तूर्य्यस्वनानन्दितपौरवर्गेण सौधोद्गतलाजवर्षा उत्तोरणा अन्वयराजधानी विविशे॥

१०। स रामः ससैन्यः तूर्य्यस्वनैः आनन्दितपौरवर्गः सन् मूले भवाः मौलाः मन्त्रिवृद्धास्तैः रक्षोभिः हरिभिश्च सह सौधेभ्य उद्गतलाजवर्षाम् उत्तोरणाम् अन्वयराजधानीम् अयोध्यां विवेश प्रविष्टवान्॥

১০। অনন্তর রাম প্রধান মন্ত্রী, রাক্ষস, বানর এবং সৈন্যগণ সমভিব্যাহারে পৌরবর্গকে আনন্দিত করিয়া উন্নততোরণা রঘুকুলরাজধানী অযোধ্যায় প্রবেশ করিলেন, তাঁহার প্রবেশকালে সৌধতল হইতে লাজবর্ষণ ও ভূতলে তূর্য্যসকল নিনাদিত হইতে লাগিল।

**सौमित्रिणा सावरजेन मन्दमाधूतबालव्यजनो रथस्थः ।**

**धृतातपत्रो भरतेन साक्षादुपायसङ्घात इव प्रवृद्धः ॥११**

१२ अ:। सावरजेन सौमित्रिणा मन्दम् आधूतबालव्यजनः रथस्थः भरतेन धृतातपत्रः प्रवृद्धः साक्षात् उपायसङ्घातः इव (विवेश)॥ वाच्य—आधूतबालव्यजनेन रथस्थेन धृतातपत्रेण प्रवृद्धेन उपायसङ्घातेन इव (विविशे)॥

११। सावरजेन शत्रुघ्नयुक्तेन सौमित्रिणा लक्ष्मणेन मन्दमाधूते बाल-व्यजने चामरे यस्य स रथस्थो भरतेन धृतातपत्रः एवं चतुर्व्यूहो रामः प्रवृद्धः साक्षादुपायानां सामादीनां सङ्घातः समष्टिरिव विवेशेति पूर्वेण सम्बन्धः॥

১১। তখন ভরত তাঁহার মস্তকে রাজচ্ছত্র ধারণ করিলেন, লক্ষ্মণ ও শত্রুঘ্ন ধীরে ধীরে চামর ব্যজন করিতে লাগিলেন; তৎকালে মনে হইল যেন সাম দান ভেদ দণ্ড এই উপায়চতুষ্টয় শরীর ধারণ করিয়া একত্র সম্মিলিত হইয়াছে।

**प्रासादकालागुरुधूमराजिस्तस्याः पुरो वायुवशेन भिन्ना ।**

**वनान्निवृत्तेन रघूत्तमेन मुक्ता स्वयं वेणिरिवाबभासे ॥१२**

१२ अ:। वायुवशेन भिन्ना प्रासादकालागुरुधूमराजिः वनात् निवृत्तेन रघूत्तमेन स्वयं मुक्ता तस्याः पुरः वेणिः इव आबभासे॥ वाच्य—प्रासादकालागुरुधूमराज्या भिन्नया मुक्तया वेण्या इव आबभासे॥

१२। वायुवशेन भिन्ना प्रासादे यः कालागुरुधूमः तस्य राजिः रेखा वनात् निवृत्तेन रघूत्तमेन रामेण स्वयं मुक्ता तस्याः पुरः पुर्य्या वेणिरिव आबभासे। पुरोऽपि पतिव्रतासमाधिरुक्तः। 'न प्रोषिते तु संस्कुर्य्यान्न वेणीं च प्रमोचयेत्' इति हारीतः।

১২। রাজধানী অযোধ্যার প্রাসাদ হইতে নির্গত কালাগুরুধূমরাজি বায়ুবেগে ভিন্ন হওয়ায় বোধ হইতে লাগিল, রঘূত্তম রাম বন হইতে প্রত্যাগমন করিয়া যেন স্বয়ং রাজধানীর বেণী উন্মোচন করিয়াছেন।

**श्वश्रूजनानुष्ठितचारुवेषां कर्णीरथस्थां रघुवीरपत्नीम् ।**

**प्रासादवातायनदृश्यबन्धैः साकेतनार्य्योऽञ्जलिभिः प्रणेमुः॥१३**

१३ अ:। साकेतनार्य्यः श्वश्रूजनानुष्ठितचारुवेषां कर्णीरथस्थां रघुवीरपत्नीं प्रासादवातायनदृश्यबन्धैः अञ्जलिभिः प्रणेमुः ॥ वाच्य...श्वश्रूजनानुष्ठितचारुवेषा कर्णीरथस्था रघुवीरपत्नी साकेतनारीभिः प्रणेमे ॥

१३। श्वश्रूजनैः अनुष्ठितचारुवेषां कृतसौम्यनेपथ्याम्, 'आकल्पवेषौ नेपथ्यम्' इत्यमरः। कर्णीरथः स्त्रीयोग्योऽल्परथः, 'कर्णीरथः प्रवहणम्' इति यादवः। तत्रस्थां रघुवीरपत्नीं सीतां साकेतनार्य्यः प्रासादवातायनेषु दृश्यबन्धैः लक्ष्यपुटैः अञ्जलिभिः प्रणेमुः ॥

১৩। পুরনারীগণ শ্বশ্রূজনবিরচিত মনোহরবেশধারিণী রঘুবীরপত্নী সীতাদেবীকে শিবিকামধ্যে সুস্পষ্ট লক্ষ্য করিয়া প্রাসাদগবাক্ষপথ হইতে অঞ্জলিবন্ধনপূর্ব্বক প্রণাম করিতে লাগিল।

**स्फुरत्प्रभामण्डलमानसूयं सा बिभ्रती शाश्वतमङ्गरागम् ।**
**रराज शुद्धेति पुनः स्वपुर्य्यै सन्दर्शिता वह्निगतेव भर्त्रा॥१४**

१४ अ:। स्फुरत्प्रभामण्डलम् आनसूयं शाश्वतम् अङ्गरागं बिभ्रती सा (सीता) भर्त्रा स्वपुर्य्यै शुद्धा इति सन्दर्शिता पुनः वह्निगता इव रराज ॥ वाच्य—बिभ्रत्या तया शुद्धया इति सन्दर्शितया वह्निगतया इव रेजे ॥

१४। स्फुरत्प्रभामण्डलम्, आनसूयम् अनसूयया दत्तं शाश्वतं सदातनमङ्गरागं बिभ्रती सा सीता भर्त्रा स्वपुर्य्य शुद्धेति सन्दर्शिता पुनर्वह्निगतेव रराज ॥

১৪। সীতাদেবী অনসূয়ারচিত বিকসিতকান্তি চিরস্থায়ী অঙ্গরাগ শরীরে ধারণপূর্ব্বক বিশুদ্ধা হইয়া যেন পুনরায় রামকর্ত্তৃক অগ্নিপরীক্ষিতার ন্যায় পুরনারীগণকর্ত্তৃক লক্ষিত হইতে লাগিলেন।

**वेश्मानि रामः परिवर्हवन्ति विश्राण्य सौहार्दनिधिः सुहृद्भ्यः**
**बाष्पायमाणो बलिमन्निकेतमालेख्यशेषस्य पितुर्विवेश ॥१५**

१५ अ:। सौहार्दनिधिः रामः सुहृद्भ्यः परिवर्हवन्ति वेश्मानि विश्राण्य आलेख्यशेषस्य पितुः बलिमत् निकेतं बाष्पायमानः (सन्) विवेश ॥ वाच्य—सौहार्दनिधिना रामेण बाष्पायमाणेन बलिमन्निकेतः विविशे ॥

१५। सुहृदो भावः सौहार्दं सौजन्यम्। 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य'—इत्युभयपदवृद्धिः। सौहार्दनिधिः रामः सुहृद्भ्यः सुग्रीवादिभ्यः परिवर्हवन्ति उपकरणवन्ति वेश्मानि विश्राण्य दत्त्वा, आलेख्यशेषस्य चित्रमात्रशेषस्य पितुर्बलिमत् पूजायुक्तं निकेतं गृहं बाष्पायमाणो बाष्पमुद्वमन् विवेश। 'बाष्पोष्मभ्यामुद्वमने' इति क्यङ् प्रत्ययः ॥

১৫। সৌজন্যনিধি রাম সুহৃদ্গণকে বিবিধ উপকরণে সুসজ্জিত গৃহসকল বিতরণ

করিয়া বাষ্পাকুললোচনে আলেখ্যমাত্রাবশিষ্ট পিতার পূজাসম্ভারসংযুক্ত নিকেতনে প্রবেশ করিলেন।

**कृताञ्जलिस्तत्र यदम्ब सत्यान्नाभ्रश्यत स्वर्गफलाद्गुरुर्नः।**

**तच्चिन्त्यमानं सुकृतं तवेति जहार लज्जां भरतस्य मातुः॥१६**

१६ अः। तत्र रामः कृताञ्जलिः (सन्) '(हे) अम्ब! नः गुरुः यत् स्वर्गफलात् सत्यात् न अभ्रश्यत, इति यत् तत् चिन्त्यमानं तव सुकृतम्'—(इति) भरतस्य मातुः लज्जां जहार॥ वाच्य—कृताञ्जलिना रामेण गुरुणा, नाभ्रश्यत॥ चिन्त्यमानेन सुकृतेन लज्जा जह्रे॥

१६। तत्र निकेतने कृताञ्जलिः सन् रामः हे अम्ब! नो गुरुः पिता स्वर्गः फलं यस्य तस्मात् सत्यान्नाभ्रश्यत न भ्रष्टवानिति यदभ्रंशनं तत् चिन्त्यमानं विचार्य्यमाणं तव सुकृतम्। इत्येवंप्रकारेण भरतस्य मातुः कैकेय्या लज्जां जहार अपानयत्। राज्ञां प्रतिज्ञापरिपालनं स्वर्गसाधनमित्यर्थः। भरतग्रहणं तदपेक्षया कैकेय्यनुसरणद्योतनार्थम्॥

১৬। তথায় প্রবেশ করিয়া রাম অঞ্জলিবন্ধনপূর্ব্বক ভরতমাতা কৈকেয়ীকে কহিলেন—"মাতঃ! আমাদিগের পিতা যে, স্বর্গফলমূলক সত্য হইতে চ্যুত হন নাই, সে কেবল আপনারই পুণ্যবলে মনে করিতে হইবে" এই বলিয়া তৎকালে তাঁহার লজ্জা অপনোদন করিলেন।

**तथैव सुग्रीवविभीषणादीनुपाचरत्कृत्रिमसंविधाभिः।**

**सङ्कल्पमात्रोदितसिद्धयस्ते क्रान्ता यथा चेतसि विस्मयेन॥१७**

१७ अः। सुग्रीवविभीषणादीन् कृत्रिमसंविधाभिः तथा उपाचरत् यथा सङ्कल्पमात्रोदितसिद्धयः ते चेतसि विस्मयेन क्रान्ताः (भवन्ति)॥ वाच्य—सुग्रीवविभीषणादयः उपाचर्य्यन्त। सङ्कल्पमात्रोदितसिद्धीन् तान् विस्मयः क्रान्तवान्॥

१७। सुग्रीवविभीषणादीन् संविधीयन्त इति संविधा भोग्यवस्तूनि कृत्रिमसंविधाभिस्तथा तेन प्रकारेणैव उपाचरत् यथा सङ्कल्पमात्रेण इच्छामात्रेणोदितसिद्धयस्ते सुग्रीवादयश्चेतसि विस्मयेन क्रान्ता आक्रान्ताः॥

১৭। অতঃপর তিনি সুগ্রীব ও বিভীষণাদিকে বিবিধ ভোজ্য বস্তু দ্বারা এরূপ পরিচর্য্যা করিলেন যে, তাঁহাদের অভিলাষ উদয় হওয়া মাত্র তৎসমস্ত সিদ্ধ হওয়ায়, তাঁহারা মনে মনে সাতিশয় বিস্মিত হইলেন।

**सभाजनायोपगतान् स दिव्यान्मुनीन् पुरस्कृत्य हतस्य शत्रोः।**

**शुश्राव तेभ्यः प्रभवादि वृत्तं स्वविक्रमे गौरवमादधानम्॥१८**

१८ अः। सः सभाजनाय उपगतान् दिव्यान् मुनीन् पुरस्कृत्य तेभ्यः हतस्य शत्रोः प्रभवादि स्वविक्रमे गौरवम् आदधानं वृत्तं शुश्राव॥ वाच्य—तेन आदधानेन शुश्रुवे॥

१८। स रामः सभाजनाय अभिवन्दनाय उपगतान् दिवि भवान् मुनीन् अगस्त्यादीन् पुनस्कृत्य हतस्य मनोः रावणस्य प्रभवादि जन्मादिकं स्वविक्रमे गौरवमुत्कर्षमादधानं वृत्तं तेभ्यो मुनिभ्यः शुश्राव श्रुतवान्। विजितोत्कर्षाज्जेतुरुत्कर्ष इत्यर्थः॥

১৮। রাম, তাঁহার প্রতি সম্মানপ্রদর্শনজন্য সমাগত অগস্ত্যাদি দিব্য ঋষিগণের সৎকার করিলেন এবং তাঁহাদের নিকট রাবণের জন্মাদি বিবরণ শ্রবণ করিয়া স্বীয় বলবীর্য্যের গৌরব অনুভব করিতে লাগিলেন।

प्रतिप्रयातेषु तपोधनेषु सुखादविज्ञातगतार्द्धमासान्।
सीतास्वहस्तोपहृताग्र्यपूजान् रक्षःकपीन्द्रान्विससर्ज रामः॥१९

१९ अः। तपोधनेषु प्रतिप्रयातेषु रामः सुखात् अविज्ञातगतार्द्धमासान् सीतास्वहस्तोपहृताग्र्य-पूजान् रक्षःकपीन्द्रान् विससर्ज॥ वाच्य—रामेण अविज्ञातगतार्द्धमासाः सीतास्वहस्तोपहृताग्र्यपूजाः रक्षःकपीन्द्राः विसस्रजिरे॥

१९। तपोधनेषु मुनिषु प्रतिप्रयातेषु प्रतिनिवृत्य गतेषु सत्सु सुखाद-विज्ञात एव गतोऽर्द्धमासो येषां तान् अनन्तरं सीतायाः स्वहस्तेन उपहृता दत्ताग्र्यपूजा उत्तमसम्भावना येभ्यः तान्, एतेन सौहार्दातिशय उक्तः। रक्षःकपीन्द्रान् रामो विससर्ज विसृष्टवान्॥

১৯। অনন্তর তপোধনগণ স্ব স্ব স্থানে প্রতিগমন করিলে রাক্ষসরাজ বিভীষণ ও কপীন্দ্র সুগ্রীবকে সীতার স্বহস্তরচিত অত্যুৎকৃষ্ট উপহার প্রদানে সম্মানপ্রদর্শনপূর্ব্বক বিদায় দিলেন; তাঁহারা এতই সুখে কালাতিপাত করিয়াছিলেন, যেন অর্দ্ধমাস অতীত হইলেও তাহা জানিতে পারেন নাই।

तच्चात्मचिन्तासुलभं विमानं हृतं सुरारेः सह जीवितेन।
कैलासनाथोद्वहनाय भूयः पुष्पं दिवः पुष्पकमन्वमंस्त॥२०

२० अः। आत्मचिन्तासुलभं सुरारेः जीवितेन सह हृतं दिवः पुष्पं पुष्पकं विमानं भूयः कैलास-नाथोद्वहनाय अन्वमंस्त॥ वाच्य—(तेन) अन्वमानि॥

२०। तच्चात्मचिन्तासुलभं स्वेच्छामात्रलभ्यं सुरारेः रावणस्य जीवि-तेन सह हृतं दिवः पुष्पं पुष्पवदाभरणभूतं पुष्पकं विमानं भूयः पुनरपि कैलासनाथस्य कुवेरस्य उद्वहनाय अन्वमंस्त अनुज्ञातवान् मन्यतेर्लुङ्। भूयोग्रहणेन पूर्वमपि एतत् कौवेरमेवेति सूच्यते॥॥

২০। তদনন্তর তিনি সুরারি রাবণকে বিনাশ করিয়া তাহার জীবনের সঙ্গে সঙ্গেই যে বিমান হরণ করিয়াছিলেন, স্মরণমাত্রলভ্য সেই স্বর্গীয় পুষ্পককে এক্ষণে কৈলাসপতি কুবেরকে বহনের জন্য পুনরায় অনুমতি করিলেন।

पितुर्नियोगाद्वनवासमेवं निस्तीर्य्य रामः प्रतिपन्नराज्यः ।
धर्मार्थकामेषु समां प्रपेदे यथा तथैवावरजेषु वृत्तिम् ॥ ११

२१ अ: । रामः एवं पितुः नियोगात् वनवासं निस्तीर्य्य प्रतिपन्नराज्यः ( सन् ) यथा धर्मार्थकामेषु तथा एव अवरजेषु समां वृत्तिं प्रपेदे ॥ वाच्य—रामेण प्रतिपन्नराज्येन, ( सता ) समा वृत्तिः प्रपेदे ॥

२१ । रामः एवं पितुः नियोगात् आसनात् वनवासं निस्तीर्य्य अनन्तरं प्रतिपन्नराज्यः प्राप्तराज्यः सन् धर्मार्थकामेषु यथा तथा एव अवरजेषु अनुजेषु समां वृत्तिं प्रपेदे, सर्वैरप्यैक्येण व्यवहृतवानित्यर्थः ॥

২১। এইরূপে রাম পিতার নিয়োগানুসারে বনবাস উত্তীর্ণ হইয়া পুনরায় রাজ্যগ্রহণপূর্ব্বক ধর্ম্ম, অর্থ ও কামের প্রতি যেরূপ আস্থা স্থাপন করিলেন, ভরত, লক্ষ্মণ ও শত্রুঘ্ন এই অনুজত্রয়ের প্রতিও সেইরূপ সমান ব্যবহার করিতে লাগিলেন।

सर्वासु मातृष्वपि वत्सलत्वात् स निर्विशेषप्रतिपत्तिरासीत् ।
षडाननापीतपयोधरासु नेता चमूनामिव कृत्तिकासु ॥ १२

१२ अ: । सः वत्सलत्वात् सर्वासु मातृषु अपि, चमूनां नेता षडाननापीतपयोधरासु कृत्तिकासु इव, निर्विशेषप्रतिपत्तिः आसीत् ॥ वाच्य—तेन निर्विशेषप्रतिपत्तिना तेन अभूयत ॥

२२ । स रामो वत्सलत्वात् स्निग्धत्वात् न तु लोकप्रतीत्यर्थम्, 'स्निग्धस्तु वत्सलः' इत्यमरः । सर्वासु मातृष्वपि निर्विशेषप्रतिपत्तिः तुल्यसत्कार आसीत् । कथमिव ? चमूनां नेता षण्मुखः षड्भिराननैः आपीताः पयोधराः स्तना यासां तासु कृत्तिकासु इव ॥

২২। দেবসেনাপতি ষড়ানন যেমন ছয়টী মুখদ্বারা কৃত্তিকাদি মাতৃগণের স্তন্য পান করিয়া তাঁহাদের প্রতি সমান প্রীতিভাব প্রদর্শন করিয়াছিলেন, মাতৃবৎসল রামও তদ্রূপ কৌশল্যাদি মাতৃগণের সমান সমাদর করিতে লাগিলেন।

तेनार्थवान् लोभपराङ्मुखेन
तेन घ्नता विघ्नभयं क्रियावान् ।
तेनास लोकः पितृमान् विनेत्रा
तेनैव शोकापनुदेन पुत्री ॥ २३

२३ अ: । लोकः लोभपराङ्मुखेन तेन अर्थवान् आस । विघ्नभयं घ्नता तेन क्रियावान् । विनेत्रा तेन पितृमान् । शोकापनुदेन तेन ( रामेण ) एव पुत्री ( आस ) ॥ वाच्य—लोकेन अर्थवता क्रियावता पितृमता पुत्रिणा अभूयत ॥

२३। लोको लोभपराङ्मुखेन वदान्येन तेन रामेण अर्थवान् धनिक आस बभूव। तिङन्तप्रतिरूपकमव्ययमेतत्। विघ्नेभ्यो भयं घ्नता नुदता तेन क्रियावान् अनुष्ठानवान् आस। विनेत्रा नियामकेन तेन पितृमान् आस, पितृवन्नियच्छतीत्यर्थः। शोकमपनुदतीति शोकापनुदो दुःखस्य हर्त्ता तेन, 'तुन्दशोकयोः परिमृजापनुदोः' इति कप्रत्ययः। तेन पुत्री पुत्रवान् आस, पुत्रवदानन्दयतीत्यर्थः॥

२३। তিনি স্বয়ং লোভপরাঙ্মুখ হইয়া প্রজাগণকে ধনবান্ ও বিঘ্নভয় বিনাশ করিয়া ক্রিয়াবান্ করিয়াছিলেন এবং বিনয় শিক্ষা প্রদানদ্বারা তাহাদের পিতৃতুল্য ও শোকাপনোদন করিয়া পুত্রতুল্য হইয়াছিলেন।

स पौरकार्य्याणि समीक्ष्य काले रेमे विदेहाधिपतेर्दुहित्रा।
उपस्थितश्चारुवपुस्तदीयं कृत्वोपभोगोत्सुकयेव लक्ष्म्या॥२४

२४ अः। सः काले पौरकार्य्याणि समीक्ष्य विदेहाधिपतेः दुहित्रा उपभोगोत्सुकया (अतएव) तदीयं चारु वपुः कृत्वा लक्ष्म्या इव उपस्थितः सन् रेमे॥ वाच्य—उपस्थितेन तेन रेमे॥

२४। सः रामः कालेऽवसरे पौराणां कार्य्याणि प्रयोजनानि समीक्ष्य विदेहाधिपतेः दुहित्रा सीतया उपभोगोत्सुकया अतएव तदीयं सीतासम्बन्धि चारु वपुः कृत्वा स्थितया लक्ष्म्येव उपस्थितः सङ्गतः सन् रेमे। 'उपस्थानन्तु सङ्गतिः' इति यादवः॥

२४। তিনি যথাকালে পৌরগণের কার্য্যকলাপ পর্য্যবেক্ষণ করিয়া বিদেহনন্দিনী সীতার সহিত ক্রীড়া করিতেন; তদ্দর্শনে মনে হইত যেন, রাজলক্ষ্মী উপভোগ লালসায় সীতার মনোহর শরীরে আশ্রয় করিয়া রামের সহিত বিহার করিতেন।

तयोर्यथाप्रार्थितमिन्द्रियार्था-
नासेदुषोः सद्मसु चित्रवत्सु।
प्राप्तानि दुःखान्यपि दण्डकेषु
सञ्चिन्त्यमानानि सुखान्यभूवन्॥ २५

२५ अः। चित्रवत्सु सद्मसु यथाप्रार्थितम् इन्द्रियार्थान् आसेदुषोः तयोः दण्डकेषु प्राप्तानि दुःखानि अपि सञ्चिन्त्यमानानि सुखानि अभूवन्॥ वाच्य—प्राप्तैः दुःखैः सञ्चिन्त्यमानैः सुखैः अभूयत॥

२५। चित्रवत्सु वनवासवृत्तान्तालेख्यवत्सु सद्मसु यथाप्रार्थितं यथेष्टम् इन्द्रियार्थान् इन्द्रियविषयान् शब्दादीनासेदुषोः प्राप्तवतोः तयोः सीतारामयोः दण्डकेषु दण्डकारण्येषु प्राप्तानि दुःखान्यपि विरहविला-

পান্ অন্বেষণাদীনি সঞ্চিন্ত্যমানানি স্মর্য্যমাণানি সুখানি অভূবন্ । স্মারকন্তু চিত্রদর্শনমিতি দ্রষ্টব্যম্ ॥

২৫। তাঁহারা উভয়ে বিচিত্রগৃহে অবস্থানপূর্ব্বক যথাভিলষিত ইন্দ্রিয়সুখজনক ভোগ্যবস্তু উপভোগ করিয়া দণ্ডকারণ্যের সেই অসহ্য কষ্ট যতই চিন্তা করিতে লাগিলেন, ততই তাঁহাদিগের অধিকতর সুখানুভব হইতে লাগিল।

অথাধিকস্নিগ্ধবিলোচনেন মুখেন সীতা শরপাণ্ডুরেণ ।
আনন্দয়িত্রী পরিণেতুরাসীৎ অনক্ষরব্যঞ্জিতদৌহৃদেন ২৬

২৬ অ:। অথ সীতা অধিকস্নিগ্ধবিলোচনেন শরপাণ্ডুরেণ—(অতএব) অনক্ষরব্যঞ্জিতদৌহৃদেন মুখেন পরিণেতু: আনন্দয়িত্রী আসীৎ ॥ বাচ্য—সীতয়া আনন্দয়িত্র্যা অভূয়ত ॥

২৬। অথ সীতা অধিকস্নিগ্ধবিলোচনেন অত্যন্তমসৃণলোচনেন শরবৎ তৃণবিশেষবৎ পাণ্ডুরেণ অতএব অনক্ষরম্ অবাগ্ব্যাপারং যথা ভবতি তথা ব্যঞ্জিতং দৌহৃদং গর্ভো যেন তেন মুখেন পরিণেতু: পত্যুরানন্দয়িত্রী আসীৎ ॥

২৬। অনন্তর বিদেহনন্দিনীর নয়নদ্বয় অধিকতর স্নিগ্ধভাব ধারণ করিলে, মুখমণ্ডল শরতৃণের ন্যায় পাণ্ডুর হইয়া উঠিল; তিনি বাক্যদ্বারা প্রকাশ না করিলেও এই সমস্ত গর্ভলক্ষণদ্বারা রামচন্দ্রের অতীব আনন্দদায়িনী হইয়াছিলেন।

তামঙ্কমারোপ্য কৃশাঙ্গযষ্টিং
বর্ণান্তরাক্রান্তপয়োধরাগ্রাম্ ।
বিলজ্জমানাং রহসি প্রতীত:
পপ্রচ্ছ রামাং রমণোঽভিলাষম্ ॥ ২৭

২৭ অ:। প্রতীত: রমণ: কৃশাঙ্গযষ্টিং বর্ণান্তরাক্রান্তপয়োধরাগ্রাং বিলজ্জমানাং তাং রামাং রহসি অঙ্কম্ আরোপ্য অভিলাষং পপ্রচ্ছ ॥ বাচ্য—প্রতীতেন রমণেন অভিলাষ: পপ্রচ্ছে ॥

২৭। প্রতীতো গর্ভজ্ঞানবান্, রময়তীতি রমণ: প্রিয়: কৃশাঙ্গযষ্টিং বর্ণান্তরেণ নীলিম্না আক্রান্তপয়োধরাগ্রাং বিলজ্জমানাং তাং রামাং রহসি অঙ্কমারোপ্য অভিলাষং মনোরথং পপ্রচ্ছ। এতচ্চ—'দৌহৃদস্যাপ্রদানেন গর্ভো দোষমবাপ্নুয়াৎ' ইতি শাস্ত্রাৎ, ন তু লৌল্যাদিত্যনুসন্ধেয়ম্ ॥

২৭। রামচন্দ্র সীতার স্তনদ্বয়ের অগ্রভাগ নীলিম ও অঙ্গযষ্টি কৃশ দেখিয়া তাঁহার গর্ভলক্ষণ জানিতে পারিলেন এবং বিলজ্জমানা জানকীকে নির্জ্জনে স্বীয় ক্রোড়ে স্থাপনপূর্ব্বক জিজ্ঞাসা করিলেন,—প্রিয়ে! তোমার কোন্ বস্তুতে অভিলাষ হইতেছে?

सा दृष्टनीवारबलीनि हिंस्रैः सम्बद्धवैखानसकन्यकानि।
इयेष भूयः कुशवन्ति गन्तुं भागीरथीतीरतपोवनानि॥ २८

२८। अ:। सा हिंस्रैः दृष्टनीवारबलीनि सम्बद्धवैखानसकन्यकानि कुशवन्ति भागीरथीतीरतपोवनानि भूयः गन्तुम् इयेष॥ वाच्य—तया ईषे॥

२८। सा सीता हिंस्रैः दृष्टा नीवारा एव बलयो येषु तानि। तिर्य्यग्भिक्षुकादिदानं बलिः। सम्बद्धाः कृतसम्बन्धाः कृतसख्या वैखानसानां कन्यका येषु तानि कुशवन्ति भागीरथीतीरतपोवनानि भूयः पुनरपि गन्तुमियेष अभिललाष॥

২৮। যে স্থানে হিংস্র জন্তুগণ ভিক্ষুকদিগের তৃপ্তিসাধন জন্য আনীত ধান্যের নীবার চর্ব্বণ করে, এবং যেখানে বৈখানস কন্যাগণ একত্র সম্মিলিত হইয়া পরস্পর সখীভাব প্রদর্শন করেন, বিদেহনন্দিনী সীতা সেই কুশসমাকীর্ণ ভাগীরথীতীরস্থিত তপোবন পুনরায় দর্শন করিবার ইচ্ছা প্রকাশ করিলেন।

तस्यै प्रतिश्रुत्य रघुप्रवीर-
स्तदीप्सितं पार्श्वचरानुयातः।
आलोकयिष्यन् मुदितामयोध्यां
प्रासादमभ्रंलिहमारुरोह॥ २९

२९ अ:। रघुप्रवीरः तस्यै तत् ईप्सितं प्रतिश्रुत्य पार्श्वचरानुयातः (सन्) मुदिताम् अयोध्याम् आलोकयिष्यन् अभ्रंलिहं प्रासादम् आरुरोह॥ वाच्य—रघुप्रवीरेण आलोकयिष्यता रामेण पार्श्वचरानुयातेन अभ्रंलिहः प्रासादः आरुरुहे॥

२९। रघुप्रवीरो रामस्तस्यै सीतायै तत् पूर्वोक्तमीप्सितं मनोरथं प्रतिश्रुत्य पार्श्वचरैः तत्कालोचितैः अनुयातः सन् मुदितां ताम् अयोध्याम् आलोकयिष्यन् अभ्रं लेढीत्यभ्रंलिहम् अभ्रङ्कषं प्रासादमारुरोह। 'वहाभ्रे लिहः' इति खश्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः॥

২৯। রঘুপ্রবীর রাম সীতার অভিলষিত বাক্যে অঙ্গীকার করিয়া অনুচরগণসহ প্রমুদিত অযোধ্যাপুরী সন্দর্শনমানসে আকাশস্পর্শী প্রাসাদশিখরে আরোহণ করিলেন।

ऋद्धापणं राजपथं स पश्यन् विगाह्यमानां सरयूञ्च नौभिः।
विलासिभिश्चाध्युषितानि पौरैः पुरोपकण्ठोपवनानि रेमे॥३०

३० अ:। सः ऋद्धापणं राजपथं नौभिः विगाह्यमानां सरयूं च पौरैः विलासिभिः अध्युषितानि पुरोपकण्ठोपवनानि च पश्यन् रेमे॥ वाच्य—पश्यता तेन रेमे॥

३०। स रामः ऋद्धाः समृद्धा आपणाः पण्यभूमयो यस्मिन् स तं राजपथं नौभिः समुद्रवाहिनीभिः विगाह्यमानां सरयूञ्च पौरैः विलासिभिः अध्युषितानि पुरोपकण्ठोपवनानि च पश्यन् रेमे। विलासिन्यश्च विलासिनश्च विलासिनः 'पुमान् स्त्रिया' इत्येकशेषः॥

৩০। তিনি অযোধ্যার রাজপথ সকল সমৃদ্ধ আপণ শ্রেণীতে সুশোভিত, সরযূ নৌকানিকরে পরিপূরিত এবং পুরবাসী বিলাসিগণ কর্ত্তৃক নগরসন্নিহিত উপবনসমূহ অধ্যুষিত দেখিয়া সাতিশয় সন্তোষলাভ করিলেন।

**स किंवदन्तीं वदतां पुरोगः स्ववृत्तमुद्दिश्य विशुद्धवृत्तः।**
**सर्पाधिराजोरुभुजोऽपसर्पं पप्रच्छ भद्रं विजितारिभद्रः॥ ३१**

३१ अः। वदतां पुरोगः विशुद्धवृत्तः सर्पाधिराजोरुभुजः विजितारिभद्रः सः स्ववृत्तम् उद्दिश्य भद्रम् अपसर्पं किंवदन्तीं पप्रच्छ॥ वाच्य—पुरोगेण विशुद्धवृत्तेन सर्पाधिराजोरुभुजेन विजितारिभद्रेण अपसर्पः भद्रः किंवदन्तीं पप्रच्छे॥

३१। वदतां वाग्मिनां पुरोगः श्रेष्ठो विशुद्धवृत्तः सर्पाधिराजः शेषः। तद्वदुरुभुजौ यस्य स विजितारिभद्रो विजितारिश्रेष्ठः स रामः स्ववृत्तम् उद्दिश्य भद्रं भद्रनामकमपसर्पं चरं किंवदन्तीं जनवादं पप्रच्छ। 'अपसर्पश्चरः स्पशः' इति 'किंवदन्ती जनश्रुतिः' इति च अमरः॥

৩১। বাগ্মিগণের অগ্রণী পূতচরিত্র বাসুকিতুল্য বাহুবলশালী শত্রুবিজেতা রঘুবীর রাম নিজ চরিত্রবিষয়ে জনশ্রুতি বিদিত হইবার জন্য ভদ্রনামক গুপ্তচরকে জিজ্ঞাসা করিলেন।

**निर्बन्धपृष्टः स जगाद सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम्।**
**अन्यत्र रक्षोभवनोषितायाः परिग्रहान्मानवदेव देव्याः॥ ३२**

३२ निर्बन्धपृष्टः स जगाद, (हे) मानवदेव! रक्षोभवनोषितायाः देव्याः परिग्रहात् अन्यत्र त्वदीयं सर्वं चरितं पौराः स्तुवन्ति॥ वाच्य—निर्बन्धपृष्टेन तेन जगदे। पौरैः त्वदीयं सर्व्वं चरितं स्तूयते॥

३२। निर्बन्धेन आग्रहेण पृष्टः सोऽपसर्पः जगाद। किमिति? हे मानवदेव! रक्षोभवने उषिताया देव्याः सीतायाः परिग्रहात् स्वीकारात् अन्यत्र इतरांशे तं वर्जयित्वा इत्यर्थः, त्वदीयं सर्वं चरितं पौराः स्तुवन्ति॥

৩২। রাম সাতিশয় নির্ব্বন্ধসহকারে জিজ্ঞাসা করিলে ভদ্র সমস্ত নিবেদন করিয়া বলিল,—নরদেব! পুরবাসীরা সর্ব্বাংশেই আপনার চরিত্রের প্রশংসা করে; অপর, রাক্ষসনিবাসে অবস্থানের পর আপনি সীতাদেবীকে যে গ্রহণ করিয়াছেন, এজন্য আপনাকে নিন্দাও করিয়া থাকে।

कलत्रनिन्दागुरुणा किलैवमभ्याहतं कीर्त्तिविपर्य्ययेण।
अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे॥ ३३

३३ अ:। एवं कलत्रनिन्दागुरुणा कीर्त्तिविपर्य्ययेण अभ्याहतं वैदेहिबन्धोः हृदयम् अयोघनेन अभितप्तम् अयः इव विदद्रे किल॥ वाच्य—अभ्याहतेन हृदयेन अभितप्तेन अयसा इव विदद्रे॥

३३। एवं किल कलत्रनिन्दया गुरुणा दुर्वहेण कीर्त्तिविपर्य्ययेण अपकीर्त्या अभ्याहतं वैदेहिबन्धोः वैदेहीवल्लभस्य, 'ङ्यापोः संज्ञाच्छन्दसो-र्बहुलम्' इति ह्रस्वः, कालिदास इतिवत्। हृदयम् अयोघनेन अभितप्तं सन्तप्तमय इव विदद्रे विदीर्णम्। कर्त्तरि लिट्॥

৩৩। বিশাল লৌহমুদ্গরের আঘাতে উত্তপ্ত লৌহ যেরূপ বিদলিত হয়, তদ্রূপ ঘোরতর অকীর্ত্তিকর গুরুতর কলত্রনিন্দা শ্রবণে আহত হইয়া জানকীবল্লভ রামচন্দ্রেরও হৃদয় বিদীর্ণ হইল।

किमात्मनिर्वादकथामुपेक्षे
जायामदोषामुत सन्त्यजामि।
इत्येकपक्षाश्रयविक्लवत्वात्
आसीत् स दोलाचलचित्तवृत्तिः॥ ३४

३४ अ:। आत्मनिर्वादकथां किम् उपेक्षे? उत अदोषां (साध्वीं) जायां सन्त्यजामि? इत्येक-पक्षाश्रयविक्लवत्वात् सः दोलाचलचित्तवृत्तिः आसीत्॥ वाच्य—आत्मनिर्वादकथा किम् उपेक्ष्यते? उत अदोषा जाया सन्त्यज्यते? दोलाचलचित्तवृत्तिना तेन अभूयत॥

३४। आत्मनो निर्वादोऽपवाद एव कथा तां किमुपेक्षे? उत अदोषां साध्वीं जायां सन्त्यजामि? उभयत्रापि प्रश्ने लट्। इत्येकपक्षाश्रये अन्य-तरपक्षपरिग्रहे विक्लवत्वात् अपरिच्छेत्तृत्वात् स रामो दोला इव चला चित्तवृत्तिः यस्य स आसीत्॥

৩৪। "এখন কি আত্মনিন্দার কথা উপেক্ষা করি—অথবা দোষহীনা পত্নীকেই পরিত্যাগ করি"—এইরূপ পক্ষদ্বয়ের মধ্যে কোন্‌টীকে অবলম্বন করিবেন, এই চিন্তায় ব্যাকুল হইয়া রামের চিত্ত দোলার ন্যায় চঞ্চল হইল।

निश्चित्य चानन्यनिवृत्ति वाच्यं
त्यागेन पत्न्याः परिमार्ष्टुमैच्छत्।
अपि स्वदेहात् किमुतेन्द्रियार्थाद्-
यशोधनानां हि यशो गरीयः॥ ३५

३५ अ:। (किञ्च) वाच्याम् अनन्यनिवृत्ति निश्चित्य पत्न्याः त्यागेन परिमार्ष्टुम् ऐच्छत्। हि (तथाहि) यशोधनानां स्वदेहात् अपि यशः गरीयः, इन्द्रियार्थात् (गरीयः इति) किमु उत?॥ वाच्य—तेन परिमार्ष्टुम् ऐष्यत॥

३५। किञ्च वाच्यमपवादम्, नास्ति अन्येन त्यागातिरिक्तोपायेन निवृत्तिः यस्य तदनन्यनिवृत्ति निश्चित्य पत्न्यास्त्यागेन परिमार्ष्टुं परिहर्तुमैच्छत्। तथाहि—यशोधनानां पुंसां स्वदेहादपि यशो गरीयो गुरुतरम् इन्द्रियार्थात् स्रक्चन्दनवनितादेरिन्द्रियविषयाद्गरीय इति किमुत वक्तव्यम्? "पञ्चमी विभक्ते" इत्युभयत्रापि पञ्चमी। सीता चेन्द्रियार्थ एव॥

३८। अनन्तर राम "अन्य उपाये एइ अपवाद अपनोदित हइबे ना" अनेक चिन्तार पर एइरूप स्थिर करिया पत्नीत्यागद्वाराइ एइ निन्दार परिहार करिते अभिलाषी हइलेन। यशोधनगणेर इन्द्रियभोग्यविषयेर त कथाइ नाइ, ताँहारा स्वीय देह अपेक्षाओ यशइ गुरुतर ज्ञान करेन।

स सन्निपात्यावरजान् हतौजा-
स्तद्विक्रियादर्शनलुप्तहर्षान्।
कौलीनमात्माश्रयमाचचक्षे
तेभ्यः पुनश्चेदमुवाच वाक्यम्॥ ३६

३६ अ:। हतौजाः सः तद्विक्रियादर्शनलुप्तहर्षान् अवरजान् सन्निपात्य आत्माश्रयं कौलीनं तेभ्यः आचचक्षे, पुनः इदं वाक्यम् उवाच च॥ वाच्य—हतौजसा तेन (रामेण) आचचक्षे, इदं वाक्यं च ऊचे॥

३६। हतौजा निस्तेजस्कः स रामः तस्य रामस्य विक्रियादर्शनेन लुप्तहर्षान् अवरजान् सन्निपात्य सङ्गमय्य आत्माश्रयं स्वविषयकं कौलीनं निन्दां तेभ्य आचचक्षे, पुनरिदं वाक्यमुवाच च॥

राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम्।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य॥ ३७

३७ अ:। रविप्रसूतेः राजर्षिवंशस्य सदाचारशुचेः मत्तः दर्पणस्य पयोदवातात् इव, कीदृशः अयं कलङ्कः उपस्थितः॥ वाच्य—कीदृशेन अनेन कलङ्केन उपस्थितेन भूयते दृश्यताम्॥

३७। रवेः प्रसूतिर्जन्म यस्य तस्य राजर्षिवंशस्य सदाचारशुचेः सद्वृत्तात् शुद्धात् मत्तो मत्सकाशात्, दर्पणस्य पयोदवातादिव अम्भःकणात् इत्यर्थः, कीदृशोऽयं कलङ्क उपस्थितः प्राप्तः पश्यत॥

७७—७१। अनन्तर विमूढप्रज्ञ राम अनुजगणके आह्वान करिलेन, ताँहारा

রামসমীপে আগমনপূর্ব্বক জ্যেষ্ঠের অতিমাত্র চিত্তবিক্রিয়া সন্দর্শনে বিষণ্ণ হইয়া উপবেশন করিলে, তিনি স্বীয় অপবাদ বিষয় তাঁহাদিগকে জ্ঞাপন করিলেন এবং বলিলেন,—হে ভ্রাতৃগণ! দেখ, সজল-সমীরণসম্পর্কে বিশুদ্ধ দর্পণ যেমন মলিন হয় তদ্রূপ পূতচরিত রবিপ্রসূত রাজর্ষিবংশের আমা হইতে আজ কি এক মহাকলঙ্ক উপস্থিত!

**पौरेषु सोऽहं बहुलीभवन्तमपां तरङ्गेष्विव तैलविन्दुम् ।**
**सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः॥ ३८**

३८ अः। सः अहम् अपां तरङ्गेषु तैलविन्दुम् इव, पौरेषु बहुलीभवन्तं तत्पूर्वम् अवर्णं द्विपेन्द्रः आलानिकं स्थाणुम् इव सोढुं न ईशे ॥ वाच्य—तेन मया द्विपेन्द्रेण न ईश्यते ।

३८। सोऽहम् अपां तरङ्गेषु तैलविन्दुमिव पौरेषु बहुलीभवन्तं प्रसरन्तम्, स एव पूर्वो यस्य तम् । तत्पूर्वमवर्णमपवादम् । 'अवर्णाक्षेपनिर्वादपरीवादापवादवत्' इत्यमरः । द्विपेन्द्रः, आलानमेव आलानिकम् । विनयादित्वात् स्वार्थे ठक् । अथवा आलानं बन्धनं प्रयोजनमस्येत्यालानिकम्, 'प्रयोजन' इति ठक् । स्थाणुं स्तम्भमिव, चूतवृक्ष इतिवत् सामान्यविशेषभावादपौनरुक्त्यं द्रष्टव्यम् । सोढुं न ईशे न शक्नोमि ॥

৩৮। বন্ধনস্তম্ভ যেরূপ গজরাজের নিতান্ত অসহ্য হইয়া উঠে, তদ্রূপ তরঙ্গনিক্ষিপ্ত তৈলবিন্দুর ন্যায় প্রজাগণমধ্যে বিস্তীর্ণ এই প্রথম অপবাদ আমার কিছুতেই সহ্য হইতেছে না।

**तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः ।**
**त्यक्ष्यामि वैदेहसुतां पुरस्तात् समुद्रनेमिं पितुराज्ञयेव॥ ३९**

३९ अः। तस्य अपनोदाय फलप्रवृत्तौ उपस्थितायाम् (सत्याम्) अपि निर्व्यपेक्षः (सन्) वैदेहसुतां पुरस्तात् पितुः आज्ञया समुद्रनेमिम् इव त्यक्ष्यामि ॥ वाच्य -निर्व्यपेक्षेण सता, समुद्रनेमिरिव वैदेहसुता त्यक्ष्यते ॥

३९। तस्य अवर्णस्य अपनोदाय फलप्रवृत्तौ अपत्योत्पत्तौ उपस्थितायां सत्यामपि निर्व्यपेक्षो निस्पृहः सन् वैदेहसुताम् पुरस्तात् पूर्वं पितुराज्ञया समुद्रनेमिमिव, समुद्रो नेमिरिव नेमिः यस्याः सा भूमिः तामिव त्यक्ष्यामि ॥

৩৯। আমি পূর্ব্বে পিতার নিদেশে যেরূপ সাগরাম্বরা ধরণীকে পরিত্যাগ করিয়াছিলাম, এক্ষণে তদ্রূপ অপবাদ অপনোদনজন্য সন্তানোৎপত্তির সময় উপস্থিত হইলেও তাহাতে স্পৃহাহীন হইয়া বৈদেহীকে পরিত্যাগ করিতে অভিলাষ করিতেছি।

अवैमि चैनामनघेति किन्तु
लोकापवादो बलवान् मतो मे।
छाया हि भूमेः शशिनो मलत्वे-
नारोपिता शुद्धिमतः प्रजाभिः ॥४०

४० अः। एनाम् अनघा इति च अवैमि, किन्तु मे लोकापवादः बलवान् मतः। (कुतः) हि (यस्मात्) प्रजाभिः भूमेः छाया शुद्धिमतः शशिनः मलत्वेन आरोपिता॥ वाच्य—एषा अनघेति अवेयते, लोकापवादेन बलवता मतेन (भूयते)। प्रजाः छायाम् आरोपितवत्यः।

४०। ननु सर्वथा साध्वी न त्याज्या इत्यत आह—एनां सीताम् अनघा साध्वीति च अवैमि, किन्तु मे मम लोकापवादो बलवान् मतः। कुतः? हि यस्मात् प्रजाभिः भूमेश्छाया प्रतिबिम्बं शुद्धिमतो निर्मलस्य शशिनो मलत्वेन कलङ्कत्वेन आरोपिता। अतो लोकापवाद एव बलवानित्यर्थः॥

৪০। আমি জানি যে, জানকীর কোন পাপ নাই, কিন্তু লোকনিন্দা আমার পক্ষে গুরুতর বলিয়া বোধ হইতেছে; দেখ, লোকে ভূমির ছায়াকে নিষ্কলঙ্ক শশাঙ্কের কলঙ্করূপে আরোপিত করিয়া থাকে।

रक्षोवधान्तो न च मे प्रयासो
व्यर्थः स वैरप्रतिमोचनाय।
अमर्षणः शोणितकाङ्क्षया किं
पदा स्पृशन्तं दशति द्विजिह्वः ॥४१

४१ अः। (किञ्च) मे रक्षोवधान्तः प्रयासः व्यर्थः न च (किन्तु) सः वैरप्रतिमोचनाय। अमर्षणः द्विजिह्वः पदा स्पृशन्तं शोणितकाङ्क्षया दशति किम्?। वाच्य—रक्षोवधान्तेन प्रयासेन व्यर्थेन तेन न भूयते। अमर्षणेन द्विजिह्वेन स्पृशन् दश्यते।

४१। किञ्च मे रक्षोवधान्तः प्रयासो व्यर्थो न। किन्तु, स वैरप्रतिमोचनाय वैरशोधनाय। तथाहि अमर्षणो असहनो द्विजिह्वः सर्पः पदा पादेन स्पृशन्तं पुरुषं शोणितकाङ्क्षया दशति किम्? किन्तु वैरनिर्य्यातनाय इत्यर्थः॥

৪১। আমার রাক্ষসবিনাশপ্রয়াস বিফল হয় নাই, কেননা উহা আমি বৈরনির্য্যাতনের জন্যই করিয়াছি; পদাহত সর্প রোষান্বিত হইয়া যে দংশন করে, তাহা শোণিতপানাভিলাষে নহে।

तदेष सर्गः करुणार्द्रचित्तै-
र्न मे भवद्भिः प्रतिषेधनीयः।

यद्यर्थिता निर्हृतवाच्यशल्यान्।
प्राणान् मया धारयितुं चिरं वः ॥४२

४२ अः। निर्हृतवाच्यशल्यान् प्राणान् मया चिरं धारयितुं वः अर्थिता यदि (अस्ति) तत् एषः मे सर्गः करुणार्द्रचित्तैः भवद्भिः न प्रतिषेधनीयः॥ वाच्य—एतं सर्गं करुणार्द्रचित्ताः भवन्तः न प्रतिषेधेयुः, अर्थितया भूयते।

४२। तत् तस्मादेष मे सर्गो निश्चयः, 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः। करुणार्द्रचित्तैः भवद्भिः न प्रतिषेधनीयः। निर्हृतं वाच्यमेव शल्यं येषां तान् प्राणान् मया चिरं धारयितुं धारणं कारयितुं वो युष्माकम् अर्थित्वमिच्छा यदि, अस्तीति शेषः॥

৪২। আমি এই পরিবাদশল্য উন্মূলিত করিয়া অধিকদিন জীবিত থাকিব, ইহা যদি তোমাদের অভিপ্রেত হয়, তবে আমি যাহা নিশ্চয় করিয়াছি, তোমরা দয়াপরবশ হইয়া আমার সেই অধ্যবসায়ে নিষেধ করিও না।

इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशम्।
न कश्चन भ्रातृषु तेषु शक्तो निषेद्धुमासीदनुमोदितुं वा ॥४३

४३ अः। इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशम् ईशं तेषु भ्रातृषु कश्चन निषेद्धुम् अनुमोदितुं वा शक्तः न आसीत्। वाच्य—केनचन शक्तेन न अभूयत॥

४३। इत्युक्तवन्तं जनकात्मजायां विषये नितान्तरूक्षाभिनिवेशम् अतिक्रूराग्रहम् ईशं स्वामिनं तेषु भ्रातृषु मध्ये कश्चन अपि निषेद्धुं निवारयितुम् अनुमोदितुं प्रवर्त्तयितुं वा शक्तो नासीत्। पक्षद्वयस्यापि प्रबलत्वादित्यर्थः॥

৪৩। রামচন্দ্র জনকাত্মজা জানকীর প্রতি নিষ্ঠুরাচরণে কৃতসঙ্কল্প হইয়া এইরূপ রুক্ষভাবে আগ্রহপ্রকাশ করিলে অনুজগণের মধ্যে কেহ তাঁহার আদেশের নিষেধ বা অনুমোদন করিতে সমর্থ হইলেন না।

स लक्ष्मणं लक्ष्मणपूर्वजन्मा विलोक्य लोकत्रयगीतकीर्त्तिः।
सौम्येति चाभाष्य यथार्थभाषी स्थितं निदेशे पृथगादिदेश॥४४

४४ अः। लोकत्रयगीतकीर्त्तिः यथार्थभाषी लक्ष्मणपूर्वजन्मा सः (रामः) निदेशे स्थितं लक्ष्मणं विलोक्य (हे) सौम्य इति आभाष्य च पृथक् आदिदेश॥ वाच्य—लक्ष्मणपूर्वजन्मना लोकत्रयगीतकीर्त्तिना यथार्थभाषिणा तेन स्थितः लक्ष्मणः पृथक् आदिदिशे॥

४४। लोकत्रयगीतकीर्त्तिः यथार्थभाषी लक्ष्मणपूर्वजन्मा लक्ष्मणाग्रजः स रामः निदेशे स्थितमाज्ञाकारिणं लक्ष्मणं विलोक्य 'हे सौम्य! सुभग!' इत्याभाष्य च पृथग्भरतशत्रुघ्नाभ्यां निराकृत्य आदिदेश आज्ञापयामास॥

प्रजावती दोहदशंसिनी ते
तपोवनेषु स्पृहयालुरेव।
स त्वं रथी तद्व्यपदेशनेयां
प्रापय्य वाल्मीकिपदं त्यजैनाम्॥ ४५

४५ अ:। दोहदशंसिनी ते प्रजावती, तपोवनेषु स्पृहयालुः एव। सः त्वं रथी (सन्) तद्व्यपदेशनेयाम् एनां वाल्मीकिपदं प्रापय्य त्यज। वाच्य—दोहदशंसिन्या, स्पृहयाल्वा प्रजावत्या भूयते। तेन त्वया रथिना एषा त्यज्यताम्॥

४५। दोहदो गर्भिणीमनोरथः, तत्शंसिनी ते प्रजावती भ्रातृजाया, 'प्रजावती भ्रातृजाया' इत्यमरः, तपोवनेषु स्पृहयालुरेव सस्पृहैव। 'स्पृहिगृहि'—इत्यादिनालुच्प्रत्ययः। सः त्वं रथी सन् तद्व्यपदेशेन दोहदमिषेण नेयां नेतव्यामेनां सीतां वाल्मीकेः पदं स्थानं प्रापय्य गमयित्वा। 'विभाषाय' इत्ययादेशः। त्यज॥

৪৪—৪৫। অনন্তর ত্রিলোকবিখ্যাতকীর্ত্তি সত্যভাষী লক্ষ্মণাগ্রজ রাম, আজ্ঞাবহ লক্ষ্মণের দিকে দৃষ্টিপাত করিয়া পৃথক্‌রূপে আদেশ করিলেন;—হে সৌম্য! সীতা গর্ভাবস্থায় তপোবনদর্শনের অভিলাষ প্রকাশ করিয়াছেন; অতএব তুমি রথারোহণ-পূর্ব্বক এই ছলে সীতাকে লইয়া বাল্মীকির তপোবনে পরিত্যাগ করিয়া আইস।

स शुश्रुवान् मातरि भार्गवेण पितुर्नियोगात् प्रहृतं द्विषद्वत्।
प्रत्यग्रहीदग्रजशासनं तत् आज्ञा गुरूणां ह्यविचारणीया॥४६

४६ अ:। पितुः नियोगात् भार्गवेण मातरि द्विषद्वत् प्रहृतं शुश्रुवान् सः (लक्ष्मणः) तत् अग्रजशासनं प्रत्यग्रहीत्, गुरूणाम् आज्ञा अविचारणीया हि॥ वाच्य—शुश्रुषा तेन, तत् प्रत्यग्राहि। अविचारणीयया आज्ञया भूयते॥

४६। पितुर्जमदग्नेः नियोगात् शासनात् भार्गवेण जामदग्न्येन कर्त्रा। 'न लोक' इत्यादिना षष्ठीप्रतिषेधः। मातरि द्विषतीव द्विषद्वत्, 'तत्र तस्येव' इति वतिप्रत्ययः। प्रहृतं प्रहारं शुश्रुवान् श्रुतवान्। 'भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः। सः लक्ष्मणः तदग्रजशासनं प्रत्यग्रहीत्। हि यस्मात्—गुरूणामाज्ञा अविचारणीया॥

৪৬। লক্ষ্মণ শুনিয়াছিলেন,—পরশুরাম পিতার আদেশে স্বীয় জননীর শত্রুবৎ শিরশ্ছেদন করিয়াছিলেন; গুরুজনের আদেশ অবিচারণীয়, এজন্য তিনিও তৎকালে অগ্রজের আদেশ স্বীকার করিলেন।

अथानुकूलश्रवणप्रतीतामत्रस्नुभिर्युक्तधुरं तुरङ्गैः।
रथं सुमन्त्रप्रतिपन्नरश्मिमारोप्य वैदेहसुतां प्रतस्थे॥ ४७

४७ अ:। अथ (असौ लक्ष्मणः) अनुकूलश्रवणप्रतीतां वैदेहसुताम् अवग्रहिः तुरङ्गैः युक्तधुरं सुमन्त्रप्रतिपन्नरश्मिं रथम् आरोप्य प्रतस्थे॥ वाच्य—(तेन लक्ष्मणेन) प्रतस्थे॥

४७। अथासौ लक्ष्मणः, अनुकूलश्रवणेन प्रतीतामिष्टाकर्णनेन तुष्टां वैदेहसुताम् अवग्रहिः अभीरुभिः गर्भिणीवहनयोग्यैः, 'ग्रसिग्टधिपुषि-क्षिपेः क्नुः' इति क्नुप्रत्ययः। तुरङ्गैः युक्तधुरं सुमन्त्रेण प्रतिपन्नरश्मिं गृहीतप्रग्रहं रथमारोप्य प्रतस्थे॥

४१। অনন্তর লক্ষ্মণ অভীষ্টবাক্যশ্রবণে প্রীতিমতী সীতাকে নির্ভীক তুরঙ্গযোজিত সুমন্ত্রসারথি-পরিচালিত রথে আরোহণ করাইয়া অরণ্যযাত্রা করিলেন।

सा नीयमाना रुचिरान् प्रदेशान्
प्रियङ्करो मे प्रिय इत्यनन्दत्।
नाबुद्ध कल्पद्रुमतां विहाय
जातं तमात्मन्यसिपत्रवृक्षम्॥ ४८

४८ अ:। सा रुचिरान् प्रदेशान् नीयमाना (सती) मे प्रियः प्रियङ्करः इति अनन्दत्। तम् आत्मनि कल्पद्रुमतां विहाय असिपत्रवृक्षं जातं न अबुद्ध॥ वाच्य—नीयमानया प्रियेण प्रियङ्करेण (भूयते) इति तया अनन्द्यत। सः असिपत्रवृक्षः जातः नाबोधि॥

४८। सा सीता रुचिरान् प्रदेशान् नीयमाना प्राप्यमाणा सती मे मम प्रियः प्रियं करोतीति प्रियङ्करः प्रियकारीति अनन्दत्। 'क्षेमप्रियमद्रेऽण्च' इति चकारात् खच्प्रत्ययः। तं प्रियमात्मनि विषये कल्पद्रुमतां विहाय असिपत्रवृक्षं जातं नाबुद्ध नाज्ञासीत्। बुध्यतेर्लुङ्, असिपत्रः खड्गाकारदलः कोऽपि अपूर्वो वृक्षविशेषः। 'असिपत्रो भवेत् कोषाकारे च नरकान्तरे' इति विश्वः। आसन्नघातुक इति भावः॥

৪৮। সীতা মনোজ্ঞ প্রদেশে উপনীত হইয়া "প্রিয়তম আমার সাতিশয় প্রিয় করিয়াছেন" এইরূপ ভাবিয়া আনন্দিত হইয়াছিলেন, কিন্তু রাম তাঁহার প্রতি কল্পতরু-ভাব পরিত্যাগ করিয়া যে অসিপত্র—বৃক্ষভাব ধারণ করিয়াছেন, ইহা তিনি বুঝিতে পারিলেন না।

जुगूह तस्याः पथि लक्ष्मणो यत् सव्येतरेण स्फुरता तदक्ष्णा।
आख्यातमस्यै गुरु भावि दुःखमत्यन्तलुप्तप्रियदर्शनेन॥ ४९

४९ अ:। पथि लक्ष्मणः यत् (दुःखं) तस्याः जुगूह, तत् गुरु भावि दुःखम् अत्यन्तलुप्तप्रियदर्शनेन स्फुरता सव्येतरेण अक्ष्णा अस्यै आख्यातम्॥ वाच्य—लक्ष्मणेन जुगूहे। आख्यातवत् अक्षि।

४९। पथि लक्ष्मणो यद्दुःखं तस्याः सीताया जुगूह प्रतिसंहृतवान्

तद्गुरु भावि भविष्यद्दुःखम् अत्यन्तलुप्तं प्रियदर्शनं यस्य तेन स्फुरता सव्येतरेण दक्षिणेन अक्ष्णा अस्यै सीतायै आख्यातम्। स्त्रीणां दक्षिणाक्षिस्फुरणं दुर्निमित्तमाहुः॥

৪৯। পথিমধ্যে গমনকালে লক্ষ্মণ যে দুঃখ গোপন করিয়াছিলেন, তাঁহার দক্ষিণ নয়ন স্পন্দিত হইয়া জন্মের মত প্রিয়ের অদর্শনরূপ সেই ভাবী অমঙ্গল সূচিত করিতে লাগিল।

सा दुर्निमित्तोपगताद्विषादात्
सद्यः परिम्लानमुखारविन्दा।
राज्ञः शिवं सावरजस्य भूयात्
इत्याशशंसे करणैरबाह्यैः॥ ५०

৫০ अ:। सा दुर्निमित्तोपगतात् विषादात् सद्यः परिम्लानमुखारविन्दा (सती) सावरजस्य राज्ञः शिवं भूयात् इति अबाह्यैः करणैः आशशंसे। वाच्य—तया...विन्दया. शिवेन भविषीष्ट॥

৫০। सा सीता दुर्निमित्तेन दक्षिणाक्षिस्फुरणरूपेणोपगतात् प्राप्तात् विषादात् दुःखात् सद्यः परिम्लानमुखारविन्दा सती सावरजस्य सानुजस्य राज्ञो रामस्य शिवं भूयादिति अबाह्यैः करणैः अन्तःकरणैः आशशंसे। शंसतिः अपेक्षायाम् आत्मनेपदमिष्यते। करणैरिति बहुवचनं क्रियावृत्त्यभिप्रायम्। पुनःपुनः आशशंस इत्यर्थः॥

৫০। এই দুর্নিমিত্তজনিত বিষাদে তৎক্ষণাৎ তাঁহার মুখকমল পরিম্লান হইয়া গেল, তখন জানকী "অনুজগণের সহিত রাজা রামচন্দ্রের মঙ্গল হউক" মনে মনে বারংবার এইরূপ কামনা করিতে লাগিলেন।

गुरोर्नियोगाद्वनितां वनान्ते
साध्वीं सुमित्रातनयो विहास्यन्।
अवार्य्यतेवोत्थितवीचिहस्तै-
र्जह्नोर्दुहित्रा स्थितया पुरस्तात्॥५१

৫১ अ:। गुरोः नियोगात् साध्वीं वनितां वनान्ते विहास्यन् सुमित्रातनयः पुरस्तात् स्थितया जह्नोः दुहित्रा उत्थितवीचिहस्तैः अवार्य्यत इव। वाच्य—विहास्यन्तं सुमित्रातनयं स्थिता दुहिता अवारयत्॥

৫১। गुरोर्ज्यैष्ठस्य नियोगात् साध्वीं वनिताम् अत्याज्यामित्यर्थः, वनान्ते विहास्यन् त्यक्ष्यन् सुमित्रातनयो लक्ष्मणः पुरस्तादग्रे स्थितया

जह्नोर्दुहित्रा जाह्नव्या उत्थितैः वीचिहस्तैः अवार्य्यत इव । अकार्य्यं मा कुरु इत्यवार्य्यत इव इत्युत्प्रेक्षा ॥

৫১। সুমিত্রানন্দন লক্ষ্মণ জ্যেষ্ঠের নিয়োগে ভ্রাতৃজায়া সাধ্বী সীতাদেবীকে বনমধ্যে পরিত্যাগ করিতে উদ্যত হইলে ভগবতী জাহ্নবী যেন তাঁহার অগ্রবর্ত্তিনী হইয়া উত্থিত তরঙ্গরূপ করদ্বারা তাঁহাকে নিষেধ করিতে লাগিলেন।

रथात् स यन्त्रा निगृहीतवाहात्
तां भ्रातृजायां पुलिनेऽवतार्य्य ।
गङ्गां निषादाहृतनौविशेष-
स्ततार सन्धामिव सत्यसन्धः ॥ ५२

५२ अः। सत्यसन्धः सः यन्त्रा निगृहीतवाहात् रथात् भ्रातृजायां तां पुलिने अवतार्य्य निषादाहृतनौविशेषः (सन्) गङ्गां सन्धाम् इव ततार । वाच्य—तेन, निषादाहृतनौविशेषेण सत्यसन्धेन सन्धा इव गङ्गा तेरे ॥

५२ । सत्यसन्धः सत्यप्रतिज्ञः सः लक्ष्मणः यन्त्रा सारथिना निगृहीतवाहात् बद्धाश्वात् रथात् भ्रातृजायां पुलिनेऽवतार्य्य आरोप्य, निषादेन किरातेन आहृतनौविशेषः आनीतनौकः सन् गङ्गां भागीरथीं सन्धां प्रतिज्ञामिव ततार । 'सन्धा प्रतिज्ञा मर्य्यादा' इत्यमरः ॥

৫২। অনন্তর সুমন্ত্র সারথি অশ্ব সংযমন করিলে লক্ষ্মণ ভ্রাতৃপত্নী সীতাকে রথ হইতে আরোপিত করিলেন এবং সত্যপ্রতিজ্ঞ ব্যক্তির প্রতিজ্ঞা উত্তরণের ন্যায় নিষাদানীত নৌকায় আরোহণপূর্ব্বক গঙ্গা পার হইলেন।

अथ व्यवस्थापितवाक् कथञ्चित्
सौमित्रिरन्तर्गतवाष्पकण्ठः ।
औत्पातिकं मेघ इवाश्मवर्षं
महीपतेः शासनमुज्जगार ॥ ५३

५३ अः। अथ कथञ्चित् व्यवस्थापितवाक् अन्तर्गतवाष्पकण्ठः सौमित्रिः महीपतेः शासनम्, मेघः औत्पातिकम् अश्मवर्षम् इव उज्जगार ॥ वाच्य—व्यवस्थापितवाचा अन्तर्गतवाष्पकण्ठेन सौमित्रिणा मेघेन इव उज्जगरे ॥

५३ । अथ कथञ्चित् व्यवस्थापिता प्रकृतिमापादिता वाक् येन सः, अन्तर्गतवाष्पः कण्ठो यस्य सः, कण्ठस्तम्भिताश्रुरित्यर्थः, सौमित्रिः महीपतेः शासनं मेघः उत्पाते भवम् औत्पातिकम् अश्मवर्षं शिलावर्षमिव, उज्जगार उद्गीर्णवान् । दारुणत्वेन उज्जगार इत्युक्तम् ॥

৫৩। তদনন্তর অন্তর্গতবাষ্পে রুদ্ধকণ্ঠ লক্ষ্মণ অতি কষ্টে বাক্য নিঃসরণ করিয়া মেঘ যেমন ঔৎপাতিক শিলা বর্ষণ করে, তদ্রূপ মহীপতি রামচন্দ্রের আদেশ উদ্গিরণ করিলেন।

ততোঽভিষঙ্গানিলবিপ্রবিদ্ধা-
প্রভ্রশ্যমানাভরণপ্রসূনা।
স্বমূর্ত্তিলাভপ্রকৃতিং ধরিত্রীং
লতেব সীতা সহসা জগাম ॥ ৫৪

৫৪ অ:। ততঃ অভিষঙ্গানিলবিপ্রবিদ্ধা প্রভ্রশ্যমানাভরণপ্রসূনা সীতা লতা ইব, সহসা স্বমূর্ত্তিলাভপ্রকৃতিং ধরিত্রীং জগাম ॥ বাচ্য—অভিষঙ্গানিলবিপ্রবিদ্ধয়া প্রভ্রশ্যমানাভরণপ্রসূনয়া লতয়া ইব সীতয়া স্বমূর্ত্তিলাভপ্রকৃতিঃ ধরিত্রী জগ্মে ॥

৫৪। ততঃ অভিষঙ্গঃ পরাভবঃ 'অভিষঙ্গঃ পরাভবঃ' ইত্যমরঃ, স এবানিলস্তেন বিপ্রবিদ্ধা অভিহতা প্রভ্রশ্যমানানি পতন্তি আভরণানি প্রসূনানি চ যস্যাঃ সা সীতা লতেব সহসা স্বমূর্ত্তিলাভস্য স্বশরীর-লাভস্য স্বোৎপত্তেঃ প্রকৃতিং কারণং ধরিত্রীং জগাম। ভূমৌ পপাত ইত্যর্থঃ। স্ত্রীণামাপদি মাতা এব শরণমিতি ভাবঃ ॥

৫৪। প্রবল বায়ুবেগে পুষ্পাভরণা লতা যেরূপ সহসা ভূতলে পতিত হইলে তদীয় প্রসূন সকল ইতস্ততঃ বিক্ষিপ্ত হয়, বৈদেহীও তদ্রূপ অপমানসূচক রামের আদেশবাক্য শ্রবণে স্বীয় জননী অবনীতে পতিত হইলে তাঁহার অলঙ্কারনিকর ছড়াইয়া পড়িল।

ইক্ষ্বাকুবংশপ্রভবঃ কথং ত্বাং
ত্যজেদকস্মাৎ পতিরার্য্যবৃত্তঃ।
ইতি ক্ষিতিঃ সংশয়িতেব তস্যৈ
দদৌ প্রবেশং জননী ন তাবৎ ॥ ৫৫

৫৫ অ:। ইক্ষ্বাকুবংশপ্রভবঃ আর্য্যবৃত্তঃ পতিঃ ত্বাম্ অকস্মাৎ কথং ত্যজেৎ? ইতি সংশয়িতা ইব তাবৎ জননী ক্ষিতিঃ তস্যৈ প্রবেশং (আত্মনি) ন দদৌ ॥ বাচ্য—ইক্ষ্বাকুবংশপ্রভবেণ, আর্য্যবৃত্তেন পত্যা কথং ত্বং ত্যজ্যেথাঃ, সংশয়িতয়া জনন্যা ক্ষিত্যা প্রবেশঃ ন দদে ॥

৫৫। ইক্ষ্বাকুবংশপ্রভবঃ মহাকুলপ্রসূতিঃ ইত্যর্থঃ, আর্য্যবৃত্তঃ সাধু-চরিতঃ পতিঃ ভর্ত্তা ত্বাম্ অকস্মাৎ অকারণাৎ কথং ত্যজেৎ? অসম্ভা-বিতমিত্যর্থঃ, ইতি সংশয়িতেব সন্দিহানেব তাবৎ ত্যাগহেতুজ্ঞানাবধেঃ প্রাক্ ইত্যর্থঃ। জননী ক্ষিতিস্তস্যৈ সীতায়ৈ প্রবেশম্, আত্মনীতি শেষঃ, ন দদৌ ॥

৫৫। "ইক্ষ্বাকুবংশসম্ভূত বিশুদ্ধচরিত্র ত্বদীয় পতি রাম সহসা কেন তোমাকে পরিত্যাগ করিতেছেন" ধরিত্রীদেবী এইরূপ সংশয়াপন্ন হইয়াই বুঝি, জননী হইলেও তৎকালে তাঁহাকে ক্রোড়ে আশ্রয় প্রদান করিলেন না।

सा लुप्तसंज्ञा न विवेद दुःखं
प्रत्यागतासुः समतप्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धो
मोहादभूत् कष्टतरः प्रबोधः ॥ ५६

५६ अः। लुप्तसंज्ञा सा दुःखं न विवेद, प्रत्यागतासुः (सती) अन्तः समतप्यत। तस्याः सुमित्रात्मजयत्नलब्धः प्रबोधः मोहात् कष्टतरः अभूत्॥ वाच्य—लुप्तसंज्ञया तया न विविदे। (दुःखं तां) प्रत्यागतासुं समतपत्। सुमित्रात्मजयत्नलब्धेन प्रबोधेन कष्टतरेण अभावि।

५६। लुप्तसंज्ञा नष्टचेतना मूर्च्छिता सा दुःखं न विवेद, प्रत्यागतासुः लब्धसंज्ञा सती अन्तः समतप्यत दुःखेन अदह्यत इत्यर्थः, तपिः कर्म्मणि लङ्, कर्म्मकर्त्तरीति केचित्, तन्न 'तपस्तपःकर्म्मकस्य एव' इति यङ्नियमात्। तस्याः सीतायाः सुमित्रात्मजयत्नलब्धः प्रबोधो मोहात्—कष्टतरोऽतिदुःखदोऽभूत्। दुःखवेदनासम्भवादिति भावः॥

৫৬। সীতা প্রথমে চেতনাহীনা হইয়া কোন কষ্টেরই অনুভব করিলেন না, পরক্ষণেই আবার সংজ্ঞাপ্রাপ্ত হইয়া অত্যন্ত অনুতপ্ত হইলেন। সুমিত্রাতনয় লক্ষ্মণ যে যত্নসহকারে তাঁহার চেতনা সম্পাদন করিলেন, ইহা যেন তৎকালে তাঁহার পক্ষে অচেতনাবস্থা অপেক্ষাও কষ্টকর হইয়া উঠিল।

न चावदद्भर्त्तुरवर्णमार्य्या
निराकरिष्णोर्वृजिनादृतेऽपि ।
आत्मानमेव स्थिरदुःखभाजं
पुनः पुनर्दुष्कृतिनं निनिन्द ॥ ५७

५७ अः। आर्य्या (सा सीता) वृजिनात् ऋते अपि निराकरिष्णोः भर्त्तुः अवर्णम् न च अवदत्, (किन्तु) स्थिरदुःखभाजं दुष्कृतिनम् आत्मानम् एव पुनः पुनः निनिन्द॥ वाच्य—आर्य्यया अवर्णः नोद्यत। स्थिरदुःखभाक् दुष्कृती आत्मा निनिन्दे।

५७। आर्य्या साध्वी सा सीता वृजिनादृते एनसो विनापि, 'कलुषं वृजिनैनोऽघम्' इत्यमरः। 'अन्यारादितरर्त्ते'—इत्यादिना पञ्चमी। निराकरिष्णोर्निरासकस्य। 'अलङ्कृञ्—' इत्यादिनेष्णुच् प्रत्ययः। भर्त्तुरवर्णमपवादं न चावदत् नैव अवादीत्। किन्तु स्थिरदुःखभाजमतएव दुष्कृतिनमात्मानं पुनःपुनर्निनिन्द॥

৫৭। সাধ্বী সীতা পাপহীনা হইলেও যে পতি তাঁহাকে পরিত্যাগ করিয়াছেন, এজন্য তিনি রামচন্দ্রের প্রতি কোনই দোষারোপ করিলেন না, পরন্তু চিরদুঃখভাগিনী ও দুষ্কৃতকারিণী বলিয়া আপনাকেই আপনি বারংবার নিন্দা করিতে লাগিলেন।

आश्वास्य रामावरजः सतीं ता-
माख्यातवाल्मीकिनिकेतमार्गः।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं
देवि क्षमस्वेति बभूव नम्रः॥ ५८

५८ अ:। रामावरजः सतीं ताम् आश्वास्य आख्यातवाल्मीकिनिकेतमार्गः (सन्) निघ्नस्य मे भर्तृनिदेशरौक्ष्यं (हे) देवि! क्षमस्व इति नम्रः बभूव॥ वाच्य—आख्यातवाल्मीकिनिकेतमार्गेण रामावरजेन क्षम्यताम् इति नम्रेण बभूवे।

५८। रामावरजो लक्ष्मणः सतीं साध्वीं तामाश्वास्य आख्यात उपदिष्टो वाल्मीकेर्निकेतस्याश्रमस्य मार्गो येन स तथोक्तः सन् निघ्नस्य पराधीनस्य 'अधीनो निघ्न आयत्तः' इत्यमरः। मे भर्तृनिदेशेन स्वाम्यनुज्ञया हेतुना यद्रौक्ष्यं पारुष्यं तत् हे देवि! क्षमस्व इति नम्रः प्रणतो बभूव॥

৫৮। রামানুজ লক্ষ্মণ সাধ্বী সীতাদেবীকে আশ্বাস প্রদান করিয়া মহর্ষি বাল্মীকির তপোবনগমনের পথ প্রদর্শনপূর্ব্বক বলিলেন,—"দেবি! আমি পরাধীন, প্রভুর আজ্ঞাপালনহেতু আপনার প্রতি যে রূক্ষব্যবহার করিলাম, তাহা ক্ষমা করুন" এইরূপ বলিয়া প্রণত হইলেন।

सीता तमुत्थाप्य जगाद वाक्यं
प्रीतास्मि ते सौम्य चिराय जीव।
बिडौजसा विष्णुरिवाग्रजेन
भ्रात्रा यदित्थं परवानसि त्वम्॥ ५९

५९ अ:। सीता तम् उत्थाप्य वाक्यं जगाद। (हे) सौम्य! ते प्रीता अस्मि, चिराय जीव यत् बिडौजसा विष्णुः इव, अग्रजेन भ्रात्रा त्वम् इत्थं परवान् असि॥ वाच्य—सीतया जगदे, प्रीतया भूयते। त्वया जीव्यतां विष्णुना इव परवता भूयते।

५९। सीता तं लक्ष्मणमुत्थाप्य वाक्यं जगाद,—किमिति? हे सौम्य! साधो! ते प्रीतास्मि। चिराय चिरं जीव। यत् यस्मात् बिडौजसा इन्द्रेण विष्णुरुपेन्द्र इव अग्रजेन ज्येष्ठेन भ्रात्रा त्वमित्थं परवान् परतन्त्रोऽसि॥

৫৯। তখন সীতা তাঁহাকে উত্থাপিত করিয়া কহিলেন—হে সৌম্য! আমি

তোমার প্রতি প্রীতা হইয়াছি, তুমি দীর্ঘজীবী হও, উপেন্দ্র যেমন ইন্দ্রের অধীন, তদ্রূপ তুমিও তোমার জ্যেষ্ঠের অধীন, অতএব তোমার এ বিষয়ে দোষ নাই।

**श्वश्रूजनं सर्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः।**
**प्रजानिषेकं मयि वर्त्तमानं सूनोरनुध्यायत चेतसेति॥ ६०**

६० अः। सर्व्वं श्वश्रूजनम् अनुक्रमेण प्रापितमत्प्रणामः ( सन् ) विज्ञापय। मयि वर्त्तमानं सूनोः प्रजानिषेकं चेतसा अनुध्यायत इति। वाच्य—प्रापितमत्-प्रणामेन ( त्वया ) श्वश्रूजनः विज्ञाप्यताम् प्रजानिषेकः मयि वर्त्तमानः अनुध्यायताम्।

६०। सर्वं श्वश्रूजनमनुक्रमेण प्रापितमत्प्रणामः सन् मत्प्रणाममुक्त्वेत्यर्थः, विज्ञापय। किमिति? निषिच्यत इति निषेकः मयि वर्त्तमानं सूनोस्तत्पुत्रस्य प्रजानिषेकं गर्भं चेतसा अनुध्यायत शिवमस्त्विति चिन्तयत इति॥

৬০। হে লক্ষ্মণ! তুমি শ্বশ্রূসমূহকে যথাক্রমে আমার কৃত প্রণাম জানাইয়া বলিবে,—আমি যে তাঁহাদের তনয়ের ঔরসজাত গর্ভ ধারণ করিয়াছি, তাঁহারা যেন মনে মনে সেই গর্ভস্থ সন্তানের কল্যাণ কামনা করেন।

**वाच्यस्त्वया मद्वचनात् स राजा**
**वह्नौ विशुद्धामपि यत् समक्षम्।**
**मां लोकवादश्रवणादहासीः**
**श्रुतस्य किं तत् सदृशं कुलस्य॥ ६१**

६१ अः। सः राजा त्वया मद्वचनात् वाच्यः। समक्षं वह्नौ विशुद्धाम् अपि मां लोकवादश्रवणात् अहासीः ( इति यत् तत् श्रुतस्य कुलस्य च ) सदृशम् किम्? ॥ वाच्य—त्वं तं राजानं ब्रूयाः। विशुद्धा अहं त्वया अहायिषि।

६१। स राजा त्वया मद्वचनात् मद्वचनमिति कृत्वा, ल्यब्लोपे पञ्चमी, वाच्यो वक्तव्यः। किमित्यत आह—'वह्नौ' इत्यादिभिः सप्तभिः श्लोकैः। अक्ष्णोः समीपे समक्षम्, विभक्त्यर्थेऽव्ययीभावः, सामीप्यार्थे वा अव्ययीभावे शरदिति समासान्तष्टच्प्रत्ययः। समक्षम् अग्रे वह्नौ विशुद्धामपि मां लोकवादस्य मिथ्यापवादस्य श्रवणाद्धेतोरहासीरत्याक्षीरिति यत् तच्छ्रुतस्य प्रख्यातस्य कुलस्य सदृशं किम्? किन्त्वसदृशमित्यर्थः। यद्वा श्रुतस्य श्रवणस्य कुलस्य चेति योजना। कामचार्य्यसीति भावः॥

৬১। তুমি আমার বাক্যানুসারে রাজা রামচন্দ্রকে কহিবে,—"আপনার সমক্ষে আমি অগ্নিপরীক্ষায় পরিশুদ্ধা হইলেও কেবল লোকাপবাদশ্রবণে যে আমাকে পরিত্যাগ করিলেন, ইহা কি আপনার সুপ্রসিদ্ধ রঘুকুলের অনুরূপ কার্য্য হইল?"

**कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः ।**
**ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥६२**

६२ अः । अथवा कल्याणबुद्धेः तव मयि अयं कामचारः न शङ्कनीयः ( किन्तु ) मम एव जन्मान्तरपातकानां अप्रसह्यः विपाकविस्फूर्जथुः ॥ वाच्य—त्वम् इमं कामचारं न शङ्केथाः । अप्रसह्येन विपाकविस्फूर्जथुना भूयते ।

६२ । कल्याणेति अथवा कल्याणबुद्धेः सुधियः तव कर्त्तुः मयि विषये अयं त्यागो न कामचारः इच्छया करणं नाशङ्कनीयः । कामचारशङ्कापि न क्रियत इत्यर्थः । किन्तु ममैव जन्मान्तरपातकानामप्रसह्यः विपच्यत इति विपाकः फलित एव विस्फूर्जथुरशनिनिर्घोषः । 'स्फूर्जथुर्वज्रनिर्घोषः' इत्यमरः ॥

৬২ । অথবা "আপনি কল্যাণপ্রকৃতি, আপনি যে যথেচ্ছাচারের বশবর্ত্তী হইয়া আমাকে পরিত্যাগ করিয়াছেন; আমি কখনও এরূপ আশঙ্কা করিতে পারি না; ইহা আমার জন্মান্তরকৃত অনন্ত পাতকের দুর্ব্বিষহ বজ্রনির্ঘোষতুল্য ফল ।

**उपस्थितां पूर्वमपास्य लक्ष्मीं**
**वनं मया सार्द्धमसि प्रपन्नः ।**
**तदास्पदं प्राप्य तयातिरोषात्**
**सोढ़ास्मि न त्वद्भवने वसन्ती ॥ ६३**

६३ अः । पूर्वम् उपस्थितां लक्ष्मीम् अपास्य मया सार्द्धं वनं प्रपन्नः असि, तत् तया अतिरोषात् त्वद्भवने आस्पदं प्राप्य वसन्ती सोढ़ा न अस्मि ॥ वाच्य—प्रपन्नेन भूयते । वसन्त्या मया सोढ़या न भूयते ।

६३ । पूर्वमुपस्थितां प्राप्तां लक्ष्मीमपास्य मया सार्द्धं वनं प्रपन्नोऽसि प्राप्तोऽसि । तत् तस्मात्—तया लक्ष्म्या अतिरोषात् त्वद्भवने आस्पदं प्रतिष्ठाम् । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । प्राप्य वसन्ती अहं सोढा नास्मि ॥

৬৩ । "পূর্ব্বে আপনি উপস্থিত রাজলক্ষ্মী পরিত্যাগ করিয়া আমার সহিত বনে গমন করিয়াছিলেন ; এক্ষণে সময় বুঝিয়া সেই রাজলক্ষ্মী আপনার আবাসে আমাকে স্থান লাভ করিতে দেখিয়া রোষবশতঃ যেন তাহা সহ্য করিতে পারিতেছেন না ।

**निशाचरोपप्लुतभर्त्तृकाणां तपस्विनीनां भवतः प्रसादात् ।**
**भूत्वा शरण्या शरणार्थमन्यं कथं प्रपत्स्ये त्वयि दीप्यमाने॥६४**

६४ अ:। निशाचरोपप्लुतभर्तृकाणाम् तपस्विनीनां भवतः प्रसादात् शरण्या भूत्वा त्वयि दीप्यमाने (सति) शरणार्थम् अन्यं कथं प्रपत्स्ये ॥ वाच्य—मया शरण्यया अन्यः कथं प्रपत्स्यते।

६४। निशाचरैरुपप्लुताः पीड़िता भर्तारो यासां ता निशाचरोपप्लुत-भर्तृकाः 'नद्य‍ृतश्च' इति कप्प्रत्ययः, तासां तपस्विनीनां भवतः प्रसादादनुग्रहाच्छरण्या शरणसमर्था भूत्वा, अद्य त्वयि दीप्यमाने प्रकाशमाने सत्येव शरणार्थमन्यं तपस्विनं कथं प्राप्स्यामि ॥

৬৪। "পূর্ব্বে নিশাচরেরা ঋষিগণের প্রতি উপদ্রব করিলে ঋষিপত্নীরা আমারই শরণ লইতেন, আমি তৎকালে আপনারই অনুগ্রহে উঁহাদিগকে আশ্রয় প্রদান করিয়াছিলাম; এক্ষণে সেই আপনি জাজ্জ্যমান থাকিতে আমি কাহার শরণাগত হইব?"

किंवा तवात्यन्तवियोगमोघे कुर्य्यामुपेक्षां हतजीवितेऽस्मिन्।
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः॥ ५६

६५ अ:। किंवा, तव अत्यन्तवियोगमोघे अस्मिन् हतजीविते उपेक्षां कुर्य्याम्? रक्षणीयम् अन्तर्गतं त्वदीयं तेजः मे मम अन्तरायः न स्यात्॥ वाच्य—मया उपेक्षा क्रियेत रक्षणीयेन अन्तर्गतेन त्वदीयेन तेजसा अन्तरायेण न भूयेत।

६५। किंवा अथवा तव सम्बन्धिना अत्यन्तेन पुनःप्राप्तिरहितेन वियोगेन मोघे निष्फलेऽस्मिन् हतजीविते तुच्छजीविते उपेक्षां कुर्य्यां कुर्य्यामेव रक्षणीयं रक्षणार्हमन्तर्गतं कुक्षिस्थं त्वदीयं तेजः शुक्रं गर्भरूपम् 'शुक्रं तेजोरेतसी च बीजवीर्य्येन्द्रियाणि च' इत्यमरः। मे मम अन्तरायो विघ्नो न स्यात् यदि ॥

৬৫। "সম্প্রতি যদি আমার গর্ভস্থিত অবশ্যরক্ষণীয় আপনার সন্তান অন্তরায় না হইত, তবে কি আপনার চিরবিরহে এই নিষ্ফল তুচ্ছ জীবন ধারণ করিতাম?"

साहं तपः सूर्य्यनिविष्टदृष्टि-
रूर्द्ध्वं प्रसूतेश्चरितुं यतिष्ये।
भूयो यथा मे जननान्तरेऽपि
त्वमेव भर्त्ता न च विप्रयोगः॥ ६६

६६ अ:। सा अहं प्रसूतेः ऊर्द्ध्वं सूर्य्यनिविष्टदृष्टिः (सती तथाविधं) तपः चरितुं यतिष्ये, यथा भूयः मे जननान्तरे अपि त्वमेव भर्त्ता, न च विप्रयोगः॥ वाच्य—तया सूर्य्यनिविष्टदृष्ट्या मया यतिष्यते। त्वया भर्त्रा भूयेत। विप्रयोगेण न भूयेत।

६६! साहं प्रसूतेरूर्द्ध्वं सूर्य्यनिविष्टदृष्टिः सती तथाविधं तपश्चरितुं यतिष्ये, यथा भूयस्तेन तपसा मे मम जननान्तरेऽपि त्वमेव भर्त्ता स्याः विप्रयोगश्च न स्यात्॥

৬৬। "আমি প্রসবান্তে সূর্য্যের প্রতি উর্দ্ধদৃষ্টি নিবদ্ধ করিয়া এই বলিয়া তপশ্চরণ করিব যে, জন্মান্তরেও যেন আপনিই আমার স্বামী হন এবং এইরূপ নিদারুণ বিরহ-যন্ত্রণা যেন পুনরায় সহ্য করিতে না হয়।"

**নৃপস্য বর্ণাশ্রমপালনং যৎ স এব ধর্ম্মো মনুনা প্রণীতঃ।**
**নির্ব্বাসিতাপ্যেবমতস্ত্বয়াহং তপস্বিসামান্যমবেক্ষণীয়া॥ ৬৭**

৬৭ অঃ। বর্ণাশ্রমপালনং যৎ সঃ এব নৃপস্য ধর্ম্মঃ মনুনা প্রণীতঃ, অতঃ ত্বয়া এবম্ অহং নির্ব্বাসিতা অপি তপস্বিসামান্যম্ অবেক্ষণীয়া॥ বাচ্য—বর্ণাশ্রমপালনেন যেন তেন এব ধর্ম্মেণ মনুনা প্রণীতেন ভূয়তে। ত্বম্ এবং নির্ব্বাসিতাং মাম্ অবেক্ষেথাঃ।

৬৭। বর্ণানাং ব্রাহ্মণাদীনামাশ্রমাণাং ব্রহ্মচর্য্যাদীনাঞ্চ পালনং যৎ স এব নৃপস্য ধর্ম্মো মনুনা প্রণীত উক্তঃ। অতঃ কারণাৎ এবং ত্বয়া নির্ব্বাসিতা নিষ্কাসিতাপ্যহং তপস্বিভিঃ সামান্যং সাধারণং যথা ভবতি তথা অবেক্ষণীয়া। কলত্রদৃষ্ট্যভাবেঽপি বর্ণাশ্রমদৃষ্টিঃ সীতায়াং কর্ত্তব্যেত্যর্থঃ॥

৬৭। "নৃপগণের যে ব্রাহ্মণাদি বর্ণ এবং ব্রহ্মচর্য্যাদি আশ্রমপালন, ভগবান্ মনু তাহাই ধর্ম্ম বলিয়া প্রণয়ন করিয়াছেন; অতএব আপনি আমাকে নির্ব্বাসিত করিয়াও সামান্য তপস্বিনীবোধেও অবশ্য দৃষ্টি করিবেন।"

**তথেতি তস্যাঃ প্রতিগৃহ্য বাচং**
**রামানুজে দৃষ্টিপথং ব্যতীতে।**
**সা মুক্তকণ্ঠং ব্যসনাতিভারা-**
**চ্চক্রন্দ বিগ্না কুররীব ভূয়ঃ॥ ৬৮**

৬৮ অঃ। তস্যা বাচং তথেতি প্রতিগৃহ্য রামানুজে দৃষ্টিপথং ব্যতীতে (সতি) সা ব্যসনাতিভারাৎ মুক্তকণ্ঠং বিগ্না কুররী ইব ভূয়ঃ চক্রন্দ॥ বাচ্য—তয়া বিগ্নয়া কুরর্য্যা ইব চক্রন্দে।

৬৮। তথেতি তস্যাঃ সীতায়া বাচং প্রতিগৃহ্য অঙ্গীকৃত্য রামানুজে লক্ষ্মণে দৃষ্টিপথং ব্যতীতে অতিক্রান্তে সতি সা সীতা ব্যসনাতিভারাদ্ দুঃখাতিরেকাৎ—মুক্তকণ্ঠং যথা স্যাৎ তথা বাগ্‌বৃত্ত্যেত্যর্থঃ, বিগ্না ভীতা কুররী ইব 'উৎক্রোশকুররৌ সমৌ' ইত্যমরঃ, ভূয়িষ্ঠং চক্রন্দ চুক্রোশ॥

৬৮। অনন্তর লক্ষ্মণ "আমি এ সমস্তই নিবেদন করিব" এই অঙ্গীকার করিয়া দৃষ্টিপথের অতীত হইলে জানকী দুঃখভরে উদ্বিগ্ন হইয়া ভীতা কুররীর ন্যায় পুনরায় মুক্তকণ্ঠে ক্রন্দন করিতে লাগিলেন।

नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्यः ।
तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि ॥ ६९

६९ अः । मयूराः नृत्यं, वृक्षाः कुसुमानि, हरिण्यः उपात्तान् दर्भान् विजहुः तस्याः समदुःखभावं प्रपन्ने वने अपि अत्यन्तं रुदितम् आसीत् ॥ वाच्य—मयूरैः नृत्यं, वृक्षैः कुसुमानि, हरिणीभिः उपात्ताः दर्भाः विजह्रिरे अत्यन्तं न रुदितेन अभूयत ।

६९ । मयूराः नृत्यं विजहुस्त्यक्तवन्तः, वृक्षाः कुसुमानि, हरिण्य उपात्तान् दर्भान्, इत्थं तस्याः सीतायाः समदुःखभावं प्रपन्ने तुल्यदुःखत्वं प्राप्ते वने अपि अत्यन्तं रुदितमासीत् । यथा रामगेहेऽपीत्यपिशब्दार्थः ॥

৬৯। তখন ময়ূরগণ নৃত্য, বৃক্ষ সকল কুসুম এবং হরিণীনিবহ সংগৃহীত কুশ কবল পরিত্যাগ করিল; এইরূপে বনমধ্যে সকলেই যেন সীতার সমদুঃখভাব প্রাপ্ত হইয়া অত্যন্ত রোদন করিতে লাগিল।

तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः ।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥ ७०

७० अः । कुशेध्माहरणाय यातः कविः रुदितानुसारी (सन्) ताम् अभ्यगच्छत् निषादविद्धाण्डजदर्शनोत्थः यस्य शोकः श्लोकत्वम् आपद्यत ॥ वाच्य—यातेन रुदितानुसारिणा कविना सा अभ्यगम्यत । निषादविद्धाण्डजदर्शनोत्थेन शोकेन श्लोकत्वम् आपद्यत ।

७० । कुशेध्माहरणाय यातः कविर्वाल्मीकिः रुदितानुसारी सन् तां सीतामभ्यगच्छत् । अभिगमनस्वरूपे, दयालुतयेत्याह—निषादेति, निषादेन व्याधेन विद्धस्य अण्डजस्य क्रौञ्चस्य दर्शनेन उत्थः उत्पन्नो यस्य शोकः श्लोकत्वमापद्यत, श्लोकरूपेणाविरभूदित्यर्थः । स च श्लोकः पद्यते—मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥' इति । तिरश्चामपि दुःखं न सेहे । किमुतान्येषामिति भावः ॥

पौराणिकी वार्त्ता—आसीत् पुरा रत्नाकरो नाम कश्चिद्द्विजः, स तु दस्युवृत्तिमास्थाय जीवनमयापयत् । अथैकदा स काननं पर्य्यटन् ब्रह्मनारदावासादितवान्, आसाद्य च तौ दस्युधर्मतया हन्तुमियेष । यदासौ तयोः करौ बबन्ध, तदा नारदस्तमकथयत्—विलुप्तमते ! किं त्वया पापकर्म्मणा कृतं—दुर्लभेऽस्मिन् द्विजकुले जन्म परिगृह्य दूरमास्तां ब्राह्मण्यं, किमहो पापाध्यवसायेन रौरवपथं परिष्करोषि ! रत्नाकरः प्रत्युवाच—मेने तावदियं मे पापप्रवृत्तिः, किन्तु ग्रतामन्यकार्य्योषि कृत्वा यत् परिवाराणां पोषणं तदन्नादीनां न दोषावहमिति । उत वा यदर्थमयं मेऽध्यवसायः पापार्ज्जितस्यार्थस्योपभोगेन तेऽपि पापिनः स्युः, तेन हि तैः सार्द्धमहमपि रौरवं गमिष्यामीति न तच्च दुःखावहम् । श्रुत्वैतत् देवर्षिरवोचत्—भ्रान्तोऽसि ! संसारेऽस्मिन् पिता वा माता वा पुत्रः कलत्रं वा न कोऽपि स्वकृतपापस्य फलं भोक्ष्यते । अथ यदि ते मद्वचने आस्था न जायते तदा गृहं गत्वा पित्रादीन्

प्रत्येकं पृच्छ, यदि ते पापभागं ग्रहीष्यन्ति तदा यथेष्टमनुष्ठीयताम्। तदाकर्ण्य गृहं गत्वा पृच्छतो रत्नाकरस्य तथाविधानुष्ठानजनितपापभारभागं वोढुं कोऽपि न स्वजनः स्वीचकार। तदानीं स पुनर्नारदसमीपमागत्य आत्मनिष्कृतये तं शरणमाजगाम। नारदस्तु तं रामनाम्ना अदीक्षयत्, किन्तु रत्नाकरेण एतादृक् पापमाचरितं, यत् जिह्वाजड़तया रामनामापि उच्चारयितुं न शक्यते स्म। अथ "मरामरे"ति विपरीतोच्चारणेन राम इति सकृत् सञ्जायते इत्यालोच्य देवर्षिः पुनस्तथाविध-"मरा"-मन्त्रेण तं दीक्षयित्वा प्रस्थितः। रत्नाकरोऽपि बहुशो "मरामरा" इति प्रजपन् वल्मीकेनावृतसर्व्वाङ्गस्तस्थौ। अथ गते बहुतिथे काले देवर्षिः पुनस्तत्रागत्य निर्विकारः तं तथाविधमालोक्य वल्मीकेनावृतसर्वाङ्गत्वात् तं "वाल्मीकि"रिति नाम्ना अभिहितवान्। किमहो रामनाममाहात्म्यं—पूर्वं यः खलु दस्युभूतदय आसीत्, अमीममहापापानुष्ठानरततया यः कदाचित् रामनामापि उच्चारयितुमसमर्थः दयालुः स इदानीं क्रौञ्चमिथुनहननोद्यतं निषादं "मा निषाद प्रतिष्ठां त्वमगमः" इत्यादिश्लोकेन निवारयितुमध्यवस्यति। तदा नारदः वाल्मीकेः श्लोकस्फूर्त्तिमालोच्य तं "आदिकवि"रित्युपाधिनाप्यलञ्चकार। एवं स मुनिर्वाल्मीकिः श्लोकरचनापथप्रविष्टस्तूपदिष्टश्च तेनैव तत्रभवता भगवता देवर्षिणा "रामायण" नाम साधु काव्यं प्रणीतवान्। इति।

१०। ব্যাধবিদ্ধ ক্রৌঞ্চমিথুন দর্শনে যাঁহার উচ্ছলিত শোক শ্লোকরূপে পরিণত হইয়াছিল, সেই আদিকবি বাল্মীকি ইত্যবসরে সমিৎ কুশাদি আহরণের জন্য বিচরণ করিতে করিতে রোদনধ্বনির অনুসরণে আসিয়া সীতার সমীপে উপনীত হইলেন।

तमश्रु नेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववन्दे।
तस्यै मुनिर्दोहदलिङ्गदर्शी दाश्वान् सुपुत्राशिषमित्युवाच॥७१

७१ अः। सीता विलापात् विरता (सती) नेत्रावरणम् अश्रु प्रमृज्य तं ववन्दे। दोहदलिङ्गदर्शी मुनिः तस्यै सुपुत्राशिषं दाश्वान्, इति उवाच॥ वाच्य—विरतया सीतया स ववन्दे। दोहदलिङ्गदर्शिना दाश्वषा मुनिना इति ऊचे।

७१। सीता विलापात् विरता सती नेत्रावरणं दृष्टिप्रतिबन्धकमश्रु प्रमृज्य तं मुनिं ववन्दे। दोहदलिङ्गदर्शी गर्भचिह्नदर्शी मुनिस्तस्यै सीतायै सुपुत्राशिषं तत्प्राप्तिहेतुभूतां दाश्वान् दत्तवानिति वक्ष्यमाणप्रकारेणोवाच। 'दाश्वान् साह्वान् मीढ्वांश्च' इति क्वस्वन्तो निपातः॥

जाने विसृष्टां प्रणिधानतस्त्वां
मिथ्यापवादक्षुभितेन भर्त्रा।
तन्मा व्यथिष्ठा विषयान्तरस्थं
प्राप्तासि वैदेहि पितुर्निकेतम्॥ ७२

७२ अः। त्वां मिथ्यापवादक्षुभितेन भर्त्रा विसृष्टां प्रणिधानतः जाने। (हे) वैदेहि। विषयान्तरस्थं पितुः निकेतं प्राप्ता असि, तत् मा व्यथिष्ठाः। वाच्य—विसृष्टा त्वं मया ज्ञायसे। प्राप्तया भूयते मा व्यथिष्ट।

৭২। त्वां मिथ्यापवादेन क्षुभितेन भर्त्रा विसृष्टां त्यक्तां प्रणिधानतः समाधिदृष्ट्या जाने। हे वैदेहि! विषयान्तरस्थं देशान्तरस्थं पितुर्जनकस्येव निकेतं गृहं प्राप्तासि। तत् तस्मात् व्यथिता मा शोचीः। व्यथेर्लुङ्। 'न माङ्योगे' इत्यडागमप्रतिषेधः। भर्त्रोपेक्षितानां पितृगृहवास एवोचित इति भावः।

৭১—৭২। তখন নেত্রজলে সীতার নয়ন অবরুদ্ধ ছিল, তিনি অশ্রুধারা মার্জ্জনপূর্ব্বক বিলাপ হইতে বিরত হইয়া মুনিবরকে বন্দনা করিলেন; মহর্ষি বাল্মীকিও তাঁহার গর্ভলক্ষণ সন্দর্শন করিয়া "সুপুত্র প্রসব কর" এইরূপ আশীর্ব্বাদ করতঃ কহিলেন, —হে বৈদেহি! তোমার স্বামী অলীক অপবাদে ক্ষোভিত হইয়া যে তোমাকে পরিত্যাগ করিয়াছেন, ইহা আমি ধ্যানবলে জানিতে পারিয়াছি; তুমি দেশান্তরস্থিত তোমার পিত্রালয়েই আসিয়াছ, অতএব ব্যথিত হও না।

उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि।
त्वां प्रत्यकस्मात् कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे ॥৭৩

৭৩ अः। उत्खातलोकत्रयकण्टके अपि सत्यप्रतिज्ञे अपि अविकत्थने अपि त्वां प्रति अकस्मात् कलुषप्रवृत्तौ भरताग्रजे मे मन्युः अस्ति एव॥ वाच्य—मन्युना भूयते।

৭৩। उत्खातलोकत्रयकण्टकेऽपि रावणादिकण्टकोद्धरणेन सर्वलोकोपकारिण्यपीत्यर्थः, सत्यप्रतिज्ञे सत्यसन्धेऽपि अविकत्थनेऽनात्मश्लाघिन्यपि इत्थं स्नेहपात्रेऽपि त्वां प्रति अकस्मादकारणात्—कलुषप्रवृत्तौ गर्हितव्यापारे भरताग्रजे मे मन्युः कोपोऽस्त्येव। सर्वगुणोत्कर्षेऽप्ययं दोष इत्यर्थः। सीतानुनयार्थोऽयं रामोपालम्भः॥

৭৩। ভরতাগ্রজ রাম রাবণকে বিনাশ করিয়া ত্রিলোকের কণ্টক উৎপাত করিয়াছেন, তিনি সত্যপ্রতিজ্ঞ এবং অহঙ্কারবিহীন; তথাপি তোমার প্রতি যে অকস্মাৎ এরূপ গর্হিতাচরণ করিয়াছেন এজন্য তাঁহার প্রতি আমার ক্রোধ জন্মিয়াছে।

तवोरुकीर्त्तिः श्वशुरः सखा मे
सतां भवोच्छेदकरः पिता ते।
धुरि स्थिता त्वं पतिदेवतानां
किं तन्न येनासि ममानुकम्प्या ॥ ৭৪

৭৪ अः। उदारकीर्त्तिः तव श्वशुरः मे सखा, ते पिता सतां भवोच्छेदकरः, त्वं पतिदेवतानां धुरि स्थिता येन मम अनुकम्प्या न असि तत् किम्?॥ वाच्य—उदारकीर्त्तिना श्वशुरेण भवोच्छेदकरेण पित्रा सख्या (भूयते) स्थितया त्वया अनुकम्प्यया (भूयते)॥

৭৪। उरुकीर्त्तिस्तव श्वशुरो दशरथो मे सखा। ते पिता जनकः

সতাং বিদুষাং ভবোচ্ছেদকারো জ্ঞানোপদেশাদিনা সংসারদুঃখধ্বংসকারী। ত্বং পতিদেবতানাং পতিব্রতানাং ধুরি অগ্রে স্থিতা। যেন নিমিত্তেন মমানুকম্পায়া অনুগ্রাহ্যা নাসি তত্ কিম্ ন কিঞ্চিদিত্যর্থঃ ॥

৭৪। তোমার শ্বশুর উদারকীর্ত্তি রাজা দশরথ আমার সখা ছিলেন, তোমার পিতা জনক জ্ঞানোপদেশ দ্বারা সাধুদিগের ভববন্ধন ছিন্ন করেন এবং তুমি পতিব্রতাদিগের অগ্রগণ্যা, অতএব তুমি কেন না আমার অনুকম্পার পাত্রী হইবে?

তপস্বিসংসর্গবিনীতসত্ত্বে তপোবনে বীতভয়া বসাস্মিন্ ।
ইতো ভবিষ্যত্যনঘপ্রসূতেরপত্যসংস্কারমযো বিধিস্তে ॥ ৭৫

৭৫ অঃ। অস্মিন্ তপস্বিসংসর্গবিনীতসত্ত্বে তপোবনে বীতভয়া বস। ইতঃ অনঘপ্রসূতেঃ অপত্যসংস্কারময়ঃ বিধিঃ ভবিষ্যতি ॥ বাচ্য—বীতভয়য়া উষ্যতাম্। অপত্যসংস্কারমযেন বিধিনা ভবিষ্যতে।

৭৫। তপস্বিসংসর্গেণ বিনীতসত্ত্বে শান্তজন্তুকেঽস্মিন্ তপোবনে বীতভয়া নির্ভীকা বস। ইতোঽস্মিন্ বনেঽনঘপ্রসূতেঃ সুখপ্রসূতেস্তেঽপত্যসংস্কারময়ো জাতকর্মাদিরূপো বিধিরনুষ্ঠানং ভবিষ্যতি ॥

৭৫। তপস্বীদিগের সংসর্গে এই তপোবনস্থিত হিংস্র জন্তুগণ সাতিশয় শান্তভাব ধারণ করিয়াছে, অতএব তুমি নির্ভয়ে এখানে বাস কর, এখানে তুমি বিনা ক্লেশে সন্তান প্রসব করিবে এবং তাহাদের জাতকর্ম্মাদি সংস্কার যথাবিধি সম্পাদিত হইবে।

অশূন্যতীরাং মুনিসন্নিবেশৈস্তমোপহন্ত্রীং তমসাং বগাহ্য ।
তত্সৈকতোত্সঙ্গবলিক্রিয়াভিঃ সম্পত্স্যতে তে মনসঃ প্রসাদঃ ॥ ৭৬

৭৬ অঃ। মুনিসন্নিবেশৈঃ অশূন্যতীরাং তমোঽপহন্ত্রীং তমসাং (নদীং) বগাহ্য তত্সৈকতোত্সঙ্গবলিক্রিয়াভিঃ তে মনসঃ প্রসাদঃ সম্পত্স্যতে ॥ বাচ্য—প্রসাদেন সম্পত্স্যতে।

৭৬। সন্নিবিশন্তে যেষ্বিতি সন্নিবেশা উটজাঃ, অধিকরণার্থে ঘঞ্প্রত্যয়ঃ। মুনীনাং সন্নিবেশৈরুটজৈরশূন্যতীরাং পূর্ণতীরাং তমসঃ শোকস্য পাপস্য বা অপহন্ত্রীম্। 'তমস্তু ক্লীবে পাপে নরকশোকয়োঃ' ইত্যমরঃ। তমসাং নদীং বগাহ্য তত্র স্নাত্বা, বলিক্রিয়াপেক্ষয়া পূর্ব্বকালতা, তস্যাঃ সৈকতোত্সঙ্গেষু বলিক্রিয়াভিরিষ্টদেবতাপূজাবিধিভিস্তে মনসঃ প্রসাদঃ সংপত্স্যতে ভবিষ্যতি ॥

৭৬। ঐ দেখ, মুনিগণের পর্ণকুটীরদ্বারা তমসাতীর সর্ব্বত্র পরিপূর্ণ রহিয়াছে, তুমি এই কলুষনাশিনী তমসার জলে অবগাহন এবং তাঁহার পুলিনে অভীষ্ট দেবতার পূজা কর, তোমার মন সুপ্রসন্ন হইবে।

पुष्पं फलं चार्त्तवमाहरन्त्यो
बीजञ्च बालेयमकृष्टरोहि ।
विनोदयिष्यन्ति नवाभिषङ्गा-
मुदारवाचो मुनिकन्यकास्त्वाम् ॥ ৭৭

৭৭ अः । आर्त्तवं पुष्पं फलं च अकृष्टरोहि बालेयं बीजं च आहरन्त्यः उदारवाचः मुनिकन्यकाः नवाभिषङ्गां त्वां विनोदयिष्यन्ति ॥ वाच्य—आहरन्तीभिः उदारवाग्भिः मुनिकन्यकाभिः नवाभिषङ्गा त्वं विनोदयिष्यसे ।

৭৭। ऋतुरस्य प्राप्त आर्त्तवं स्वकालप्राप्तमित्यर्थः । पुष्पं फलञ्च, अकृष्टरोहि अकृष्टक्षेत्रोत्थम् अकृष्टपच्यमित्यर्थः । बलये हितं बालेयं पूजायोग्यम्, 'छदिरुपधिबलेर्ढञ्' इति ढञ्प्रत्ययः, बीजं नीवारादिधान्यञ्च आहरन्त्य उदारवाचः प्रगल्भगिरो मुनिकन्यका नवाभिषङ्गां नूतनदुःखां त्वां विनोदयिष्यन्ति ॥

৭৭। মুনিকন্যাগণ সময়োচিত ফল, পুষ্প এবং অকৃষ্ট-পচ্য পূজোপচারযোগ্য নীবারাদি ধান্য আহরণ করিয়া উদারবাক্যে তোমার নবশোকসন্তপ্ত মনের বিনোদ-সম্পাদন করিবে।

पयोघटैराश्रमबालवृक्षान् संवर्द्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक्तनयोपपत्तेः स्तनन्धयप्रीतिमवाप्स्यसि त्वम् ৭৮

৭৮ अः । स्वबलानुरूपैः पयोघटैः आश्रमबालवृक्षान् संवर्द्धयन्ती त्वं तनयोपपत्तेः प्राक् असंशयं स्तनन्धयप्रीतिम् अवाप्स्यसि ॥ वाच्य—संवर्द्धयन्त्या त्वया स्तनन्धयप्रीतिः अवाप्स्यते ।

৭৮। स्वबलानुरूपैः स्वशक्त्यनुसारिभिः पयसामम्भसां घटैः, स्तन्यैरिति च ध्वन्यते । आश्रमबालवृक्षान् संवर्धयन्ती त्वं तनयोपपत्तेः प्राक् पूर्व्वम् असंशयं यथा तथा स्तनं धयति पिबतीति स्तनन्धयः शिशुः, 'नासिकास्तनयोर्ध्माधेटोः' इति खश्प्रत्ययः, 'अरुर्द्विषत्—' इत्यादिना मुमागमः । तस्मिन् या प्रीतिस्ताम् अवाप्स्यसि । ततः परं सुलभ एव विनोद इति भावः ॥

৭৮। তুমি স্বীয় সামর্থ্যানুরূপ সেচনঘট দ্বারা আশ্রমস্থ বালপাদপ সকল সংবর্দ্ধিত করিয়া নিশ্চয়ই সন্তানোৎপত্তির পূর্ব্বেই স্তন্যপায়ী শিশুর পালনজনিত সুখের অনুভব করিতে পারিবে।

अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय ৭৯

७९ अ:। दयार्द्रचेता: वाल्मीकि: अनुग्रहप्रत्यभिनन्दिनीं ताम् आदाय सायं मृगाध्यासितवेदि-पार्श्वं शान्तमृगं स्वम् आश्रमं निनाय ॥ वाच्य—दयार्द्रचेतसा वाल्मीकिना (सा) निन्ये ।

७९। दयार्द्रचेता वाल्मीकि: अनुग्रहं प्रत्यभिनन्दतीति तथोक्तां तां सीताम् आदाय सायं मृगैरध्यासितवेदिपार्श्वमधिष्ठितवेदिप्रान्तं शान्तमृगं स्वमाश्रमं निनाय ॥

७९। दयार्द्रहृदय मह‍र्षि वाल्मीकि এইরূপ অনুগ্রহবাক্যে প্রত্যভিনন্দিত করিয়া সেই সীতাদেবীকে গ্রহণপূর্ব্বক সায়ংসময়ে স্বীয় আশ্রমে লইয়া গেলেন, তখন শান্ত-স্বভাব মৃগগণ তাঁহার যজ্ঞবেদির পার্শ্বে উপবিষ্ট র'হয়াছিল।

तामर्पयामास च शोकदीनां तदागमप्रीतिषु तापसीषु ।
निर्विष्टसारां पितृभिर्हिमांशोरन्त्यां कलां दर्श इवौषधीषु ॥८०

८० अ:। शोकदीनां तदागमप्रीतिषु तापसीषु पितृभि: निर्विष्टसारां हिमांशो: अन्त्याम् कलां दर्श: ओषधिषु इव, अर्पयामास च ॥ वाच्य—(तेन वाल्मीकिना) शोकदीना सा दर्शेन निर्विष्टसारा अन्त्या कला अर्पयामासे ।

८०। शोकदीनां तां सीतां तस्या: सीताया आगमेन प्रीतिर्यासां तासु तापसीषु, पितृभिरग्निष्वात्तादिभिर्निर्विष्टसारां भुक्तसारां हिमांशो-रन्त्यामवशिष्टां कलां दर्शोऽमावास्याकाल ओषधीष्विव अर्पयामास च । अत्र पराशर:—'पिबन्ति विमलं सोमं विशिष्टा तस्य या कला । सुधा-मृतमयीं पुण्यां तामिन्दो: पितरो मुने ॥' इति । व्यासश्च—'अमावास्यां तु सदा सोम ओषधी: प्रतिपद्यते' इति ॥

৮০। অনন্তর অমাবস্যা তিথি যেরূপ অগ্নিষ্বাত্তাদি পিতৃগণের ভুক্তাবশিষ্ট চন্দ্রের চরমকলা ওষধিসমূহে প্রত্যর্পণ করে, তদ্রূপ তাঁহার আগমনে প্রীতিমতী ঋষিপত্নীদিগের হস্তে শোকসন্তপ্ত সীতাকে প্রত্যর্পণ করিলেন

ता इङ्गुदीस्नेहकृतप्रदीपमास्तीर्णमेध्याजिनतल्पमन्त: ।
तस्यै सपर्य्यानुपदं दिनान्ते निवासहेतोरुटजं वितेरु: ॥ ८१

८१ अ:। ता: तस्यै सपर्य्यानुपदं दिनान्ते निवासहेतो: इङ्गुदीस्नेहकृतप्रदीपम् अन्त: आस्तीर्ण-मेध्याजिनतल्पम् उटजं वितेरु ॥ वाच्य—ताभि: इङ्गुदीस्नेहकृतप्रदीप:, अन्त: आस्तीर्णमेध्याजिन-तल्प:, उटज: वितेरे ।

८१। तास्तापस्य: तस्यै सीतायै सपर्य्यानुपदं पूजानन्तरं दिनान्ते सायंकाले निवास एव हेतुस्तस्य निवासहेतो: निवासार्थमित्यर्थ: । 'षष्ठी हेतुप्रयोगे' इति षष्ठी । 'इङ्गुदी तापसतरु:' इत्यमर: । इङ्गुदीस्नेहेन कृतप्रदीपम् अन्तरास्तीर्णं मेध्यं शुद्धमजिनमेव तल्पं शय्या यस्मिन् तमुटजं पर्णशालां वितेरु: ददु: ॥

৮১। তাপসপত্নীগণও সীতার সমুচিত সৎকার করিলেন এবং সায়ংকালে ইঙ্গুদী-তৈলে প্রদীপ প্রজ্বালিত করিয়া তাঁহার বাসের নিমিত্ত পূত অজিনশয্যাসমন্বিত একটী পর্ণকুটীর প্রদান করিলেন।

তত্রাভিষেকপ্রযতা বসন্তী প্রযুক্তপূজা বিধিনাতিথিভ্যঃ।
বন্যেন সা বল্কলিনী শরীরং পত্যুঃ প্রজাসন্ততয়ে বভার ॥ ৮২

৮২ অঃ। তত্র অভিষেকপ্রযতা বসন্তী বিধিনা অতিথিভ্যঃ প্রযুক্তপূজা বল্কলিনী সা পত্যুঃ প্রজা-সন্ততয়ে বন্যেন শরীরং বভার ॥ বাচ্য — অভিষেকপ্রযতয়া বসন্ত্যা প্রযুক্তপূজয়া বল্কলিন্যা তয়া বভ্রে।

৮২। তত্র আশ্রমে অভিষেকেণ স্নানেন প্রযতা নিয়তা বসন্তী বিধিনা শাস্ত্রেণ অতিথিভ্যঃ প্রযুক্তপূজা কৃতসৎকারা বল্কলিনী সা সীতা পত্যুঃ প্রজাসন্ততয়ে সন্তানাবিচ্ছেদায় হেতোঃ বন্যেন কন্দমূলাদিনা শরীরং বভার পুপোষ ॥

৮২। সীতা তমসার জলে অবগাহন, বল্কলপরিধান এবং বিধিপূর্ব্বক অতিথিগণের পূজা করিয়া অতি পবিত্রভাবে অবস্থানপূর্ব্বক স্বামী রামচন্দ্রের সন্তানরক্ষার জন্য বন্য ফলমূল দ্বারা স্বীয় শরীর রক্ষা করিতে লাগিলেন।

অপি প্রভুঃ সানুশয়োঽধুনা স্যাৎ।
কিমুৎসুকঃ শক্রজিতোঽপি হন্তা।
শশংস সীতাপরিদেবনান্ত-
মনুষ্ঠিতং শাসনমগ্রজায় ॥ ৮৩

৮৩ অঃ। প্রভুঃ অধুনা অপি সানুশয়ঃ স্যাৎ কিম্? উৎসুকঃ শক্রজিতঃ হন্তা অপি সীতা-পরিদেবনান্তম্ অনুষ্ঠিতং শাসনম্ অগ্রজায় শশংস। বাচ্য—প্রভুণা সানুশয়েন ভূয়েত কিম্? উৎসুকেন হন্ত্রা শশংসে ॥

৮৩। প্রভুঃ রাজা অধুনাপি সানুশয়ঃ সানুতাপঃ স্যাৎ কিম্? ইতি কাকুঃ। উৎসুকঃ শক্রজিতঃ ইন্দ্রজিতো হন্তা লক্ষ্মণোঽপি সীতাপরি-দেবনান্তং সীতাবিলাপান্তম্ অনুষ্ঠিতং শাসনম্ অগ্রজায় শশংস ॥

৮৩। এদিকে ইন্দ্রজিৎ-নিহন্তা লক্ষ্মণও "এখনও কি প্রভু রামচন্দ্রের মনে অনুতাপ উপস্থিত হয় নাই" এইরূপ বিতর্ক করিয়া অগ্রজ রামের নিকটে বৈদেহীবিয়োগান্ত সমস্ত বৃত্তান্ত নিবেদন করিলেন।

বভূব রামঃ সহসা সবাষ্পস্তুষারবর্ষীব সহস্যচন্দ্রঃ।
কৌলীনভীতেন গৃহান্নিরস্তা ন তেন বৈদেহসুতা মনস্তঃ ॥ ৮৪

८४ अ:। सहसा सवाष्पः रामः, तुषारवर्षी सहस्यचन्द्रः इव बभूव, कौलीनभीतेन तेन वैदेहसुता गृहात् निरस्ता न मनसः॥ वाच्य—तुषारवर्षिणा सहस्यचन्द्रेणेव सवाष्पेण रामेण बभूवे। कौलीनभीतः स वैदेहसुतां निरस्तवान्।

८४। सहसा सपदि सवाष्पो रामः तुषारवर्षी सहस्यचन्द्र इव बभूव, अत्यश्रुतया तुषारवर्षिणा पौषचन्द्रेण तुल्योऽभूत्। 'पौषे तैषसहस्यौ द्वौ' इत्यमरः। युक्तं चैतदित्याह,—कौलीनात् लोकापवादात् भीतेन तेन रामेण वैदेहसुता सीता गृहात् निरस्ता, न मनसो मनसश्चित्तात् न निरस्ता। पञ्चम्यास्तसिल्॥

৮৪। তচ্ছ্রবণে রাম তুষারবর্ষী পৌষমাসের সুধাংশুর ন্যায় সহসা বাষ্পাকুল হইলেন; কেননা, তিনি লোকাপবাদভয়ে ভীত হইয়াই সীতাকে গৃহ হইতে নির্ব্বাসিত করিয়াছিলেন; কিন্তু সীতা তাঁহার অন্তঃকরণ হইতে অন্তরিত হন নাই।

**निगृह्य शोकं स्वयमेव धीमान् वर्णाश्रमावेक्षणजागरूकः।**
**स भ्रातृसाधारणभोगमृद्धं राज्यं रजोरिक्तमनाः शशास॥ ८५**

८५ अ:। धीमान् वर्णाश्रमावेक्षणजागरूकः रजोरिक्तमनाः सः स्वयमेव शोकं निगृह्य भ्रातृसाधारणभोगम् ऋद्धं राज्यं शशास॥ वाच्य—धीमता, वर्णाश्रमावेक्षणजागरूकेण रजोरिक्तमनसा तेन, शशासे।

८५। धीमान् वर्णाश्रमाणाम् अवेक्षणेऽनुसन्धाने जागरूकोऽप्रमत्तः। 'जागरूकः' इत्यूकप्रत्ययः। रजोरिक्तमना रजोगुणशून्यचेताः स रामः स्वयमेव शोकं निगृह्य निरुध्य भ्रातृभिः साधारणभोगं शरीरस्थितिमात्रोपयुक्तमित्यर्थः, ऋद्धं राज्यं शशास॥

৮৫। ধীমান্ রামচন্দ্র স্বয়ং শোকসংবরণপূর্ব্বক বর্ণাশ্রম পর্য্যবেক্ষণে সতত জাগরূক ও রজোগুণনির্মুক্ত হইয়া অনুজগণের সহিত সমান ভোগসুখে সমৃদ্ধ রাজ্যশাসন করিতে লাগিলেন।

**तामेकभार्य्यां परिवादभीरोः साध्वीमपि त्यक्तवतो नृपस्य।**
**वक्षस्यसङ्घट्टसुखं वसन्ती रेजे सपत्नीरहितेव लक्ष्मीः॥ ८६**

८६ अ:। परिवादभीरोः (अतएव) एकभार्य्याम् (अपि) साध्वीम् अपि तां त्यक्तवतः नृपस्य वक्षसि असङ्घट्टसुखं वसन्ती लक्ष्मीः सपत्नीरहिता इव रेजे॥ वाच्य—वसन्त्या सपत्नीरहितया इव लक्ष्म्या रेजे।

८६। परिवादभीरोर्निन्दाभीरोः अतएवैकभार्य्यामपि साध्वीमपि तां सीतां त्यक्तवतो नृपस्य वक्षसि असङ्घट्टसुखम् असम्बाधसुखं वसन्ती लक्ष्मीः सपत्नीरहिता इव रेजे दिदीपे। तस्य दारान्तरपरिग्रहो नाभूदिति भावः॥

৮৬। রাজা রামচন্দ্র লোকাপবাদভয়ে ভীত হইয়া একমাত্র পতিপ্রাণা সাধ্বী সীতাকে পরিত্যাগ করিলে বিঘ্নবিরহিতা রাজলক্ষ্মী তাঁহার বক্ষে নিঃসপত্নীকের স্থায় বিরাজ করিতে লাগিলেন।

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत् क्रतूनाजहार।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्त्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे॥ ८७

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ सीतापरित्यागो
नाम चतुर्दशः सर्गः॥ १४॥

८७ अः दशमुखरिपुः रामः सीतां हित्वा अन्यां (स्त्रियं) न उपयेमे (इति) यत्, तस्याः एव प्रतिकृतिसखः (सन्) क्रतून् आजहार (इति) यत्, तेन श्रवणविषयप्रापिणा भर्त्तुः वृत्तान्तेन सा दुर्व्वारं परित्यागदुःखं कथमपि विषेहे॥ वाच्य—दशमुखरिपुणा रामेण अन्या (स्त्री) नोपयेमे। प्रतिकृतिसखेन सता क्रतवः आजह्रिरे। तया विषेहे॥

८७। दशमुखरिपुः रामः सीतां हित्वा त्यक्त्वा अन्यां स्त्रियं न उपयेमे न परिणीतवानिति यत्, 'उपाद्यमः स्वीकरणे' इत्यात्मनेपदम्, किञ्च, तस्याः सीतायाः एव प्रतिकृतेः प्रतिमायाः हिरण्मय्याः सखा प्रतिकृतिसखः सन् क्रतून् आजहार आहृतवानिति यत् तेन श्रवणविषयप्रापिणा श्रोत्र-देशगामिना भर्त्तुर्वृत्तान्तेन वार्त्तया हेतुना सा सीता दुर्वारं दुर्निरोधं परित्यागेन यत् दुःखं तत् कथमपि विषेहे विसोढवती॥

इति श्रीमहामहोपाध्याय-कोलाचल मल्लिनाथ-सूरिविरचितया सञ्जीवनी-समाख्यया व्याख्यया समेतो महाकवि—श्रीकालिदासकृतौ रघुवंशे महाकाव्ये सीतापरित्यागो नाम चतुर्दशः सर्गः॥ १४

৮৭। এদিকে দশাননিহন্তা রাম জানকীকে পরিত্যাগ করিয়া অন্য রমণীর পাণিগ্রহণ করেন নাই এবং তিনি যে সীতার প্রতিকৃতির সহযোগী হইয়া যজ্ঞসকল সমাপন করিয়াছেন, পতিপ্রাণা সীতা লোকপরম্পরা এই সকল বৃত্তান্ত শ্রবণ করিয়া দুর্নিবার পতিপরিত্যাগদুঃখ অতি কষ্টে সহ্য করিতে লাগিলেন।

চতুর্দ্দশ সর্গ সমাপ্ত। ১৪

# পঞ্চদশঃ সর্গঃ।

—(০)—

কৃতসীতাপরিত্যাগঃ স রত্নাকরমেখলাম্।
বুভুজে পৃথিবীপালঃ পৃথিবীমেব কেবলাম্॥ ১

১ অঃ। কৃতসীতাপরিত্যাগঃ সঃ পৃথিবীপালঃ রত্নাকরমেখলাং কেবলাং পৃথিবীম্ এব বুভুজে।

অরণ্যকং গৃহস্থানং শ্বশুরা যদ্রজঃকণাঃ (?)।
স্বয়মৌদ্বাহিকং গেহং তস্মৈ রামায় তে নমঃ (?)॥

১। কৃতসীতাপরিত্যাগঃ স পৃথিবীপালো রামো রত্নাকর এব মেখলা যস্যাস্তাম্ সাগরাবৃতামিত্যর্থঃ, কেবলাং একামিত্যর্থঃ পৃথিবীমেব বুভুজে ভুক্তবান্, ন তু পার্থিবীমিত্যর্থঃ। সাপি রত্নখচিতমেখলা পৃথিব্যাঃ কান্তাসমাধির্ব্যজ্যতে। রামস্য স্ত্র্যন্তরপরিগ্রহো নাসীদিতি শ্লোকাভিপ্রায়ঃ॥

১। পৃথিবীপাল রামচন্দ্র এইরূপে সীতাকে পরিত্যাগ করিয়া কেবল সাগরাম্বরা ধরিত্রীকে পালন করিতে লাগিলেন।

লবণেন বিলুপ্তেজ্যাস্তামিস্রেণ তমভ্যযুঃ।
মুনয়ো যমুনাভাজঃ শরণ্যং শরণার্থিনঃ॥ ২

২ অঃ। লবণেন তামিস্রেণ বিলুপ্তেজ্যাঃ (অতএব) শরণার্থিনঃ যমুনাভাজঃ মুনয়ঃ শরণ্যং তম্ অভ্যযুঃ॥

২। লবণেন লবণাখ্যেন তামিস্রেণ তমিস্রাচারিণা রক্ষসেত্যর্থঃ। বিলুপ্তেজ্যা লুপ্তযাগক্রিয়া অতএব শরণার্থিনো রক্ষণার্থিনো যমুনাভাজো যমুনাতীরবাসিনো মুনয়ঃ শরণ্যং শরণার্হং রক্ষণসমর্থং তং রামং রক্ষিতারমভ্যযুঃ প্রাপ্তাঃ। যাতের্লিট্॥

২। অনন্তর লবণনামক নিশাচর যমুনাতীরবাসী ঋষিগণের যাগযজ্ঞ লোপ করিতে প্রবৃত্ত হইলে তাঁহারা শরণার্থী হইয়া শরণাগতবৎসল রামচন্দ্রের সন্নিধানে উপস্থিত হইলেন।

অবেক্ষ্য রামং তে তস্মিন্ ন প্রজহ্রুঃ স্বতেজসা।
ত্রাণাভাবে হি শাপাস্ত্রাঃ কুর্বন্তি তপসো ব্যয়ম্॥ ৩

৩ অঃ। তে রামম্ অবেক্ষ্য তস্মিন্ স্বতেজসা ন প্রজহ্রুঃ; ত্রাণাভাবে শাপাস্ত্রাঃ তপসঃ ব্যয়ং কুর্বন্তি॥

৩। তে মুনয়ো রামমবেক্ষ্য রক্ষিতারমিতি শেষঃ, তস্মিন্ লবণে স্বতেজসা শাপরূপেণ ন প্রজহ্রুঃ। তথাহি—ত্রায়ত ইতি ত্রাণঃ রক্ষকঃ, কর্ত্তরি ল্যুট্। তদভাবে শাপ এবাস্ত্রং যেষাং তে শাপাস্ত্রাঃ সন্তস্তপসো ব্যয়ং কুর্ব্বন্তি। শাপদানাৎ তপসো ব্যয় ইতি প্রসিদ্ধেঃ॥

৩। তপোধনগণ রামচন্দ্রকে রক্ষণকার্য্যে নিরত দেখিয়া তৎকালে স্বীয় তেজোদ্বারা লবণকে সংহার করিলেন না; কেননা রক্ষকের অভাবেই শাপাস্ত্র প্রয়োগ করিয়া মুনিগণ দুঃখার্জ্জিত তপস্যার ব্যয় করিয়া থাকেন।

**প্রতিশুশ্রাব কাকুৎস্থস্তেভ্যো বিঘ্নপ্রতিক্রিয়াম্।**
**ধর্ম্মসংরক্ষণার্থৈব প্রবৃত্তির্ভুবি শার্ঙ্গিণঃ॥ ৪**

৪ অঃ। কাকুৎস্থঃ তেভ্যঃ বিঘ্নপ্রতিক্রিয়াং প্রতিশুশ্রাব। ভুবি শার্ঙ্গিণঃ প্রবৃত্তিঃ ধর্ম্মসংরক্ষণার্থা এব॥

৪। কাকুৎস্থো রামস্তেভ্যো মুনিভ্যো বিঘ্নপ্রতিক্রিয়াং লবণবধরূপাং প্রতিশুশ্রাব প্রতিজজ্ঞে। তথাহি—ভুবি শার্ঙ্গিণো বিষ্ণোঃ প্রবৃত্তিঃ রামরূপেণাবতরণং ধর্ম্মসংরক্ষণমেবার্থঃ প্রয়োজনং যস্যাঃ সা তথৈব॥

৪। কাকুৎস্থ রাম ঋষিগণসমীপে বিঘ্নপ্রতিকারার্থ অঙ্গীকার করিলেন, যেহেতু ধর্ম্মরক্ষণজন্যই ভগবান্ বিষ্ণু অবনিতলে অবতীর্ণ হইয়া থাকেন।

**তে রামায় বধোপায়মাচখ্যুর্বিবুধদ্বিষঃ।**
**দুর্জ্জয়ো লবণঃ শূলী বিশূলঃ প্রার্থ্যতামিতি॥ ৫**

৫ অঃ। তে রামায় বিবুধদ্বিষঃ বধোপায়ম্ আচখ্যুঃ। লবণঃ শূলী দুর্জ্জয়ঃ (কিন্তু) বিশূলঃ প্রার্থ্যতাম্ অভিগম্যতাম্॥

৫। তে মুনয়ো রামায় বিবুধদ্বিষঃ সুরারের্লবণস্য বধোপায়মাচখ্যুঃ। লুনাতীতি লবণঃ নন্দ্যাদিত্বাৎ ল্যুঃ। তত্রৈব নিপাতনাৎ ণত্বম্। লবণঃ শূলী শূলবান্ দুর্জ্জয়োঽজয়ঃ, কিন্তু বিশূলঃ শূলরহিতঃ প্রার্থ্যতাম্ অভিগম্যতাম্। 'যাচ্ঞায়ামভিযানে চ প্রার্থনা কথ্যতে বুধৈঃ' ইতি কেশবঃ॥

৫। ঋষিগণ রামচন্দ্রের নিকট দেবদ্বেষী নিশাচর লবণের এইরূপ বধোপায় বলিয়া দিলেন,—ইহার হস্তে যখন শূল থাকিবে তখন এই অসুর অত্যন্ত দুর্জ্জয়, অতএব যৎকালে সে শূল পরিত্যাগ করিবে তখনি উহাকে যুদ্ধার্থ আহ্বান করিবে।

**আদিদেশাথ শত্রুঘ্নং তেষাং ক্ষেমায় রাঘবঃ।**
**করিষ্যন্নিব নামাস্য যথার্থমরিনিগ্রহাৎ॥ ৬**

६ अ: । अथ तेषां क्षेमाय राघवः शत्रुघ्नम् आदिदेश । अस्य नाम अविनिग्रहात् यथार्थं करिष्यन् इव ॥

६ । अथ तेषां मुनीनां क्षेमाय क्षेमकरणाय राघवो रामः शत्रुघ्नमादिदेश । अत्रोत्प्रेक्षते—अस्य शत्रुघ्नस्य नाम अविनिग्रहात् शत्रुहननाद्धेतोः, यथाभूतोऽर्थो यस्य तद् यथार्थं करिष्यन्निव, शत्रून् हन्तीति शत्रुघ्नः । 'अमनुष्यकर्त्तृके च' इति चकारात् 'कृतघ्नशत्रुघ्नादयः सिद्धाः' इति दुर्गसिंहः । पाणिनीयेऽपि बहुलग्रहणाद् यथेष्टसिद्धिः, 'कृत्यल्युटो बहुलम्' इति ॥

৬। অনন্তর রঘুকুলতিলক রাম মুনিদিগের কুশলকামনায় শত্রুনিপীড়নপূর্ব্বক 'শত্রুঘ্ন' নাম অর্থযুক্ত করিবার জন্যই যেন লবণবধের নিমিত্ত তাঁহাকে আদেশ করিলেন।

यः कश्चन रघूणां हि परमेकः परन्तपः ।
अपवाद इवोत्सर्गं व्यावर्त्तयितुमीश्वरः ॥ ७

७ अ: । हि परन्तपः रघूणां मध्ये यः कश्चन एकः अपवादः उत्सर्गम् इव परं व्यावर्त्तयितुम् ईश्वरः ॥

७ । रामस्य स्वयमप्रयाणे हेतुमाह—य इति । हि यस्मात् परान् शत्रून् तापयतीति परन्तपः । 'द्विषत्परयोस्तापेः' इति खच्प्रत्ययः । 'खचि ह्रस्वः' इति ह्रस्वः । रघूणां मध्ये यः कश्चन एकः अपवादो विशेषशास्त्रम् उत्सर्गं सामान्यशास्त्रमिव परं शत्रुं व्यावर्तयितुं बाधितुमीश्वरः समर्थः । अतः शत्रुघ्नमेवादिदेशेति पूर्वेणान्वयः ॥

৭। অপবাদ বিধি যেরূপ উৎসর্গবিধিকে বাধা করিতে সমর্থ হয় তদ্রূপ রঘুবংশীয়গণের মধ্যে যে কেহ হউক না কেন, একাকীই শত্রুনিপীড়নে সমর্থ, সন্দেহ নাই।

अग्रजेन प्रयुक्ताशीस्ततो दाशरथी रथी ।
ययौ वनस्थलीः पश्यन् पुष्पिताः सुरभीरभीः ॥ ८

८ अ: । ततः अग्रजेन प्रयुक्ताशीः रथी अभीः दाशरथिः पुष्पिताः सुरभीः वनस्थलीः पश्यन् ययौ ॥

८ । ततोऽग्रजेन रामेण प्रयुक्ताशीः कृताशीर्वादो रथी रथिकोऽभीः निर्भीको दाशरथिः पुष्पाणि सञ्जातानि यासां ताः पुष्पिताः सुरभीरामोदमाना वनस्थलीः पश्यन् ययौ ॥

৮। অনন্তর নির্ভীক দশরথতনয় শত্রুঘ্ন, অগ্রজ রামচন্দ্রের আশীর্বাদ গ্রহণপূর্বক রথারোহণে বিকসিত কুসুমসমূহে সুরভি বনস্থলী অবলোকন করিতে করিতে গমন করিলেন।

रामादेशादनुगता सेना तस्यार्थसिद्धये।
पश्चादध्ययनार्थस्य धातोरधिरिवाभवत्॥ ९

९ अ:। रामादेशात् अनुगता सेना तस्य अध्ययनार्थस्य धातोः पश्चात् अधिः इव अर्थसिद्धये अभवत्॥

९। रामादेशादनुगता सेना तस्य शत्रुघ्नस्य, अध्ययनमर्थोऽभिधेयो यस्य तस्य, धातोः 'इङध्ययने' इत्यस्य धातोः, पश्चादधिरुपसर्ग इव, अर्थसिद्धये प्रयोजनसाधनाय इत्येकत्र, अन्यत्राभिधेयसाधनाय अभवत्। 'अर्थोऽभिधेय-रैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। यथा 'इङिकावध्युपसर्ग न व्यभिचरति' इति न्यायेनाध्युपसर्गः स्वयमेवार्थसाधकस्य धातोः सन्निधिमात्रेणोपकरोति, सेनापि तस्य तद्वदिति भावः॥

৯। যেরূপ 'অধি' উপসর্গ অধ্যয়নার্থ ইঙ ধাতুর অনুবর্তী হয়, তদ্রূপ রামচন্দ্রের নিদেশে শত্রুঘ্নের অভীষ্টসিদ্ধির জন্য সেনাগণ তাঁহার অনুগমন করিল।

आदिष्टवर्त्मा मुनिभिः स गच्छंस्तपतां वरः।
विरराज रथप्रष्ठैर्वालखिल्यैरिवांशुमान्॥ १०

१० अ:। रथप्रष्ठैः मुनिभिः आदिष्टवर्त्मा गच्छन् तपतांवरः सः वालखिल्यैः अंशुमान् इव विरराज॥

१०। रथप्रष्ठैः रथाग्रगामिभिः, 'प्रष्ठोऽग्रगामिनि' इति निपातः। मुनिभिः पूर्वोक्तैरादिष्टवर्त्मा निर्दिष्टमार्गो गच्छन् तपतां दीप्यमानानां मध्ये वरः श्रेष्ठः स शत्रुघ्नः वालखिल्यैर्मुनिभिः अंशुमान् सूर्य्य इव विरराज। तेऽपि रथप्रष्ठा इत्यनुसन्धेयम्॥

১০। তেজস্বিশ্রেষ্ঠ শত্রুঘ্ন ঋষিগণের আদিষ্টপথে গমন করিয়া বালখিল্য মুনিগণ কর্তৃক প্রদিষ্ট পথে গমনকারী অংশুমানের ন্যায় শোভা ধারণ করিলেন।

तस्य मार्गवशादेका बभूव वसतिर्यतः।
रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने॥ ११

११ अ:। यतः तस्य मार्गवशात् रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने एका वसतिः बभूव॥

११। यतो गच्छतः। इण्धातोः शतृप्रत्ययः। तस्य शत्रुघ्नस्य मार्गवशात् रथस्वने उत्कण्ठा उदग्रीवा मृगा यस्मिन् तस्मिन् वाल्मीकीये

বাল্মীকিসম্বন্ধিনি, 'বৃদ্ধাচ্ছঃ' ইতি ছপ্রত্যয়ঃ, তপোবনে একা বসতিঃ রাত্রির্বভূব। তত্রৈকাং রাত্রিমুষিত ইত্যর্থঃ। 'বসতী রাত্রিবেশ্মনোঃ' ইত্যমরঃ ॥

১১। তিনি পথগমন ক্রমে একরাত্রি বাল্মীকির তপোবনে অবস্থান করেন, আশ্রমে প্রবেশকালে তাঁহার রথশব্দে আশ্রমস্থ মৃগগণ উৎকণ্ঠিত হইয়া উঠিয়াছিল।

**তমৃষিঃ পূজয়ামাস কুমারং ক্লান্তবাহনম্‌।**
**তপঃপ্রভাবসিদ্ধাভির্বিশেষপ্রতিপত্তিভিঃ ॥ ১২**

১২ অঃ। ক্লান্তবাহনং তং কুমারম্‌ ঋষিঃ তপঃপ্রভাবসিদ্ধাভিঃ বিশেষপ্রতিপত্তিভিঃ পূজয়ামাস ॥

১২। ক্লান্তবাহনং শ্রান্তযুগ্যং তং কুমারং শত্রুঘ্নম্‌ ঋষির্বাল্মীকিঃ তপঃপ্রভাবসিদ্ধাভির্বিশেষপ্রতিপত্তিভিরুৎকৃষ্টসম্ভাবনাভিঃ পূজয়ামাস ॥

১২। মহর্ষি বাল্মীকি শ্রান্তবাহন কুমার শত্রুঘ্নকে স্বীয় তপঃপ্রভাবসিদ্ধ অত্যুত্তম উপচারদ্বারা যথাবিধি সৎকার করিলেন।

**তস্যামেবাস্য যামিন্যামন্তর্বত্নী প্রজাবতী।**
**সুতাবসূত সম্পন্নৌ কোশদণ্ডাবিব ক্ষিতিঃ ॥ ১৩**

১৩ অঃ। তস্যাম্‌ এব যামিন্যাম্‌ অস্য অন্তর্বত্নী প্রজাবতী ক্ষিতিঃ সম্পন্নৌ কোশদণ্ডৌ ইব সুতৌ অসূত ॥

১৩। তস্যামেব যামিন্যাং রাত্রৌ অস্য শত্রুঘ্নস্য। অন্তরস্যা অস্তীত্যন্তর্বত্নী গর্ভিণী। 'অন্তর্বত্নী চ গর্ভিণী' ইত্যমরঃ। 'অন্তর্বত্পতিবতোর্ণুক' ইতি ঙীপ্‌, নুগাগমশ্চ। প্রজাবতী ভ্রাতৃজায়া সীতা ক্ষিতিঃ সম্পন্নৌ সমগ্রৌ-কোশদণ্ডাবিব সুতৌ অসূত ॥

১৩। ধরিত্রী যেরূপ সমস্ত কোশ ও দণ্ড প্রসব করেন, তাঁহার গর্ভবতী ভ্রাতৃপত্নী সীতাও তদ্রূপ সেই রাত্রিতেই দুইটি পুত্র প্রসব করিলেন।

**সন্তানশ্রবণাদ্‌ভ্রাতুঃ সৌমিত্রিঃ সৌমনস্যবান্‌।**
**প্রাঞ্জলির্মুনিমামন্ত্র্য প্রাতর্যুক্তরথো যযৌ ॥ ১৪**

১৪ অঃ। ভ্রাতুঃ সন্তানশ্রবণাৎ সৌমনস্যবান্‌ সৌমিত্রিঃ প্রাতঃ যুক্তরথঃ (সন্‌) প্রাঞ্জলিঃ মুনিম্‌ আমন্ত্র্য যযৌ ॥

১৪। ভ্রাতুঃ জ্যেষ্ঠস্য সন্তানশ্রবণাৎ হেতোঃ সৌমনস্যবান্‌ প্রীতিমান্‌ সৌমিত্রিঃ শত্রুঘ্নঃ প্রাতর্যুক্তরথঃ সজ্জরথঃ সন্‌ প্রাঞ্জলিঃ কৃতাঞ্জলিঃ মুনিমামন্ত্র্য আপৃচ্ছ্য যযৌ ॥

১৪। সুমিত্রাতনয় শত্রুঘ্ন অগ্রজের সন্তানোৎপত্তিশ্রবণে অতীব প্রীত হইলেন এবং রাত্রি প্রভাত হইলে যুক্তকরে মুনিকে অভিবাদনপূর্ব্বক রথারোহণে প্রস্থান করিলেন।

**स च प्राप मधूपघ्नं कुम्भीनस्याश्च कुक्षिजः ।**
**वनात् करमिवादाय सत्त्वराशिमुपस्थितः ॥ १५**

१५ अः। सः च मधूपघ्नं (नाम लवणपुरं) प्राप, कुम्भीनस्याः कुक्षिजश्च वनात् करम् इव सत्त्वराशिम् आदाय उपस्थितः ॥

१५। स शत्रुघ्नश्च मधूपघ्नं नाम लवणपुरं प्राप। कुम्भीनसी नाम रावणस्वसा, तस्याः कुक्षिजः पुत्रो लवणश्च वनात् करं बलिमिव सत्त्वानां प्राणिनां राशिमादाय उपस्थितः प्राप्तः ॥

১৫। তিনি লবণের মধূপঘ্ন নামক পুরীতে উপস্থিত হইলেন; কুম্ভীনসীনন্দন লবণও তখন বন হইতে রাজকরস্বরূপ প্রাণিনিচয় আহরণপূর্ব্বক গৃহে প্রত্যাবৃত্ত হইয়াছিল।

**धूमधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः ।**
**क्रव्याद्गणपरीवारश्चिताग्निरिव जङ्गमः ॥ १६**

१६ अः। धूमधूम्रः वसागन्धी ज्वालाबभ्रुशिरोरुहः क्रव्याद्गणपरीवारः (अतएव) जङ्गमः चिताग्निः इव (स्थितः) ॥

१६। किम्भूतो लवणः? धूम इव धूम्रः कृष्णलोहितवर्णः 'धूम्रधूमलौ कृष्णलोहिते' इत्यमरः। वसागन्धो हृन्मेदोगन्धः सोऽस्यास्तीति, वसागन्धी। 'हृन्मेदस्तु वपा वसा' इत्यमरः। ज्वाला इव बभ्रवः पिङ्गलाः शिरोरुहाः केशाः, यस्य स तथोक्तः। 'विपुले नकुले विष्णौ बभ्रुः स्यात्पिङ्गले त्रिषु' इत्यमरः। क्रव्यं मांसमदन्तीति क्रव्यादो राक्षसाः, तेषां गण एव परीवारो यस्य स तथोक्तः, अतएव जङ्गमः चरिष्णुश्चिताग्निरिव स्थितः। चिताग्निपक्षे धूमैर्धूम्रवर्णः, ज्वाला एव शिरोरुहाः, क्रव्यादो गृध्रादय इत्यनुसन्धेयम् ॥

১৬। সেই নিশাচর লবণের বর্ণ ধূম্রের ন্যায়, তাহার গাত্রের গন্ধ বসার তুল্য, কেশকলাপ অনলশিখাসদৃশ পিঙ্গল এবং সে মাংসাশী রাক্ষসসমূহে পরিবৃত; তাহাকে দেখিলে বোধ হয় যেন চিতানল সঞ্চরণ করিতেছে।

**अपशूलं तमासाद्य लवणं लक्ष्मणानुजः ।**
**रुरोध सम्मुखीनो हि जयो रन्ध्रप्रहारिणाम् ॥ १७**

१७ अः। लक्ष्मणानुजः अपशूलं तं लवणम् आसाद्य रुरोध। रन्ध्रप्रहारिणां जयः सम्मुखीनः हि ॥

১৭। লক্ষ্মণানুজ: শত্রুঘ্ন: অপশূলং শূলরহিতং তং লবণমাসাদ্য রুরোধ। তথাহি—রন্ধ্রপ্রহারিণাং রন্ধ্রপ্রহরণশীলানাম্, অপশূলতৈবাত্র রন্ধ্রম্, জয়ঃ সম্মুখীনো হি, সম্মুখস্য দর্শনো হি। 'যথামুখসম্মুখস্য দর্শন: খ:' ইতি খপ্রত্যয়:। অধিকারলক্ষণার্থস্তু দুর্লভ এব ॥

১৭। লক্ষ্মণানুজ শত্রুঘ্ন, লবণকে শূলহীন দেখিয়া তাহাকে অবরোধ করিলেন যাহারা শত্রুর ছিদ্রান্বেষণ করিয়া প্রহার করেন, বিজয়লক্ষ্মী নিঃসংশয় তাঁহাদের অভি-মুখেই গমন করিয়া থাকেন।

নাতিপর্য্যাপ্তমালক্ষ্য মৎকুক্ষেরদ্য ভোজনম্।
দিষ্ট্যা ত্বমসি মে ধাত্রা ভীতেনেবোপপাদিত: ॥ ১৮
ইতি সন্তর্জ্য শত্রুঘ্নং রাক্ষসস্তজ্জিঘাংসয়া।
প্রাংশুমুৎপাটয়ামাস মুস্তাস্তম্বমিব দ্রুমম্ ॥ ১৯

১৮—১৯ অ:। রাক্ষস:, অদ্য মৎকুক্ষে: ভোজনং ন অতিপর্য্যাপ্তম্ আলক্ষ্য ভীতেন ইব ধাত্রা দিষ্ট্যা মে ত্বম্ উপপাদিত: অসি ইতি শত্রুঘ্নং সন্তর্জ্য তজ্জিঘাংসয়া প্রাংশুং দ্রুমং মুস্তাস্তম্বম্ ইব, উৎপাটয়ামাস ॥

১৮-১৯। যুগ্মম্। রাক্ষসো লবণ:, অদ্য মৎকুক্ষে:. ভুজ্যত ইতি ভোজনম্ ভোজ্যং মৃগাদিকম্ নাতিপর্য্যাপ্তমনতিসমগ্রমালক্ষ্য দৃষ্ট্বা ভীতেনেব ধাত্রা দিষ্ট্যা ভাগ্যেন মে ত্বমুপপাদিত: কল্পিতোঽসি, ইতি শত্রুঘ্নং সন্তর্জ্য, তস্য শত্রুঘ্নস্য জিঘাংসয়া হন্তুমিচ্ছয়া প্রাংশুমুন্নতং দ্রুমং মুস্তাস্তম্বমিব অনায়াসেন উৎপাটয়ামাস ॥

১৮—১৯। 'বিধাতা অদ্য আমার উদরের ভোগ্য অত্যন্ত অপ্রচুর দেখিয়া বোধ হয় ভীত হইয়াই যেন আমার ভাগ্যবশে তোমাকে এই স্থানে উপস্থিত করিয়াছেন"। রাক্ষস লবণ শত্রুঘ্নকে এইরূপে তর্জ্জন করিয়া তাঁহার বিনাশবাসনায় মুস্তাস্তম্বের (মুথা) ন্যায় এক অত্যুচ্চ বৃক্ষ অনায়াসে উৎপাটন করিল।

সৌমিত্রের্নিশিতৈর্বাণৈরন্তরা শকলীকৃত:।
গাত্রং পুষ্পরজ: প্রাপ ন শাখী নৈর্ঋতেরিত: ॥ ২০

২০ অ:। নৈর্ঋতেরিত: শাখী অন্তরা নিশিতৈ: বাণৈ: শকলীকৃত: (সন্) সৌমিত্রে: গাত্রং ন প্রাপ, (কিন্তু) পুষ্পরজ: (প্রাপ) ॥

২০। নৈর্ঋতেরিতো রক্ষ:প্রেরিত: শাখী অন্তরা মধ্যে নিশিতৈর্বাণৈ: শকলীকৃত: সন্ সৌমিত্রে: শত্রুঘ্নস্য গাত্রং ন প্রাপ, কিন্তু পুষ্পরজ: প্রাপ ॥

২০। শত্রুঘ্নের শাণিত শরনিকর দ্বারা সেই বৃক্ষ পথিমধ্যে খণ্ড খণ্ড হইয়া গেল,

ঐ বৃক্ষ তাঁহার শরীর স্পর্শ করিতে পারিল না; কেবল বৃক্ষের পুষ্পপরাগমাত্র তাঁহার গাত্র স্পর্শ করিয়াছিল।

विनाशात् तस्य वृक्षस्य रक्षस्तस्मै महोपलम्।
प्रजिघाय कृतान्तस्य मुष्टिं पृथगिव स्थितम्॥ २१

२१ अः। रक्षः तस्य वृक्षस्य विनाशात् महोपलं पृथक् स्थितं कृतान्तस्य मुष्टिम् इव, तस्मै प्रजिघाय॥

२१॥ रक्षो लवणस्तस्य वृक्षस्य विनाशाद्धेतोः, महोपलं महान्तं पाषाणम्, पृथक् स्थितं कृतान्तस्य यमस्य मुष्टिमिव, मुष्टिशब्दो द्विलिङ्गः। तस्मै शत्रुघ्नाय प्रजिघाय प्रतिहृतवान्॥

২১। বৃক্ষ ব্যর্থ হইল দেখিয়া রাক্ষস লবণ, শত্রুঘ্নের উদ্দেশ্যে পৃথক্‌ভাবে অবস্থিত কৃতান্তের মুষ্টির ন্যায় এক প্রকাণ্ড প্রস্তর নিক্ষেপ করিল।

ऐन्द्रमस्त्रमुपादाय शत्रुघ्नेन स ताड़ितः।
सिकतात्वादपि परां प्रपेदे परमाणुताम्॥ २२

२२ अः। सः शत्रुघ्नेन ऐन्द्रम् अस्त्रम् उपादाय ताड़ितः (सन्) सिकतात्वात् अपि परां परमाणुतां प्रपेदे॥

२२। स महोपलः शत्रुघ्नेन ऐन्द्रम् इन्द्रदेवताकमस्त्रमुपादाय ताड़ितोऽभिहतः सन् सिकतात्वात् सिकताभावादपि परां परमाणुतां प्रपेदे। यतोऽणुर्नास्ति स परमाणुरित्याहुः॥

২২। শত্রুঘ্ন ঐন্দ্র অস্ত্র গ্রহণপূর্ব্বক ঐ প্রস্তরকে এরূপভাবে আহত করিলেন যে, উহা বালি হইতেও সূক্ষ্ম পরমাণুরূপে পরিণত হইল।

तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः।
एकताल इवोत्पातपवनप्रेरितो गिरिः॥ २३

२३ अः। निशाचरः दक्षिणं दोः उद्यम्य एकतालः उत्पातपवनप्रेरितः गिरिः इव, तं उपाद्रवत्॥

२३। निशाचरो राक्षसो दक्षिणं दोः, 'ककुद्दोषणी' इति भगवतो भाष्यकारस्य प्रयोगाद्दोष्शब्दस्य नपुंसकत्वं द्रष्टव्यम्। 'भुजबाहू प्रवेष्टो दोः' इति पुंलिङ्गसाहचर्य्यात् पुंस्त्वञ्च। तथा च प्रयोगः—'दोषं तस्य तथाविधस्य भजतः' इति। सव्येतरं बाहुमुद्यम्य एकस्तालस्तदाख्यो वृक्षो यस्मिन् स एकतालः उत्पातपवनेन प्रेरितो गिरिरिव तं शत्रुघ्नं उपाद्रवत् अभिद्रुतः॥

২৩। অনন্তর নিশাচর দক্ষিণ বাহু উত্তোলন করিয়া উৎপাতপবনচালিত একমাত্র তালতরুসম্পন্ন পর্ব্বতের ন্যায় তাঁহার প্রতি প্রধাবিত হইল।

**কার্ষ্ণেন পত্রিণা শত্রুঃ স ভিন্নহৃদয়ঃ পতন্।**
**আনিনায় ভুবঃ কম্পং জহারাশ্রমবাসিনাম্ ॥ ২৪**

২৪ অঃ। সঃ শত্রুঃ কার্ষ্ণেন পত্রিণা ভিন্নহৃদয়ঃ পতন্ ভুবঃ কম্পম্ আনিনায়, আশ্রমবাসিনাং (কম্পম্) জহার ॥

২৪। সঃ শত্রুর্লবণঃ কার্ষ্ণেন বৈষ্ণবেন পত্রিণা বাণেন। উক্তঞ্চ রামায়ণে—'এবমেষ প্রজনিতো বিষ্ণোস্তেজোময়ঃ শরঃ, ইতি। 'বিষ্ণুর্নারায়ণঃ কৃষ্ণঃ' ইত্যমরঃ। ভিন্নহৃদয়ঃ পতন্ ভুবঃ কম্পম্ আনিনায় আনীতবান্। দেহভারাদিত্যর্থঃ। আশ্রমবাসিনাং কম্পং জহার, তন্নাশাদকুতোভয়া বভূবুরিত্যর্থঃ ॥

২৪। শত্রুঘ্নবৈষ্ণবাস্ত্র দ্বারা শত্রুলবণের হৃদয় বিদীর্ণ করিলেন, সে ক্ষিতিতলে পতিত হইলে তাহার দেহভারে ভূকম্প উপস্থিত হইল, কিন্তু তাহার বিনাশে আশ্রমবাসীদিগের হৃৎকম্প অপনীত হইয়াছিল।

**বয়সাং পঙ্‌ক্তয়ঃ পেতুর্হতস্যোপরি বিদ্বিষঃ।**
**তৎপ্রতিদ্বন্দ্বিনো মূর্দ্ধ্নি দিব্যাঃ কুসুমবৃষ্টয়ঃ ॥ ২৫**

২৫ অঃ। হতস্য বিদ্বিষঃ উপরি বয়সাং পঙ্‌ক্তয়ঃ পেতুঃ, তৎপ্রতিদ্বন্দ্বিনঃ মূর্দ্ধ্নি দিব্যাঃ কুসুমবৃষ্টয়ঃ (পেতুঃ) ॥

২৫। হতস্য, বিদ্বেষ্টীতি বিদ্বিট্ তস্য বিদ্বিষো রাক্ষসস্যোপরি বয়সাং পক্ষিণাং পঙ্‌ক্তয়ঃ পেতুঃ। তৎপ্রতিদ্বন্দ্বিনঃ শত্রুঘ্নস্য মূর্দ্ধ্নি তু দিব্যাঃ কুসুমবৃষ্টয়ঃ পেতুঃ ॥

২৫। তখন সেই মৃত শত্রুর উপর পক্ষিগণ নিপতিত হইল এবং তাহার প্রতিদ্বন্দ্বী শত্রুঘ্নের মস্তকে আকাশ হইতে কুসুম বৃষ্টি হইতে লাগিল।

**স হত্বা লবণং বীরস্তদা মেনে মহৌজসঃ।**
**ভ্রাতুঃ সোদর্য্যমাত্মানমিন্দ্রজিদ্বধশোভিনঃ ॥ ২৬**

২৬ অঃ। সঃ বীরঃ লবণং হত্বা তদা আত্মানং মহৌজসঃ ইন্দ্রজিদ্বধশোভিনঃ ভ্রাতুঃ সোদর্য্যং মেনে ॥

২৬। স বীরঃ শত্রুঘ্নো লবণং হত্বা তদা আত্মানং মহৌজসো মহাবলস্য ইন্দ্রজিদ্বধেন শোভিনো ভ্রাতুর্লক্ষ্মণস্য সমানোদরে শয়িতং সোদর্য্যমেকোদরং মেনে। 'সোদরাদ্যঃ' ইতি যৎপ্রত্যয়ঃ ॥

২৬। সেই বীর শত্রুঘ্ন লবণকে বধ করিয়া আপনাকে ইন্দ্রজিদ্বধশোভী মহাবল-পরাক্রান্ত ভ্রাতা লক্ষ্মণের সোদর বলিয়া গৌরবান্বিত মনে করিলেন।

**तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः।**
**शुशुभे विक्रमोदग्रं व्रीडयावनतं शिरः॥ २७**

२७ अ:। चरितार्थैः तपस्विभिः संस्तूयमानस्य तस्य विक्रमोदग्रं व्रीडया अवनतं शिरः शुशुभे॥

२७। चरितार्थैः कृतार्थैः कृतकार्य्यैः तपस्विभिः संस्तूयमानस्य तस्य शत्रुघ्नस्य विक्रमेण उदग्रमुन्नतं व्रीडया लज्जया अवनतं नम्रं शिरः शुशुभे। विक्रान्तस्य लज्जैव भूषणमिति भावः॥

২৭। কৃতকার্য্য তপস্বিগণ শত্রুঘ্নের বলবীর্য্যের প্রশংসা করিতে থাকিলে বিক্রম দ্বারা তাঁহার অত্যুন্নত মস্তক লজ্জাবশতঃ অবনত হইয়া শোভিত হইতে লাগিল।

**उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः।**
**निर्म्ममे निर्म्ममोऽर्थेषु मथुरां मधुराकृतिः॥ २८**

२८ अ:। पौरुषभूषणः अर्थेषु निर्म्ममः मधुराकृतिः सः कालिन्द्याः उपकूलं मथुरां (नाम) पुरीं निर्म्ममे॥

२८। पौरुषभूषणः अर्थेषु विषयेषु निर्म्ममो निस्पृहः मधुराकृतिः-सौम्यरूपः स शत्रुघ्नः कालिन्द्याः यमुनाया उपकूलं कूले। विभक्त्यर्थेऽव्ययीभावः। मथुरां नाम पुरीं निर्म्ममे निर्मितवान्॥

২৮। বিষয়নিস্পৃহ মধুরাকৃতি পুরুষকারভূষণ সেই শত্রুঘ্ন কালিন্দীর উপকূলে মথুরানাম্নী এক পুরী নির্ম্মাণ করিলেন।

**या सौराज्यप्रकाशाभिर्बभौ पौरविभूतिभिः।**
**स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता॥ २९**

२९ अ:। या सौराज्यप्रकाशाभिः पौरविभूतिभिः स्वर्गाभिष्यन्दवमनं कृत्वा उपनिवेशिता इव बभौ॥

२९। या पूः, शोभनो राजा यस्याः पुरः सा सुराज्ञी सुराज्ञ्या भावः सौराज्यं तेन प्रकाशाभिः प्रकाशमानाभिः पौराणां विभूतिभिरैश्वर्य्यैः, स्वर्गस्याभिष्यन्दोऽतिरिक्तजनः, तस्य वमनमाहरणं कृत्वा उपनिवेशिता उपस्थापिता इव बभौ। अत्र कौटिल्यः—'भूतपूर्व्वमभूतपूर्व्वं वा जनपदं परदेशप्रवाहेण स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्' इति॥

২৯। উত্তম রাজার পালন গুণে অত্রত্য পুরবাসীদিগের ঐশ্বর্য্য দেখিয়া মনে হইতে লাগিল—যেন স্বর্গ হইতে অতিরিক্ত লোক আহরণ করিয়া তথায় উপনিবেশ স্থাপন করা হইয়াছে।

तत्र सौधगतः पश्यन् यमुनां चक्रवाकिनीम् ।
हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये ॥ ३०

३० अ:। तत्र सौधगतः चक्रवाकिनीं यमुनां हेमभक्तिमतीं भूमेः प्रवेणीं इव, पश्यन् पिप्रिये ॥

३०। तत्र मथुरायां सौधगतो हर्म्यारूढ़ः स चक्रवाकिनीं चक्रवाकवतीं यमुनां हेमभक्तिमतीं सुवर्णरचनावतीं भूमेः प्रवेणीं वेणीमिव। 'वेणी प्रवेणी' इत्यमरः। पश्यन् पिप्रिये प्रीतः। 'प्रीञ् प्रीणने' इति धातोर्दैवादिकाल्लिट् ॥

৩০। তিনি তথাকার সৌধোপরি আরোহণ পূর্ব্বক ভূমির স্বর্ণখচিত বেণীর ন্যায় চক্রবাক-মিথুন-পরিবৃত যমুনাকে সন্দর্শন করিয়া পরম প্রীত হইলেন।

सखा दशरथस्यापि जनकस्य च मन्त्रकृत् ।
सञ्चस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥ ३१

३१ अ:। दशरथस्य जनकस्य च सखा मन्त्रकृत् (वाल्मीकिः) अपि उभयप्रीत्या मैथिलेयौ यथाविधि सञ्चस्कार ॥

३१। सम्प्रति रामसन्तानवृत्तान्तमाह—सखा इति। दशरथस्य जनकस्य च सखा मन्त्रकृत् मन्त्रद्रष्टा स वाल्मीकिरपि। 'सुकर्म्मपापमन्त्रपुण्येषु कृञः' इति क्विप्। उभयोर्दशरथजनकयोः प्रीत्या स्नेहेन मैथिलेयौ मैथिलीपुत्रौ यथाविधि यथाशास्त्रं सञ्चस्कार संस्कृतवान्। जातकर्म्मादिभिरिति शेषः ॥

৩১। এদিকে দশরথ ও জনকের সখা মন্ত্রকর্ত্তা মহর্ষি বাল্মীকি উভয় মিত্রের প্রতি প্রীতিবশত যথাবিধি বৈদেহীতনয়দ্বয়ের জাতকর্ম্মাদি সংস্কার সম্পন্ন করিলেন।

स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया ।
कविः कुशलवावेव चकार किल नामतः ॥ ३२

३२ अ:। सः कविः (वाल्मीकिः) कुशलवोन्मृष्टगर्भक्लेदौ तौ तदाख्यया नामतः कुशलवौ एव चकार किल ॥

३२। स कविर्वाल्मीकिः कुशैः दर्भैः लवैर्गोपुच्छलोमभिः। 'लवो लवणकिञ्जल्कपक्ष्मगोपुच्छलोमसु' इति वैजयन्ती। उन्मृष्टो गर्भक्लेदो गर्भोपद्रवो ययोस्तौ कुशलवोन्मृष्टगर्भक्लेदौ तौ मैथिलेयौ तेषां कुशानाञ्च लवानां चाख्यया नामतो नाम्ना यथासंख्यं कुशलवावेव चकार किल। कुशोन्मृष्टः कुशः लवोन्मृष्टः लवः ॥

৩২। সেই শিশুদ্বয়ের একটীর কুশ এবং অপরটীর লব অর্থাৎ গোপুচ্ছলোমদ্বারা গর্ভক্লেদ মার্জ্জিত হইয়াছিল বলিয়া আদিকবি বাল্মীকি তাহাদের নাম যথাক্রমে কুশ ও লব রাখিলেন।

साङ्गञ्च वेदमध्याप्य किञ्चिदुत्क्रान्तशैशवौ।
स्वकृतिं गापयामास कविप्रथमपद्धतिम् ॥ ३३

३३ अः। किञ्चित् उत्क्रान्तशैशवौ (तौ) साङ्गं च वेदम् अध्याप्य कविप्रथमपद्धतिं स्वकृतिं च गापयामास ॥

३३। किञ्चिदुत्क्रान्तशैशवौ अतिक्रान्तबाल्यौ तौ साङ्गञ्च वेदमध्याप्य कवीनां प्रथमपद्धतिम् कवितावीजमित्यर्थः। स्वकृतिं काव्यं रामायणाख्यं गापयामास। गापयतेर्लिट्। शब्दकर्म्मत्वात् 'गतिबुद्धि—' इत्यादिना द्विकर्म्मकत्वम् ॥

৩৩। কুমারদ্বয় কথঞ্চিৎ শৈশবকাল অতিক্রম করিলে তিনি তাহাদিগকে সাঙ্গবেদ অধ্যয়ন করাইয়া কবিদিগের প্রথম সোপানস্বরূপ স্বকৃতি রামায়ণ কাব্য গান করাইতে লাগিলেন।

रामस्य मधुरं वृत्तं गायन्तौ मातुरग्रतः।
तद्वियोगव्यथां किञ्चिच्छिथिलीचक्रतुः सुतौ ॥ ३४

३४ अः। सुतौ रामस्य वृत्तं मातुः अग्रतः मधुरं गायन्तौ तद्वियोगव्यथां किञ्चित् शिथिलीचक्रतुः ॥

३४। तौ सुतौ रामस्य वृत्तं मातुरग्रतो मधुरं गायन्तौ तद्वियोगव्यथां रामविरहवेदनां किञ्चित् शिथिलीचक्रतुः ॥

৩৪। সেই তনয়দ্বয় জননীসন্নিধানে রামের মধুর চরিত গান করিয়া তাঁহার স্বামি-বিরহব্যথার কথঞ্চিৎ লাঘব করিয়াছিলেন।

इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नितेजसः।
तद्योगात् पतिवत्नीषु पत्नीष्वासन् द्विसूनवः ॥ ३५

३५ अः। रघोः वंश्याः त्रेताग्नितेजसः इतरे त्रयः अपि तद्योगात् पतिवत्नीषु द्विसूनवः आसन् ॥

३५। रघोर्वंश्या वंशे भवाः, त्रेतेत्यग्नयस्त्रेताग्नयः, तेषां तेज इव तेजो येषां ते त्रेताग्नितेजसः, इतरे रामादन्ये त्रयो भरतादयोऽपि तद्योगात् तेषां योगात् भरतादिसम्बन्धात् पतिवत्नीषु भर्तृमतीषु जीवत्पतिकासु ख्यातिमतीष्वित्यर्थः। 'पतिवत्नी सभर्तृका' इत्यमरः। 'अन्तर्वत्पतिवतोर्नुक्' इति ङीप्प्रत्ययो नुमागमश्च। पत्नीषु द्विसूनव आसन्। द्वौ द्वौ सूनू येषां ते द्विसूनव इति विग्रहः, क्वचित् संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत् ॥

৩৫। এদিকে গার্হপত্যাদি অগ্নিত্রয়-তেজঃ সদৃশ রঘুবংশভূষণ ভরত, লক্ষ্মণ ও শত্রুঘ্ন এই অপর ভ্রাতৃত্রয়ের স্ব স্ব পত্নীতে দুই দুইটী করিয়া পুত্র জন্মিয়াছিল।

**शत्रुघातिनि शत्रुघ्नः सुबाहौ च बहुश्रुते ।**
**मथुराविदिशे सून्वोर्निदधे पूर्वजोत्सुकः ॥ ३६**

३६ अ:। पूर्वजोत्सुकः शत्रुघ्नः बहुश्रुते शत्रुघातिनि सुबाहौ च सून्वोः मथुराविदिशे निदधे ॥

३६। पूर्वजोत्सुको ज्येष्ठप्रियः शत्रुघ्नो बहुश्रुते शत्रुघातिनि सुबाहौ च तन्नामकयोः सून्वोर्मथुरा च विदिशा च ते नगर्यौ निदधे, निधाय गत इत्यर्थः ॥

৩৬। শত্রুঘ্ন জ্যেষ্ঠতনয় দর্শনে সমুৎসুক হইয়া প্রভূত শাস্ত্রজ্ঞানসম্পন্ন শত্রুঘাতী ও সুবাহু নামক তনয়দ্বয়কে মথুরা ও বিদিশার আধিপত্য প্রদান করিলেন।

**भूयस्तपोव्ययो मा भूद्वाल्मीकेरिति सोऽत्यगात् ।**
**मैथिलीतनयोद्गीतनिःस्पन्दमृगमाश्रमम् ॥ ३७**

३७ अ:। सः मैथिलीतनयोद्गीतनिःस्पन्दमृगं वाल्मीकेः आश्रमं भूयः (अपि) तपोव्ययो माभूत् इति अत्यगात् ॥

३७। स शत्रुघ्नः मैथिलीतनययोः कुशलवयोरुद्गीतेन निस्पन्दमृगं-गीतप्रियतया निश्चलहरिणं वाल्मीकेराश्रमं भूयः पुनरपि तपोव्ययः संविधान-करणार्थं तपोहानिर्मा भूदिति हेतोः, अत्यगात्, अतिक्रम्य गत इत्यर्थः ।

৩৭। শত্রুঘ্ন পুনরায় তথায় অবস্থান করিলে তাঁহার আতিথ্য করিতে পাছে বাল্মীকির তপোবিঘ্ন ঘটে, এজন্য তিনি জানকীতনয়দ্বয়ের সঙ্গীতশ্রবণে নিস্পন্দ মৃগকুল-সমাকীর্ণ তদীয় আশ্রম অতিক্রম পূর্ব্বক গমন করিলেন।

**वशी विवेश चायोध्यां रथ्यासंस्कारशोभिनीम् ।**
**लवणस्य वधात् पौरैरीक्षितोऽत्यन्तगौरवम् ॥ ३८**

३८ अ:। वशी लवणस्य वधात् पौरैः अत्यन्तगौरवम् ईक्षितः (सन्) रथ्यासंस्कारशोभिनीम् अयोध्यां विवेश च ॥

३८। वशी स लवणस्य वधाद्धेतोः पौरैः पौरजनैरत्यन्तं गौरवं यस्मिन् कर्मणि तत् तथा ईक्षितः सन् रथ्यासंस्कारैस्तोरणादिभिः शोभते या तामयोध्यां विवेश च ॥

৩৮। অনন্তর বশী শত্রুঘ্ন পথসংস্কার দ্বারা পরিশোভিত অযোধ্যায় প্রবেশ করিলেন, তৎকালে পৌরগণ লবণবধজন্য তাঁহাকে অত্যন্ত গৌরবসহকারে নিরীক্ষণ করিতে লাগিল।

स ददर्श सभामध्ये सभासद्भिरुपस्थितम्।
रामं सीतापरित्यागादसामान्यपतिं भुवः॥ ३९

३९ अ:। स सभामध्ये सभासद्भि: उपस्थितं सीतापरित्यागात् भुव: असामान्यपतिं रामं ददर्श॥

३९। स शत्रुघ्नः सभामध्ये सभासद्भिः सभ्यैरुपस्थितं सेवितं सीतापरित्यागाद्भुवोऽसामान्यपतिम् असाधारणपतिं रामं ददर्श॥

৩৯। তিনি তথায় উপস্থিত হইয়া সভাসদ্‌গণে সেবিত সীতাপরিত্যাগহেতু একমাত্র পৃথিবীরই পতি রামচন্দ্রকে দর্শন করিলেন।

तमभ्यनन्दत् प्रणतं लवणान्तकमग्रजः।
कालनेमिवधात् प्रीतस्तुराषाडिव शार्ङ्गिणम्॥ ४०

४० अ:। अग्रजः लवणान्तकं प्रणतं तं कालनेमिवधात् प्रीत: तुराषाट् शार्ङ्गिणम् इव अभ्यनन्दत्॥

४०। अग्रजो रामो लवणस्यान्तकं हन्तारं प्रणतं तं शत्रुघ्नं कालनेमिर्नाम राक्षसः, तस्य वधात् प्रीतः। तुरं वेगं सहत इति तुराषाडिन्द्रः। 'छन्दसि सहः' इति ण्विः, यद्वा सहतेर्णिचि कृते साहयतेः क्विप्, 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः 'सहेः साडः सः' इति षत्वम्। शार्ङ्गिणम् उपेन्द्रमिव अभ्यनन्दत्॥

৪০। অনন্তর ইন্দ্র যেরূপ কালনেমিবধহেতু প্রীত হইয়া বিষ্ণুর অভিনন্দন করিয়াছিলেন, অগ্রজ রামচন্দ্রও তদ্রূপ লবণান্তক প্রণত শত্রুঘ্নের অভিনন্দন করিলেন।

स पृष्टः सर्वतो वार्त्तमाख्यद्राज्ञे न सन्ततिम्।
प्रत्यर्पयिष्यतः काले कवेराद्यस्य शासनात्॥ ४१

४१ अ:। स: पृष्ट: (सन्) सर्वत: वार्त्तं राज्ञे आख्यत्, सन्ततिं न आख्यत्, (कुत:)? काले प्रत्यर्पयिष्यत: आद्यस्य कवे: शासनात्॥

४१। स शत्रुघ्नः पृष्टः सन् सर्वतो वार्त्तं कुशलं राज्ञे रामाय आख्यत् आख्यातवान्। चक्षिङो लुङ्, 'चक्षिङः ख्याञ्' इति ख्याआदेशः, 'अस्यतिवक्ति—' इत्यङ्, 'आतो लोप इति च' इत्याकारलोपः, ख्यातेर्वा लुङ्। सन्ततिं कुशलवोत्पत्तिं न आख्यत्। कुतः? कालेऽवसरे प्रत्यर्पयिष्यत आद्यस्य कवेर्वाल्मीकेः शासनात्॥

৪১। রাজা রামচন্দ্র তাঁহাকে কুশলসংবাদ জিজ্ঞাসা করিলে তিনি সকলবিষয়েরই কুশল নিবেদন করিলেন, কিন্তু তনয়োৎপত্তির বিষয় কিছুই বলিলেন না; আদিকবি বাল্মীকি স্বয়ং আসিয়াই যথাকালে তাঁহাকে পুত্রদ্বয়সমর্পণ করিবেন, এজন্য তিনি এ বিষয় প্রকাশ করিতে নিষেধ করিয়াছিলেন।

अथ जानपदो विप्रः शिशुमप्राप्तयौवनम्।
अवतार्य्याङ्कशय्यास्थं द्वारि चक्रन्द भूपतेः॥ ४२

४२ अः। अथ जानपदो विप्रः अप्राप्तयौवनं शिशुं भूपतेः द्वारि अङ्कशय्यास्थं (यथा तथा) अवतार्य्य चक्रन्द॥

४२। अथ जनपदे भवो जानपदो विप्रः, कश्चिदिति शेषः, अप्राप्त-यौवनं शिशुम् मृतमिति शेषः, भूपतेः रामस्य द्वारि अङ्कशय्यास्थं यथा तथा अवतार्य्य अङ्कस्थलेनैव अवरोप्य चक्रन्द चुक्रोश॥

৪২। অনন্তর কোন সময়ে জনপদবাসী এক ব্রাহ্মণ অপ্রাপ্তযৌবন একটী শিশুকে শবশয্যা হইতে রাজদ্বারে নামাইয়া ক্রোড়ে করিয়া ক্রন্দন করিতে লাগিলেন।

शोचनीयासि वसुधे या त्वं दशरथाच्युता।
रामहस्तमनुप्राप्य कष्टात् कष्टतरं गता॥ ४३

४३ अः। (हे) वसुधे! शोचनीया असि या त्वं दशरथात् च्युता रामहस्तमनुप्राप्य कष्टात् कष्टतरं गता॥

४३। हे वसुधे! दशरथात् च्युता या त्वं रामहस्तमनुप्राप्य कष्टात् कष्टतरं गता सती शोचनीयासि॥

৪৩। "হে বসুন্ধরে! একেই তুমি রাজা দশরথের হস্তচ্যুত হইয়া শোচনীয় দশায় উপনীত হইয়াছিলে, তারপর সম্প্রতি রামের হস্তগত হইয়া কষ্ট হইতেও কষ্টতর দশা প্রাপ্ত হইয়াছে।"

श्रुत्वा तस्य शुचो हेतुं गोप्ता जिह्राय राघवः।
न ह्यकालभवो मृत्युरिक्ष्वाकुपदमस्पृशत्॥ ४४

४४ अः। गोप्ता राघवः तस्य शुचः हेतुं श्रुत्वा जिह्राय, हि (यस्मात्) अकालभवः मृत्युः इक्ष्वाकुपदं न अस्पृशत्॥

४४। गोप्ता रक्षको राघवस्तस्य विप्रस्य शुचः शोकस्य हेतुं पुत्र-मरणरूपं श्रुत्वा जिह्राय लज्जितः। कुतः? हि यस्मात् अकालभवो मृत्युरिक्ष्वाकूणां पदं राष्ट्रं न अस्पृशत्। वृद्धे जीवति यवीयान् न म्रियत-इत्यर्थः॥

৪৪। প্রজাপ্রতিপালক রাজা রামচন্দ্র ব্রাহ্মণের শোককারণ শ্রবণ করিয়া লজ্জিত হইলেন, কেননা ইতঃপূর্ব্বে অকালমৃত্যু ইক্ষ্বাকুকুলকে কখনও স্পর্শ করে নাই।

स मुहूर्त्तं क्षमस्वेति द्विजमाश्वास्य दुःखितम्।
यानं सस्मार कौवेरं वैवस्वतजिगीषया॥ ४५

४५ अः। सः दुःखितं द्विजं मुहूर्तं क्षमस्व इति आश्वास्य वैवस्वतजिगीषया कौवेरं यानं सस्मार॥

४५। स रामो दुःखितं द्विजं मुहूर्तं क्षमस्व इत्याश्वास्य वैवस्वतस्य अन्तकस्यापि जिगीषया जेतुमिच्छया कौवेरं यानं पुष्पकं सस्मार॥

৪৫। তিনি "আপনি মুহূর্ত্তমাত্র অপেক্ষা করুন" দুঃখিত দ্বিজকে এই কথা বলিয়া আশ্বাসপ্রদান পূর্ব্বক যমকে জয় করিবার জন্য কুবেরের পুষ্পকরথ স্মরণ করিলেন।

आत्तशस्त्रस्तदध्यास्य प्रस्थितः स रघूद्वहः।
उच्चचार पुरस्तस्य गूढरूपा सरस्वती॥ ४६

४६ अः। सः रघूद्वहः आत्तशस्त्रः (सन्) तत् अध्यास्य प्रस्थितः। तस्य पुरः गूढरूपा सरस्वती उच्चचार॥

४६। स रघूद्वहो रामः आत्तशस्त्रः सन् तत् पुष्पकमध्यास्य प्रस्थितः। अथ तस्य पुरो गूढरूपा सरस्वती अशरीरा वाक् उच्चचार उद्बभूव॥

राजन् प्रजासु ते कश्चित् अपचारः प्रवर्त्तते।
तमन्विष्य प्रशमयेर्भवितासि ततः कृती॥ ४७

४७ अः। (हे) राजन्! ते प्रजासु कश्चित् अपचारः प्रवर्त्तते, तम् अन्विष्य प्रशमयेः, ततः कृती भवितासि॥

४७। हे राजन्! ते प्रजासु कश्चिदपचारो वर्णधर्म्मव्यतिरेकः प्रवर्त्तते। तमपचारमन्विष्य प्रशमयेः, ततः कृती कृतकृत्यो भवितासि भविष्यसि॥

৪৬—৪৭। অনন্তর রঘুকুলতিলক রাম শস্ত্রগ্রহণ পূর্ব্বক পুষ্পকরথে আরোহণ করিয়া প্রস্থিত হইলে, তাঁহার সম্মুখভাগে সহসা "রাজন্! আপনার প্রজাগণমধ্যে কোন এক অপচার ঘটিয়াছে অনুসন্ধান করিয়া তাহার শান্তিবিধান করুন, এইরূপ করিলেই আপনি কৃতকার্য্য হইতে পারিবেন।" এইরূপ এক অশরীরিণী আকাশবাণী উত্থিত হইল।

इत्याप्तवचनाद्रामो विनेष्यन् वर्णविक्रियाम्।
दिशः पपात पत्रेण वेगनिष्कम्पकेतुना॥ ४८

४८ अः। इति आप्तवचनात् रामः वर्णविक्रियां विनेष्यन् वेगनिष्कम्पकेतुना पत्त्रेण दिशः पपात॥

४८। इत्याप्तवचनात् रामो वर्णविक्रियां वर्णापचारं विनेष्यन् अपनेष्यन् वेगेन निष्कम्पकेतुना पत्त्रेण वाहनेन पुष्पकेण। 'पत्त्रं वाहनपक्षयोः' इत्यमरः। दिशः पपात धावति स्म॥

৪৮। রাম এবংবিধ বিশ্বস্তবাক্য শ্রবণ করিয়া ব্রাহ্মণাদি চতুর্ব্বর্ণের ধর্ম্মবিকার নিবারণ কামনায় অত্যন্ত বেগবশতঃ নিষ্কম্পপতাকান্বিত রথদ্বারা চতুর্দ্দিক্ ভ্রমণ করিতে লাগিলেন।

अथ धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम् ।
ददर्श कश्चिदैक्ष्वाकस्तपस्यन्तमधोमुखम् ॥ ४९

४९ अ: । अथ ऐक्ष्वाक: धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम् अधोमुखं तपस्यन्तं कश्चित् ददर्श ॥

४९ । अथ इक्ष्वाकुवंशप्रभव ऐक्ष्वाको रामः 'कोपधादण्' इत्यणि 'दाण्डिनायन—' इत्यादिनोकारलोपनिपात: । धूमेन पीयमानेन अभिताम्राक्षं वृक्षशाखावलम्बिनमधोमुखं तपस्यन्तं तपश्चरन्तं कश्चित् पुरुषं ददर्श ॥

৪৯ । অনন্তর ইক্ষ্বাকুবংশভূষণ রাম দেখিতে পাইলেন,—এক ব্যক্তি বৃক্ষশাখায় লম্বমান হইয়া অধোমুখে তপস্যা করিতেছে এবং ঐ বৃক্ষের তলদেশস্থিত হুতাশনের ধূমপানে তাহার নয়নদ্বয় তাম্রবর্ণ ধারণ করিয়াছে ।

पृष्टनामान्वयो राज्ञा स किलाचष्ट धूमपः ।
आत्मानं शम्बुकं नाम शूद्रं सुरपदार्थिनम् ॥ ५०

५० । राज्ञा पृष्टनामान्वय: धूमप: स: आत्मानं सुरपदार्थिनं शम्बुकं नाम शूद्रम् आचष्ट किल ॥

५० । राज्ञा नाम च अन्वयश्च तौ पृष्टौ नामान्वयौ यस्य स तथोक्तः, धूमं पिबतीति धूमपः । 'सुपि' इति योगविभागात् कप्रत्यय: स पुरुष: आत्मानं सुरपदार्थिनं स्वर्गार्थिनम् अनेन प्रयोजनमपि पृष्ट इति ज्ञेयम् । शम्बुकं नाम शूद्रम् आचष्ट बभाषे किल ॥

৫০ । রাজা রামচন্দ্র তাহার নাম ও বংশাদির পরিচয় জিজ্ঞাসা করিলে ঐ ধূম-পায়ী তপস্বী উত্তর করিল,—আমি শম্বুক নামক শূদ্র, স্বর্গকামনায় তপশ্চরণ করিতেছি ।

तपस्यनधिकारित्वात् प्रजानां तमघावहम् ।
शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे ॥ ५१

५१ अ: । तपसि अनधिकारित्वात् प्रजानाम् अघावहं तं शीर्षच्छेद्यम् परिच्छिद्य नियन्ता शस्त्रम् आददे ॥

५१ । तपसि अनधिकारित्वात् प्रजानामघावहं दु:खावहं तं शूद्रं शीर्षच्छेद्यम् । 'शीर्षच्छेदाद्यच्च' इति यत् प्रत्यय: । परिच्छिद्य निश्चित्य नियन्ता रक्षको राम: शस्त्रमाददे जग्राह ॥

৫১। লোকনিয়ন্তা রাম তপস্যায় অনধিকারিতাহেতু প্রজাগণের অত্যাচারক সেই শূদ্রকের শিরশ্ছেদ কর্ত্তব্য মনে করিয়া শস্ত্র-গ্রহণ করিলেন।

**স তদ্বক্ত্রং হিমক্লিষ্ট-কিঞ্জল্কমিব পঙ্কজম্।**
**জ্যোতিষ্কণাহতশ্মশ্রু কণ্ঠনালাদপাতয়ৎ॥ ৫২**

৫২ অ:। সঃ জ্যোতিষ্কণাহতশ্মশ্রু তদ্বক্ত্রং হিমক্লিষ্টকিঞ্জল্কং পঙ্কজম্ ইব, কণ্ঠনালাৎ অপাতয়ৎ॥

৫২। স রামো জ্যোতিষ্কণৈঃ স্ফুলিঙ্গৈরাহতানি দগ্ধানি শ্মশ্রূণি যস্য তৎ, তস্য বক্ত্রং হিমক্লিষ্টকিঞ্জল্কং পঙ্কজমিব কণ্ঠ এব নালং তস্মাৎ অপাতয়ৎ॥

৫২। তিনি অগ্নিস্ফুলিঙ্গে দগ্ধশ্মশ্রু শূদ্রকের বদনমণ্ডল নীহারক্লিষ্টপরাগ পদ্মের ন্যায় কণ্ঠনাল হইতে পাতিত করিলেন।

**কৃতদণ্ডঃ স্বয়ং রাজ্ঞা লেভে শূদ্রঃ সতাং গতিম্।**
**তপসা দুশ্চরেণাপি ন স্বমার্গবিলঙ্ঘিনা॥ ৫৩**

৫৩ অ:। শূদ্রঃ রাজ্ঞা স্বয়ং কৃতদণ্ডঃ (সন্) সতাং গতিং লেভে, দুশ্চরেণ অপি স্বমার্গবিলঙ্ঘিনা তপসা ন (লেভে)॥

৫৩। শূদ্রঃ শম্বুকঃ রাজ্ঞা স্বয়ং কৃতদণ্ডঃ কৃতশিক্ষঃ সন্ সতাং গতিং লেভে। দুশ্চরেণাপি স্বমার্গবিলঙ্ঘিনা অনধিকারদুষ্টেনেত্যর্থঃ, তপসা ন লেভে। অত্র মনুঃ—"রাজভিঃ কৃতদণ্ডাস্তু কৃত্বা পাপানি মানবাঃ। নির্ম্মলাঃ স্বর্গমায়ান্তি সন্তঃ সুকৃতিনো যথা॥" ইতি॥

৫৩। শূদ্রক স্বয়ং রাজা কর্ত্তৃক দণ্ডিত হইয়া যেরূপ সাধুদিগের সদ্‌গতি লাভ করিল, অনধিকারদুষ্ট দুষ্কর তপস্যাদ্বারাও তদ্রূপ ফললাভ তাহার ঘটিত না।

**রঘুনাথোঽপ্যগস্ত্যেন মার্গসন্দর্শিতাত্মনা।**
**মহৌজসা সংযুযুজে শরৎকাল ইবেন্দুনা॥ ৫৪**

৫৪ অ:। রঘুনাথঃ অপি মার্গসন্দর্শিতাত্মনা মহৌজসা অগস্ত্যেন, ইন্দুনা শরৎকাল ইব সংযুযুজে॥

৫৪। রঘুনাথোঽপি মার্গসন্দর্শিতাত্মনা মহৌজসা অগস্ত্যেন ইন্দুনা শরৎকাল ইব সংযুযুজে সঙ্গতঃ। ইন্দাবপি বিশেষণং যোজ্যম্। রঘুনাথ ইত্যত্র ক্ষুভ্নাদিত্বাণ্ণত্বাভাবঃ॥

৫৪। রঘুপতি রামচন্দ্রের পথিমধ্যে মহাতেজা মহর্ষি অগস্ত্যের সহিত সাক্ষাৎকার ঘটিল; তখন মনে হইল যেন বর্ষাপগমে শরৎকাল, শীতরশ্মি শশধরের সহিত সুহৃদ্‌ভাবে মিলিত হইলেন।

कुम्भयोनिरलङ्कारं तस्मै दिव्यपरिग्रहम्।
ददौ दत्तं समुद्रेण पीतेनेवात्मनिष्क्रयम्॥ ५५

५५ अ:। कुम्भयोनिः पीतेन समुद्रेण आत्मनिष्क्रयम् इव, दत्तं दिव्यपरिग्रहम् अलङ्कारं तस्मै ददौ॥

५५। कुम्भयोनिरगस्त्यः पीतेन समुद्रेण आत्मनिष्क्रयमिव आत्ममोचनमूल्यमिव दत्तम्, अतएव परिगृह्यत इति व्युत्पत्त्या परिग्रहः, दिव्यानां परिग्रहः परिग्राह्य इत्यर्थः, तमलङ्कारं तस्मै रामाय ददौ॥

৫৫। কুম্ভসম্ভব মহর্ষি অগস্ত্য সাগরকে নিঃশেষরূপে পান করিলে আত্মনিষ্ক্রয়ের জন্য সাগর যে দেববাঞ্ছিত দিব্য অলঙ্কার প্রদান করিয়াছিল, তৎকালে সেই অলঙ্কার রামচন্দ্রকে প্রদান করিলেন।

तं दधन्मैथिलीकण्ठनिर्व्यापारेण बाहुना।
पश्चान्निववृते रामः प्राक् परासुर्द्विजात्मजः॥ ५६

५६ अ:। मैथिलीकण्ठनिर्व्यापारेण बाहुना तं दधत् रामः पश्चात् निववृते, परासुः द्विजात्मजः प्राक् ( निववृते )॥

५६। मैथिलीकण्ठनिर्व्यापारेण बाहुना तमलङ्कारं दधत् रामः पश्चात् निववृते निवृत्तः। परासुर्मृतो द्विजात्मजः प्राक् रामात् पूर्वं निववृते॥

৫৬। রাম সীতার কণ্ঠাশ্লেষসম্পর্কশূন্য বাহুতে অগস্ত্যপ্রদত্ত অলঙ্কার গ্রহণ করিয়া অযোধ্যায় প্রত্যাবৃত্ত হইলেন, এদিকে তাঁহার আসিবার পূর্ব্বেই মৃত ব্রাহ্মণশিশু সঞ্জীবিত হইয়া উঠিল।

तस्य पूर्वोदितां निन्दां द्विजः पुत्त्रसमागतः।
स्तुत्या निवर्त्तयामास त्रातुर्वैवस्वतादपि॥ ५७

५७ अ:। पुत्त्रसमागतः द्विजः वैवस्वतात् अपि त्रातुः तस्य पूर्व्वोदितां निन्दां स्तुत्या निवर्त्तयामास॥

५७। पुत्त्रसमागतः पुत्त्रेण सङ्गतो द्विजो वैवस्वतादन्तकादपि त्रातुः रक्षकस्य, 'भीत्रार्थानां भयहेतुः' इत्यपादानात् पञ्चमी। तस्य रामस्य पूर्व्वोदितां पूर्व्वोक्तां निन्दां स्तुत्या निवर्त्तयामास॥

৫৭। ব্রাহ্মণ পুত্রকে প্রাপ্ত হইয়া যমের নিকট হইতে তনয়ের ত্রাণকারী রাজা রামচন্দ্রের স্তুতিবাক্য দ্বারা পূর্ব্বকৃত নিন্দার প্রত্যাহার করিলেন।

तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः।
मेघाः सस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः॥ ५८

५८ अ:। अध्वराय मुक्ताश्वं तं रक्षःकपिनरेश्वराः मेघाः अम्भोभिः सस्यम् इव, उपायनैः अभ्यवर्षन् ॥

५८। अध्वराय अश्वमेधाय मुक्ताश्वं तं रामं रक्षःकपिनरेश्वराः सुग्रीवविभीषणादयो राजानश्च मेघा अम्भोभिः सस्यमिव उपायनैरभ्यवर्षन् ॥

৫৮। অনন্তর রাম অশ্বমেধ সম্পাদন মানসে অবাধবিচরণ জন্য যজ্ঞীয় অশ্বের বন্ধনমোচন করিলে—মেঘ যেমন শস্যের উপর বারি বর্ষণ করে, তদ্রূপ রাক্ষসেন্দ্র বিভীষণ, কপিরাজ সুগ্রীব এবং অন্যান্য নরনাথগণ বিবিধ উপায়ন দ্বারা তাঁহাকে অভিনন্দিত করিলেন।

दिग्भ्यो निमन्त्रिताश्चैनमभिजग्मुर्महर्षयः।
न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि ॥५९

५९ अ:। निमन्त्रिताः महर्षयश्च भौमानि धिष्ण्यानि न (किन्तु) ज्योतिर्मयानि अपि (धिष्ण्यानि) हित्वा दिग्भ्यः एनम् अभिजग्मुः ॥

५९। निमन्त्रिता आहूता महर्षयश्च भूम्याः सम्बन्धीनि भौमानि धिष्ण्यानि स्थानान्येव न। 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः। किन्तु ज्योतिर्मयानि नक्षत्ररूपाणि धिष्ण्यान्यपि हित्वा दिग्भ्य एनं राममभिजग्मुः ॥

৫৯। নিমন্ত্রিত মহর্ষি সকল তৎকালে কেবল ভূলোক হইতে নহে, জ্যোতির্ম্ময় স্থান সকল পরিত্যাগ করিয়া দিগ্দিগন্ত হইতে সেই যজ্ঞে আগমন করিতে লাগিলেন।

उपशल्यनिविष्टैस्तैश्चतुर्द्वारमुखी बभौ।
अयोध्या सृष्टलोकेव सद्यः पैतामही तनुः ॥ ६०

६० अ:। चतुर्द्वारमुखी अयोध्या उपशल्यनिविष्टैः तैः सद्यः सृष्टलोका पैतामही तनुः इव बभौ ॥

६०। चत्वारि द्वाराणि एव मुखानि यस्याः सा चतुर्द्वारमुखी अयोध्या उपशल्येषु ग्रामान्तेषु निविष्टैः। 'ग्रामान्त उपशल्यं स्यात्' इत्यमरः। तैर्महर्षिभिः सद्यः सृष्टलोका पितामहस्येयं पैतामही तनुर्मूर्त्तिरिव बभौ ॥

৬০। নগরোপান্তে অবস্থিত পূতাত্মা মহর্ষিগণদ্বারা চতুর্দ্বারমুখী অযোধ্যাপুরী যেন লোকসৃষ্টিকারিণী পিতামহতনুর ন্যায় উপশোভিত হইতে লাগিল।

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः।
अनन्यजानेः सैवासीत् यस्माज्जाया हिरण्मयी ॥६१

६१ अ: । वैदेह्या: त्याग: अपि श्लाघ्य:, यस्मात् प्रागवंशवासिन: अनन्यजाने: पत्यु: हिरण्मयी सा एव जाया आसीत् ॥

६१ । वैदेह्यास्त्यागोऽपि श्लाघ्यो वर्ण्य एव । कुत: ? यस्मात् प्राग्वंश: प्राचीनस्थूण: यज्ञशालाविशेष: तद्वासिन:, नास्त्यन्या जाया यस्य तस्य अनन्य-जाने: । 'जायाया निङ्' इति समासान्तो निङादेश: । पत्यु: रामस्य हिरण्मयी सौवर्णी । 'दाण्डिनायन—' आदिसूत्रेण निपात: । सा निजैव जाया पत्नी आसीत् । कविवाक्यमेतत् ॥

৬১। রামচন্দ্র প্রাগ্‌বংশ নামক যজ্ঞশালায় বাসকালে অন্য পত্নী পরিগ্রহ না করিয়া বৈদেহীর হিরণ্ময়ী মূর্ত্তি নির্ম্মাণপূর্ব্বক ভার্য্যার কার্য্য সম্পাদন করিয়াছিলেন, অতএব পতিকর্ত্তৃক পরিত্যাগও সীতার পক্ষে শ্লাঘনীয় হইয়াছিল।

विधेरधिकसम्भारस्तत: प्रववृते मख: ।
आसन् यत्र क्रियाविघ्ना राक्षसा एव रक्षिण: ॥६२

६२ अ: । तत: विधे: अधिकसम्भार: मख: प्रववृते । तत्र क्रियाविघ्ना: राक्षसा: एव रक्षिण: आसन् ॥

६२ । ततो विधे: शास्त्रादधिकसम्भारोऽतिरिच्यमानपरिकर: मख: प्रववृते प्रवृत्त: । यत्र मखे, विहन्यन्त एभिरिति विघ्ना: प्रत्यूहा: । मखे 'यज्ञार्थे कविधानम्' इति क: । क्रियाविघ्ना अनुष्ठानविघातका: राक्षसा एव रक्षिणो रक्षका आसन् ॥

৬২। অনন্তর বিধিবিহিত উপকরণ হইতেও অধিক দ্রব্যসম্ভারদ্বারা রামচন্দ্রের যজ্ঞ অনুষ্ঠিত হইলে পূর্ব্বে যাহারা যজ্ঞবিঘ্নকারী ছিল, সেই রাক্ষসগণই তাঁহার যজ্ঞ রক্ষা করিতে লাগিল।

अथ प्राचेतसोपज्ञं रामायणमितस्तत: ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥ ६३

६३ अ: । अथ मैथिलेयौ कुशलवौ गुरुचोदितौ ( सन्तौ ) प्राचेतसोपज्ञं रामायणम् इतस्तत: जगतु: ॥

६३ । अथ मैथिलेयौ मैथिलीतनयौ । 'स्त्रीभ्यो ढक्' इति ढक् । कुशलवौ गुरुणा वाल्मीकिना चोदितौ प्रेरितौ सन्तौ, प्राचेतस: वाल्मीकि:, उपज्ञायत इत्युपज्ञा 'आतश्चोपसर्गे' इति कर्म्मणि अङ्प्रत्यय: । प्राचेतसस्योपज्ञा प्राचेतसोपज्ञम्, प्राचेतसेनादौ ज्ञातमित्यर्थ: । 'उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमर: । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति नपुंसकत्वम् । अध्यते

.गायतेऽनेनेत्ययनम्, रामस्यायनं चरितं रामायणं रामायणाख्यं काव्यम्। 'पूर्वपदात् संज्ञायाम्' इति णत्वम् उत्तरायणमितिवत्। इतस्ततो जगतु:। गायतेर्लिट्॥

৬৩। তদনন্তর জানকীতনয় লব ও কুশ এই অবসরে গুরু মহর্ষি বাল্মীকির নিদেশে তৎকৃত রামায়ণ ইতস্তত গান করিতে লাগিলেন।

**वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किन्नरस्वनौ।**
**किं तद् येन मनो हर्त्तुमलं स्यातां न शृण्वताम्॥ ६४**

६४ अ:। रामस्य वृत्तं, वाल्मीकेः कृतिः, तौ किन्नरस्वनौ, (अतएव) तत् किम्? येन शृण्वतां मनः हर्त्तुम् अलं न स्याताम्॥

६४। रामस्य वृत्तं वर्ण्यं वस्त्विति शेष:। वाल्मीके: कृति: काव्यम्, गेयमिति शेष:। तौ कुशलवौ किन्नरस्वनौ किन्नरकण्ठौ गायकौ, पुनरिति शेष:। अतएव तत् किम्? येन निमित्तेन तौ शृण्वतां मनो हर्त्तुमलं शक्तौ न स्याताम्। सर्व्वं सरसमित्यर्थ:॥

৬৪। একে ত রামের চরিত্র, বিশেষতঃ বাল্মীকি-বিরচিত, তাহাতে আবার গায়ক লব ও কুশ কিন্নরস্বরশালী; ইহা ভিন্ন আর কোন্ বস্তু শ্রোতৃগণের চিত্ত হরণ করিতে সমর্থ হইতে পারে?

**रूपे गीते च माधुर्य्यं तयोस्तज्ज्ञैर्निवेदितम्।**
**ददर्श सानुजो राम: शुश्राव च कुतूहली॥ ६५**

६५ अ:। तज्ज्ञैः निवेदितं तयोः रूपे गीते च माधुर्य्यं सानुजः रामः कुतूहली (सन्) ददर्श शुश्राव च॥

६५। ते जानन्तीति तज्ज्ञा: तैस्तज्ज्ञैरभिज्ञैर्निवेदितं तयो: कुशलवयो: रूपे आकारे गीते च माधुर्य्यं रामणीयकं सानुजो राम: कुतूहली सानन्द: सन् यथासंख्यं ददर्श शुश्राव च॥

৬৫। অভিজ্ঞ লোকসকল সেই কুশ ও লবের রূপ ও গীতের মাধুর্য্য বিদিত হইয়া রামচন্দ্রের নিকট নিবেদন করিল; অনুজগণসহ রাম কুতূহলী হইয়া তাহাদিগকে দর্শন ও তাহাদিগের কৃত গীত শ্রবণ করিলেন।

**तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ।**
**हिमनिष्यन्दिनी प्रात: निर्वातेव वनस्थली॥ ६६**

६६ अ:। तद्गीतश्रवणैकाग्रा अश्रुमुखी संसत् प्रातः हिमनिष्यन्दिनी निर्व्वाता वनस्थली इव बभौ॥

६६। तयोर्गीतश्रवणे एकाग्रा आसक्ता अश्रुमुखी आनन्दादिति-भाव:। संसत् सभा प्रात: हिमनिष्यन्दिनी निर्वाता वातरहिता वनस्थली इव बभौ शुशुभे। आनन्दपारवश्यान्निष्पन्दमास्ते इत्यर्थ:॥

৬৬। সঙ্গীত শ্রবণে একাগ্রমনা সভাস্থ সমস্ত লোক অশ্রুবর্ষণ করিতে থাকিলে সভা যেন প্রাতঃকালে হিমবর্ষিণী পবনবিরহিতা বনস্থলীর ন্যায় শোভা পাইতে লাগিল।

वयोवेशविसंवादि रामस्य च तयोस्तदा।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत॥ ६७

६७ अ:। जनता वयोवेशविसंवादि तदा तयो: रामस्य च सादृश्यं प्रेक्ष्य नाक्षिकम्पं व्यतिष्ठत॥

६७। जनता जनानां समूह:। 'ग्रामजनबन्धुसहायेभ्यस्तल्' इति तल्प्रत्यय:। वयोवेशाभ्यामेव विसंवादि विलक्षणं तदा तयो: कुशलवयो: रामस्य च सादृश्यं प्रेक्ष्य नास्ति अक्षिकम्पो यस्मिन् कर्मणि तद्यथा तथा। नञर्थस्य नशब्दस्य बहुव्रीहि:। व्यतिष्ठत अतिष्ठत्। 'समव-प्रविभ्य: स्थ:' इत्यात्मनेपदम्। विस्मयादनिमिषमद्राक्षीदित्यर्थ:॥

৬৭। তৎকালে জনসঙ্ঘ সেই লব ও কুশের, রামচন্দ্রের বয়স ও বেশ ব্যতীত আকারগত সৌসাদৃশ্য সন্দর্শন করিয়া নির্নিমেষ নয়নে অবস্থান করিতে লাগিল।

उभयोर्न तथा लोक: प्रावीण्येन विसिष्मिये।
नृपते: प्रीतिदानेषु वीतस्पृहतया यथा॥ ६८

६८ अ:। लोक: उभयो: प्रावीण्येन तथा न विसिष्मिये, यथा नृपते: प्रीतिदानेषु वीतस्पृहतया (विसिष्मिये)॥

६८। लोको जन: उभयो: कुमारयो: प्रावीण्येन नैपुण्येन तथा न विसिष्मिये न विस्मितवान्, यथा नृपते: प्रीतिदानेषु वीतस्पृहतया नैस्पृह्येण विसिष्मिये॥

৬৮। নৃপতি রামচন্দ্র-প্রদত্ত পারিতোষিক গ্রহণে লব ও কুশের স্পৃহাহীনতায় লোকে যেরূপ বিস্মিত হইয়াছিল, তাঁহাদের সঙ্গীত নৈপুণ্যাদি দর্শনে তাদৃশ বিস্ময়-প্রাপ্ত হইল না।

गेये को नु विनेता वां कस्य चेयं कृति: कवे:।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम्॥ ६९

६९ अ:। गेये क: नु वां विनेता, इयञ्च कस्य कवे: कृति: इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिम् अशंसताम्॥

६८। गेये गीते को नु वां युवयोर्विनेता शिक्षकः, नुशब्दः प्रश्ने 'नु पृच्छायां वितर्के च' इत्यमरः। विनेतारं कविञ्चेत्यर्थः। 'गेये केन विनीतौ वाम्' इति पाठे वामिति युष्मदर्थप्रतिपादकमव्ययं द्रष्टव्यम्। तथायमर्थः—केन पुंसा वां युवां गेये गीतविषये विनीतौ शिक्षितौ। कर्म्मणि निष्ठाप्रत्ययः। इयञ्च कस्य कवेः कृतिरिति राज्ञा स्वयं पृष्टौ तौ कुशलवौ वाल्मीकिम् अशंसताम् उक्तवन्तौ॥

৬৯। অনন্তর "এই গীত কাহার কৃত এবং কোন্ ব্যক্তি ইহা তোমাদিগকে শিক্ষা দিয়াছেন" স্বয়ং রাজা এইরূপ জিজ্ঞাসা করিলে, লব ও কুশ বাল্মীকির নাম নির্দ্দেশ করিলেন।

अथ सावरजो रामः प्राचेतसमुपेयिवान्।
ऊरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत्॥ ७०

७० अः। अथ सावरजः रामः प्राचेतसम् उपेयिवान् (सन्) देहम् आत्मनः ऊरीकृत्य राज्यम् अस्मै न्यवेदयत्॥

७०। अथ सावरजो रामः प्राचेतसं वाल्मीकिमुपेयिवान् प्राप्तः सन् देहमात्मन ऊरीकृत्य आत्मानं स्थापयित्वेत्यर्थः, राज्यम् अस्मै प्राचेतसाय न्यवेदयत् समर्पितवान्॥

৭০। তদনন্তর অনুজগণসহ রাম বাল্মীকির সমীপে গমন করিয়া স্বীয় শরীর ব্যতীত সমস্ত রাজ্য তাঁহাকে প্রদান করিলেন।

स तावाख्याय रामाय मैथिलेयौ तदात्मजौ।
कविः कारुणिको वव्रे सीतायाः सम्परिग्रहम्॥ ७१

७१ अः। कारुणिकः स कविः रामाय तौ मैथिलेयौ तदात्मजौ आख्याय सीतायाः सम्परिग्रहं वव्रे॥

७१। करुणा प्रयोजनमस्य कारुणिको दयालुः। 'प्रयोजनम्' इति ठञ्। 'स्याद्दयालुः कारुणिकः' इत्यमरः। स कविः रामाय तौ मैथिलेयौ तदात्मजौ रामसुतावाख्याय सीतायाः सम्परिग्रहं स्वीकारं वव्रे ययाचे॥

৭১। তখন পরম কারুণিক কবি বাল্মীকি "এই কুমারদ্বয় জানকীর গর্ভসম্ভূত,—আপনারই পুত্র" এইরূপ পরিচয় প্রদান করিয়া সীতাকে গ্রহণ করিবার জন্য অনুরোধ করিলেন।

तातः शुद्धा समक्षं नः स्नुषा ते जातवेदसि।
दौरात्म्याद्रक्षसस्तान्तु नात्रत्याः श्रद्दधुः प्रजाः॥ ७२

৭২ अ:। (हे) तात! ते स्नुषा न: समक्षं जातवेदसि शुद्धा (किन्तु) रक्षस: दौरात्म्यात् अत्रत्या: प्रजा: तां न श्रद्दधु: ॥

৭২। हे तात! ते स्नुषा सीता नोऽस्माकम् अक्ष्णो: समीपं समक्षम्। 'अव्ययीभावे शरत्प्रभृतिभ्य:' इति समासान्तष्टच्। जातवेदसि वह्नौ शुद्धा। नास्माकमविश्वास इत्यर्थ:। किन्तु रक्षसो रावणस्य दौरात्म्यादत्रत्या: प्रजास्तां न श्रद्दधु: न विशश्वसु: ॥

**ता: स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली ।**
**तत: पुत्त्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ॥ ৭৩**

৭৩ अ:। मैथिली स्वचारित्रम् उद्दिश्य ता: प्रत्याययतु। तत: पुत्त्रवतीम् एनां त्वदाज्ञया प्रतिपत्स्ये ॥

৭৩। मैथिली स्वचारित्रम् उद्दिश्य ता: प्रजा: प्रत्याययतु विश्वासयतु। विश्वासस्य बुद्धिरूपत्वात्। 'णौ गमिरबोधने' इति इणो गम्यादेशो नास्ति। ततोऽनन्तरं पुत्त्रवतीम् एनां सीतां त्वदाज्ञया प्रतिपत्स्ये स्वीकरिष्ये ॥

৭২—৭৩। রাম উত্তর করিলেন,—হে তাত! আপনার বধূ বৈদেহী আমাদের সমক্ষেই অগ্নিপরীক্ষায় বিশুদ্ধা হইয়াছেন, কিন্তু রাক্ষসরাজ রাবণের দুরাত্মতা-নিবন্ধন অত্রত্য প্রজাগণ তাঁহাকে পবিত্র বলিয়া বিশ্বাস করিতেছে না। অতএব এক্ষণে মৈথিলী স্বীয় চরিত্রবিষয়ে সেই প্রজাগণের বিশ্বাস উৎপাদন করুন, তারপর আপনার নিদেশে তনয়সহ তাঁহাকে গ্রহণ করিব।

**इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनि: ।**
**शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥ ৭৪**

৭৪ अ:। राज्ञा इति प्रतिश्रुते (सति) मुनि: आश्रमात् जानकीं शिष्यै: स्वसिद्धिं नियमै: इव आनाययामास ॥

৭৪। राज्ञा इति प्रतिश्रुते प्रतिज्ञाते सति मुनिराश्रमाज्जानकीं शिष्यै: प्रयोज्यै: स्वसिद्धिं स्वार्थसिद्धिं नियमैस्तपोभिरिव आनाययामास ॥

৭৪। রাজা রামচন্দ্র এইরূপ প্রতিশ্রুত হইলে মুনিবর বাল্মীকি নিয়মদ্বারা আত্মসিদ্ধির ন্যায় শিষ্যগণ দ্বারা জানকীকে আশ্রম হইতে আনয়ন করিলেন।

**अन्येद्युरथ काकुत्स्थ: सन्निपात्य पुरौकस: ।**
**कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥ ৭৫**

७५ अ: । अथ काकुत्स्थः रामः अन्येद्युः प्रस्तुतप्रतिपत्तये पुरौकसः सन्निपात्य कविम् आह्वाययामास ॥

७५ । अथ काकुत्स्थो रामः अन्येद्युः अन्यस्मिन्नहनि प्रस्तुतप्रतिपत्तये प्रकृतकार्य्यानुसन्धानाय पुरौकसः पौरान् सन्निपात्य मेलयित्वा कविं वाल्मीकिमाह्वाययामास आकारयामास ॥

৭৫। ককুৎস্থকুলতিলক রাম অপর একদিনে জানকীর পরীক্ষার জন্য পৌরগণকে সমবেত করিয়া মুনিবর আদিকবি বাল্মীকিকে আহ্বান করাইলেন।

स्वरसंस्कारवत्यासौ पुत्राभ्यामथ सीतया ।
ऋचेवोदर्चिषं सूर्य्यं रामं मुनिरुपस्थितः ॥ ७६

७६ अ: । अथ असौ मुनिः स्वरसंस्कारवत्या ऋचा उदर्चिषं सूर्य्यम् इव पुत्राभ्याम् ( उपलक्षितया ) सीतया रामम् उपस्थितः ॥

७६ । अथ स्वर उदात्तादिः संस्कारः शब्दशुद्धिः तद्वत्या ऋचा सावित्र्या उदर्चिषं सूर्य्यमिव, पुत्राभ्यामुपलक्षितया सीतया करणेन उदर्चिषं रामम् असौ मुनिरुपस्थित उपतस्थे ॥

৭৬। উদাত্তাদি স্বরসমন্বিত ঋক্‌দ্বারা যেরূপ উজ্জ্বরশ্মি রবির উপাসনা করিতে হয়, তদ্রূপ সেই মুনিবর বাল্মীকি লব, কুশ ও সীতাদ্বারা মনোরঞ্জনার্থ তেজস্বী রামের নিকট উপস্থিত হইলেন।

काषायपरिवीतेन स्वपदार्पितचक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ ७७

७७ अ: । काषायपरिवीतेन स्वपदार्पितचक्षुषा शान्तेन वपुषा एव सा शुद्धा इति अन्वमीयत ॥

७७ । कषायेण रक्तं काषायम् 'तेन रक्तं रागात्' इत्यण् । तेन परिवीतेन संवृतेन स्वपदार्पितचक्षुषा शान्तेन प्रसन्नेन वपुषैव सा सीता शुद्धा साध्वी इत्यन्वमीयत अनुमिता ॥

৭৭। কাষায়বসনাবৃতা সীতা নিজচরণে নয়নদ্বয় সমর্পণপূর্ব্বক তথায় উপস্থিত হইলে তাঁহার প্রশান্ত শরীর দর্শনে লোকসকল তাঁহাকে দেখিয়াই পবিত্র বলিয়া অনুমান করিল।

जनास्तदालोकपथात् प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ॥ ७८

७८ अ: । तदालोकपथात् प्रतिसंहृतचक्षुषः ते सर्वे जनाः, फलिताः शालयः इव, अवाङ्मुखाः तस्थुः ॥

७८ । तस्याः सीतायाः कर्म्मणि आलोकपथात् दर्शनमार्गात् प्रति-

সংহৃতচক্ষুষো নিবর্তিতদৃষ্টয়: তে সর্বে জনা: ফলিতা: শালয় ইব অবাঙ্মুখা: অবনতমুখা: তস্থু: ॥

৭৮। তখন প্রজাগণ সীতা হইতে দৃষ্টি প্রত্যাহৃত করিয়া ফলিত শালিধান্যের ন্যায় অবনতমস্তকে অবস্থান করিতে লাগিল।

**তাং দৃষ্টিবিষয়ে ভর্তুর্মুনিরাস্থিতবিষ্টর:।**
**কুরু নি:সংশয়ং বৎসে স্ববৃত্তে লোকমিত্যশাৎ ॥ ৭৯**

৭৯ অ:। আস্থিতবিষ্টর: মুনি: (হে) বৎসে! ভর্তু: দৃষ্টিবিষয়ে স্ববৃত্তে লোকং নি:সংশয়ং কুরু ইতি তাম্ অশাৎ ॥

৭৯। আস্থিতবিষ্টরোঽধিষ্ঠিতাসনো মুনি: বৎসে! ভর্তুর্দৃষ্টিবিষয়ে সমক্ষং স্ববৃত্তে স্বচরিতে বিষয়ে লোকং নি:সংশয়ং কুরু ইতি তাং সীতামশাৎ শাস্তি স্ম।

৭৯। পরে মুনিবর বাল্মীকি আসনে উপবেশন করিয়া সীতাকে আদেশ করিলেন— বৎসে! তুমি স্বামিসমক্ষে স্বীয় চরিত্রবিষয়ে লোকসকলের সংশয় দূর কর।

**অথ বাল্মীকিশিষ্যেণ পুণ্যমাবর্জিতং পয়:।**
**আচম্যোদীরয়ামাস সীতা সত্যাং সরস্বতীম্ ॥ ৮০**

৮০ অ:। অথ বাল্মীকিশিষ্যেণ আবর্জিতং পুণ্যং পয়: আচম্য সীতা সত্যাং সরস্বতীম্ উদীরয়ামাস ॥

৮০। অথ বাল্মীকিশিষ্যেণ আবর্জিতং দত্তং পুণ্যং পয় আচম্য সীতা সত্যাং সরস্বতীং বাচমুদীরয়ামাস উচ্চারয়ামাস ॥

৮০। অনন্তর সীতা বাল্মীকিশিষ্যসমাহৃত পবিত্র জলে আচমন করিয়া এইরূপ সত্য বাক্য উচ্চারণ করিলেন।

**বাঙ্মন:কর্মভি: পত্যৌ ব্যভিচারো যথা ন মে।**
**তথা বিশ্বম্ভরে দেবি মামন্তর্ধাতুমর্হসি ॥ ৮১**

৮১। বাঙ্মন:কর্মভি: পত্যৌ মে ব্যভিচার: ন যথা, তথা (হে) বিশ্বম্ভরে! দেবি! মাম্ অন্তর্ধাতুম্ অর্হসি ॥

৮১। বাঙ্মন:কর্মভি: পত্যৌ বিষয়ে মে ব্যভিচার: স্খালিত্যং ন যথা, নাস্তি যদি, তথা তর্হি বিশ্বং বিভর্ত্তীতি বিশ্বম্ভরা ভূমি: 'সংজ্ঞায়াং ভৃত'— ইত্যাদিনা খচ্প্রত্যয়:. 'অরুর্দ্বিষৎ'—ইত্যাদিনা মুমাগম:, হে বিশ্বম্ভরে! দেবি! মাম্ অন্তর্ধাতুং গর্ভে বাসয়িতুমর্হসি ॥

৮১। হে বিশ্ববিধাত্রি! আমি কায়, মন কিংবা কার্য্যদ্বারাও পতির প্রতি যদি

কোন ব্যভিচার না করিয়া থাকি, তবে হে দেবি! আমাকে তোমার গর্ভে স্থান দান কর।

एवमुक्ते तया साध्व्या रन्ध्रात् सद्योभवाद्भुवः ।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ॥ ८२

८२ अ:। साध्व्या तया एवम् उक्ते (सति) सद्योभवात् भुव: रन्ध्रात् शातह्रदं ज्योति: इव, प्रभामण्डलम् उद्ययौ ॥ ८२

८२। साध्व्या पतिव्रतया तया सीतया एवमुक्ते सति सद्योभवाद्भुवो रन्ध्रात् शातह्रदं वैद्युतं ज्योतिरिव प्रभामण्डलमुद्ययौ ॥

৮২। সাধ্বী সীতা এরূপ বলিলে সদ্যোজাত ভূবিবর হইতে বিদ্যুদগ্নির ন্যায় এক প্রভামণ্ডল উদ্গত হইল।

तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी ।
समुद्ररशना साक्षात् प्रादुरासीद्वसुन्धरा ॥ ८३

८३ अ:। तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी समुद्ररशना साक्षात् वसुन्धरा प्रादुरासीत् ॥

८३। तत्र प्रभामण्डले नागफणोत्क्षिप्ते सिंहासने निषेदुषी आसीना समुद्ररशना समुद्रमेखला साक्षात्, वसूनि धारयतीति वसुन्धरा भूमि:, 'संज्ञायां भृतॄवृजिधारिसहितपिदम:' इति खच्। प्रादुरासीत् ॥

৮৩। সেই প্রভামণ্ডল মধ্য হইতে ভুজগেন্দ্রফণোৎক্ষিপ্ত সিংহাসনে সমাসীনা সাগর-মেখলা সাক্ষাৎ ধরিত্রীদেবী প্রাদুর্ভূতা হইলেন।

सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम् ।
मा मेति व्याहरत्येव तस्मिन् पातालमभ्यगात् ॥ ८४

८४ अ:। सा भर्तृप्रणिहितेक्षणां सीताम् अङ्कं आरोप्य तस्मिन् (भर्तरि) मा मेति व्याहरति (सति) एव पातालम् अभ्यगात् ॥

८४। सा वसुन्धरा भर्तरि प्रणिहितेक्षणां दत्तदृष्टिं सीतामङ्कमारोप्य तस्मिन् भर्तरि रामे मा मा इति मा हरेति व्याहरति वदत्येव, व्याहरन्तमनादृत्येत्यर्थ:, 'षष्ठी चानादरे' इति सप्तमी, पातालमभ्यगात् ॥

৮৪। তিনি স্বামিনিক্ষিপ্তনেত্রা তনয়া সীতাকে স্বীয় ক্রোড়ে স্থাপনপূর্ব্বক রাম বারবার নিষেধ করিলেও রসাতলে প্রবেশ করিলেন।

धरायां तस्य संरम्भं सीताप्रत्यर्पणैषिण: ।
गुरुर्विधिबलापेक्षी शमयामास धन्विन: ॥ ८५

८५ अ:। विधिबलापेक्षी गुरु: सीताप्रत्यर्पणैषिण: धन्विन: तस्य धरायां संरम्भं शमयामास ॥

अन्योन्यं केयूरविघट्टिनीभिः सक्वणाङ्गदसङ्घर्षिणीभिः सनूपुरक्षोभाणि सनूपुरस्खलनानि पदानि यासां ताभिरङ्गनाभिर्हेतुभिरुद्विग्नहंसा भीतहंसा आसीत् ॥

५६। তীর হইতে সোপানপথে অবতরণকালে কুলকামিনীগণের পরস্পর অঙ্গদসংঘর্ষণশব্দে ও চরণস্থিত নূপুরধ্বনিতে সরযূবিহারী হংসশ্রেণী উদ্বিগ্ন হইয়া উঠিল।

परस्पराभ्युक्षणतत्पराणां
तासां नृपो मज्जनरागदर्शी ।
नौसंश्रयः पार्श्वगतां किराती-
मुपात्तबालव्यजनां बभाषे ॥ ५७

५७ अः। नौसंश्रयः परस्पराभ्युक्षणतत्पराणां तासां मज्जनरागदर्शी नृपः पार्श्वगताम् उपात्तबालव्यजनां किरातीं बभाषे ॥

५७। नौसंश्रयः परस्परं अभ्युक्षणे सेचने तत्पराणामासक्तानां तासां स्त्रीणां मज्जने रागोऽभिलाषस्तद्दर्शी नृपः पार्श्वगताम् उपात्तबालव्यजनां गृहीतचामरां किरातीं चामरग्राहिणीं बभाषे। 'किरातस्तु द्रुमान्तरे।' 'स्त्रियां चामरवाहिन्यां मत्स्यजात्यन्तरे द्वयोः।' इति केशवः ॥

पश्यावरोधैः शतशो मदीयैर्विगाह्यमानो गलिताङ्गरागैः ।
सन्ध्योदयः साभ्र इवैष वर्णं पुष्यत्यनेकं सरयूप्रवाहः ॥५८

५८ अः। गलिताङ्गरागैः मदीयैः शतशः अवरोधैः विगाह्यमानः एषः सरयूप्रवाहः साभ्रः सन्ध्योदयः इव अनेकं वर्णं पुष्यति, पश्य ॥

५८। गलिताङ्गरागैर्मदीयैः शतशोऽवरोधैर्विगाह्यमानो विलोड्यमान एष सरयूप्रवाहः साभ्रः समेघः सन्ध्योदयः सन्ध्याविर्भाव इव, अनेकं नानाविधं वर्णं रक्तपीतादिकं पुष्यति पश्य। वाक्यार्थः कर्म ॥

৫৭—৫৮। মহিলাকুল সলিলে অবতীর্ণ হইয়া পরস্পরের শরীরে জলসেকে একান্ত তৎপর হইলেন। তখন নৌকারূঢ় নরপতি কুশ জলবিহারে তাঁহাদিগের অনুরাগ সন্দর্শন করিয়া চামরব্যজনধারিণী পার্শ্ববর্তিনী এক কিরাতরমণীকে কহিলেন,—ভদ্রে! ঐ দেখ, সরযূপ্রবাহ আমার শত শত অন্তঃপুর-মহিলাগণের অবগাহধৌত অঙ্গরাগদ্বারা মেঘমালাসমলঙ্কৃত সন্ধ্যাকালের ন্যায় বিবিধ বর্ণ ধারণ করিয়াছে।

विलुप्तमन्तःपुरसुन्दरीणां यदञ्जनं नौलुलिताभिरद्भिः ।
तद्बध्नतीभिर्मदरागशोभां विलोचनेषु प्रतिमुक्तमासाम् ॥ ५९

५९ अ: । नीलुलिताभि: अद्भि: अन्त:पुरसुन्दरीणां यत् अञ्जनं विलुप्तम्, तत् विलोचनेषु, मदरागशोभां बध्नतीभि: ( अद्भि: ) आसां प्रतिमुक्तम् ॥

५९ । नौलुलिताभि: नौक्षुभिताभि: अद्भि: अन्त:पुरसुन्दरीणां यत् अञ्जनं कज्जलं विलुप्तं हृतं तत् अञ्जनं विलोचनेषु नयनेषु मदेन या रागशोभा तां बध्नतीभिर्घटयन्तीभि: अद्भि: आसां प्रतिमुक्तं प्रत्यर्पितम् । प्रतिनिधिदानमपि तत्कार्य्यकारित्वात् प्रत्यर्पणमेवेति भाव: ॥

৫৯ । নৌকাদ্বারা আলোড়িত জলরাশি অবগাহনকালে পুরনারীগণের যে কজ্জলরাগ বিলুপ্ত করিয়াছিল, তৎপরিবর্ত্তে তাঁহাদিগের নয়নে মদরাগজনিত শোভা সম্পাদন করিতেছে।

एता गुरुश्रोणिपयोधरत्वादात्मानमुद्वोढुमशक्नुवत्य: ।
गाढाङ्गदैर्बाहुभिरप्सु बाला: क्लेशोत्तरं रागवशात् प्लवन्ते ॥६०

६० अ: । गुरुश्रोणिपयोधरत्वात् आत्मानम् उद्वोढुम् अशक्नुवत्य: एता: बाला: गाढाङ्गदै: बाहुभि: अप्सु क्लेशोत्तरं ( यथा तथा ) रागवशात् प्लवन्ते ॥

६० । गुरु दुर्वहं श्रोणिपयोधरं यस्य आत्मन इति विग्रह: । गुरुश्रोणिपयोधरत्वात् आत्मानं शरीरम् उद्वोढुम् अशक्नुवत्य एता बाला गाढाङ्गदै: श्लिष्टाङ्गदैर्बाहुभि: क्लेशोत्तरं दु:खप्रायं यथा तथा रागवशात् क्रीड़ाभिनिवेशपारतन्त्र्यात् अप्सु प्लवन्ते तरन्ति ॥

৬০ । ঐ সকল রমণী নিতম্ব ও পয়োধরের গুরুত্বহেতু স্বীয় শরীরবহনে অসমর্থ হইলেও জলবিহারে একান্ত অনুরাগহেতু কেয়ূরভূষিত বাহুপাশ দ্বারা অতিকষ্টে সন্তরণ করিতেছে।

अमी शिरीषप्रसवावतंसा:
प्रभ्रंशिनो वारिविहारिणीनाम् ।
पारिप्लवा: स्रोतसि निम्नगाया:
शैवाललोलान् छलयन्ति मीनान् ॥ ६१

६१ अ: । वारिविहारिणीनाम् प्रभ्रंशिन: निम्नगाया: स्रोतसि पारिप्लवा: अमी शिरीषप्रसवावतंसा: शैवाललोलान् मीनान् छलयन्ति ॥

६१ । वारिविहारिणीनाम् आसां प्रभ्रंशिनो भ्रष्टा निम्नगाया: स्रोतसि पारिप्लवाश्चञ्चला: । 'चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे' इत्यमर: । अमी शिरीषप्रसवा एव अवतंसा: कर्णभूषा: शैवाललोलान् जलनीलीप्रियान् ।

'जलनीली तु शैवालम्' इत्यमरः। मीनान् कलयन्ति प्रादुर्भावयन्ति। शैवाल-प्रियत्वात् शिरीषेषु शैवालभ्रमात् प्रादुर्भावयन्तीत्यर्थः॥

৬১। বারিবিহারিণী রমণীগণের কর্ণচ্যুত শিরীষকুসুমের কর্ণভূষণ সমূহ নদীজলপ্রবাহে পতিত হওয়ায় শৈবাললোলুপ মীনগণ উহা ভক্ষণ করিতে আসিয়া প্রতারিত হইতেছে।

आसां जलास्फालनतत्पराणां
मुक्ताफलस्पर्द्धिषु शीकरेषु।
पयोधरोत्सर्पिषु शीर्य्यमाणः
संलक्ष्यते न च्छिदुरोऽपि हारः॥ ६२

६२ अः। जलास्फालनतत्पराणाम् आसां मुक्ताफलस्पर्द्धिषु पयोधरोत्सर्पिषु शीकरेषु शीर्य्यमाणः हारः (अतएव) छिदुरः अपि न संलक्ष्यते॥

६२। जलस्य आस्फालने तत्पराणाम् आसक्तानाम् आसां स्त्रीणां मुक्ता-फलस्पर्द्धिषु मौक्तिकानुकारिषु पयोधरेषु स्तनेषु उत्सर्पन्ति उत्पतन्ति ये तेषु शीकरेषु शीकराणां मध्ये शीर्य्यमाणो गलन् हारः अतएव च्छिदुरः स्वयं छिन्नोऽपि न संलक्ष्यते। 'विदिभिदिच्छिदेः कुरच्' इति कुरच्प्रत्ययः। शीकर-संसर्गाच्छिन्न इति न ज्ञायत इति भावः॥

৬২। সলিলাস্ফালনে একান্ত অনুরক্ত কামিনীগণের পয়োধরসংলগ্ন মুক্তাফলবিনিন্দী জলকণার মধ্যে মুক্তাহার ছিন্ন ও স্খলিত হইলেও উহা লক্ষিত হইতেছে না।

आवर्त्तशोभा नतनाभिकान्ते-
र्भङ्गो भ्रुवां द्वन्द्वचराः स्तनानाम्।
जातानि रूपावयवोपमाना-
न्यदूरवर्त्तीनि विलासिनीनाम्॥ ६३

६३ अः। विलासिनीनां रूपावयवोपमानानि अदूरवर्त्तीनि जातानि। नतनाभिकान्तिः आवर्त्तशोभा भ्रुवां भङ्गः स्तनानां द्वन्द्वचराः॥

६३। विलासिनीनां विलसनशीलानां स्त्रीणाम्। 'वौ कषलसकत्थ-स्रम्भः' इति घिनुन्प्रत्ययः। रूपावयवानामुपमेयानां यानि उपमानानि लोकप्रसिद्धानि तानि अदूरवर्त्तीनि अन्तिकगतानि जातानि। कस्य किमुप-मानमित्यत्राह?—नतनाभिकान्तेर्निम्ननाभिशोभाया आवर्त्तशोभा। 'स्यादा-

वर्त्तोऽम्भसां भ्रमः' इत्यमरः । भ्रुवां भङ्गस्तरङ्गः स्तनानां द्वन्द्वचराश्चक्रवाकाः, उपमानमिति सर्वत्र सम्बध्यते ॥

৬৩। মত্তনাভির সহিত আবর্ত্তশোভার, ভ্রূভঙ্গের সহিত তরঙ্গভঙ্গীর এবং পয়োধর শোভার সহিত চক্রবাকমিথুনের—শরীরের প্রসিদ্ধ উপমান বস্তু সকল এই বিলাসিনী রমণীগণের সন্নিহিতই রহিয়াছে।

तीरस्थलीबर्हिभिरुत्कलापैः प्रस्निग्धकेकैरभिनन्द्यमानम् ।
श्रोत्रेषु सम्मूर्च्छति रक्तमासां गीतानुगं वारिमृदङ्गवाद्यम् ॥६४

६४ अः । उत्कलापैः प्रस्निग्धकेकैः तीरस्थलीबर्हिभिः अभिनन्द्यमानं रक्तं गीतानुगम् आसां वारिमृदङ्गवाद्यं श्रोत्रेषु सम्मूर्च्छति ॥

६४ । उत्कलापैरुन्नबर्हैः प्रस्निग्धा मधुराः केका येषां तैस्तीरस्थलीषु स्थितैर्बर्हिभिर्मयूरैरभिनन्द्यमानं रक्तं श्राव्यं गीतानुगं गीतानुसारि आसां स्त्रीणां सम्बन्धि वारि एव मृदङ्गस्तस्य वाद्यं वाद्यध्वनिः श्रोत्रेषु सम्मूर्च्छति व्याप्नोति ॥

৬৪। তীরবাসী উন্নতকলাপ প্রস্নিগ্ধকেকারব ময়ূরগণ কর্ত্তৃক অভিনন্দ্যমান সুমধুর সঙ্গীতানুগত বিলাসিনীগণকৃত এই সকল বারিরূপ মৃদঙ্গধ্বনি কর্ণকুহর পরিপূরিত করিতেছে।

सन्दष्टवस्त्रेष्वबलानितम्बेष्विन्दुप्रकाशान्तरितोडुतुल्याः ।
अमी जलापूरितसूत्रमार्गा मौनं भजन्ते रशनाकलापाः ॥६५

६५ अः । सन्दष्टवस्त्रेषु अबलानितम्बेषु इन्दुप्रकाशान्तरितोडुतुल्याः अमी जलापूरितसूत्रमार्गाः रशनाकलापाः मौनं भजन्ते ॥

६५ । सन्दष्टवस्त्रेषु जलसेकात् संश्लिष्टांशुकेषु अबलानां नितम्बेषु अधिकरणेषु इन्दुप्रकाशेन ज्योत्स्नान्तरितानि आवृतानि यानि उडूनि नक्षत्राणि तत्तुल्याः मुक्तामयत्वादिति भावः । अमी जलापूरितसूत्रमार्गाः निश्चला इत्यर्थः । रशना एव कलापा भूषाः । 'कलापो भूषणे बर्हे' इत्यमरः । मौनं निःशब्दतामित्यर्थः, भजन्ते ॥

৬৫। এই কামিনীগণের মুক্তাময়ী কাঞ্চী বসনসংলিপ্ত নিতম্বদেশে জ্যোৎস্নান্তরিত তারকারাজীর ন্যায় সুশোভিত হইতেছে এবং সলিলধারা উহার সূত্রপ্রবেশপথ রুদ্ধ হওয়ায় উহা আর ধ্বনিত হইতেছে না।

एताः करोत्पीडितवारिधारा
दर्पात् सखीभिर्वदनेषु सिक्ताः ।

वक्रेतराग्रैरलकैस्तरुण्य-
श्चूर्णारुणान् वारिलवान् वमन्ति ॥ ६६

६६ अ:। दर्पात् करोत्पीड़ितवारिधाराः सखीभिः वदनेषु सिक्ताः एताः तरुण्यः वक्रेतराग्रैः अलकैः चूर्णारुणान् वारिलवान् वमन्ति ॥

६६। दर्पात् सखीजनं प्रति करैरुत्पीड़िता उत्सारिता वारिधारा याभिस्ताः स्वयमपि पुनस्तथैव सखीभिर्वदनेषु सिक्ता एतास्तरुण्यो वक्रेतराग्रैर्जलसेकात् ऋज्वग्रैरलकैः करणैश्चूर्णैः कुङ्कुमादिभिः अरुणान् वारिलवान् उदकविन्दून् वमन्ति वर्षन्ति ॥

৬৬। ঐ দেখ, এক কামিনী সখীর প্রতি গর্ব্বপ্রকাশপূর্ব্বক করপল্লবদ্বারা তাহার শরীরে সলিল-নিক্ষেপ করাতে ঐ সখীও আবার উহার মুখে জলসেক করিতেছে। এইরূপে কামিনীগণ অবক্র অলকাগ্রে সংলগ্ন কুঙ্কুমাদিচূর্ণ অরুণবর্ণ জলকণা সকল বর্ষণ করিতেছে।

उद्बन्धकेशश्च्युतपत्रलेखो
विश्लेषिमुक्ताफलपत्रवेष्टः ।
मनोज्ञ एव प्रमदामुखाना-
मम्भोविहाराकुलितोऽपि वेशः ॥ ६७

६७ अ:। उद्बन्धकेशः च्युतपत्रलेखः विश्लेषिमुक्ताफलपत्रवेष्टः अम्भोविहाराकुलितः अपि प्रमदामुखानां वेशः मनोज्ञः एव ॥

६७। उद्बन्धा उद्भ्रष्टाः केशा यस्मिन् सः, च्युतपत्रलेखः च्युतपत्ररचनः, विश्लेषिणो विस्रंसिनो मुक्ताफलपत्रवेष्टाः मुक्तामयताड़ङ्का यस्मिन् सः, एवमम्भो विहाराकुलितोऽपि प्रमदामुखानां वेशो नेपथ्यं मनोज्ञ एव । रम्याणां विकृतिरपि श्रियं तनोति इति भावः ॥

৬৭। প্রমদাগণের কেশবন্ধন শিথিল, মুখকমলের পত্ররচনা বিলুপ্ত এবং মুক্তাফলের বেষ্টন সকল পরিভ্রষ্ট হইয়াছে; এইরূপে জলবিহারে উহাদিগের কেশরচনা ছিন্ন ভিন্ন হইলেও উহাদিগের শোভার ন্যূনতা হয় নাই।

स नौविमानादवतीर्य्य रेमे विलोलहारः सह ताभिरप्सु ।
स्कन्धावलग्नोद्धृतपद्मिनीकः करेणुभिर्वन्य इव द्विपेन्द्रः ॥ ६८

६८ अ:। सः नौविमानात् अवतीर्य्य विलोलहारः (सन्) ताभिः सह, करेणुभिः (सह) स्कन्धावलग्नोद्धृतपद्मिनीकः वन्यः द्विपेन्द्रः इव अप्सु रेमे ॥

६८। स कुशो नौर्विमानमिव नौविमानम्। उपमितसमासः।

तस्मादवतीर्य्य विलोलहार: सन् ताभि: स्त्रीभि: सह करेणुभि: सह स्कन्धाव-लग्ना उद्धृतपद्मिनी उत्पाटितनलिनी यस्य स तथोक्त: सन् । 'सद्धृतस्य' इति कप्रत्यय: । वन्यो द्विपेन्द्र इव अप्सु रेमे ॥

৬৮। মহীপতি কুশ কিরাতরমণীকে এইরূপ কহিয়া বয়ং নৌকা হইতে অবতরণপূর্ব্বক বন্য মাতঙ্গ যেরূপ উন্মূলিত নলিনীকে স্কন্ধদেশে ধারণ করিয়া করিণীর সহিত বিহার করে, সেইরূপ বক্ষঃস্থলে হারযষ্টি আন্দোলিত করতঃ কামিনীগণের সহিত বিহার করিতে আরম্ভ করিলেন।

ततो नृपेणानुगता: स्त्रियस्ता
भ्राजिष्णुना सातिशयं विरेजु: ।
प्रागेव मुक्ता नयनाभिरामा:
प्राप्येन्द्रनीलं किमुतोन्मयूखम् ॥ ६९

६९ अ: । तत: भ्राजिष्णुना नृपेण अनुगता: ता: स्त्रिय: सातिशयं विरेजु: प्रागेव मुक्ता: नयना-भिरामा: उन्मयूखम् प्राप्य किमुत ?

६९। ततो भ्राजिष्णुना प्रकाशनशीलेन । 'भुवश्च' इति चकाराद्दि-ष्णुच् । नृपेण अनुगता: सङ्गतास्ता: स्त्रिय: सातिशयं यथा तथा विरेजु: । प्रागेव इन्द्रनीलयोगात् पूर्व्वमेव केवला अपीत्यर्थ: । मुक्ता मणयो नयना-भिरामा: उन्मयूखमिन्द्रनीलं प्राप्य किमुत, अभिरामा इति किमु वक्तव्य-मित्यर्थ: ॥

৬৯। প্রমদাগণ দীপ্যমান নরপতি কুশের সহিত মিলিত হইয়া সাতিশয় শোভা পাইতে লাগিল; মুক্তা নিজেই নয়নমনোরম, তাহাতে আবার উজ্জ্বল ইন্দ্রনীলমণির সহিত সংযুক্ত হইলে যে অপূর্ব্ব শোভা ধারণ করিবে, তাহাতে আর বৈচিত্র্য কি ?

वर्णोदकै: काञ्चनशृङ्गमुक्तैस्तमायताक्ष्य: प्रणयादसिञ्चन् ।
तथागत: सोऽतितरां बभासे सधातुनिष्यन्द इवाद्रिराज: ৭০

৭০ অ: । आयताक्ष्य: तं काञ्चनशृङ्गमुक्तै: वर्णोदकै: प्रणयात् असिञ्चन् तथागत: स: सधातु-निष्यन्द: अद्रिराज: इव अतितरां बभासे ॥

৭০। तं कुशमायताक्ष्य: काञ्चनस्य शृङ्गैर्मुक्तानि तैर्वर्णोदकै: कुङ्कुमा-दिवर्णद्रव्यसहितोदकै: प्रणयात् स्नेहात् असिञ्चन् । तथागतस्तथा स्थित: वर्णोदकसिक्त इत्यर्थ: । स कुश: सधातुनिष्यन्दो गैरिकद्रवयुक्तोऽद्रिराज इव अतितरां बभासे अत्यर्थं चकासे ॥

৭০। অনন্তর বিশাললোচনা অঙ্গনাগণ প্রণয়ভরে সুবর্ণশৃঙ্গনিঃসৃত কুঙ্কুমাদি বারিধারায় কুশের শরীর অভিষিক্ত করায় তিনি গৈরিকাদি ধাতুদ্রবসংযুক্ত গিরিরাজের ন্যায় অতিমাত্র শোভা ধারণ করিলেন।

तेनावरोधप्रमदासखेन विगाहमानेन सरिद्वरां ताम्।
आकाशगङ्गारतिरप्सरोभिर्वृतो मरुत्वाननुयातलीलः॥ ७१

৭১ অঃ। অবরোধপ্রমদাসখেন তাং সরিদ্বরাং বিগাহমানেন তেন আকাশগঙ্গারতিঃ অপ্সরোভিঃ বৃতঃ মরুত্বান্ অনুযাতলীলঃ (অভূৎ)॥

৭১। অবরোধপ্রমদাসখেন অন্তঃপুরসুন্দরীসহচরেণ তাং সরিদ্বরাং সরয়ূং বিগাহমানেন তেন কুশেন আকাশগঙ্গায়াং রতিঃ ক্রীড়া যস্য সোঽপ্সরোভির্বৃত আবৃতো মরুত্বান্ ইন্দ্রঃ অনুযাতলীলোঽনুকৃতশ্রীঃ, অভূদিতি শেষঃ, ইন্দ্রমনুকৃতবানিত্যর্থঃ॥

৭১। তৎকালে তিনি অন্তঃপুররমণীগণের সহিত সরিদ্বরা সরয়ূতে অবগাহন করাতে মন্দাকিনীর স্রোতে অপ্সরাগণপরিবৃত দেবরাজের ন্যায় শোভা ধারণ করিলেন।

यत् कुम्भयोनेरधिगम्य रामः कुशाय राज्येन समं दिदेश।
तदस्य जैत्राभरणं विहर्त्तुरज्ञातपातं सलिले ममज्ज॥ ७२

৭২ অঃ। যৎ রামঃ কুম্ভযোনেঃ (অগস্ত্যাৎ) অধিগম্য কুশায় রাজ্যেন সমং দিদেশ, সলিলে বিহর্ত্তুঃ অস্য তৎ জৈত্রাভরণং অজ্ঞাতপাতং (সৎ) মমজ্জ॥

৭২। যদাভরণং রামঃ কুম্ভযোনেরগস্ত্যাদধিগম্য প্রাপ্য কুশায় রাজ্যেন সমং দিদেশ দদৌ রাজ্যসমমূল্যমিত্যর্থঃ। সলিলে বিহর্ত্তুঃ ক্রীড়িতুরস্য কুশস্য তৎ জৈত্রাভরণং জয়শীলম্ আভরণম্ অজ্ঞাতপাতং সৎ মমজ্জ বুব্রোড়॥

৭২। রামচন্দ্র মহর্ষি অগস্ত্যের নিকট যে দিব্য আভরণ প্রাপ্ত হইয়াছিলেন, তাহা রাজ্যের সহিত কুশকে অর্পণ করেন; জলবিহারকালে সেই জয়শীল অলঙ্কার তাঁহার অজ্ঞাতসারে জলমধ্যে স্খলিত হইয়াছিল।

स्नात्वा यथाकाममसौ सदारस्तीरोपकार्य्यां गतमात्र एव।
दिव्येन शून्यं वलयेन बाहुमपोढनेपथ्यविधिर्ददर्श॥ ७३

৭৩ অঃ। অসৌ সদারঃ (সন্) যথাকামং স্নাত্বা তীরোপকার্য্যাং গতমাত্র এব অপোঢনেপথ্যবিধিঃ দিব্যেন বলয়েন শূন্যং বাহুং দদর্শ॥

৭৩। অসৌ কুশঃ সদারঃ সন্ যথাকামং যথেচ্ছং স্নাত্বা বিগাহ্য

तीरे या उपकार्य्या पूर्व्वोक्ता तां गतमात्रो गत एव अपोढ़नेपथ्यविधिरकृतप्रसाधन एव दिव्येन वलयेन शून्यं बाहुं ददर्श ॥

৭৩। মহীপতি কুশ অভিলাষাসূরূপ জলক্রীড়া সমাপনপূর্ব্বক পুরনারীগণসহ পটমণ্ডপে প্রবেশ করিলেন; তথায় প্রবেশ করিবামাত্র বস্ত্রাদি পরিধান করিবার পূর্ব্বেই তাঁহার বলয়শূন্য বাহু নিরীক্ষণ করিলেন।

जयश्रियः संवननं यतस्त-
दामुक्तपूर्वं गुरुणा च यस्मात् ।
सेहेऽस्य न भ्रंशमतो न लोभात्
स तुल्यपुष्पाभरणो हि धीरः ॥ ৭৪

৭৪ अ:। यतः तत् जयश्रियः संवननं, यस्मात् च गुरुणा आमुक्तपूर्वम्, अतः अस्य भ्रंशं सेहे लोभात् न, हि धीरः सः तुल्यपुष्पाभरणः ॥

৭৪। यतः कारणात् तदाभरणं जयश्रियः संवननं वशीकरणम्। 'वशक्रिया संवननम्' इत्यमरः। यस्माच्च गुरुणा पित्रा आमुक्तपूर्वं पूर्वम् आमुक्तं, धृतमित्यर्थः। सुप्सुपेति समासः। अतो हेतोरस्य आभरणस्य भ्रंशं न सेहे लोभात्। कुतः? हि यस्मात् धीरो विद्वान् स कुशस्तुल्यानि पुष्पाणि आभरणानि च यस्य सः, पुष्पेषु इव धृतेषु आभरणेषु निर्माल्यबुद्धिं करोतीत्यर्थः ॥

৭৪। লোভহীন ধীর সমৃদ্ধিসম্পন্ন কুশের কুসুমাভরণ ও রত্নাভরণ তুল্যই ছিল; কেবল সেই অলঙ্কার-প্রভাবে জয়লক্ষ্মী বশীভূত হয় এবং তাঁহার পিতা পূর্ব্বে তাহা পরিধান করিতেন; এই সকল কারণে তিনি ঐ অলঙ্কার বিনাশ সহ্য করিতে পারিলেন না।

ततः समाज्ञापयदाशु सर्वानानायिनस्तद्विचये नदीष्णान् ।
वन्ध्यश्रमास्ते सरयूं विगाह्य तमूचुरम्लानमुखप्रसादाः ॥ ৭৫

৭৫ अ:। ततः नदीष्णान् सर्वान् आनायिनः तद्विचये आशु समाज्ञापयत्, ते सरयूं विगाह्य वन्ध्यश्रमाः अम्लानमुखप्रसादाः (सन्तः) तम् ऊचुः ॥

৭৫। ततः नद्यां स्नान्ति कौशलेनेति नदीष्णाः तान्। 'सुपि' इति योगविभागात् कप्रत्ययः, 'निनदीभ्यां स्नातेः कौशले' इति षत्वम्। सर्वान् आनायिनो जालिकान् तस्य आभरणस्य विचयेऽन्वेषणे निमित्ते आशु समाज्ञापयत् आदिदेश। ते आनायिनः सरयूं विगाह्य विलोड्य

बन्ध्यश्रमा विफलप्रयासाः तथापि तद्गतिं ज्ञात्वा अम्लानमुखप्रसादाः सव्रीड-मुखाः सन्तः तं कुशमूचुः ॥

कृतः प्रयत्नो न च देव लब्धं
मग्नं पयस्याभरणोत्तमं ते ।
नागेन लौल्यात् कुमुदेन नून-
मुपात्तमन्तर्ह्रदवासिना तत् ॥ ৭৬

৭৬ अ: । (हे) देव ! प्रयत्नः कृतः, पयसि मग्नं ते आभरणोत्तमं न च लब्धं, (किन्तु) तत् अन्तर्ह्रदवासिना कुमुदेन नागेन लौल्यात् उपात्तं नूनम् (वितर्के) ॥

৭৬ । हे देव । प्रयत्नः कृतः, पयसि मग्नं ते आभरणोत्तमं न च लब्धम् । किन्तु तत् आभरणं अन्तर्ह्रदवासिना कुमुदेन कुमुदाख्येन नागेन पन्नगेन लौल्यात् लोभात् उपात्तं गृहीतम् । नूनमिति वितर्के ॥

৭৫—৭৬। অনন্তর মহীপতি কুশ অবিলম্বে নদীজলে মজ্জননিপুণ জালজীবী ধীবরগণকে অলঙ্কার অনুসন্ধানার্থ আদেশ করিলেন ; তাহারা সরযূজলে মজ্জনপূর্ব্বক বিফলপ্রযত্ন হইয়া দুঃখিতচিত্তে রাজাকে কহিল,—অনেক চেষ্টা করিলাম কোনক্রমেই আপনার সলিলভ্রষ্ট উৎকৃষ্ট অলঙ্কার প্রাপ্ত হইলাম না। হে দেব ! আমাদের অনুমান হয়—সরযূসলিলশায়ী কুমুদনাগ লোভপরবশ হইয়া এই অলঙ্কাররত্ন অপহরণ করিয়াছে।

ततः स कृत्वा धनुराततज्यं धनुर्द्धरः कोपविलोहिताक्षः ।
गारुत्मतं तीरगतस्तरस्वी भुजङ्गनाशाय समाददेऽस्त्रम् ॥ ৭৭

৭৭ अ: । ततः धनुर्धरः कोपविलोहिताक्षः तरस्वी सः तीरगतः (सन्) धनुः आततज्यम् कृत्वा भुजङ्गनाशाय गारुत्मतम् अस्त्रं समाददे ॥

৭৭। ततो धनुर्धरः कोपविलोहिताक्षः तरस्वी बलवान् स कुशः तीरगतः सन् धनुराततज्यम् अधिज्यं कृत्वा भुजङ्गस्य कुमुदस्य नाशाय गारुत्मतं गरुत्मद्देवताकम् अस्त्रं समाददे ॥

৭৭। অনন্তর মহাবলপরাক্রান্ত ধনুর্দ্ধারী ক্রোধলোহিতলোচন নরপতি কুশ শরাসনে জ্যা আরোপণ করিয়া সরযূতীরে উপনীত হইলেন এবং কুমুদনাগের বিনাশবাসনায় গরুড়াস্ত্র গ্রহণ করিলেন।

तस्मिन् ह्रदः संहितमात्र एव क्षोभात् समाविद्धतरङ्गहस्तः ।
रोधांसि निघ्नन्नवपातमग्नः करीव वन्यः परुषं ररास ॥ ৭৮

৭৮ অ: । तस्मिन् संहितमात्रे एव ह्रदः क्षोभात् समाविद्धतरङ्गहस्तः रोधांसि निघ्नन् अवपातमग्नः वन्यः करी इव पतुषं ररास ॥

৭৮ । तस्मिन् अस्त्रे संहितमात्रे सति एव ह्रदः क्षोभाद्वेगात् समाविद्धाः सङ्घट्टितास्तरङ्गा एव हस्ता यस्य स रोधांसि निघ्नन् पातयन् अवपाते गज-ग्रहणागर्ते मग्नः पतितः । 'अवपातस्तु हस्त्यर्थं गर्त्तश्छन्नस्तृणादिना' इति यादवः । वन्यः करी इव पतुषं घोरं ररास दध्वान ॥

৭৮ । শরসন্ধান করিবামাত্র হ্রদ সংক্ষোভিত হইয়া উঠিল এবং তরঙ্গরূপ করপ্রসারণ-পূর্ব্বক তীরভূমি নিপাতিত করতঃ বিবরমধ্য নিপতিত করীর ন্যায় ভীষণ আর্ত্তনাদ করিতে লাগিল ।

तस्मात् समुद्रादिव मथ्यमानात्
उद्वृत्तनक्रात् सहसोन्ममज्ज ।
लक्ष्म्येव सार्द्धं सुरराजवृक्षः
कन्यां पुरस्कृत्य भुजङ्गराजः ॥ ৭৯

৭৯ অ: । मथ्यमानात् समुद्रात् इव उद्वृत्तनक्रात् तस्मात् ( ह्रदात् ) लक्ष्म्या सार्द्धं सुरराजवृक्षः इव कन्यां पुरस्कृत्य भुजङ्गराजः सहसा उन्ममज्ज ॥

৭৯ । मथ्यमानात् समुद्रादिव उद्वृत्तनक्रात् क्षुभितग्राहात् तस्मात् ह्रदात् लक्ष्म्या सार्धं सुरराजस्य इन्द्रस्य वृक्षः पारिजात इव कन्यां पुरस्कृत्य भुजङ्गराजः कुमुदः सहसा उन्ममज्ज ॥

৭৯ । তখন সাগরমন্থনকালে যেরূপ লক্ষ্মীর সহিত কল্পবৃক্ষ সমুত্থিত হইয়াছিল, তদ্রূপ কুমুদনাগ এক কন্যারত্ন করে লইয়া সেই কুম্ভীরসমাকীর্ণ হ্রদ হইতে সহসা উত্থিত হইল ।

विभूषणप्रत्युपहारहस्तमुपस्थितं वीक्ष्य विशाम्पतिस्तम् ।
सौपर्णमस्त्रं प्रतिसञ्जहार प्रह्वेष्वनिर्बन्धरुषो हि सन्तः ॥ ৮০

৮০ অ: । विशाम्पतिः विभूषणप्रत्युपहारहस्तम् उपस्थितं तं वीक्ष्य सौपर्णम् अस्त्रं प्रतिसञ्जहार, सन्तः प्रह्वेषु अनिर्बन्धरुषः हि ॥

৮০ । विशाम्पतिर्मनुजपतिः कुशः 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः । विभूषणं प्रत्युपहरति प्रत्यर्पयतीति विभूषणप्रत्युपहारः, कर्मण्यण् । विभूषणप्रत्युपहारो हस्तो यस्य तं उपस्थितं प्राप्तं तं कुमुदं वीक्ष्य सौपर्णं गारुत्मतम् अस्त्रं प्रतिसञ्जहार । तथाहि—सन्तः प्रह्वेषु नम्रेषु अनिर्बन्ध-रुषः अनियतकोपा हि ॥

৮০। পৃথিবীপতি কুশ তাহাকে ভূষণহস্তে সমুপস্থিত দেখিয়া সংহারাস্ত্র প্রতিসংহার করিলেন; কেননা সাধুদিগের ক্রোধ বিনম্র ও শরণার্থী ব্যক্তির প্রতি কদাচ চিরস্থায়ী হয় না।

त्रैलोक्यनाथप्रभवं प्रभावात् कुशं द्विषामङ्कुशमस्त्रविद्वान्।
मानोन्नतेनाप्यभिवन्द्य मूर्ध्ना मूर्द्धाभिषिक्तं कुमुदो बभाषे ॥८१

८१ अः। अस्त्रविद्वान् कुमुदः त्रैलोक्यनाथप्रभवं (अतएव) प्रभावात् द्विषाम् अङ्कुशं मूर्द्धाभिषिक्तं कुशं मानोन्नतेन अपि मूर्ध्ना अभिवन्द्य बभाषे ॥

७१। अस्त्रं विद्वान् अस्त्रविद्वान्, 'न लोक'—इत्यादिना षष्ठीसमासनिषेधः। 'द्वितीया श्रित'—इत्यत्र गम्यादीनामुपसंख्यानात् द्वितीयेति, योगविभागाद्वा समासः। गारुडास्त्रमहिमाभिज्ञ इत्यर्थः। कुमुदः त्रयो लोकास्त्रैलोक्यम्, चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् प्रत्ययः। त्रैलोक्यनाथो रामः प्रभवो जनको यस्य तम्, अतएव प्रभावात् द्विषामङ्कुशं निवारकं मूर्धाभिषिक्तं राजानं कुशं मानोन्नतेन अपि मूर्ध्ना अभिवन्द्य प्रणम्य बभाषे ॥

अवैमि कार्य्यान्तरमानुषस्य
विष्णोः सुताख्यामपरां तनुं त्वाम्।
सोऽहं कथं नाम तवाचरेय-
माराधनीयस्य धृतेर्विघातम् ॥ ८२

८२ अः। त्वाम्, कार्य्यान्तरमानुषस्य विष्णोः सुताख्याम् अपरां तनुम् अवैमि, सः अहं आराधनीयस्य तव धृतेः विघातं कथं नाम आचरेयम् ॥

८२। त्वाम्, ओदनान्तरस्तण्डुल इतिवत् कार्य्यान्तरः कार्य्यार्थः। 'स्थानात्मीयान्यतादर्थ्यरन्ध्रान्तर्येषु चान्तरम्' इति शाश्वतः। स चासौ मानुषश्चेति तस्य विष्णोः रामस्य सुताख्यां पुत्रसंज्ञामपरां तनुं मूर्तिमवैमि। 'आत्मा वै पुत्रनामासि इति 'श्रुतेरित्यर्थः। स जानन् अहम् आराधनीयस्य उपास्यस्य तव धृतेः प्रीतेः 'धृ प्रीतौ' इति धातोः स्त्रियां क्तिन्। विघातं कथं नाम आचरेयम्, असम्भावितमित्यर्थः ॥

৮১—৮২। গারুড়াস্ত্রপ্রভাবজ্ঞ কুমুদনাগ ত্রিলোকনাথ রামাত্মজ বিপক্ষবিজয়ী মহারাজ কুশকে মানোন্নতমস্তকদ্বারাও অভিবাদনপূর্ব্বক কহিল,—রাজন্! আমি আপনাকে ভূভারহরণজন্য নরদেহধারি ভগবান্ বিষ্ণুর তনয়সংজ্ঞক দেহান্তর বলিয়া জানি, আপনি আমার পূজনীয় অতএব আমি কিরূপে আপনার বিরাগ উৎপাদন করিতে সাহসী হইব?।

करामिघातोत्थितकन्दुकेय-
मालोक्य बालातिकुतूहलेन ।
ह्रदात् पतज्ज्योतिरिवान्तरिक्षा-
दादत्त जैत्राभरणं त्वदीयम् ॥ ८३

८३ अ: । कराभिघातोत्थितकन्दुका इयं बाला अतिकुतूहलेन अन्तरिक्षात् ज्योतिः इव ह्रदात् पतत् त्वदीयं जैत्राभरणम् आलोक्य आदत्त ॥

८३ । कराभिघातेन उत्थित ऊर्द्ध्वं गतः कन्दुको यस्याः सा, कन्दुकार्थम् ऊर्द्ध्वं पश्यन्तीत्यर्थः । इयं बाला अतिकुतूहलेन अत्यन्तकौतुकेन अन्तरिक्षात् ज्योतिर्नक्षत्रमिव 'ज्योतिर्भद्योतदृष्टिषु' इत्यमरः । ह्रदात् पतत् त्वदीयं जैत्राभरणम् आलोक्य आदत्त अगृह्णात् ॥

तदेतदाजानुविलम्बिना ते ज्याघातरेखाकिणलाञ्छनेन ।
भुजेन रक्षापरिघेण भूमेरुपैतु योगं पुनरंसलेन ॥ ८४

८४ अ: । तत् एतत् आजानुविलम्बिना ज्याघातरेखाकिणलाञ्छनेन भूमेः रक्षापरिघेण अंसलेन ते भुजेन पुनः योगम् उपैतु ॥

८४ । तदेतत् आभरणम् आजानुविलम्बिना दीर्घेण ज्याघातेन या रेखा रेखाकाराः ग्रन्थयस्तासां किणं चिह्नं तदेव लाञ्छनं यस्य तेन, भूमेः रक्षायाः परिघेन रक्षार्गलेन, 'परिघो योगभेदास्त्रमुद्गरेऽर्गलघातयोः' इत्यमरः । अंसलेन बलवता ते भुजेन पुनर्योगं सङ्गतिम् उपैतु । एतैर्विशेषणैर्महाभाग्यशौर्य्यधुरन्धरत्वबलवत्त्वादि गम्यते ॥

इमां स्वसारञ्च यवीयसीं मे
कुमुद्वतीं नार्हसि नानुमन्तुम् ।
आत्मापराधं नुदतीं चिराय
शुश्रूषया पार्थिव पादयोस्ते ॥ ८५

८५ अ: । (हे) पार्थिव ! ते पादयोश्चिराय शुश्रूषया आत्मापराधं नुदतीम् इमां मे यवीयसीं स्वसारं च कुमुद्वतीम् अनुमन्तुं न अर्हसीति न ॥

८५ । किञ्च, हे पार्थिव ! ते तव पादयोश्चिराय शुश्रूषया परिचर्य्यया 'शुश्रूषा श्रोतुमिच्छायां परिचर्य्याप्रदानयोः' इति विश्वः । आत्मापराधं आभरणग्रहणरूपं नुदतीं, परिजिहीर्षन्तीमित्यर्थः 'आशंसायां भूतवच्च'

इति यकारादन्तर्भावार्थे यत्प्रत्ययः । 'आक्रोशनयोर्नुम्' इत्यस्य वैकल्पिकत्वात् नुमभावः । इमां मे यवीयसीं कनिष्ठां स्वसारं भगिनीं कुमुद्वतीम् अनुमन्तुं न अर्हसीति अर्हस्य वेत्यर्थः ॥

৮৩—৮৫। যখন যৌবনস্বভাবচপলা এই বালিকা ক্রীড়াসময়ে একটী কন্দুক ঊর্দ্ধে উৎক্ষিপ্ত করিয়া তৎপ্রতি দৃষ্টিপাত করিতেছিল, তখন অন্তরীক্ষ হইতে নিপতিত নক্ষত্রের ন্যায় হ্রদতীর হইতে পতিত আপনার এই জয়শীল আভরণ দর্শন করিয়া কৌতূহল বশতঃ গ্রহণ করিয়া ছিল। হে রাজন্! আপনার জ্যাঘাতরেখায় কিণলাঞ্ছিত আজানুলম্বিত পৃথিবীরক্ষণের অর্গলস্বরূপ প্রচণ্ড ভুজদণ্ডে পুনরায় এই আভরণ মিলিত হউক। হে রঘুকুলতিলক! এক্ষণে আমার প্রার্থনা—আমার কনিষ্ঠা ভগিনী কুমুদ্বতীকে চিরকাল ভবদীয় চরণশুশ্রূষাদ্বারা অলঙ্কারগ্রহণরূপ অপরাধ পরিহার করিতে অনুমতি করুন।

इत्यूचिवानुपहृताभरणः क्षितीशं
श्लाघ्यो भवान् स्वजन इत्यनुभाषितारम् ।
संयोजयां विधिवदास समेतबन्धुः
कन्यामयेन कुमुदः कुलभूषणेन ॥ ८६

८६ अ: । इति ऊचिवान् उपहृताभरणः कुमुदः (हे कुमुद!) भवान् श्लाघ्यः स्वजन इत्यनुभाषितारं क्षितीशं समेतबन्धुः (सन्) कन्यामयेन कुलभूषणेन विधिवत् संयोजयामास ॥

८६। इति पूर्वश्लोकोक्तम् ऊचिवान् उक्तवान्, ब्रुवः क्वसुः। उपहृताभरणः प्रत्यर्पिताभरणः कुमुदः, हे कुमुद! भवान् श्लाघ्यः स्वजनो बन्धुः, इत्यनुभाषितारम् अनुवक्तारं क्षितीशं कुशं समेतबन्धुर्युक्तबन्धुः सन्, कन्यामयेन कन्यारूपेण कुलयोर्भूषणेन विधिवत् संयोजयामास। न केवलं तदीयमेव किन्तु स्वकीयमपि भूषणं तस्मै दत्तवानिति ध्वनिः। आम्-प्रत्ययानुप्रयोगयोर्व्यवधानन्तु प्रागेव समाहितम् ॥

৮৬। নাগরাজ কুমুদ আভরণ প্রদানপূর্ব্বক এইরূপ কহিলে, নরপতি কুশ তাহার প্রতি প্রসন্ন হইয়া বলিলেন,—হে ভুজগরাজ! তোমার সহিত সম্বন্ধ বন্ধন হওয়া শ্লাঘার বিষয় সন্দেহ নাই; তখন কুমুদনাগ বন্ধুবান্ধবের সহিত সমবেত হইয়া উভয়-কুলের ভূষণস্বরূপ স্বীয় ভগিনী কুমুদ্বতীকে কুশের করে সমর্পণ করিলেন।

तस्याः स्पृष्टे मनुजपतिना साहचर्य्याय हस्ते
माङ्गल्योर्णावलयिनि पुरः पावकस्योच्छिखस्य ।
दिव्यस्तूर्य्यध्वनिरुदचरद्व्याश्नुवानो दिगन्तान्
गन्धोदग्रं तदनु ववृषुः पुष्पमाश्चर्य्यमेघाः ॥ ८७

८७ अ: । मनुजपतिना साहचर्याय माङ्गल्योर्णावलयिनि तस्याः हस्ते उच्छिखस्य पावकस्य पुरः स्पृष्टे ( सति ) दिगन्तान् व्यश्नुवान दिव्यतूर्य्यध्वनिः उदचरत्, तदनु आश्चर्य्यमेघाः गन्धोदवं पुष्पं ववृषुः ॥

८७। मनुजपतिना कुशेन साहचर्य्याय सहधर्म्माचरणायेत्यर्थः। माङ्गल्या मङ्गले साधुर्या ऊर्णा मेषादिलोम 'ऊर्णा मेषादिलोम्नि स्यात्' इत्यमरः। अत्र लक्षणया तन्निमित्तं सूत्रमुच्यते। तया वलयिनि वलयवति तस्याः कुमुद्वत्या हस्ते पाणौ उच्छिखस्य उदर्च्चिषः पावकस्य पुरोऽग्रे स्पृष्टे गृहीते सति दिगन्तान् व्यश्नुवानः व्याप्नुवान् दिव्यस्तूर्य्यध्वनिरुदचरत् उत्थितः। तदनु आश्चर्य्या अद्भुता मेघाः गन्धेन उदग्रम् उत्कटं पुष्पं पुष्पाणि, जात्यभिप्राये-णैकवचनम्। ववृषुः। 'आश्चर्य्यशब्दस्य रौद्रं तूग्रममी त्रिषु। चतुर्दश' इत्यमर-वचनात् त्रिलिङ्गत्वम् ॥

৮৭। অনন্তর মহীপতি কুশ একত্র ধর্ম্মাচরণ করিবার নিমিত্ত উদ্গতশিখাশালী হুতাশনের সমক্ষে মাঙ্গলিক ঊর্ণানিবদ্ধ কুমুদ্বতীর কর স্পর্শ করিলে দিগন্তব্যাপী তূর্য্য-ধ্বনি নিনাদিত হইল এবং অদ্ভুত মেঘবৃন্দ সমুত্থিত হইয়া সুরভিকুসুমবৃষ্টি করিতে লাগিল।

इत्थं नागस्त्रिभुवनगुरोरौरसं मैथिलेयं
लब्ध्वा बन्धुं तमपि च कुशः पञ्चमं तक्षकस्य।
एकः शङ्कां पितृवधरिपोरत्यजद्वैनतेया-
च्छान्तव्यालामवनिमपरः पौरकान्तः शशास ॥ ८८

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ कुमुद्वती-
परिणयो नाम षोड़शः सर्गः ॥ १६

८८ अ: । इत्थं नागः त्रिभुवनगुरोः औरसं मैथिलेयं बन्धुं लब्ध्वा कुशः अपि तक्षकस्य पञ्चमं तं बन्धुं लब्ध्वा। एकः पितृवधरिपोः वैनतेयात्, शङ्काम् अत्यजत्, अपरः शान्तव्यालाम् अवनिं ( अतएव ) पौरकान्तः ( सन् ) शशास ॥

८८। इत्थं नागः कुमुदः त्रयाणां भुवनानां समाहारस्त्रिभुवनम् 'तद्धितार्थ'—इत्यादिना तत्पुरुषः। अदन्तद्विगुत्वेऽपि पात्राद्यन्तत्वान्न-पुंसकत्वम्। 'पात्राद्यन्तैरनेकार्थो द्विगुर्लक्ष्यानुसारतः' इत्यमरः। तस्य गुरुः रामः तस्यौरसं धर्म्मपत्नीजं पुत्रम्। 'औरसो धर्म्मपत्नीजः' इति याज्ञ-वल्क्यः। मैथिलेयं कुशं बन्धुं लब्ध्वा, कुशोऽपि च तक्षकस्य पञ्चमं पुत्रं तं कुमुदं बन्धुं लब्ध्वा, एकस्तयोरन्यतरः कुमुदः पितृवधेन रिपोर्वैनतेयात्

গরুড়াৎ। গুরুণা বৈষ্ণবাংশেন কুশেন তস্যাজিতশৌর্য্যাদিতি ভাবঃ। যশ্চ ভয়ম্ অত্যজৎ। অপরঃ কুশঃ শান্তব্যালাং কুমুদান্বয়া শান্তসর্পভয়াম্ অবনিম্ অত এব পৌরকান্তঃ পৌরপ্রিয়ঃ সন্ শশাস ॥

ইতি শ্রীমহামহোপাধ্যায়-কোলাচল-মল্লিনাথ-সূরিবিরচিতয়া সঞ্জীবনী-সমাখ্যয়া ব্যাখ্যয়া সমেতো মহাকবি—শ্রীকালিদাসকৃতৌ রঘুবংশে মহাকাব্যে কুমুদ্বতীপরিণয়ো নাম ষোড়শঃ সর্গঃ ॥ ১৬

৮৮। এইরূপে নাগরাজ কুমুদ ত্রিলোকগুরু নৃপবর রামচন্দ্রের ঔরস ও পতিব্রতা-গ্রগণ্যা সীতার গর্ভজাত কুশকে বন্ধুরূপে লাভ করিয়া ভুজগকুলান্তক গরুড় হইতে শঙ্কা পরিত্যাগ করিল; প্রজারঞ্জন রাজা কুশও তক্ষকের পঞ্চমপুত্র কুমুদকে সুহৃদ্রূপে প্রাপ্ত হইয়া ভুজগভয় নিবারণ পূর্ব্বক পৃথিবীপালন করিতে লাগিলেন।

ষোড়শ সর্গ সমাপ্ত। ১৬

## सप्तदशः सर्गः

**अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।**
**पश्चिमाद्यामिनीयामात् प्रसादमिव चेतना ॥१**

१ अः। कुमुद्वती काकुत्स्थात् अतिथिं नाम पुत्रं चेतना पश्चिमात् यामिनीयामात् प्रसादम् इव आप ॥

नमो रामपदाम्भोजं रेणवो यत्र सन्ततम् ।
कुर्वन्ति कुमुदप्रीतिमरण्यग्टहमेधिनः ॥

१। कुमुद्वती काकुत्स्थात् कुशात् अतिथिं नाम पुत्रम् चेतना बुद्धिः पश्चिमात् अन्तिमात् यामिन्या रात्रेर्यामात् प्रहरात्। 'द्वौ यामप्रहरौ समौ' इत्यमरः। प्रसादम् वैशद्यं इव प्राप। ब्राह्मे सर्वेषां बुद्धिवैशद्यं भवतीति प्रसिद्धिः ॥

১। বুদ্ধি যেরূপ যামিনীর শেষ যাম হইতে প্রসাদগুণ লাভ করে, সেইরূপ নাগ-রাজভগিনী রাজমহিষী কুমুদ্বতী মহারাজ কুশের ঔরসে অতিথি নামে এক পুত্র লাভ করিলেন।

**सः पितुः पितृमान् वंशं मातुश्चानुपमद्युतिः ।**
**अपुनात् सवितुर्वोभौ मार्गावुत्तरदक्षिणौ ॥ २**

२। अः। पितृमान् अनुपमद्युतिः सः पितुः मातुः च वंशं सविता उत्तरदक्षिणौ उभौ मार्गौ इव अपुनात् ॥

२। पितृमान् प्रशंसार्थे मतुप्। सुशिक्षित इत्यर्थः। अनुपमद्युतिः, सवितुश्च इदं विशेषणम्। सोऽतिथिः पितुः कुशस्य मातुः कुमुद्वत्याश्च वंशं सविता उत्तरदक्षिणौ उभौ मार्गौ इव अपुनात् पवित्रीकृतवान् ॥

২। অনুপমদ্যুতি দিবাকর যেরূপ উত্তর ও দক্ষিণ এই উভয়দিক্ পবিত্র করেন, অনুপমকান্তি পিতৃমান্ অতিথি তদ্রূপ পিতৃকুল মাতৃকুল এই উভয়কুলই পবিত্র করিলেন।

**तमाद्यौ कुलविद्यानामर्थमर्थविदांवरः ।**
**पश्चात् पार्थिवकन्यानां पाणिमग्राहयत् पिता ॥ ३**

३ अः। अर्थविदांवरः पिता तम् आद्यौ कुलविद्यानाम् अर्थम्, पश्चात् पार्थिवकन्यानां पाणिम् अग्राहयत् ॥

३। अर्थान् शब्दार्थान् दानसंग्रहादिक्रियाप्रयोजनानि च विदन्ति अर्थविदः, तेषां वरः श्रेष्ठः पिता कुशः तम् अतिथिम् आदौ प्रथमं कुल-विद्यानाम् आन्वीक्षिकीत्रयीवार्त्तादण्डनीतीनाम् अर्थम् अभिधेयम् अग्राहयत् अबोधयत्। पश्चात् पार्थिवकन्यानां पाणिम् अग्राहयत् [illegible] उदवाहयदित्यर्थः। ग्रहेस्तु सर्वत्र द्विकर्म्मकत्वमस्तीत्युक्तं प्राक्॥

৩। অর্থবিদ্গণের শ্রেষ্ঠ কুশ প্রথমে আত্মজ অতিথিকে কুলপরম্পরাগত আন্বীক্ষিকী, বেদত্রয়, বার্ত্তা এবং দণ্ডনীতির সমুচিত শিক্ষা প্রদান করাইয়া পরে রাজকন্যাগণের পাণিগ্রহণ করাইলেন।

आत्मजेनाभिजातेन शूरः शौर्य्यवता कुशः।
अमन्यतैकमात्मानमनेकं वशिना वशी॥४

४ अः। आत्यः शूरः वशी कुशः अभिजातेन शौर्य्यवता वशिना तेन एकम् आत्मानम् अनेकम् अमन्यत॥

४। जातौ भवो जात्यः कुलीनः शूरो वशी कुशोऽभिजातेन कुलीनेन 'अभिजातः कुलीनः स्यात्' इत्यमरः। शौर्य्यवता वशिना तेन अतिथिना कारणेन एकम् आत्मानम् एको न भवतीत्यनेकस्तम् अमन्यत। सर्वगुण-सामग्र्यादात्मजमात्मन एव रूपान्तरममंस्त इत्यर्थः॥

৪। মহাকুলপ্রসূত বীরাগ্রগণ্য জিতেন্দ্রিয় নরপতি কুশ কৌলীন্যসম্পন্ন শৌর্য্যশালী সুধীর অতিথিকে আপনার ন্যায় সর্ব্বগুণে গুণবান্ দেখিয়া নিজেরই রূপান্তর বলিয়া মনে করিলেন।

स कुलोचितमिन्द्रस्य साहायकमुपेयिवान्।
जघान समरे दैत्यं दुर्जयं तेन चावधि॥५

५ अः। सः कुलोचितम् इन्द्रस्य साहायकम् उपेयिवान् (सन्) समरे दुर्जयं दैत्यं जघान, तेन अवधि च॥

५। स कुशः कुलोचितं कुलाभ्यस्तम् इन्द्रस्य साहायकं सहकारित्वं 'योपधात्' इत्यादिना वुञ्। उपेयिवान् प्राप्तः सन् समरे नामतोऽ[illegible] दुर्जयं दैत्यं जघान अवधीत्। तेन दैत्येन अवधि हतश्च 'लुङि च' इति हनो वधादेशः॥

৫। অনন্তর কুশ কুলপ্রথানুসারে সমরে ইন্দ্রের সাহায্যার্থ গমন করিয়া দুর্জ্জয় দৈত্যকে নিহত করেন এবং তিনিও সেই দৈত্যহস্তে নিহত হন।

तं स्वसा नागराजस्य कुमुदस्य कुमुद्वती।
अन्वगात् कुमुदानन्दं शशाङ्कमिव कौमुदी ॥६

६ अः। कुमुदस्य नागराजस्य स्वसा कुमुद्वती कुमुदानन्दं शशाङ्कं कौमुदी इव तम् अन्वगात् ॥

६। कुमुदस्य नाम नागराजस्य स्वसा कुमुद्वती कुशपत्नी कुमुदानन्दं शशाङ्कं कौमुदी ज्योत्स्ना इव तं कुशम् अन्वगात्। कुशस्तु. कुः पृथ्वी तस्या मुत् प्रीतिः सैव आनन्दो यस्येति कुमुदानन्दः। धरानन्दन स्वयमानन्दतीत्यर्थः ॥

৬। জ্যোৎস্না যেরূপ কুমুদানন্দপ্রদ শশধরের অনুগমন করে, নাগনাথভগিনী কুমুদ্বতী তদ্রূপ স্বীয় পতি কুশের অনুগমন করিলেন।

तयोर्दिवस्पतेरासीदेकः सिंहासनार्द्धभाक्।
द्वितीयापि सखी शच्याः पारिजातांशभागिनी ॥७

७ अः। तयोः एकः दिवस्पतेः सिंहासनार्द्धभाक्, द्वितीया अपि शच्याः पारिजातांशभागिनी सखी आसीत् ॥

७। तयोः कुशकुमुद्वत्योर्मध्ये एकः कुशो दिवस्पतेः इन्द्रस्य सिंहासनार्द्धं सिंहासनैकदेशं तद्भाक् आसीत्, द्वितीया कुमुद्वती शच्या इन्द्राण्याः पारिजातांशस्य भागिनी ग्राहिणी 'संपृच' इत्यादिना भजेर्घिनुण् प्रत्ययः। सखी आसीत्। अलुकादित्वात् दिवस्पतिः साधुः ॥

৭। তাঁহাদের উভয়ের মধ্যে একজন ত্রিদশনাথের অর্দ্ধাসনভাগী হইলেন এবং অপরা কুমুদ্বতী শচীর সখী হইয়া পারিজাত কুসুমের অর্দ্ধাংশভাগিনী হইলেন।

तदात्मसम्भवं राज्ये मन्त्रिवृद्धाः समादधुः।
स्मरन्तः पश्चिमामाज्ञां भर्तुः संग्रामयायिनः ॥८॥

८ अः। संग्रामयायिनः भर्तुः पश्चिमां आज्ञां स्मरन्तः मन्त्रिवृद्धाः तदात्मसम्भवं राज्ये समादधुः ॥

८। संग्रामयायिनः संग्रामं यास्यतः, आवश्यकार्थे णिनिः। 'अकेनोर्भविष्यदधमर्ण्ययोः' इति षष्ठीनिषेधः। भर्तुः स्वामिनः कुशस्य पश्चिमाम् अन्तिमाम् आज्ञां विपर्यये पुत्रोऽभिषेक्तव्य इत्येवं स्मरन्तो मन्त्रिवृद्धास्तदात्मसम्भवम् अतिथिं समादधुर्निदधुः ॥

৮। তদনন্তর বৃদ্ধ অমাত্যগণ সমরগমনোদ্যত নৃপতির অন্তিম আদেশ স্মরণ করিয়া তদীয় তনয় অতিথিকে রাজপদে অভিষিক্ত করিবার ব্যবস্থা করিলেন।

ते तस्य कल्पयामासुरभिषेकाय शिल्पिभिः ।
विमानं नवमुद्वेदि चतुःस्तम्भप्रतिष्ठितम् ॥९

९ अ: । ते तस्य अभिषेकाय शिल्पिभिः उद्वेदि चतुःस्तम्भप्रतिष्ठितं नवं विमानं कल्पयामासुः ॥

९ । मन्त्रिणस्तस्य अतिथेः अभिषेकाय शिल्पिभिः उद्वेदि उन्नतवेदिकं चतुःस्तम्भप्रतिष्ठितं चतुर्षु स्तम्भेषु प्रतिष्ठितं नवं विमानं मण्डपं कल्पयामासुः कारयामासुः ॥

৯। মন্ত্রিগণ তাঁহার অভিষেকার্থ শিল্পিগণ দ্বারা উন্নত বেদিসমন্বিত স্তম্ভচতুষ্টয়ের উপর প্রতিষ্ঠিত এক নূতন পটমণ্ডপ নির্ম্মাণ করাইলেন।

तत्रैनं हेमकुम्भेषु सम्भृतैस्तीर्थवारिभिः ।
उपतस्थुः प्रकृतयो भद्रपीठोपवेशितम् ॥१०

१० अ: । प्रकृतयः तत्र भद्रपीठोपवेशितम् एनं हेमकुम्भेषु सम्भृतैः तीर्थवारिभिः उपतस्थुः ॥

१० । तत्र विमाने भद्रपीठे पीठविशेषे उपवेशितम् एनम् अतिथिं हेमकुम्भेषु सम्भृतैः संगृहीतैस्तीर्थवारिभिः करणैः प्रकृतयः मन्त्रिणः उपतस्थुः ॥

১০। প্রজাগণ সেই মণ্ডপমধ্যে ভদ্রপীঠোপরি উপবিষ্ট অতিথিকে অভিষেক করিবার জন্য সুবর্ণকুম্ভস্থিত তীর্থজল লইয়া সমুপস্থিত হইল।

नदद्भिः स्निग्धगम्भीरं तूर्य्यैराहतपुष्करैः ।
अन्वमीयत कल्याणं तस्याविच्छिन्नसन्तति ॥११

११ अ: । आहतपुष्करैः स्निग्धगम्भीरं नदद्भिः तूर्य्यैः तस्य अविच्छिन्नसन्तति कल्याणम् अन्वमीयत ॥

११ । आहतं पुष्करं मुखं येषां तैः, 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखेऽपि च' इत्यमरः । स्निग्धं मधुरं गम्भीरञ्च नदद्भिस्तूर्य्यैस्तस्य अतिथेः अविच्छिन्नसन्तति अविच्छिन्नपारम्पर्य्यं कल्याणं भावि शुभम् अन्वमीयत अनुमितम् ॥

১১। তৎকালে করতাড়িত তূর্য্যের মধুর গম্ভীর ধ্বনি যেন তাঁহার ভাবী অবিচ্ছিন্নপ্রবাহ কল্যাণনিকর বিঘোষিত করিতে লাগিল।

दूर्वायवाङ्कुरप्लक्ष-त्वगभिन्नपुटोत्तरान् ।
ज्ञातिवृद्धैः प्रयुक्तान् स भेजे नीराजनाविधीन् ॥१२

१२ अ: । सः दूर्वायवाङ्कुरप्लक्ष-त्वगभिन्नपुटोत्तरान् ज्ञातिवृद्धैः प्रयुक्तान् नीराजनाविधीन् भेजे ॥

१२ । सः अतिथिः, दूर्वाश्च यवाङ्कुराश्च प्लक्षत्वच अभिन्नपुटाः वा अ-

पल्लवाश्च तान् एतानि मङ्गलानि येषु तान्, अभिनवपुष्पाणि मधूकपुष्पाणीति केचित्। समस्तानीत्यन्ये। ज्ञातिषु ये वृद्धास्तैः प्रयुक्तान् नीराजना-विधीन् भेजे ॥

১২। বৃদ্ধ জ্ঞাতিগণ দূর্ব্বা, যবাঙ্কুর, বটতরুর ত্বক্ এবং নব পল্লবদ্বারা তাঁহার নীরাজনাবিধি সম্পাদন করিতে লাগিলেন।

पुरोहितपुरोगास्तं जिष्णुं जैत्रैरथर्वभिः ।
उपचक्रमिरे पूर्वमभिषेक्तुं द्विजातयः ॥१३

१३ अः। पुरोहितपुरोगाः द्विजातयः जिष्णुं तं जैत्रैः अथर्व्वभिः पूर्वम् अभिषेक्तुम् उपचक्रमिरे ॥

१३। पुरोहितपुरोगाः पुरोहितप्रमुखा द्विजातयो ब्राह्मणा जिष्णुं जयशीलं तम् अतिथिं जैत्रैर्जयशीलैः अथर्व्वभिर्मन्त्रविशेषैः करणैः पूर्व्वम् अभिषेक्तुम् उपचक्रमिरे ॥

১৩। পুরোহিতপ্রমুখ দ্বিজগণ প্রথমে জয়সাধন অথর্ব্ববেদোক্ত মন্ত্রদ্বারা জয়শীল অতিথির অভিষেক ক্রিয়া আরম্ভ করিলেন।

तस्यौघमहती मूर्ध्नि निपतन्ती व्यरोचत ।
सशब्दमभिषेकश्रीर्गङ्गेव त्रिपुरद्विषः ॥१४

१४ अः। तस्य मूर्ध्नि सशब्दं निपतन्ती ओघमहती अभिषेकश्रीः त्रिपुरद्विषः (मूर्ध्नि) निपतन्ती गङ्गा इव अरोचत ॥

१४। तस्य अतिथेर्मूर्ध्नि सशब्दं निपतन्ती ओघमहती महाप्रवाहा अभिषिच्यतेऽनेन इत्यभिषेको जलम्, स एव श्रीः, यद्वा तस्य श्रीः सम्पत्तिः त्रिपुरद्विषः शिवस्य मूर्ध्नि निपतन्ती गङ्गा इव अरोचत। त्रयाणां पुराणां समाहारस्त्रिपुरीति विग्रहः ॥

১৪। তদীয় মস্তকে সশব্দে নিপতিত প্রবল বারিধারা যেন ত্রিপুরারি হরের মস্তকে পতিত গঙ্গাপ্রবাহের ন্যায় শোভা ধারণ করিল।

स्तूयमानः क्षणे तस्मिन् अलक्ष्यत स बन्दिभिः ।
प्रवृद्ध इव पर्ज्जन्यः सारङ्गैरभिनन्दितः ॥१५

१५ अः। तस्मिन् क्षणे बन्दिभिः स्तूयमानः सः प्रवृद्धः सारङ्गैः अभिनन्दितः पर्जन्यः इव अलक्ष्यत ॥

१५। तस्मिन् क्षणेऽभिषेककाले बन्दिभिः स्तूयमानः सः अतिथिः

প্রভবঃ মঙ্গলবান্ আসীদিত্যর্থঃ। অতএব সাবস্থেরাতকৈরভিনন্দিতঃ পর্জন্যো মেঘ ইব অবভৌ ॥

১৫। মেঘমালা সমুদিত হইলে চাতক যেরূপ তাহার অভিনন্দন করে, তদ্রূপ বন্দিগণও তাঁহার স্তুতিবাদ করিতে লাগিল।

**তস্য সন্মন্ত্রপূতাভিঃ স্নানমদ্ভিঃ প্রতীচ্ছতঃ।**

**ববৃধে বৈদ্যুতস্যাগ্নে র্বৃষ্টিসেকাদিব দ্যুতিঃ ॥১৬**

১৬ অঃ। সন্মন্ত্রপূতাভিঃ অদ্ভিঃ স্নানং প্রতীচ্ছতঃ তস্য বৃষ্টিসেকাৎ বৈদ্যুতস্য অগ্নেঃ ইব দ্যুতিঃ ববৃধে ॥

১৬। সন্মন্ত্রৈঃ পূতাভিঃ শুদ্ধাভিরদ্ভিঃ স্নানং প্রতীচ্ছতঃ কুর্ব্বতস্তস্য, বৃষ্টিসেকাৎ বিদ্যুতোঽয়ং বৈদ্যুতঃ তস্য অবিন্ধনস্য অগ্নেঃ ইব দ্যুতির্ববৃধে ॥

১৬। অতিথি মন্ত্রপূত শুদ্ধ সলিলে অভিষিক্ত হইয়া বর্ষাকালীন বৈদ্যুত বহ্নির ন্যায় অধিকতর প্রদীপ্ত হইলেন।

**স তাবদভিষেকান্তে স্নাতকেভ্যো দদৌ বসু।**

**যাবতৈষাং সমাপ্যেরন্ যজ্ঞাঃ পর্য্যাপ্তদক্ষিণাঃ ॥১৭**

১৭ অঃ। সঃ অভিষেকান্তে স্নাতকেভ্যঃ তাবৎ বসু দদৌ যাবতা এষাং পর্য্যাপ্তদক্ষিণাঃ যজ্ঞাঃ সমাপ্যেরন্ ॥

১৭। সঃ অতিথিঃ অভিষেকান্তে স্নাতকেভ্যো গৃহস্থেভ্যস্তাবৎ তাবৎ পরিমাণং বসু ধনং দদৌ যাবতা বসুনা এষাং স্নাতকানাং পর্য্যাপ্তদক্ষিণাঃ সমগ্রদক্ষিণা যজ্ঞাঃ সমাপ্যেরন্। তাবদ্দদাবিত্যন্বয়ঃ ॥

১৭। তিনি অভিষেক-সমাপনান্তে স্নাতক ব্রাহ্মণগণকে এইরূপ ধন দান করিলেন যে তদ্দ্বারা তাঁহাদিগের ভূরিদক্ষিণ বহু যজ্ঞ নির্ব্বাহিত হয়।

**তে প্রীতমনসস্তস্মৈ যামাশিষমুদৈরয়ন্।**

**সা তস্য কর্ম্মনির্ব্বৃত্তৈর্দূরং পশ্চাৎ কৃতা ফলৈঃ ॥১৮**

১৮ অঃ। প্রীতমনসঃ তে তস্মৈ যাম্ আশিষম্ উদৈরয়ন্, সা তস্য কর্ম্মনির্ব্বৃত্তৈঃ ফলৈঃ দূরং পশ্চাৎ কৃতা ॥

১৮। প্রীতমনসস্তে স্নাতকাঃ তস্মৈ অতিথয়ে যাম্ আশিষম্ উদৈরয়ন্ প্রত্যাহরন্, সা আশীস্তস্য অতিথেঃ কর্ম্মনির্ব্বৃত্তৈঃ পূর্ব্বপুণ্যনিষ্পন্নৈঃ ফলৈঃ রাজ্যাদ্যাদিভির্দূরং দূরতঃ পশ্চাৎকৃতা। ফলপ্রদানস্য তদানীমনবকাশাৎ আশাসনাৎ প্রাগেব ন চকারেত্যর্থঃ ॥

১৮। ব্রাহ্মণগণ হৃষ্টান্তঃকরণে নরপতি অতিথিকে যে আশীর্ব্বাদ করিলেন, তাঁহার পূর্ব্বজন্মকৃত পুণ্যপ্রভাবে উহার ফল তৎকালে ফলবান্ হইবার অবসর প্রাপ্ত হইল না।

**বন্ধচ্ছেদং স বদ্ধানাং বধার্হাণামবধ্যতাম্ ।**
**ধুর্য্যাণাঞ্চ ধুরো মোক্ষমদোহঞ্চাদিশদ্গবাম্ ॥১৯**

১৯ অ:। স: বদ্ধানাং বন্ধচ্ছেদং বধার্হাণাম্ অবধ্যতাং ধুর্য্যাণাং চ ধুর: মোক্ষং গবাম্ অদোহং চ আদিশৎ ॥

১৯। সোঽতিথির্বদ্ধানাং বন্ধচ্ছেদম্, বধার্হাণাম্ অবধ্যতাম্, ধুরং বহন্তীতি ধুর্য্যা বলীবর্দ্দাদয়:, তেষাং ধুরো ভারস্য মোক্ষম্, গবাম্ অদোহং বৎসানাং পানার্থং দোহনিবৃত্তিঞ্চ আদিশৎ আদিদেশ ॥

১৯। অনন্তর নরপতি অতিথি কারারুদ্ধ জনগণের কারামোচন, বধার্হ ব্যক্তিবর্গের বধদণ্ডনিবারণ, ভারবাহী বলীবর্দ্দপ্রভৃতির ভারমোচন এবং বৎসগণের দুগ্ধপানজন্য ধেনুগণের দোহন নিষেধ করিলেন।

**ক্রীড়াপতত্রিণোঽপ্যস্য পঞ্জরস্থাঃ শুকাদয়ঃ ।**
**লব্ধমোক্ষাস্তদাদেশাৎ যথেষ্টগতয়োঽভবন্ ॥২০**

২০ অ:। পঞ্জরস্থা: শুকাদয়: অস্য ক্রীড়াপতত্রিণ: অপি তদাদেশাৎ লব্ধমোক্ষা: (সন্ত:) যথেষ্টগতয়: অভবন্ ॥

২০। পঞ্জরস্থা: শুকাদয়োঽস্যাতিথে: ক্রীড়াপতত্রিণোঽপি কিমু-তান্য: ইত্যপিশব্দার্থ:। তদাদেশাৎ তস্য অতিথে: শাসনাৎ লব্ধ-মোক্ষা: সন্ত: যথেষ্টং গতির্যেষাং তে স্বচ্ছন্দচারিণ: অভবন্ ॥

২০। তাঁহার আদেশে পিঞ্জরাবদ্ধ শুকাদি ক্রীড়া-পক্ষিগণ মুক্তি লাভ করিয়া যথেচ্ছস্থানে গমন করিল।

**ততঃ কক্ষ্যান্তরন্যস্তং গজদন্তাসনং শুচি ।**
**সোত্তরচ্ছদমধ্যাস্ত নেপথ্যগ্রহণায় সঃ ॥২১**

২১ অ:। তত: স: নেপথ্যগ্রহণায় কক্ষ্যান্তরন্যস্তং শুচি সোত্তরচ্ছদং গজদন্তাসনম্ অধ্যাস্ত ॥

২১। তত: স: অতিথি: নেপথ্যগ্রহণায় প্রসাধনস্বীকারায় কক্ষ্যান্তরং হর্ম্ম্যপ্রকোষ্ঠবিশেষ:। 'কক্ষ্যা প্রকোষ্ঠে হর্ম্ম্যাদে:' ইত্যমর:। তত্র ন্যস্তং স্থাপিতং শুচি নির্ম্মলং সোত্তরচ্ছদম্ আস্তরণবেষ্টিতং গজদন্তস্য আসনং পীঠম্ অধ্যাস্ত। তত্রোপবিষ্ট ইত্যর্থ: ॥

২১। অনন্তর মহীপতি বেশগ্রহণ হইবার জন্য অন্য এক প্রকোষ্ঠে আস্তর-ণাকীর্ণ গজদন্তনির্ম্মিত পবিত্র আসনে উপবেশন করিলেন।

तं धूपाश्यानकेशान्तं तोयनिर्णिक्तपाणयः ।
आकल्पसाधनैस्तैस्तैरुपसेदुः प्रसाधकाः ॥२२

२२ अ:। तोयनिर्णिक्तपाणयः प्रसाधकाः धूपाश्यानकेशान्तं तं तैः तैः आकल्पसाधनैः उपसेदुः ॥

२२। तोयेन निर्णिक्तपाणयः क्षालितहस्ताः प्रसाधकाः अलङ्कर्त्तारो धूपेन गन्धद्रव्यधूपेन आश्यानकेशान्तं शोषितकेशपाशान्तं तम् अतिथिं तैस्तैः आकल्पस्य नेपथ्यस्य साधनैर्गन्धमाल्यादिभिः उपसेदुः उपतस्थुः। अलञ्चक्रुरित्यर्थः ॥

तेऽस्य मुक्तागुणोन्नद्धं मौलिमन्तर्गतस्रजम् ।
प्रत्यूपुः पद्मरागेण प्रभामण्डलशोभिना ॥ २३

२३ अ:। ते मुक्तागुणोन्नद्धम् अन्तर्गतस्रजम् अस्य मौलिं प्रभामण्डलशोभिना पद्मरागेण प्रत्यूपुः ॥

२३। ते प्रसाधकाः मुक्तागुणेन मौक्तिकसरेण उन्नद्धम् उद्बद्धम् अन्तर्गतस्रजम् अस्य अतिथेर्मौलिं धम्मिल्लं प्रभामण्डलशोभिना पद्मरागेण माणिक्येन प्रत्यूपुः, प्रत्युप्तं चक्रुः ॥

২২—২৩। প্রসাধকগণ সলিলদ্বারা কর প্রক্ষালন করিয়া গন্ধমাল্য প্রভৃতি সুখসেব্য দ্রব্যদ্বারা ধূপোত্তাপে শুষ্ককেশ অতিথির বেশ রচনা করিয়া দিল এবং তাঁহার মুক্তাশ্রেণীসমুদ্ভাসিত মাল্যবেষ্টিত সংযত কেশকলাপ উজ্জ্বল পদ্মরাগমণিনিখচিত করিল।

चन्दनेनाङ्गरागञ्च मृगनाभिसुगन्धिना ।
समापय्य ततश्चक्रुः पत्रं विन्यस्तरोचनम् ॥२४

२४ अ:। (किञ्च) मृगनाभिसुगन्धिना चन्दनेन अङ्गरागं समापय्य ततः विन्यस्तरोचनं पत्रं च चक्रुः ॥

२४। किञ्च, मृगनाभ्याः कस्तूरिकया सुगन्धिना चन्दनेन अङ्गरागम् अङ्गविलेपनं समापय्य समाप्य ततः अनन्तरं विन्यस्ता गोरोचना यस्मिन् तत् पत्रं पत्ररचनं चक्रुः ॥

২৪। অনন্তর কস্তূরীসুবাসিত চন্দনদ্বারা তাঁহার অঙ্গরাগ সম্পাদন করিয়া গোরোচনাদ্বারা পত্রাবলী রচনা করিয়া দিল।

आमुक्ताभरणः स्रग्वी हंसचिह्नदुकूलवान् ।
आसीदतिशयप्रेक्ष्यः स राज्यश्रीवधूवरः ॥२५

२५ अ:। आमुक्ताभरणः स्रग्वी हंसचिह्नदुकूलवान् राज्यश्रीवधूवरः सः अतिशयप्रेक्ष्यः आसीत् ॥

२५। आमुक्ताभरणः आबद्धाभरणः, स्रजोऽस्य सन्तीति स्रग्वी ।

'सप्तायामीधात्स्रजो विनिः' इति विनिप्रत्ययः। हंसाश्चिह्नमस्येति हंसचिह्नं यद्दुकूलं तद्वान्। अत्र बहुव्रीहिणा एवार्थसिद्धेर्मतुबानर्थक्येऽपि सर्वधनीत्यादिवत् कर्मधारयादपि मत्वर्थीयं प्रत्ययमिच्छन्ति, एवमन्यत्रापि द्रष्टव्यम्। राज्यश्रीरेव वधूर्नवोढा तस्या वरो वोढा। 'वधूः स्नुषा नवोढा स्त्री वरो जामातृषिड्गयोः' इति विश्वः। सोऽतिथिः अतिशयेन प्रेक्ष्यो दर्शनीय आसीत्। वरोऽप्येवंविशेषणः॥

२५। माल्यधारी नरपति अতিথি সমুদয় আভরণ ও হংসচিহ্নিত পট্টবস্ত্র পরিধান করিয়া বধূ রাজলক্ষ্মীর পরিণেতার স্তায় প্রিয়দর্শন হইয়া উঠিলেন।

**नेपथ्यदर्शिनश्छाया तस्यादर्शे हिरण्मये।**

**विरराजोदिते सूर्य्ये मेरौ कल्पतरोरिव॥ २६**

२६ अ:। हिरण्मये आदर्शे नेपथ्यदर्शिनः तस्य छाया उदिते सूर्य्ये मेरौ कल्पतरोः (छाया) इव विरराज॥

२६। हिरण्मये सौवर्णे आदर्शे दर्पणे नेपथ्यदर्शिनो वेशं पश्यतस्तस्य अतिथेश्छाया प्रतिबिम्बम् उदिते सूर्य्ये दर्पणकल्पे मेरौ यः कल्पतरुस्तस्य छाया इव विरराज। तस्य सूर्य्यसंक्रान्तबिम्बस्य सम्भवात् मेरावित्युक्तम्॥

२৬। সুবর্ণময় দর্পণে স্বীয় বেশবিন্যাস দর্শনকালে অতিথির প্রতিবিম্ব তন্মধ্যে পতিত হইয়া সূর্য্যোদয়কালে সুমেরু-পর্ব্বতস্থিত কল্পতরুর প্রতিচ্ছায়ার ন্যায় শোভিত হইতে লাগিল।

**स राजककुदव्यग्रपाणिभिः पार्श्ववर्त्तिभिः।**

**ययावुदीरितालोकः सुधर्म्मानवमां सभाम्॥ २७**

२७ अ:। सः राजककुदव्यग्रपाणिभिः पार्श्ववर्त्तिभिः (जनैः) उदीरितालोकः सुधर्म्मानवमां सभां ययौ॥

२७। सः अतिथिः राजककुदानि राजचिह्नानि छत्रचामरादीनि। 'प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्' इत्यमरः। तेषु व्यग्राः पाणयो येषां तैः, पार्श्ववर्त्तिभिर्जनैरुदीरितालोक उच्चारितजयशब्दः, 'आलोको जयशब्दः स्यात्' इति हलायुधः। सुधर्म्माया देवसभाया अनवमाम् अन्यूनां सभामास्थानीं ययौ। 'स्यात् सुधर्म्मा देवसभा' इत्यमरः॥

२৭। অনন্তর অনুচরগণ ছত্র চামরাদি রাজচিহ্ন ধারণপূর্ব্বক জয় শব্দ উচ্চারণ করিয়া তাঁহার পার্শ্বে পার্শ্বে গমন করিতে লাগিল। এইরূপে তিনি দেবসভাতুল্য সভায় উপস্থিত হইলেন।

वितानसहितं तत्र भेजे पैतृकमासनम् ।
चूड़ामणिभिरुद्घृष्ट-पादपीठं महीक्षिताम् ॥ २८

२८ अ: । तत्र वितानसहितं महीक्षितां चूड़ामणिभिः उद्घृष्टपादपीठं पैतृकम् आसनं भेजे ॥

२८ । तत्र सभायां वितानेन उल्लोचेन सहितम् । 'अस्त्री वितानमुल्लोचे' इत्यमरः । महीक्षितां राज्ञां चूड़ामणिभिः शिरोरत्नैः उद्घृष्टम् उल्लिखितं पादपीठं यस्य तत्, पितुरिदं पैतृकम् । 'ऋतष्ठञ्' इति ठञ्-प्रत्ययः । आसनं सिंहासनं भेजे ॥

২৮ । তিনি দেবসভাসদৃশ রাজসভায় গমনপূর্ব্বক প্রণত নৃপতিগণের চূড়ামণিঘর্ষণে রেখাঙ্কিত পাদ-পীঠসংযুক্ত চন্দ্রাতপপরিশোভিত পৈতৃক সিংহাসনে সমাসীন হইলেন ।

शुशुभे तेन चाक्रान्तं मङ्गलायतनं महत् ।
श्रीवत्सलक्षणं वक्षः कौस्तुभेनेव कैशवम् ॥ २९

२९ अ: । तेन च आक्रान्तं श्रीवत्सलक्षणं महत् मङ्गलायतनं कौस्तुभेन (आक्रान्तम् श्रीवत्सलक्षणम्) कैशवं वक्षः इव शुशुभे ॥

२९ । तेन च आक्रान्तं, श्रीवत्सो नाम गृहविशेषः, तल्लक्षणं 'श्रीवत्सरूपम्' 'श्रीवत्सनन्द्यावर्त्तादिविच्छन्दा बहवो गृहाः' इति सज्जनः । महत् अधिकं मङ्गलायतनं मङ्गलगृहसभारूपं कौस्तुभेन मणिना आक्रान्तं श्रीवत्सलक्षणं, केशवस्य इदं कैशवं वक्ष इव शुशुभे ॥

২৯ । তিনি সিংহাসনে উপবেশন করিলে শ্রীবৎসনামক সুবৃহৎ মঙ্গলময় সভামণ্ডপ যেন শ্রীবৎস-লাঞ্ছিত কৌস্তুভমণিশোভিত কেশববক্ষের ন্যায় শোভা পাইতে লাগিল ।

बभौ भूयः कुमारत्वादधिराज्यमवाप्य सः ।
रेखाभावादुपारूढ़ः सामग्र्यमिव चन्द्रमाः ॥ ३०

३० अ: । सः कुमारत्वात् भूयः अधिराज्यम् अवाप्य, रेखाभावात् सामग्र्यम् उपारूढ़ः चन्द्रमा इव बभौ ॥

३० । सोऽतिथिः कुमारत्वात् बाल्यात् भूयो यौवराज्यम् अवाप्य एव अनन्तरम्, अधिराजस्य भावः अधिराज्यं महाराज्यम् अवाप्य रेखाभावात् अर्द्धेन्दुत्वमवाप्य एव सामग्र्यमुपारूढ़ः पूर्णतां गतः चन्द्रमा इव बभौ इति व्याख्यातम् । तदपि यौवराज्याभावनिश्चये न्याय एव ॥

৩০ । রাজকুমার অতিথি বাল্যবয়সে যৌবরাজ্য প্রাপ্ত হইয়াছিলেন, তদনন্তর অধিরাজ্য লাভ করিয়া অর্দ্ধচন্দ্রের রেখার অন্তে পূর্ণতাপ্রাপ্ত শশধরের ন্যায় সুশোভিত হইতে লাগিলেন ।

प्रसन्नमुखरागं तं स्मितपूर्वाभिभाषिणम् ।
मूर्त्तिमन्तममन्यन्त विश्वासमनुजीविनः ॥ ३१

३१ अः । प्रसन्नमुखरागं स्मितपूर्वाभिभाषिणं तम् अनुजीविनः मूर्त्तिमन्तं विश्वासम् अमन्यन्त ॥

३१। प्रसन्नो मुखरागो मुखकान्तिर्यस्य तं स्मितपूर्वं यथा तथा अभिभाषिणम् आभाषणशीलं तम् अतिथिम् अनुजीविनो मूर्त्तिमन्तं विग्रहवन्तं विश्वासं विस्रम्भम् अमन्यन्त । 'समौ विश्वासविस्रम्भौ' इत्यमरः ॥

৩১। অনুজীবী জনগণ সেই প্রসন্নমুখকান্তি স্মিতপূর্ব্বভাষী মহীপতি অতিথিকে মূর্ত্তিমান্ বিশ্বাসের ন্যায় মনে করিতে লাগিল।

स पुरं पुरुहूतश्रीः कल्पद्रुमनिभध्वजाम् ।
क्रममाणश्चकार द्यां नागेनैरावतौजसा ॥ ३२

३२ अः । पुरुहूतश्रीः सः कल्पद्रुमनिभध्वजां पुरम् ऐरावतौजसा नागेन क्रममाणः द्यां चकार ।

३२ । पुरुहूतश्रीः सोऽतिथिः कल्पद्रुमाणां निभाः समाना ध्वजा यस्यास्तां पुरम् अयोध्याम् ऐरावतस्य ओज इव ओजो बलं यस्य तेन नागेन कुञ्जरेण क्रममाणश्चरन् । 'अनुपसर्गाद्वा' इति वैकल्पिकमात्मनेपदम् । द्यां चकार । स्वर्गलोकसदृशीं चकारेत्यर्थः । 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः ॥

৩২। পুরন্দরপ্রভাব অতিথি ঐরাবততুল্য বলশালী গজরাজে আরোহণপূর্ব্বক ইতস্ততঃ ভ্রমণ করিয়া কল্পতরুসদৃশ ধ্বজদণ্ডসমলঙ্কৃত রাজধানী অযোধ্যাকে সুরপুরের অনুরূপ করিয়া তুলিলেন।

तस्यैकस्योच्छ्रितं छत्रं मूर्ध्नि तेनामलत्विषा ।
पूर्वराजवियोगौष्म्यं कृत्स्नस्य जगतो हृतम् ॥ ३३

३३ अः । तस्य एकस्य मूर्ध्नि छत्रम् उच्छ्रितम्, अमलत्विषा तेन कृत्स्नस्य जगतः पूर्वराज-वियोगौष्म्यं हृतम् ॥

३३। तस्य एकस्य मूर्ध्नि छत्रम् उच्छ्रितम् उन्नमितम्, अमलत्विषा तेन छत्रेण कृत्स्नस्य जगतः पूर्वराजस्य कुशस्य वियोगेन यत् औष्म्यं सन्तापः तत् हृतं नाशितम् । अत्र छत्रोन्नमनसन्तापहरणलक्षणयोः कारण-

कार्य्ययोर्भिन्नदेशत्वादसङ्गतिरलङ्कारः। तदुक्तम्—'कार्य्यकारणयोर्भिन्नदेशत्वे त्वसङ्गतिः' इति॥

৩৩। সেই অদ্বিতীয় নরপতি অতিথির মস্তকোপরি বিধৃত নির্ম্মলকান্তি আতপত্র—পূর্ব্বরাজগণের বিরহজনিত জগতের সমস্ত সন্তাপ অপনীত করিল।

धूमादग्नेः शिखाः पश्चाद् उदयादंशवो रवेः।
सोऽतीत्य तेजसां वृत्तिं सममेवोत्थितो गुणैः॥ ३४

३४ अः। अग्नेः धूमात् पश्चात् शिखाः रवेः उदयात् (पश्चात्) अंशवः सः तेजसां वृत्तिम् अतीत्य गुणैः समम् एव उत्थितः॥

३४। अग्नेर्धूमात् पश्चात् अनन्तरमित्यर्थः। शिखा ज्वालाः, रवेरुदयात् पश्चादनन्तरम् अंशवः उत्तिष्ठन्त इति शेषः। सोऽतिथिस्तेजसाम् अग्न्यादीनां वृत्तिं स्वभावमतीत्य गुणैः समं सह एव उत्थितः उदितः। अपूर्वमिदमित्यर्थः।

৩৪। ধূমোদ্গমের পর অনলের শিখা নির্গত হয়, প্রভাকর উদিত হইলে কিরণরাশি বহির্গত হয়; কিন্তু অতিথি তেজস্বীদিগের এই স্বভাবসিদ্ধ গুণগ্রাম অতিক্রম করিয়া এককালে সমস্ত গুণের সহিত অভ্যুদয় লাভ করিলেন।

तं प्रीतिविशदैर्नेत्रैरन्वयुः पौरयोषितः।
शरत्प्रसन्नैर्ज्योतिर्भिर्विभावर्य्य इव ध्रुवम्॥ ३५

३५ अः। शरत्प्रसन्नैः ज्योतिर्भिः विभावर्य्यः ध्रुवम् इव पौरयोषितः प्रीतिविशदैः नेत्रैः तम् अन्वयुः॥

३५। पौरयोषितः प्रीत्या विशदैः प्रसन्नैर्नेत्रैः करणैस्तम् अतिथिम् अन्वयुः अनुजग्मुः। सदृष्टिप्रसारमद्राक्षुरित्यर्थः। कथमिव? शरदि प्रसन्नैर्ज्योतिर्भिर्नक्षत्रैर्विभावर्य्यो रात्रयो ध्रुवमिव। ध्रुवपाशबद्धत्वात् ताराचक्रस्य इत्यर्थः।

৩৫। শরৎকালের যামিনী যেমন প্রসন্নতারকারূপ নেত্রদ্বারা ধ্রুবতারা দর্শন করে, পুরনারীগণ তদ্রূপ প্রীতিপ্রফুল্ল-লোচনে অতিথিকে সন্দর্শন করিতে লাগিল।

अयोध्यादेवताश्चैनं प्रशस्तायतनार्च्चिताः।
अनुदध्युरनुध्येयं सान्निध्यैः प्रतिमागतैः॥ ३६

३६ अः। प्रशस्तायतनार्च्चिताः अयोध्यादेवताः च अनुध्येयम् एनम् प्रतिमागतैः सान्निध्यैः अनुदध्युः॥

३६। प्रशस्तेषु आयतनेषु आलयेषु अर्च्चिता अयोध्यादेवताः आनुध्येयम् अनुग्राह्यम् एनम् अतिथिं प्रतिमागतैः अर्च्चासंक्रान्तैः सान्निध्यैः सन्निधानैः अनुदध्युः अनुजगृहुः। 'अनुध्यानमनुग्रहः' इत्युत्पलमालायाम्। तदनुग्रहबुद्ध्या सन्निदधुरित्यर्थः ॥

৩৬। অযোধ্যার দেবতাসকল প্রশস্ত আয়তনে অর্চ্চিত হইয়া স্ব স্ব প্রতিমাতে অধিষ্ঠানপূর্ব্বক অনুগ্রহযোগ্য অতিথির শুভানুধ্যানে প্রবৃত্ত হইলেন।

यावन्नाश्यायते वेदिरभिषेकजलाप्लुता।
तावदेवास्य वेलान्तं प्रतापः प्राप दुःसहः ॥ ३७

३७ अः। अभिषेकजलाप्लुता वेदिः यावत् न आश्यायते तावत् एव अस्य दुःसहः प्रतापः वेलान्तं प्राप ॥

३७। अभिषेकजलैः आप्लुता सिक्ता वेदिः अभिषेकवेदिः यावत् न आश्यायते न शुष्यति। कर्त्तरि लट्। तावदेव अस्य राज्ञो दुःसहः प्रतापो वेलान्तं वेलापर्य्यन्तं प्राप ॥

৩৭। অভিষেকজলে সিক্ত তাঁহার অভিষেকবেদী শুষ্ক হইতে না হইতেই তাঁহার দুঃসহ প্রতাপ সাগরতীর পর্য্যন্ত গমন করিল।

वशिष्ठस्य गुरोर्मन्त्राः सायकास्तस्य धन्विनः।
किन्तत् साध्यं यदुभये साधयेयुर्न सङ्गताः ॥ ३८

३८ अः। गुरोः वशिष्ठस्य मन्त्राः धन्विनः तस्य सायकाः उभये सङ्गताः (सन्तः अस्य) यत् न साधयेयुः तत् साध्यं किम्? ॥

३८। गुरोर्वशिष्ठस्य मन्त्राः, धन्विनस्तस्य अतिथेः सायकाः, इत्युभये सङ्गताः सन्तः यत् साध्यं न साधयेयुस्तत् तादृक् साध्यं किम्? न किञ्चिदित्यर्थः तेषामसाध्यं नास्तीति भावः ॥

৩৮। গুরু মহর্ষি বশিষ্ঠের মন্ত্রবল এবং ধনুর্দ্ধারী সেই অতিথির শরজাল—এই উভয় মিলিত হইলে তাঁহাদের কোন কার্য্যই অসাধ্য ছিল না।

स धर्मस्थसखः शश्वदर्थिप्रत्यर्थिनां स्वयम्।
ददर्श संशयच्छेद्यान् व्यवहारानतन्द्रितः ॥ ३९

३९ अः। धर्मस्थसखः अतन्द्रितः सः शश्वत् अर्थिप्रत्यर्थिनां संशयच्छेद्यान् व्यवहारान् स्वयं ददर्श ॥

३९। धर्म्मे तिष्ठन्तीति धर्म्मस्थाः सभ्याः। 'राज्ञा सभासदः कार्य्या रिपौ मित्रे च ये समाः' इत्युक्तलक्षणाः, तेषां सखा धर्म्मस्थसखः, तत्सहित

इत्यर्थः। अतन्द्रितोऽनलसः स नृपः अश्वत् अन्वहमित्यर्थः। अर्थिनां साध्यार्थवतां प्रत्यर्थिनां तद्विरोधिनाञ्च संशयच्छेद्यान् संशयाद्धेतोश्छेद्यान् परिच्छेद्यान् सन्दिग्धत्वात् अवश्यनिर्णेयानित्यर्थः। व्यवहारान् ऋणादानादिविवादान् स्वयं ददर्श अनुसन्दधौ, ननु प्राड्विवाकमेव नियुक्तवानित्यर्थः। अत्र याज्ञवल्क्यः—'व्यवहारान् नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह' इति॥

৩৯। তিনি সতত ধর্ম্মনিরত সভ্যগণে পরিবৃত হইয়া প্রতিদিন আলস্য পরিত্যাগ পূর্ব্বক অর্থি-প্রত্যর্থীদিগের সংশয়প্রযুক্ত অবশ্যনির্ণেয় ঋণাদানাদি বিবাদ সকল স্বয়ং পর্য্যবেক্ষণ করিতেন।

ततः परमभिव्यक्त-सौमनस्यनिवेदितैः।
युयोज पाकाभिमुखैर्भृत्यान् विज्ञापनाफलैः॥४०

४० अ:। ततः परं भृत्यान् अभिव्यक्तसौमनस्यनिवेदितैः पाकाभिमुखैः विज्ञापनाफलैः युयोज॥

४०। ततः परं व्यवहारदर्शनानन्तरं भृत्यान् अनुजीविनः अभिव्यक्तं मुखप्रसादादिलिङ्गैः स्फुटीभूतं यत् सौमनस्यं स्वामिनः प्रसन्नत्वं तेन निवेदितैः सूचितैः पाकाभिमुखैः सिद्ध्युन्मुखैर्विज्ञापनानां विज्ञप्तीनां फलैः प्रेप्सितार्थैर्युयोज योजयामास। अत्र बृहस्पतिः—'नियुक्तः कर्म्मनिष्पत्तौ विज्ञप्तौ च यदृच्छया। भृत्यान् धनैर्मानयंस्तु नवोऽप्यक्षोभ्यतां व्रजेत्॥' इति। कविश्च वक्ष्यति—अक्षोभ्य इति। अत्र सौमनस्यफलयोजनादिभिर्नृपस्य वृत्तसमाधिर्ध्वन्यत इत्यनुसन्धेयम्॥

৪০। ভৃত্যগণ তাঁহাকে বিবিধ সংবাদ প্রদান করিলে ব্যবহারাদি দর্শনের পর তিনি তাহাদিগকে আশাতিরিক্ত প্রচুর ধন দান করিতেন। তৎকালে তাঁহার মুখবিকাসাদি চিহ্নে চিত্তপ্রসন্নতা সম্যক্ অনুমিত হইয়া পারিতোষিক দানরূপ ফল ফলিয়াছে, ইহা সুস্পষ্ট অনুভূত হইত।

प्रजास्तद्गुरुणा नद्यो नभसेव विवर्द्धिताः।
तस्मिंस्तु भूयसीं वृद्धिं नभस्ये ता इवाययुः॥ ४१

४१ अ:। तद्गुरुणा नभसा नद्यः इव विवर्द्धिताः प्रजाः तस्मिन् तु नभस्ये ताः इव भूयसीं वृद्धिम् आययुः॥

४१। प्रजास्तस्य अतिथेर्गुरुणा पित्रा कुशेन नभसा श्रावणमासेन नद्य इव विवर्द्धिताः। तस्मिन् अतिथौ तु नभस्ये भाद्रपदे मासे ता इव नद्य इव भूयसीं वृद्धिम् अभ्युदयम् आययुः। प्रजापोषणेन पितरम् अतिशयितवानित्यर्थः॥

৪১। তদীয় পিতা কুশের শাসনসময়ে প্রজাগণ শ্রাবণমাসের নদীর ন্যায় বর্দ্ধিত হইয়াছিল, একণে তাঁহার অধিকারকালে যেন ভাদ্রমাসীয় নদীর ন্যায় অত্যধিক সমৃদ্ধিলাভ করিল।

यदुवाच न तन्मिथ्या यद्ददौ न जहार तत्।
सोऽभूद्भग्नव्रतः शत्रूनुद्धृत्य प्रतिरोपयन् ॥४२

४२ अः। सः यत् उवाच तत् न मिथ्या अभूत्, यत् ददौ तत् न जहार (किन्तु) शत्रून् उद्धृत्य प्रतिरोपयन् भग्नव्रतः (अभूत्)।

४२। सोऽतिथिर्यद्वाक्यं दानत्राणादिविषयम् उवाच तत् न मिथ्या अनृतं न अभूत्। यत् वस्तु ददौ तत् न जहार न पुनरादत्ते। किन्तु शत्रून् उद्धृत्य उत्खाय प्रतिरोपयन् पुनः स्थापयन् भग्नव्रतो भग्ननियमोऽभूत् ॥

৪২। তিনি যাহা বলিতেন, কদাচ তাহা মিথ্যা হইত না, যাহা দান করিতেন, কখন তাহা আর পুনরায় গ্রহণ করিতেন না ; তিনি যে শত্রুগণকে একবার উৎপাটিত করিয়া পুনরায় স্বপদে স্থাপিত করিতেন, সেই স্থলেই কেবল তাঁহার নিয়মের ব্যতিক্রম ঘটিত।

वयोरूपविभूतीनामेकैकं मदकारणम्।
तानि तस्मिन् समस्तानि न तस्योत्सिषिचे मनः ॥४३

४३ अः। वयोरूपविभूतीनाम् एकैकं मदकारणम्, तानि तस्मिन् समस्तानि, (तथापि) तस्य मनः न उत्सिषिचे ॥

४३। वयोरूपविभूतीनां यौवनसौन्दर्यैश्वर्याणां मध्ये एकैकं मदकारणं मदहेतुः, तानि मदकारणानि तस्मिन् राज्ञि समस्तानि, मिलितानीति शेषः। तथापि तस्य अतिथेर्मनो न उत्सिषिचे न जगर्व। सिञ्चतेः स्वरितेत्वादात्मनेपदम्। अत्र वयोरूपादीनां गर्वहेतुत्वात् मदस्य च मदिराकार्यत्वेन अतत्कारकत्वात् मदशब्देन गर्वो लक्ष्यत इत्याहुः। उक्तञ्च—'ऐश्वर्यरूपतारुण्यकुलविद्याबलैरपि। इष्टलाभादिना न्येषामवज्ञा गर्व ईरितः। मदस्त्वानन्दसम्मोहः सम्भेदो मदिराकृतः॥' इति। अतएव कविनापि 'उत्सिषिचे' इत्युक्तम्। नतु 'उन्ममाद' इति ॥

৪৩। রূপ, যৌবন, ঐশ্বর্য্য এই তিনের প্রত্যেকটীই গর্ব্বের কারণ ; কিন্তু বিস্ময়ের বিষয় এই যে, এই সমস্ত এককালে তাঁহাতে মিলিত হইলেও তাঁহার কিছুমাত্র মনোবিকার সংঘটিত হয় নাই।

इत्थं जनितरागासु प्रकृतिष्वनुवासरम्।
अक्षोभ्यः स नवोऽप्यासीत् दृढमूल इव द्रुमः ॥४४

४४ अ: । इत्थम् अनुवासरं प्रकृतिषु जनितरागासु (सतीषु) स: नव: अपि, दृढमूल: द्रुम: इव अक्षोभ्य: आसीत् ॥

४४ । इत्थम् अनुवासरम् अन्वहं प्रकृतिषु प्रजासु जनितरागासु सतीषु च स राजा नवोऽपि दृढमूलो द्रुम इव अक्षोभ्योऽप्रधृष्य आसीत् ॥

৪৪। এইরূপে প্রকৃতিপুঞ্জ তাঁহার প্রতি প্রতিদিন অনুরক্ত হইতে লাগিল ; নূতন রাজপদে প্রতিষ্ঠিত হইলেও তিনি দৃঢ়মূল মহীরুহের ন্যায় দুর্দ্ধর্ষ হইয়া উঠিলেন।

अनित्या: शत्रवो बाह्या विप्रकृष्टाश्च ते यत: ।
अत: सोऽभ्यन्तरान्नित्यान् षट् पूर्वमजयद्रिपून् ॥४५

४५ अ: । यत: ते बाह्या: शत्रव: अनित्या: विप्रकृष्टाश्च, अत: स: अभ्यन्तरान् नित्यान् षट् रिपून् पूर्वम् अजयत् ॥

४५ । यतो बाह्या: शत्रव: प्रतिनृपा अनित्या:, छिद्यन्ति भिद्यन्ति चेत्यर्थ: । किञ्च, ते बाह्या विप्रकृष्टा दूरस्थाश्च, अत: सोऽभ्यन्तरान् अन्तवर्त्तिनो नित्यान् षट् रिपून् कामक्रोधादीन् पूर्वम् अजयत् । अन्त:शत्रुजये बाह्या अपि न दुर्जया इति भाव: ॥

৪৫। বাহ্যশত্রু অনিত্য, কারণ তাহারা দূরস্থ ; এজন্য তিনি প্রথমেই অভ্যন্তরস্থিত কামাদি নিত্য ছয় রিপু জয় করিলেন।

प्रसादाभिमुखे तस्मिन् चपलापि स्वभावत: ।
निकषे हेमरेखेव श्रीरासीदनपायिनी ॥४६

४६ अ: । स्वभावत: चपला अपि श्री: प्रसादाभिमुखे तस्मिन् निकषे हेमरेखा इव, अनपायिनी आसीत् ॥

४६ । स्वभावतश्चपला चञ्चलापि श्री: प्रसादाभिमुखे तस्मिन् नृपे निकषे निकषोपले हेमरेखा इव अनपायिनी स्थिरा आसीत् ॥

৪৬। স্বভাবচপলা কমলাদেবী প্রসন্নবদন নরপতি অতিথির নিকট নিকষপ্রস্তরে স্বর্ণরেখার ন্যায় অচলা রহিলেন।

कातर्य्यं केवला नीति: शौर्य्यं श्वापदचेष्टितम् ॥
अत: सिद्धिं समेताभ्यामुभाभ्यामन्वियेष स: ॥ ४७

४७ अ: । केवला नीति:, कातर्य्यं, शौर्य्यं श्वापदचेष्टितम्, अत: स: समेताभ्याम् उभाभ्यां सिद्धिम् अन्वियेष ॥

४७ । केवला शौर्य्यवर्जिता नीति: कातर्य्यं भीरुत्वम्, शौर्य्यं केवलमित्यनुषज्जनीयम्, केवलं नीतिरहितं शौर्य्यं श्वापदचेष्टितम् व्याघ्रादि-

चेष्टाप्रायमित्यर्थः। "व्याघ्रादयो वनचराः पशवः श्वापदा मताः" इति हलायुधः। अतो हेतोः सोऽतिथिः समिताभ्यां सङ्गताभ्यामुभाभ्यां नीतिशौर्य्याभ्यां सिद्धिं जयप्राप्तिम् अन्विष्येष गवेषितवान् ॥

४৭। শৌর্য্যহীন নীতি ভীরুতার লক্ষণ এবং কেবল শৌর্য্য হিংস্রজন্তুর আচরণ, এজন্য তিনি নীতি ও শৌর্য্য এই উভয় অবলম্বনেই জয়প্রাপ্তির অন্বেষণ করিতেন।

न तस्य मण्डले राज्ञो न्यस्तप्रणिधिदीधितेः।
अदृष्टमभवत् किञ्चित् व्यभ्रस्येव विवस्वतः ॥४८

४८ अः। न्यस्तप्रणिधिदीधितेः तस्य राज्ञः व्यभ्रस्य विवस्वतः इव मण्डले किञ्चित् अदृष्टं न अभवत् ॥

४८। न्यस्ताः सर्वतः प्रहिताः प्रणिधयश्चरा एव दीधितयो रश्मयो यस्य तस्य। 'प्रणिधिः प्रार्थने चरे' इति शाश्वतः। तस्य राज्ञः, व्यभ्रस्य निर्मेघस्य विवस्वतः सूर्य्यस्य इव, मण्डले स्वविषये किञ्चिदल्पमपि अदृष्टम् अज्ञातं न अभवत् न आसीत्। स चारचक्षुषा सर्वमपश्यदित्यर्थः ॥

४৮। তিনি চাররূপ কিরণ প্রেরণ করিয়া মেঘনির্ম্মুক্ত দিবাকরের ন্যায় স্বীয় রাজ্যের সমস্ত বৃত্তান্তই বিদিত হইতেন।

रात्रिन्दिवविभागेषु यदादिष्टं महीक्षिताम्।
तत् सिषेवे नियोगेन स विकल्पपराङ्मुखः ॥४९

४९ अः। रात्रिन्दिवविभागेषु महीक्षितां यत् आदिष्टं, तत् सः विकल्पपराङ्मुखः (सन्) नियोगेन सिषेवे ॥

४९। रात्रौ च दिवा च रात्रिन्दिवम्, 'अचतुर'—इत्यादिनाधिकरणार्थे द्वन्द्वेऽच्प्रत्ययान्तो निपातः, अव्ययान्तत्वादव्ययत्वम्। अत्र षष्ठ्यर्थलक्षणया रात्रिन्दिवमिति, अहोरात्रयोरित्यर्थः। तयोर्विभागा अंशाः प्रहरादयः, तेषु महीक्षितां राज्ञां यत् आदिष्टम्, इदम् अस्मिन् काले कर्त्तव्यमिति मन्वादिभिरुपदिष्टं तत् स राजा विकल्पपराङ्मुखः संशयरहितः सन् नियोगेन निश्चयेन सिषेवे। अनुष्ठितवानित्यर्थः। अत्र कौटिल्यः—'कार्य्याणां नियोगविकल्पसमुच्चया भवन्ति। अनेनैवोपायेन नान्येनेति नियोगः। अनेन वा अन्येन वेति विकल्पः। अनेन चेति समुच्चयः' इति ॥

৪৯। মনু প্রভৃতি মহর্ষি কর্ত্তৃক রাজগণের দিবারাত্রি-বিভাগে যে যে সময়ে যে সকল কার্য্য নির্দ্দিষ্ট হইয়াছে, তিনি সংশয়শূন্য হইয়া তাহা নির্ব্বাহ করিতেন, কখন তদ্বিষয়ে পরাঙ্মুখ হন নাই।

मन्त्रः प्रतिदिनं तस्य बभूव सह मन्त्रिभिः ।
स जातु सेव्यमानोऽपि गुप्तद्वारो न सूच्यते ॥५०

५० अः । तस्य प्रतिदिनं मन्त्रिभिः सह मन्त्रः बभूव, सेव्यमानः अपि गुप्तद्वारः सः जातु न सूच्यते ॥

५० । तस्य राज्ञः प्रतिदिनं मन्त्रिभिः सह मन्त्रो विचारो बभूव । स मन्त्रः सेव्यमानः अपि अन्वहम् आवर्त्यमानोऽपि जातु कदाचिदपि न सूच्यते न प्रकाश्यते । तत्र हेतुः—गुप्तद्वार इति । संवृतेङ्गिताकारादिज्ञान-मार्ग इत्यर्थः ॥

৫০। তিনি প্রতিদিন মন্ত্রিগণের সহিত মন্ত্রণা করিতেন; ঐ মন্ত্রণা প্রত্যহ পর্য্যালোচিত হইলেও হৃদ্গতভাব ও বাহ্যিক আকৃতি প্রভৃতি পরিস্ফুট না হওয়ায় কদাচ প্রকাশ পাইত না।

परेषु स्वेषु च क्षिप्तैरविज्ञातपरस्परैः ।
सोऽपसर्पैर्जजागार यथाकालं स्वपन्नपि ॥ ५१

५१ अः । यथाकालं स्वपन् अपि सः परेषु स्वेषु च क्षिप्तैः अविज्ञातपरस्परैः अपसर्पैः जजागार ॥

५१ । यथाकालम् उक्तकालानतिक्रमेण स्वपन् अपि सः अतिथिः परेषु शत्रुषु स्वेषु स्वकीयेषु च मन्त्र्यादितीर्थेष्विति शेषः । क्षिप्तैः प्रहितैरवि-ज्ञाताः परस्परं येषां तैः, अन्योन्याविज्ञातैरित्यर्थः । अपसर्पैश्चरैः, 'अप-सर्पश्चरः स्पशः' इत्यमरः । जजागार बुद्धवान् । चारमुखेन सर्वमज्ञासी-दित्यर्थः । अत्र कामन्दकः—'चारान् विचारयेत् तीर्थेष्वात्मनश्च परस्य च । पाषण्डादीनविज्ञातानन्योन्यमितरैरपि ॥' इति ॥

৫১। স্বপক্ষে বা পরপক্ষে তিনি যে সকল চর নিযুক্ত করিতেন, তাঁহারা পরস্পর পরস্পরকে জানিতে পারিত না, অতএব তিনি যথাকালে নিদ্রিত হইলেও চরদ্বারা জাগরূক থাকিতেন।

दुर्गाणि दुर्ग्रहाण्यासंस्तस्य रोद्धुरपि द्विषाम् ।
न हि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः ॥ ५२

५२ अः । द्विषां रोद्धुः अपि तस्य दुर्गाणि दुर्ग्रहाणि आसन्, गजास्कन्दी सिंहः भयात् गिरि-गुहाशयः न हि ॥

५२ ॥ द्विषां रोद्धुः रोधकस्य अपि न तु स्वयं रोध्यस्येत्यर्थः । तस्य राज्ञो दुर्ग्रहाणि परैर्दुर्धर्षाणि दुर्गाणि मह्यादुर्गादीनि आसन् । न च निर्भीकस्य किं दुर्गैरिति वाच्यमित्यर्थान्तरन्यासमुखेनाह—न हीति । गजान् आस्कन्दति हिनस्तीति गजास्कन्दी सिंहः भयाद्धेतोः, गिरिगुहासु

शेते इति गिरिगुहाशयो नहि । किन्तु स्वभावत एवेति शेषः । 'अधिकरणे शेतेः, इत्यच्प्रत्ययः । अत्र मनुः—'धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्ष-मेव वा । नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम् ॥' इति ॥

৫২। শত্রুগণের অবরোধকারী নৃপতি অতিথির দুর্গসকল দুরতিক্রম্য ছিল, তিনি যে শত্রুভয়ে দৃঢ় দুর্গ নির্ম্মাণ করিতেন, এমন নহে; কেননা হস্তিহন্তা সিংহ কখনও গজভয়ে গিরিগুহায় শয়ন করে না।

भव्यमुख्याः समारम्भाः प्रत्यवेक्ष्या निरत्ययाः ।
गर्भशालिसधर्माणस्तस्य गूढं विपेचिरे ॥ ५३

५३ अः। भव्यमुख्याः प्रत्यवेक्ष्याः ( अतएव ) निरत्ययाः गर्भशालिसधर्माणः तस्य समारम्भाः गूढं विपेचिरे ॥

५३। भव्यमुख्याः कल्याणप्रधानाः न तु विपरीताः, प्रत्यवेक्ष्या एतावत् कृतमेतावत् कर्त्तव्यमित्यनुसन्धानेन विचारणीयाः अतएव निरत्ययाः निर्बाधाः गर्भेऽभ्यन्तरे पच्यन्ते ये शालयः तेषां सधर्माणः अति-निगूढा इत्यर्थः। 'धर्म्मादनिच् केवलात्' इत्यनिच्प्रत्ययः समासान्तः। तस्य राज्ञः समारभ्यन्त इति समारम्भाः कर्म्माणि गूढमप्रकाशं विपेचिरे फलिता इत्यर्थः। 'फलानुमेयाः प्रारम्भाः' इति भावः ॥

৫৩। তাঁহার সম্যক্ পর্য্যালোচিত বিঘ্নবিরহিত শুভফলজনক কার্য্যজাত গর্ভস্থ সুপক্ব শালিশস্যের ন্যায় অতিগূঢ়ভাবে নিষ্পন্ন হইত।

अपथेन प्रववृते न जातूपचितोऽपि सः ।
वृद्धौ नदीमुखेनैव प्रस्थानं लवणाम्भसः ॥ ५४

५४ अः। सः उपचितः अपि ( सन् ) जातु अपथेन न प्रववृते, लवणाम्भसः वृद्धौ (सत्यां) नदी-मुखेन एव प्रस्थानम् ॥

५४। सः अतिथिः उपचितोऽपि वृद्धिं गतोऽपि सन् जातु कदाचिदपि अपथेन कुमार्गेण न प्रववृते न प्रवृत्तः, न मर्य्यादां न जहावित्यर्थः तथाहि—लवणाम्भसो लवणसागरस्य वृद्धौ पूरोत्पीड़े सत्यां नदीमुखेनैव नदी प्रवेशमार्गेणैव प्रस्थानं निःसरणम्, न तु अन्यथेत्यर्थः ॥

৫৪। সাগরসলিল যদ্রূপ উচ্ছলিত হইলেও তাহা বিপথগামী না হইয়া নদীমুখেই প্রধাবিত হয়, তদ্রূপ তিনি একান্ত অভ্যুদয়শালী হইয়াও কদাচ কুপথগামী হন নাই।

कामं प्रकृतिवैराग्यं सद्यः शमयितुं क्षमः ।
यस्य कार्य्यः प्रतीकारः स तन्नैवोदपादयत् ॥ ५५

५५ अ:। प्रकृतिवैराग्यं सद्यः कामं शमयितुं क्षमः सः यस्य प्रतीकारः कार्य्यः, तत् नैव उद्पादयत् ॥

५५। प्रकृतिवैराग्यं प्रजाविरागं, दैवादुत्पन्नमिति शेषः। सद्यः कामं सम्यक् शमयितुं प्रतिकर्त्तुं क्षमः शक्तः स राजा यस्य प्रकृतिवैराग्यस्य प्रतीकारः कार्य्यः कर्त्तव्यः, अनर्थहेतुत्वादित्यर्थः। तत् वैराग्यं न उद्पादयत्। उत्पन्नप्रतीकारादनुत्पादनं वरमिति भावः। अत्र कौटिल्यः—"क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम्। विरक्ता यान्त्यमित्रं वा भर्त्तारं घ्नन्ति वा स्वयम्"। तस्मात् प्रकृतीनां विरागकारणानि न उत्पादयेदित्यर्थः॥

৫৫। দৈবাৎ কখন প্রকৃতিপুঞ্জের বিরাগ সমুৎপন্ন হইলে তিনি সদাই তাহা প্রশমিত করিতেন, কিন্তু যে বিরাগের প্রতীকার করিতে হইবে, তিনি স্বয়ং প্রাণান্তেও তাহার উৎপাদন করিতেন না।

शक्येष्वेवाभवद्यात्रा तस्य शक्तिमतः सतः।
समीरणसहायोऽपि नाम्भःप्रार्थी दवानलः॥५६

५६ अ:। शक्तिमतः सतः तस्य शक्येषु एव यात्रा अभवत्, समीरणसहायः अपि दवानलः अम्भःप्रार्थी न।

५६। शक्तिमतः शक्तिसम्पन्नस्यापि सतस्तस्य राज्ञः शक्येषु शक्तिविषयेषु स्वस्मात् हीनबलेषु एव विषये यात्रा दण्डयात्रा अभवत्, न तु समधिकेषु इत्यर्थः। तथाहि—समीरणसहायोऽपि दवानलः अम्भःप्रार्थी जलान्वेषी न, दग्धुमिति शेषः। किन्तु तृणकाष्ठादिकमेवान्विष्यतीत्यर्थः। अत्र कौटिल्यः—'समज्यायोभ्यां सन्दधीत हीनेन विगृह्णीयात्' इति॥

৫৬। তিনি সমগ্র প্রভুশক্তি-সম্পন্ন হইলেও যাহাকে পরাজিত করিতে সমর্থ হইতেন, এইরূপ ব্যক্তির সহিতই যুদ্ধ করিতেন; কারণ দাবানল সমীরণসহায় পাইলে তৃণাদিকেই অন্বেষণ করিয়া থাকে, কদাচ জলের নিকট গমন করে না।

न धर्म्ममर्थकामाभ्यां बबाधे न च तेन तौ।
नार्थं कामेन कामं वा सोऽर्थेन सदृशस्त्रिषु॥५৭

५৭ अ:। सः अर्थकामाभ्यां धर्म्मं न बबाधे, तेन च तौ न, अर्थं कामेन कामं वा अर्थेन न (बबाधे), (किन्तु) त्रिषु सदृशः॥

५৭। स राजा अर्थकामाभ्यां धर्म्मं न बबाधे न नाशितवान्। तेन धर्मेण च तौ अर्थकामौ न। अर्थं कामेन कामं वा अर्थेन न बबाधे।

একত্রৈব আসক্তো ন অভূদিত্যর্থঃ। কিন্তু ত্রিষু ধর্মার্থকামেষু সদৃশ-সুখ্যপ্রবৃত্তিঃ, অভূদিত্যর্থঃ॥

৫৭। রাজা অতিথি কখনও অর্থ ও কামদ্বারা ধর্ম্মের, ধর্ম্মদ্বারা অর্থ ও কামের এবং কামনা দ্বারা অর্থের কিংবা অর্থদ্বারা কামনার অবহেলা করেন নাই। তিনি ধর্ম্ম, অর্থ ও কামনা এই তিনটীতে তুল্যরূপ আসক্ত ছিলেন।

হীনান্যনুপকর্ত্তৃ়ণি প্রবৃদ্ধানি বিকুর্বতে।
তেন মধ্যমশক্তীনি মিত্রাণি স্থাপিতান্যতঃ॥ ৫৮

৫৮ অ:। মিত্রাণি হীনানি অনুপকর্ত্তৃ়ণি বিকুর্বতে, (অতঃ) প্রবৃদ্ধানি তেন মধ্যমশক্তীনি স্থাপিতানি।

৫৮। মিত্রাণি হীনানি অতিক্ষীণানি চেত্ অনুপকর্ত্তৃ়ণি অনুপকারীণি। প্রবৃদ্ধানি অতিসমৃদ্ধানি চেত্ বিকুর্ব্বতে বিরুদ্ধং চেষ্টন্তে, অপকুর্ব্বত ইত্যর্থঃ। 'অকর্ম্মকাচ্চ' ইত্যাত্মনেপদম্। অতঃ কারণাত্ তেন রাজ্ঞা মিত্রাণি সুহৃদঃ, 'মিত্রং সুহৃদি মিত্রোঽর্কে' ইতি বিশ্বঃ। মধ্যমশক্তীনি ন অতিক্ষীণোচ্ছ্রিতানি যথা তথা স্থাপিতানি॥

৫৮। হীনদশাগ্রস্ত ব্যক্তির সহিত মিত্রতায় কোন উপকার নাই; পরন্তু অতি-সমৃদ্ধ ব্যক্তির সহিতও বন্ধুতায় কুফল ফলিয়া থাকে; এজন্য তিনি মধ্যাবস্থব্যক্তিগণের সহিত মিত্রতা করিতেন।

পরাত্মনোঃ পরিচ্ছিদ্য শক্ত্যাদীনাং বলাবলম্।
যযাবেভির্বলিষ্ঠশ্চেত্ পরস্মাদাস্ত সোঽন্যথা॥ ৫৯

৫৯ অ:। সঃ পরাত্মনোঃ শক্ত্যাদীনাং বলাবলং পরিচ্ছিদ্য এভিঃ পরস্মাত্ বলিষ্ঠঃ চেত্ যযৌ, অন্যথা ন (যযৌ)॥

৫৯। শক্যেষু এব অভবত্ যাত্রা' ইত্যাদিনোক্তমর্থং সোপস্কারমাহ—পরেতি সঃ অতিথিঃ পরাত্মনোঃ শত্রোরাত্মনশ্চ শক্ত্যাদীনাং শক্তিদেশকালাদীনাং বলাবলং ন্যূনাধিকভাবং পরিচ্ছিদ্য নিশ্চিত্য এভিঃ শক্ত্যাদিভিঃ পরস্মাত্ শত্রোর্বলিষ্ঠঃ স্বয়মতিশয়েন বলবান্ চেত্, বলশব্দাত্ মতুবন্তাদিষ্ঠন্ প্রত্যয়ঃ, 'বিন্মতুর্লোর্লুক্' ইতি মতুপো লুক। যযৌ যাত্রাং চক্রে। অন্যথা অবলিষ্ঠশ্চেত্ আস্ত অতিষ্ঠত্ ন যযৌ ইত্যর্থঃ। অত্র মনুঃ—"যদা মন্যেত ভাবেন হৃষ্টং পুষ্টং বলং স্বকম্। পরস্য বিপরীতং চেত্ তদা যায়াদরীন্ প্রতি॥ যদা তু স্যাত্ পরিক্ষীণো বাহনেন বলেন চ। তদাসীত প্রযত্নেন শনকৈঃ সান্ত্বয়ন্নরীন্॥" ইতি॥

৫৯। তিনি শত্রু ও আপনার বলবীর্য্যের ন্যূনাধিক্য বুঝিয়া শত্রু হইতে

আপনাকে অধিক বলশালী মনে করিলে সেইরূপ শত্রুর সহিত যুদ্ধযাত্রা করিতেন; নতুবা তাহার বিপরীত দেখিলে যুদ্ধ হইতে ক্ষান্ত থাকিতেন।

কোশেনাশ্রয়ণীয়ত্বমিতি তস্যার্থসংগ্রহঃ।
অম্বুগর্ভো হি জীমূতশ্চাতকৈরভিনন্দ্যতে ॥ ৬০

৬০ অঃ। কোশেন আশ্রয়ণীয়ত্বং (ভবতি) ইতি তস্য অর্থসংগ্রহঃ, হি অম্বুগর্ভঃ জীমূতঃ চাতকৈঃ অভিনন্দ্যতে ॥

৬০। কোশেন অর্থচয়েন আশ্রয়ণীয়ত্বং ভজনীয়ত্বম্, ভবতীতি শেষঃ। ইতি হেতোস্তস্য রাজ্ঞঃ কর্তুঃ অর্থসংগ্রহঃ, ন তু লোভাদিত্যর্থঃ। তথাহি— অম্বু গর্ভে যস্য সঃ অম্বুগর্ভঃ, জীবনস্য জলস্য মূতঃ পটবন্ধো জীমূতো মেঘঃ। 'মূঙ্ বন্ধনে' পৃষোদরাদিত্বাৎ সাধুঃ। চাতকৈরভিনন্দ্যতে সেব্যতে। অত্র কামন্দকঃ—"ধর্ম্মহেতোস্তথার্থায় ভৃত্যানাং রক্ষণায় চ। আপদর্থঞ্চ সংরক্ষ্যঃ কোশো ধর্ম্মবতা সদা ॥" ইতি ॥

৬০। কোষ পরিপূর্ণ থাকিলেই সকলে বশীভূত হয়, এজন্য তিনি অর্থসংগ্রহ করিতেন; যেহেতু চাতকগণ জলপূর্ণ মেঘেরই সেবা করিয়া থাকে।

পরকর্ম্মাপহঃ সোঽভূদুদ্যতঃ স্বেষু কর্ম্মসু।
আবৃণোদাত্মনো রন্ধ্রং রন্ধ্রেষু প্রহরন্ রিপূন্ ॥ ৬১

৬১ অঃ। সঃ পরকর্ম্মাপহঃ (সন্) স্বেষু কর্ম্মসু উদ্যতঃ অভূৎ, রিপূন্ রন্ধ্রেষু প্রহরন্ আত্মনঃ রন্ধ্রম্ আবৃণোৎ ॥

৬১। স রাজা পরেষাং কর্ম্মাণি সেতুবার্ত্তাদীনি অপহন্তীতি পরকর্ম্মাপহঃ সন্, 'অন্যেভ্যোঽপি দৃশ্যতে' ইত্যপিশব্দসামর্থ্যাদ্ধন্তের্ডপ্রত্যয়ঃ। স্বেষু কর্ম্মসু উদ্যতঃ উদ্যুক্তঃ অভূৎ। কিঞ্চ, রিপূন্ রন্ধ্রেষু প্রহরন্ আত্মনো রন্ধ্রং ব্যসনাদিকমাবৃণোৎ সংবৃতবান্। অত্র মনুঃ—"নাস্য ছিদ্রং পরো বিদ্যাৎ বিদ্যাচ্ছিদ্রং পরস্য তু। গূহেৎ কূর্ম্ম ইবাঙ্গানি রক্ষেদ্বিবরমাত্মনঃ ॥" ইতি ॥

৬১। তিনি সর্ব্বাগ্রে শত্রুর কার্য্যে বিঘ্ন উৎপাদন করিয়া তদনন্তর নিজে উদ্যুক্ত হইতেন এবং তাহাদের ছিদ্রান্বেষণ করিয়া প্রহার করিতেন; পরন্তু নিজের ছিদ্র সর্ব্বদা প্রচ্ছন্ন রাখিতেন।

পিত্রা সংবর্দ্ধিতা নিত্যং কৃতাস্ত্রঃ সাম্পরায়িকাঃ।
তস্য দণ্ডবতো দণ্ডঃ স্বদেহান্ন ব্যশিষ্যত ॥ ৬২

৬২ অঃ। দণ্ডবলঃ তস্য পিত্রা নিত্যং সংবর্দ্ধিতঃ কৃতাস্ত্রঃ সাম্পরায়িকঃ দণ্ডঃ স্বদেহাৎ ন ব্যশিষ্যত॥

৬২। দণ্ডো দমঃ সৈন্যং বা, তদ্বতো দণ্ডবলঃ দণ্ডসম্পন্নস্য তস্য রাজ্ঞঃ পিত্রা কুশেন নিত্যং সংবর্দ্ধিতঃ পুষ্টঃ কৃতাস্ত্রঃ শিক্ষিতাস্ত্রঃ, সম্পরায়ো যুদ্ধম্, 'যুদ্ধায়ত্যোঃ সম্পরায়ঃ' ইত্যমরঃ। তমর্হতীতি সাম্পরায়িকঃ, 'তদর্হতি' ইতি ঠক্প্রত্যয়ঃ। দণ্ডঃ সৈন্যং, 'দণ্ডো যমে মানভেদে লগুড়ে দমসৈন্যয়োঃ' ইতি বিশ্বঃ। স্বদেহাৎ ন ব্যশিষ্যত ন অভিদ্যত। স্বদেহেঽপি বিশেষণানি যোজ্যানি, মূলবলং স্বদেহমিব অরক্ষদিত্যর্থঃ॥

৬২। শান্ত মহীপতি অতিথি, তদীয় পিতা কুশকর্ত্তৃক নিত্য সংবর্দ্ধিত শিক্ষিতাস্ত্র সমরনিপুণ সৈন্যগণকে স্বীয় শরীর হইতে অভিন্ন জ্ঞান করিতেন।

সর্পস্যেব শিরোরত্নং নাস্য শক্তিত্রয়ং পরঃ।
স চকর্ষ পরস্মাত্তদয়স্কান্ত ইবায়সম্॥ ৬৩

৬৩ অঃ। সর্পস্য শিরোরত্নম্ ইব অস্য শক্তিত্রয়ং পরঃ ন চকর্ষ সঃ (তু) পরস্মাৎ তৎ অয়স্কান্তঃ আয়সম্ ইব (চকর্ষ)॥

৬৩। সর্পস্য শিরোরত্নমিব অস্য রাজ্ঞঃ শক্তিত্রয়ং পরঃ শত্রুর্ন চকর্ষ। স তু পরস্মাৎ শত্রোস্তৎ শক্তিত্রয়ম্ অয়স্কান্তো মণিবিশেষঃ আয়সং লৌহবিকারমিব চকর্ষ॥

৬৩। তদীয় শত্রুগণ ভুজঙ্গের মস্তকস্থিত মণির ন্যায় তাঁহার প্রভাবজ, মন্ত্রজ ও উৎসাহজ এই শক্তিত্রয় আকর্ষণ করিতে পারে নাই, কিন্তু অয়স্কান্ত মণি যেমন লৌহকে আকর্ষণ করে, তদ্রূপ তিনি শত্রুর শক্তিত্রয় আকর্ষণ করিয়াছিলেন।

বাপীষ্বিব স্রবন্তীষু বনেষূপবনেষ্বিব।
সার্থাঃ স্বৈরং স্বকীয়েষু চেরুর্বেশ্মস্বিবাদ্রিষু॥ ৬৪

৬৪ অঃ। স্রবন্তীষু বাপীষু ইব উপবনেষু ইব বনেষু অদ্রিষু স্বকীয়েষু বেশ্মসু ইব সার্থাঃ স্বৈরং চেরুঃ॥

৬৪। স্রবন্তীষু নদীষু বাপীষু দীর্ঘিকাসু ইব 'বাপী তু দীর্ঘিকা' ইত্যমরঃ। বনেষু অরণ্যেষু উপবনেষু আরামেষু ইব। 'আরামঃ স্যাদুপবনম্, ইত্যমরঃ। অদ্রিষু স্বকীয়েষু বেশ্মসু ইব সার্থা বণিক্প্রভৃতয়ঃ স্বৈরং স্বেচ্ছয়া চেরুশ্চরন্তি স্ম॥

৬৪। অতিথির শাসন সময়ে বণিক্গণ স্রোতস্বতীতে দীর্ঘিকার ন্যায়, নিবিড় অরণ্যে উদ্যানের ন্যায় এবং পর্ব্বতে নিজভবনের ন্যায় স্বেচ্ছানুসারে বিচরণ করিত।

तपो रक्षन् स विघ्नेभ्यस्तस्करेभ्यश्च सम्पदः ।
यथास्वमाश्रमैश्चक्रे वर्णैरपि षडंशभाक् ॥ ६५

६५ अ: । विघ्नेभ्यः तपः तस्करेभ्यः सम्पदः च रक्षन् सः आश्रमैः वर्णैः ( च ) यथास्वं षडंशभाक् चक्रे ॥

६५ । विघ्नेभ्यः तपो रक्षन्, तस्करेभ्यः सम्पदश्च रक्षन्, स राजा आश्रमैः ब्रह्मचर्य्यादिभिः वर्णैरपि ब्राह्मणादिभिश्च यथास्वं स्वमनतिक्रम्य षडंशभाक् चक्रे यथाक्रममाश्रमैस्तपसो वर्णैः सम्पदाञ्च षष्ठांशभाक् कृत इत्यर्थः । षष्ठोऽंशः षडंशः संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमुक्तं प्राक् ॥

৬৫ । তিনি বিঘ্ন হইতে তপস্যা ও তস্কর হইতে ধনরক্ষা করিতেন এবং ইহার পরিবর্ত্তে ব্রহ্মচর্য্যাদি আশ্রমচতুষ্টয়ে স্থিত ব্রাহ্মণাদি বর্ণচতুষ্টয়ের নিকট যথাযোগ্য তাঁহাদিগের উপার্জ্জিত তপস্যা ও শস্যাদি সম্পদের ষষ্ঠাংশ কররূপে গ্রহণ করিতেন ।

खनिभिः सुषुवे रत्नं क्षेत्रैः शस्यं वनैर्गजान् ।
दिदेश वेतनं तस्मै रक्षासदृशमेव भूः ॥ ६६

६६ अ: । भूः तस्मै रक्षासदृशम् एव वेतनं दिदेश, खनिभिः रत्नं क्षेत्रैः शस्यं वनैः गजान् सुषुवे ॥

६६ । भूर्भूमिः तस्मै राज्ञे रक्षासदृशं रक्षणानुरूपमेव वेतनं भृतिं दिदेश ददौ । कथम् ? खनिभिः आकरैः । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । रत्नं माणिक्यादिकं सुषुवे अजीजनत्, क्षेत्रैः शस्यं, वनैर्गजान् हस्तिनः सुषुवे ॥

৬৬ । তৎকালে বসুধা আকরসকলে রত্ন, ক্ষেত্রসমূহে শস্য এবং বননিচয়ে হস্তী উৎপন্ন করিয়া তাঁহার রক্ষণকার্য্যের অনুরূপ বেতন প্রদান করিত ।

स गुणानां बलानाञ्च षण्णां षण्मुखविक्रमः ।
बभूव विनियोगज्ञः साधनीयेषु वस्तुषु ॥ ६७

६७ अ: । षण्मुखविक्रमः सः षण्णां गुणानां बलानां च साधनीयेषु वस्तुषु विनियोगज्ञः बभूव ।

६७ । षण्मुखविक्रमः स राजा षण्णां गुणानां सन्धिविग्रहादीनां बलानां मूलभृत्यादीनाञ्च साधनीयेषु वस्तुषु साध्येषु अर्थेषु, विनियोगं जानातीति, विनियोगस्य ज्ञ इति वा, विनियोगज्ञः, कर्म्मविवक्षायाम् उपपदसमासः, 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । शेषविवक्षायां षष्ठीसमासः, 'इगुपध'—इत्यादिना कप्रत्ययः । बभूव । 'इदमत्र प्रयोक्तव्यम्' इत्यादि अज्ञासीदित्यर्थः ॥

৬৭। কার্ত্তিকেয়তুল্য পরাক্রমশালী বিনিয়োগবিৎ অতিথি সন্ধিবিগ্রহাদি ছয় গুণ এবং মূল ভৃত্যাদি ছয় বল এই উভয়ের যথোপযুক্ত স্থানেই নিয়োগ করিতেন।

इति क्रमात् प्रयुञ्जानो राजनीतिं चतुर्विधाम्।
आतीर्थादप्रतीघातं स तस्याः फलमानशे ॥ ६८

६८ अ:। इति चतुर्विधां राजनीतिं क्रमात् प्रयुञ्जानः सः आतीर्थात् तस्याः फलम् अप्रतीघातम् आनशे ॥

६८। इति चतुर्विधां, सामाद्युपायैरिति शेषः। राजनीतिं दण्डनीतिं क्रमात् सामादिक्रमादेव प्रयुञ्जानः, स राजा आतीर्थात् मन्त्राद्यष्टादशात्मकतीर्थपर्य्यन्तम्। 'योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि। पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यात् इति हलायुधः तस्याः नीतेः फलम् अप्रतीघातम् अप्रतिबन्धं यथा तथा आनशे प्राप्तवान्। मन्त्रादिषु समुद्दिश्य य उपायः प्रयुज्यते स तस्य फलति इत्यर्थः ॥

৬৮। নৃপতি অতিথি এইরূপে চতুর্ব্বিধ রাজনীতি যথাক্রমে প্রয়োগ করিয়া মন্ত্রাদি অষ্টাদশ বিষয়ে বিনা বাধায় ফললাভ করিয়াছিলেন।

कूटयुद्धविधिज्ञेऽपि तस्मिन् सन्मार्गयोधिनि।
भेजेऽभिसारिकावृत्तिं जयश्रीर्वीरगामिनी ॥ ६९

६९ अ:। कूटयुद्धविधिज्ञे अपि सन्मार्गयोधिनि तस्मिन् वीरगामिनी जयश्रीः अभिसारिकावृत्तिं भेजे ॥

६९। कूटयुद्धविधिज्ञेऽपि कपटयुद्धप्रकाराभिज्ञेऽपि सन्मार्गेण योधिनि धर्म्मयोद्धरि तस्मिन् अतिथौ वीरगामिनी जयश्रीः अभिसारिकावृत्तिं भेजे। 'कान्तार्थिनी तु या याति सङ्केतं साभिसारिका' इत्यमरः। जयश्रीः तमन्विष्य आगच्छदित्यर्थः ॥

৬৯। তিনি কপটযুদ্ধপ্রণালী জানিলেও ন্যায়যুদ্ধ করিতেন এবং বীরপুরুষগামিনী জয়শ্রী অভিসারিকাবৃত্তি অবলম্বন করিয়া যেন তাঁহার সমীপে আগমন করিতেন।

प्रायः प्रतापभग्नत्वादरीणां तस्य दुर्लभः।
रणो गन्धद्विपस्येव गन्धभिन्नान्यदन्तिनः ॥ ७०

७० अ:। अरीणां प्रतापभग्नत्वात् तस्य गन्धभिन्नान्यदन्तिनः गन्धद्विपस्य इव प्रायः रणः दुर्लभः ॥

७०। अरीणां सर्वेषामपि प्रतापेन अतितेजसा एव भग्नत्वात् तस्य राज्ञः, गन्धेन मदगन्धेन एव भिन्ना भग्ना अन्ये दन्तिनो येन तस्य

गन्धद्विपस्य इव प्रायः प्रायेण रणो दुर्लभः। खलर्थं योगेऽपि शेषविवक्षायां षष्ठीमिच्छन्ति इत्युक्तम्॥

৭০। মদস্রাবী মাতঙ্গের মদগন্ধে যেমন গন্ধহীন অন্য হস্তী ভগ্নোৎসাহ হইয়া পরাঙ্মুখ হয়, তদ্রূপ বিক্রমদ্বারা ভগ্নসাহস শত্রুগণের ইঁহার সহিত যুদ্ধ সুদুর্লভ হইয়াছিল।

प्रवृद्धौ हीयते चन्द्रः समुद्रोऽपि तथाविधः।
स तु तत्समवृद्धिश्च न चाभूत्ताविव क्षयी॥ ৭১

৭১ অ:। प्रवृद्धौ (सत्यां) चन्द्रः हीयते, समुद्रः अपि तथाविधः, सः तु तत्सम-वृद्धिः च, तौ इव क्षयी न अभूत्॥

৭১। प्रवृद्धौ सत्यां चन्द्रो हीयते। समुद्रोऽपि तथाविधः चन्द्रवदेव प्रवृद्धो हीयते। 'प्रवृद्धः' इति वा पाठः। स राजा तु ताभ्यां चन्द्रसमुद्राभ्यां समा वृद्धिर्यस्य सः तत्समवृद्धिश्च अभूत्। तौ चन्द्रसमुद्रौ इव क्षयी, 'जिदृक्षि' इत्यादिना इनिप्रत्ययः। न अभूत्॥

৭১। রাজা অতিথি চন্দ্র ও সমুদ্রের ন্যায় বৃদ্ধিপ্রাপ্ত হইতেন, কিন্তু বৃদ্ধির আতি-শয্যানিবন্ধন চন্দ্র ও সমুদ্র যেমন ক্ষয়প্রাপ্ত হইয়া থাকে, তিনি তাঁহাদিগের ন্যায় কদাচ ক্ষীণতা প্রাপ্ত হন নাই।

सन्तस्तस्याभिगमनादत्यर्थं महतः कृशाः।
उदधेरिव जीमूताः प्रापुर्दातृत्वमर्थिनः॥ ৭২

৭২ অ:। अत्यर्थं कृशाः (अतएव) अर्थिनः सन्तः महतः तस्य अभिगमनात् उदधेः (अभिगमनात्) जीमूताः इव दातृत्वं प्रापुः॥

৭২। अत्यर्थं कृशा दरिद्रा अतएव अर्थिनो याचनशीलाः सन्तो विद्वांसः महतः तस्य राज्ञः अभिगमनात् उदधेः अभिगमनात् जीमूता इव दातृत्वं प्रापुः। अर्थिषु दानभोगपर्य्याप्तं धनं प्रयच्छतीत्यर्थः

৭২। মেঘ যেমন জলধি হইতে জলগ্রহণ করিয়া তাহা পুনরায় বর্ষণ করে, তদ্রূপ দরিদ্র সাধু অর্থিগণ সেই সদাশয় অতিথির নিকট প্রার্থনাতিরিক্ত অর্থ প্রাপ্ত হইয়া তাহা দান দ্বারা আপনারা দাতা নামে খ্যাত হইয়াছিলেন।

स्तूयमानः स जिह्राय स्तुत्यमेव समाचरन्।
तथापि ववृधे तस्य तत्कारिद्वेषिणो यशः॥ ৭৩

৭৩ অ:। सः स्तुत्यम् एव समाचरन् (अतएव) स्तूयमानः (सन्) जिह्राय, तथापि तत्कारिद्वेषिणः तस्य यशः ववृधे॥

७३। स राजा स्तुत्यं स्तोत्राहमेव यत् तदेव समाचरम् अतएव स्तूयमानः सन् जिह्राय ललज्ज। तथापि ह्रीपालेऽपि तत्कारिणः स्तोत्रकारिणो इष्टेति तत्कारिहेविणः तस्य राज्ञो यशो ववृधे। गुणाढ्यस्य सतः पुंसः स्तुतौ लज्जैव भूषणम् इति भावः॥

१३। তিনি স্তুতিবাদের উপযুক্তকার্য্য করিতেন, কিন্তু কেহ প্রশংসা করিলে সাতিশয় লজ্জিত হইতেন; তথাপি স্তাবকবিদ্বিষ্ট অতিথির যশ সর্ব্বত্র পরিব্যাপ্ত হইয়াছিল।

दुरितं दर्शनेन घ्नन् तत्त्वार्थेन नुदंस्तमः।
प्रजाः स्वतन्त्रयाञ्चक्रे शश्वत् सूर्य्य इवोदितः॥ ७४

७४ अः। (सः) उदितः सूर्य्यः इव दर्शनेन दुरितं घ्नन् तत्वार्थेन तमः नुदन् शश्वत् प्रजाः स्वतन्त्रयाञ्चक्रे॥

७४। स राजा उदितः सूर्य्य इव दर्शनेन दुरितं घ्नन् निवर्त्तयन्। तथाच स्मर्य्यते –"अग्निचित् कपिला सती राजा भिक्षुर्महोदधिः। दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः॥" इति। तत्त्वस्य वस्तुतत्त्वस्य अर्थेन समर्थनेन प्रकाशेन च तमोऽज्ञानं ध्वान्तञ्च नुदन् शश्वत् प्रजाः स्वतन्त्रयाञ्चक्रे स्वाधीनाश्चकार॥

१४। তিনি সমুদিত সূর্য্যের ন্যায় দর্শনদানে প্রজাগণের পাপক্ষয় করিতেন এবং বস্তুতত্ত্বের প্রকাশদ্বারা তাহাদিগের অজ্ঞানান্ধকার দূর করিতেন; এইরূপে অতিথি প্রজাগণকে স্বায়ত্তে আনয়ন করিয়াছিলেন।

इन्दोरगतयः पद्मे सूर्य्यस्य कुमुदेंऽशवः।
गुणास्तस्य विपक्षेऽपि गुणिनो लेभिरेऽन्तरम्॥ ७५

७५ अः। इन्दोः अंशवः पद्मे अगतयः सूर्य्यस्य (अंशवः) कुमुदे (अगतयः) गुणिनः तस्य गुणाः विपक्षे अपि अन्तरं लेभिरे॥

७५। इन्दोः अंशवः पद्मे अगतयः प्रवेशरहिता इत्यर्थः। सूर्य्यस्य अंशवः कुमुदे अगतयः, गुणिनः तस्य गुणास्तु विपक्षे शत्रौ अपि अन्तरम् अवकाशं लेभिरे प्रापुः॥

पराभिसन्धानपरं यद्यप्यस्य विचेष्टितम्।
जिगीषोरश्वमेधाय धर्म्यमेव बभूव तत्॥ ७६

७६ अः। अश्वमेधाय जिगीषोः अस्य विचेष्टितं यद्यपि पराभिसन्धानपरं, (तथापि) तत् धर्म्यम् एव बभूव॥

৩৬। অশ্বমেধায় জিগীষোঃ অস্য বিচেষ্টিতং দিগ্বিজয়রূপং যদ্যপি পরাভিসন্ধানপরং শত্রুবঞ্চনপ্রধানং তথাপি তৎ ধর্ম্ম্যং ধর্মাদনপেতমেব। 'ধর্ম-পথ্যর্থন্যায়াদনপেতে' ইতি যৎ প্রত্যয়ঃ। বভূব। 'মন্ত্রপ্রভাবোৎসাহ-শক্তিভিঃ পরান্ সন্দধ্যাৎ' ইতি কৌটিল্যঃ।

৭৫—৭৬। কমলে চন্দ্রকিরণের গতি নাই এবং কুমুদেও দিবাকরকিরণ প্রবেশ করে না; কিন্তু গুণশালী রাজা অতিথির গুণনিচয় কি স্বপক্ষ কি বিপক্ষ সর্ব্বত্রই অবাধে প্রবেশলাভ করিত; এমন কি, অশ্বমেধের জন্য দিগ্বিজয়াভিলাষী মহীপতির শত্রুপীড়নও ধর্ম্মসঙ্গত হইয়াছিল।

এবমুদ্যন্ প্রভাবেণ শাস্ত্রনির্দ্দিষ্টবর্ত্মনা।
বৃষেব দেবো দেবানাং রাজ্ঞাং রাজা বভূব সঃ॥ ৩৭

৩৭ অঃ। এবং শাস্ত্রনির্দ্দিষ্টবর্ত্মনা প্রভাবেণ উদ্যন্ সঃ বৃষা দেবানাং দেবঃ ইব রাজ্ঞাং রাজা বভূব।

৩৭। এবং শাস্ত্রনির্দ্দিষ্টবর্ত্মনা শাস্ত্রোপদিষ্টমার্গেণ প্রভাবেণ কোশ-দণ্ডজেন তেজসা। 'স প্রভাবঃ প্রতাপশ্চ যত্তেজঃ কোশদণ্ডজম্' ইত্যমরঃ। উদ্যন্ উদ্যুঞ্জানঃ সঃ বৃষা বাসবো দেবানাং দেবো দেবদেব ইব রাজ্ঞাং রাজা রাজরাজো বভূব॥

৭৭। ইন্দ্র যেমন দেবগণের দেব, তদ্রূপ নৃপতি অতিথি বিধিবোধিত পথে প্রবর্ত্তিত থাকিয়া স্বীয় প্রভাবদ্বারা রাজগণের ও রাজা হইয়াছিলেন।

পঞ্চমং লোকপালানামূচুঃ সাধর্ম্ম্যযোগতঃ।
ভূতানাং মহতাং ষষ্ঠমষ্টমং কুলভূভৃতাম্॥ ৩৮

৩৮ অঃ। (তং) সাধর্ম্ম্যযোগতঃ লোকপালানাং পঞ্চমং মহতাং ভূতানাং ষষ্ঠং কুল-ভূভৃতাম্ অষ্টমম্ ঊচুঃ॥

৩৮। তং রাজানমিতি শেষঃ। সাধর্ম্ম্যযোগতঃ যথাক্রমং লোকসংরক্ষণ-পরোপকারভূধারণরূপসমানধর্ম্মত্ববলাৎ লোকপালানাং ইন্দ্রাদীনাং চতুর্ণাং পঞ্চমম্ ঊচুঃ। মহতাং ভূতানাং পৃথিব্যাদীনাং পঞ্চানাং ষষ্ঠম্ ঊচুঃ। কুলভূভৃতাং কুলাচলানাং মহেন্দ্রমলয়াদীনাং সপ্তানাম্ অষ্টমম্ ঊচুঃ॥

৭৮। সমান গুণবত্তাহেতু তাঁহাকে লোকে ইন্দ্রাদি চতুর্লোকপালের পঞ্চম, পৃথিবী আদি পঞ্চভূতের ষষ্ঠ এবং মহেন্দ্র মলয়াদি সপ্তকুলাচলের অষ্টম বলিয়া নির্দ্দেশ করিত।

দূরাপবর্জিতচ্ছত্রৈস্তস্যাজ্ঞাং শাসনার্পিতাম্।
দধুঃ শিরোভির্ভূপালা দেবাঃ পৌরন্দরীমিব॥ ৩৯

७६ अ:। भूपाला: शासनार्पितां तस्य आज्ञां देवा: पौरन्दरीम् ( आज्ञाम् ) इव दूरापवर्जितच्छत्रै: शिरोभि: दधु: ॥

७८। भूपाला: शासनेषु अर्पिताम् उपन्यस्तां तस्य राज्ञ आज्ञां देवाः पौरन्दरीम् ऐन्द्रीम् आज्ञाम् इव दूरापवर्जितच्छत्रैः दूरात् परिहृतातपत्रैः शिरोभिः दधुः ॥

৭৯। সুরগণ যেরূপ সুররাজ পুরন্দরের আজ্ঞাপালন করেন, তদ্রূপ রাজগণ— দূর হইতে মস্তকস্থিত আতপত্র পরিত্যাগপূর্ব্বক ছত্রহীন মস্তকে তাঁহার আজ্ঞা-প্রতিপালন করিতেন।

ऋत्विजः स तथानर्च्च दक्षिणाभिर्महाक्रतौ ।
यथा साधारणीभूतं नामास्य धनदस्य च ॥ ८०

८० अ:। स: महाक्रतौ ऋत्विज: दक्षिणाभि: तथा आनर्च्च, यथा अस्य धनदस्य च नाम साधारणीभूतम् ॥

८०। स राजा महाक्रतौ अश्वमेधे ऋत्विजो याजकान् दक्षिणाभिः तथा आनर्च्च अर्च्चयामास । अर्च्चते: भौवादिकात् लिट्। यथा अस्य राज्ञो धनदस्य च नाम साधारणीभूतम् एकीभूतम् । उभयोरपि धनदसंज्ञा यथा स्यात् तथेत्यर्थ: ॥

৮০। তিনি অশ্বমেধযজ্ঞে যাজ্ঞিকগণকে এতই প্রচুর দক্ষিণাদান করিয়াছিলেন যে, তৎকালে তিনিও কুবেরের তুল্য বিখ্যাত হইয়াছিলেন।

इन्द्राद्वृष्टिर्नियमितगदोद्रेकवृत्तिर्यमोऽभूत्
यादोनाथः शिवजलपथः कर्म्मणे नौचराणाम् ।
पूर्वापेक्षी तदनु विदधे कोषवृद्धिं कुवेर-
स्तस्मिन् दण्डोपनतचरितं भेजिरे लोकपालाः ॥ ८१

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ अतिथिचरितवर्णनो
नाम सप्तदश: सर्ग: ।॥ १७

८१ अ:। इन्द्रात् वृष्टि: अभूत्, यम: नियमितगदोद्रेकवृत्ति: ( अभूत् ) यादोनाथ: नौचराणां कर्म्मणे शिवजलपथ: ( अभूत् ) तदनु पूर्वापेक्षी कुवेर: कोषवृद्धिं विदधे, ( इत्थं ) लोकपाला: तस्मिन् ( विषये ) दण्डोपनतचरितं भेजिरे ॥

८१। इन्द्रात् वृष्टिरभूत्, यमो नियमिता निवारिता गदस्य रोगस्य उद्रेक एव वृत्तिर्येन स: अभूत्। यादोनाथो वरुणो नौचराणां नाविकानां

কর্ম্মণে সঞ্চারায় শিবজলপথঃ সুচরজলমার্গঃ অভূৎ । তদনু পূর্ব্বাপেক্ষী রঘুরামাদিমহিমাভিজ্ঞঃ কুবেরঃ কোষবৃদ্ধিং বিদধে । ইত্থং লোকপালাঃ তস্মিন্ রাজ্ঞি বিষয়ে দণ্ডোপনতস্য শরণাগতস্য চরিতং বৃত্তিং ভেজিরে । "দুর্ব্বলো বলবৎসেবী বিরুদ্ধাচ্ছঙ্কিতাদিভিঃ । বর্ত্তেত দণ্ডোপনতো ভর্ত্তর্য্যেব-মবস্থিতঃ ॥" ইতি কৌটিল্যঃ ॥

ইতি শ্রীমহামহোপাধ্যায়-কোলাচল-মল্লিনাথ-সূরিবিরচিতয়া সঞ্জীবনী-সমাখ্যয়া ব্যাখ্যয়া সমেতো—মহাকবিশ্রীকালিদাসকৃতৌ রঘুবংশে মহাকাব্যে অতিথিচরিতবর্ণনো নাম সপ্তদশঃ সর্গঃ ॥ ১৭

৮১। দেবরাজ ইন্দ্র তাঁহার রাজ্যে প্রচুর বারিবর্ষণ, যমরাজ পীড়ার উদ্রেক নিবারণ এবং জলাধিপতি বরুণ নৌকাবিহারিগণের সুখসঞ্চরণ জন্য জলপথ নিরাপদ্ করিতেন। কুবের রঘুপ্রভৃতি পূর্ব্বতন মহাবীর রাজগণের মহিমা স্মরণ করিয়া তাঁহার কোষাগার পূর্ণ রাখিতেন; এইরূপে লোকপালগণ শরণাগতের ন্যায় তাঁহার কার্য্য করিয়াছিলেন।

সপ্তদশ সর্গ সমাপ্ত ॥ ১৭

# अष्टादशः सर्गः ।

स नैषधस्यार्थपतेः सुतायामुत्पादयामास निषिद्धशत्रुः ।
अनूनसारं निषधान्नगेन्द्रात् पुत्रं यमाहुर्निषधाख्यमेव ॥ १

१ अ: । निषिद्धशत्रुः सः नैषधस्य अर्थपतेः सुतायां निषधात् नगेन्द्रात् अनूनसारं पुत्रम् उत्पादयामास, यं निषधाख्यम् एव आहुः ।

यत्पादपांशुसम्पर्कादहल्याऽसीदपांशुला ।
कारुण्यसिन्धवे तस्मै नमो वैदेहिबन्धवे ॥

१ । निषिद्धशत्रुः निवारितरिपुः सः अतिथिः नैषधस्य निषधदेशाधीश्वरस्य अर्थपतेः राज्ञः सुतायां निषधात् निषधाख्यात् नगेन्द्रात् पर्वतात् अनूनसारम् अन्यूनबलं पुत्रम् उत्पादयामास । यं पुत्रं निषधाख्यं निषधनामकम् एव आहुः ॥

১। শত্রুবিজয়ী নৃপতি অতিথি, নিষধপতি অর্থপতির তনয়ার গর্ভে নগরাজ নিষধের তুল্য সারবান্ "নিষধ" নামে এক পুত্র উৎপাদন করেন।

तेनोरुवीर्य्येण पिता प्रजायै कल्पिष्यमाणेन ननन्द यूना ।
सुवृष्टियोगादिव जीवलोकः शस्येन सम्पत्तिफलोन्मुखेन ॥२

२ अ: । सुवृष्टियोगात् सम्पत्तिफलोन्मुखेन शस्येन जीवलोकः इव उरुवीर्य्येण (अतएव) प्रजायै कल्पिष्यमाणेन तेन यूना पिता ननन्द ॥

२ । उरुवीर्य्येण अतिपराक्रमेण अतएव प्रजायै लोकरक्षणार्थं कल्पिष्यमाणेन तेन यूना निषधेन पिता अतिथिः सुवृष्टियोगात् सम्पत्तिफलोन्मुखेन शस्येन जीवलोक इव ननन्द जहर्ष ॥

২। সুবৃষ্টিবর্ষণে শস্যসকল ফলোন্মুখ হইলে জীবলোক যেরূপ সন্তোষ লাভ করে, তদ্রূপ অতিথি প্রভূতপরাক্রমশালী যুবা নিষধকে প্রজারক্ষণজন্য নিযুক্ত করিবেন এইরূপ নিশ্চয় করিয়া আহ্লাদিত হইলেন।

शब्दादिनिर्विश्य सुखं चिराय
तस्मिन् प्रतिष्ठापितराजशब्दः ।
कौमुद्वतेयः कुमुदावदातै-
र्द्यामर्जितां कर्मभिरारुरोह ॥ ३

১ অঃ। কৌমুদ্বতেয়ঃ শব্দাদিসুখং নির্বিশ্য চিরায় তস্মিন্ প্রতিষ্ঠাপিতরাজশব্দঃ (সন্) কুমুদাবদাতৈঃ কর্ম্মভিঃ অর্জ্জিতাং দ্যাম্ আরুরোহ ॥

২। কুমুদ্বত্যা অপত্যং পুমান্ কৌমুদ্বতেয়ঃ অতিথিঃ শব্দাদি শব্দস্পর্শাদি সুখং সুখসাধনং বিষয়বর্গং নির্বিশ্য উপভুজ্য চিরায় তস্মিন্ নিষধাখ্যে পুত্রে প্রতিষ্ঠাপিতরাজশব্দো দত্তরাজ্যঃ সন্ কুমুদাবদাতৈঃ নির্ম্মলৈঃ কর্ম্মভিঃ অশ্বমেধাদিভিঃ অর্জ্জিতাং সম্পাদিতাং দ্যাং স্বর্গম্ আরুরোহ ॥

৩। অনন্তর কুমুদ্বতীতনয় অতিথি সুখসাধন শব্দস্পর্শাদি বিষয়সুখ উপভোগ করিয়া স্বীয় তনয় নিষধের প্রতি রাজ্যভার অর্পণপূর্ব্বক অশ্বমেধাদি বিশুদ্ধ কর্ম্মলব্ধ স্বর্গধামে গমন করিলেন।

**পৌত্রঃ কুশস্যাপি কুশেশয়াক্ষঃ সসাগরাং সাগরধীরচেতাঃ।**
**একাতপত্রাং ভুবমেকবীরঃ পুরার্গলাদীর্ঘভুজো বুভোজ ॥ ৪**

৪ অঃ॥ কুশেশয়াক্ষঃ সাগরধীরচেতাঃ একবীরঃ পুরার্গলাদীর্ঘভুজঃ কুশস্য পৌত্রঃ অপি সসাগরাম্ একাতপত্রাং ভুবং বুভোজ ॥

৪। কুশেশয়াক্ষঃ শতপত্রলোচনঃ। 'শতপত্রং কুশেশয়ম্' ইত্যমরঃ। সাগরধীরচেতাঃ সমুদ্রগম্ভীরচিত্তঃ একবীরঃ অসহায়শূরঃ পুরস্য অর্গলা কপাটবিষ্কম্ভঃ, 'তদ্বিষ্কম্ভোঽর্গলং ন না' ইত্যমরঃ। তদ্বদ্দীর্ঘভুজঃ কুশস্য পৌত্রো নিষধোঽপি সসাগরাম্ একাতপত্রাং ভুবং বুভোজ পালয়ামাস। 'ভুজোঽনবনে' ইত্যুক্তেঃ পরস্মৈপদম্ ॥

৪। পদ্মপলাশলোচন সাগরতুল্য ধীরচিত্ত পুরদ্বারের অর্গলের ন্যায় সুদীর্ঘবাহু অদ্বিতীয় বীর কুশপৌত্র নিষধও একচ্ছত্রা সসাগরা ধরিত্রীকে পালন করিতে লাগিলেন।

**তস্যানলৌজাস্তনয়স্তদন্তে বংশশ্রিয়ং প্রাপ নলাভিধানঃ।**
**যো নড্বলানীব গজঃ পরেষাং বলান্যমৃদ্নান্নলিনাভবক্ত্রঃ ॥৫**

৫ অঃ। অনলৌজাঃ নলাভিধানঃ তস্য তনয়ঃ তদন্তে বংশশ্রিয়ং প্রাপ। নলিনাভবক্ত্রঃ যঃ গজঃ নড্বলানি ইব, পরেষাং বলানি অমৃদ্নাৎ ॥

৫। অনলৌজাঃ নলাভিধানো নলাখ্যস্তস্য নিষধস্য তনয়ঃ তস্য নিষধস্য অন্তে অবসানে বংশশ্রিয়ং রাজ্যলক্ষ্মীং প্রাপ। নলিনাভবক্ত্রো যো নলঃ গজো নড্বলানি নড়প্রায়স্থলানি ইব 'নড়শাদাড্ড্বলচ্' ইতি ড্বলচ্প্রত্যয়ঃ। পরেষাং বলানি অমৃদ্নাৎ মমর্দ ॥

৫। অনন্তর কালবশে নৃপতি নিষধের পরলোকপ্রাপ্তি ঘটিলে তৎপুত্র অনল-

প্রভ "নল" রাজলক্ষ্মী লাভ করিলেন ; গজরাজ যেরূপ নলবন ভগ্ন করে, অরবিন্দবদন নলও তদ্রূপ রিপুদল বিমর্দ্দিত করিয়াছিলেন ।

নভশ্চরৈর্গীতযশাঃ স লেভে
নভস্তলশ্যামতনুং তনূজম্ ।
খ্যাতং নভঃ শব্দময়েন নাম্না
কান্তং নভোমাসমিব প্রজানাম্ ॥ ৬

৬ অঃ। নভশ্চরৈঃ গীতযশাঃ সঃ নভস্তলশ্যামতনুং নভঃশব্দময়েন নাম্না খ্যাতং নভোমাসম্ ইব প্রজানাং কান্তং তনূজং লেভে ॥

৬। নভশ্চরৈঃ গন্ধর্বাদিভিঃ গীতযশাঃ সঃ নলঃ নভস্তলশ্যামতনুং নভঃশব্দময়েন নাম্না আখ্যাতম্ নভঃশব্দসংজ্ঞকমিত্যর্থঃ। নভোমাসমিব শ্রাবণমাসমিব প্রজানাং কান্তং প্রিয়ং তনূজং পুত্রং লেভে ॥

৬। তৎকালে বিমানবিহারী গন্ধর্ব্বগণ নরপতি নিষধের কীর্ত্তিগাথা কীর্ত্তন করিতে লাগিল, তিনি আকাশতুল্য শ্যামল কলেবর এক তনয় লাভ করিলেন ; আকাশের শব্দময় নাম হইতে নিষধতনয় "নাভ" নামে বিখ্যাত হইলেন এবং ঐ তনয়ও শ্রাবণ-মাসের বারিধারার ন্যায় প্রজাগণের অতীব প্রিয়সাধন করিয়াছিলেন ।

তস্মৈ বিসৃজ্যোত্তরকোশলানাং ধর্মোত্তরস্তৎ প্রভবে প্রভুত্বম্ ।
মৃগৈরজর্য্যং জরসোপদিষ্টমদেহবন্ধায় পুনর্ববন্ধ ॥ ৭

৭ অঃ। ধর্ম্মোত্তরঃ প্রভবে তস্মৈ তৎ উত্তরকোশলানাং প্রভুত্বম্ বিসৃজ্য জরসা উপদিষ্টং মৃগৈঃ অজর্য্যং পুনঃ অদেহবন্ধায় ববন্ধ ॥

৭। ধর্মোত্তরো ধর্ম্মপ্রধানঃ স নলঃ প্রভবে সমর্থায় তস্মৈ নভসে তদুত্তর-কোশলানাং প্রভুত্বম্ আধিপত্যং বিসৃজ্য দত্ত্বা জরসা জরয়া উপদিষ্টং বার্দ্ধকে বিধোচিতমিত্যর্থঃ। মৃগৈঃ অজর্য্যং তৈঃ সহ সঙ্গতম্। 'অজর্য্যং সঙ্গতম্' ইতি নিপাতঃ। পুনরদেহবন্ধায় পুনর্দেহসম্বন্ধনিবৃত্তয়ে ববন্ধ। মোক্ষার্থং বনং গত ইত্যর্থঃ। অদেহবন্ধায়েত্যত্র প্রসজ্যপ্রতিষেধেঽপি নঞ্ সমাস ইষ্যতে ॥

৭। ধর্ম্মশীল নরপতি নল সুযোগ্য তনয়ের হস্তে অযোধ্যার আধিপত্য ন্যস্ত করিয়া মুক্তিলাভ কামনায় বৃদ্ধকালোচিত বনবাস আশ্রয়পূর্ব্বক মৃগগণসহ বিচরণ করিতে লাগিলেন ।

তেন দ্বিপানামিব পুণ্ডরীকো
রাজ্ঞামজয্যোঽজনি পুণ্ডরীকঃ ।

**শান্তে পিতর্য্যাহৃতপুণ্ডরীকা**
**যং পুণ্ডরীকাক্ষমিব শ্রিতা শ্রীঃ ॥ ৮**

৮ অঃ। তেন দ্বিপানাং পুণ্ডরীকঃ ইব রাজ্ঞাম্ অজয্যঃ পুণ্ডরীকঃ (পুত্রঃ) অজনি, পিতরি শান্তে ( সতি ) আহৃতপুণ্ডরীকা শ্রীঃ পুণ্ডরীকাক্ষম্ ইব শ্রিতা ॥

৮। তেন নভসা দ্বিপানাং পুণ্ডরীকো দিগ্গজবিশেষ ইব রাজ্ঞাম্ অজয্যো জেতুম্ অশক্যঃ। 'ক্ষয্যজয্যৌ শক্যার্থে' ইতি নিপাতনাৎ সাধুঃ। পুণ্ডরীকঃ পুণ্ডরীকাখ্যঃ পুত্রঃ অজনি জনিতঃ। পিতরি শান্তে স্বর্গতে সতি আহৃতপুণ্ডরীকা গৃহীতশ্বেতপদ্মা শ্রীঃ যং পুণ্ডরীকং পুণ্ডরীকাক্ষং বিষ্ণুম্ ইব শ্রিতা ॥

৮। নৃপতি নাভ দিগ্গজগণের মধ্যে পুণ্ডরীকের ন্যায় রাজগণের অজেয় "পুণ্ডরীক" নামক এক তনয় উৎপাদন করিলেন; পিতা নাভ স্বর্গারোহণ করিলে শ্বেতকমলকরা দেবী লক্ষ্মী যেরূপ বিষ্ণুকে আশ্রয় করেন, তদ্রূপ রাজলক্ষ্মী পুণ্ডরীকনয়ন পুণ্ডরীককে আশ্রয় করিলেন।

**স ক্ষেমধন্বানমমোঘধন্বা পুত্রং প্রজাক্ষেমবিধানদক্ষম্ ।**
**ক্ষমাং লম্ভয়িত্বা ক্ষময়োপপন্নং বনে তপঃ ক্ষান্ততরশ্চচার ॥ ৯**

৯ অঃ। অমোঘধন্বা সঃ প্রজাক্ষেমবিধানদক্ষং ক্ষময়া উপপন্নং ক্ষেমধন্বানং পুত্রং ক্ষমাং লম্ভয়িত্বা ক্ষান্ততরঃ ( সন্ ) বনে তপঃ চচার ॥

৯। অমোঘং ধনুর্যস্য সঃ অমোঘধন্বা। 'ধনুষশ্চ' ইত্যনঙাদেশঃ সমাসান্তঃ। স পুণ্ডরীকঃ প্রজানাং ক্ষেমবিধানে দক্ষং ক্ষময়োপপন্নং ক্ষান্তিযুক্তং ক্ষেমং ধনুর্যস্য তং ক্ষেমধন্বানং নাম পুত্রম্। 'বা সংজ্ঞায়াম্' ইত্যনঙাদেশঃ। ক্ষমাং লম্ভয়িত্বা প্রাপয্য। লভের্গত্যর্থত্বাৎ দ্বিকর্ম্মকত্বম্। ক্ষান্ততরঃ অত্যন্তসহিষ্ণুঃ সন্ বনে তপশ্চচার ॥

৯। অব্যর্থকার্ম্মুক পুণ্ডরীক প্রজাগণের হিতসাধনে নিয়ত ক্ষমাশীল "ক্ষেমধন্বা" নামক তনয়ের হস্তে রাজ্যভার ন্যস্ত করিয়া ক্ষান্তিগুণ অবলম্বনপূর্ব্বক বনে গমন করতঃ তপস্যাচরণ করিতে লাগিলেন।

**অনীকিনীনাং সমরেঽগ্রযায়ী তস্যাপি দেবপ্রতিমঃ সুতোঽভূৎ**
**ব্যশ্রূয়তানীকপদাবসানং দেবাদি নাম ত্রিদিবেঽপি যস্য ॥ ১০**

১০ অঃ। তস্য অপি সমরে অনীকিনীনাম্ অগ্রযায়ী দেবপ্রতিমঃ সুতঃ অভূৎ, অনীকপদাবসানং দেবাদি যস্য নাম ( দেবানীকঃ ইতি ) ত্রিদিবে অপি অশ্রূয়ত ॥

১০। তস্য ক্ষেমধন্বনঃ অপি সমরে অনীকিনীনাং চমূনাম্ অগ্রযায়ী

देवप्रतिम इन्द्रादिकल्पः सुतः अभूत्। अनीकपदावसानम् अनीकशब्दान्तं देवादि देवशब्दपूर्वं यस्य नाम देवानीक इति नामधेयं त्रिदिवे स्वर्गे अपि अश्रूयत विश्रुतम् ॥

১০। ভূমিপাল ক্ষেমধন্বার ইন্দ্রতুল্য এক তনয় জন্মে, তাঁহার নাম "দেবানীক" এই দেবানীক সমরে সৈন্যগণের অগ্রগামী হইতেন এবং দেবলোকেও ইহার নাম বিশ্রুত হইত।

**पिता समाराधनतत्परेण पुत्त्रेण पुत्त्री स यथैव तेन ।**
**पुत्त्रस्तथैवात्मजवत्सलेन स तेन पित्रा पितृमान् बभूव ॥११**

११ अः। सः पिता समाराधनतत्परेण तेन पुत्त्रेण यथैव पुत्त्री बभूव, तथैव सः पुत्त्रः आत्मजवत्सलेन तेन पित्रा पितृमान् बभूव ॥

११। स पिता क्षेमधन्वा समाराधनतत्परेण शुश्रूषापरेण तेन पुत्त्रेण यथैव पुत्त्री बभूव, तथैव सः पुत्त्रो देवानीकः आत्मजवत्सलेन तेन पित्रा पितृमान् बभूव। लोके पितृत्वपुत्त्रत्वयोः फलमनयोरेव आसीदित्यर्थः ॥

১১। ক্ষেমধন্বা যেমন পিতৃশুশ্রূষাপরায়ণ দেবানীককে প্রাপ্ত হইয়া পরমসুখী হইয়াছিলেন, তদ্রূপ তনয় দেবানীকও পুত্রবৎসল পিতার স্নেহে আপনাকে পিতৃমান্ বলিয়া মনে করিয়াছিলেন।

**पूर्वस्तयोरात्मसमे चिरोढ़ा-**
**मात्मोद्भवे वर्णचतुष्टयस्य ।**
**धुरं निधायैकनिधिर्गुणानां**
**जगाम यज्वा यजमानलोकम् ॥ १२**

१२ अः। गुणानाम् एकनिधिः यज्वा तयोः पूर्वः आत्मसमे आत्मोद्भवे चिरोढ़ां वर्णचतुष्टयस्य धुरं निधाय यजमानलोकं जगाम ॥

१२। गुणानामेकनिधिर्यज्वा विधिवदिष्टवान्, तयोः पितृपुत्त्रयोर्मध्ये पूर्वः पिता क्षेमधन्वा आत्मसमे स्वतुल्ये आत्मोद्भवे पुत्त्रे देवानीके चिरोढ़ां चिरधृतां वर्णचतुष्टयस्य धुरं रक्षाभारं निधाय यजमानलोकं यष्टृलोकं नाकं जगाम ॥

১২। গুণনিধি যাগশীল ভূমিপতি ক্ষেমধন্বা আত্মতুল্য তনয়ের প্রতি ব্রাহ্মণাদি বর্ণচতুষ্টয়ের চিরধৃত রক্ষাভার অর্পণপূর্ব্বক সুরলোকে প্রস্থান করিলেন।

वशी सुतस्तस्य वशंवदत्वात्
स्वेषामिवासीत् द्विषतामपीष्टः ।
सकृद्विविग्नानपि हि प्रयुक्तं
माधुर्य्यमीष्टे हरिणान् ग्रहीतुम् ॥ १३

१३ अः। तस्य वशी सुतः वशंवदत्वात् स्वेषाम् इव द्विषताम् अपि इष्टः आसीत् हि (तथाहि) प्रयुक्तं माधुर्य्यं सकृत् विविग्नान् अपि हरिणान् ग्रहीतुम् ईष्टे ॥

१३ । तस्य देवानीकस्य वशी समर्थः सुतः अहीनगुर्नामेति वक्ष्यमाणनामकः वशं वशकरं मधुरं वदतीति वशंवदः । 'प्रियवशे वदः खच्' इति खच्प्रत्ययः । तस्य भावस्तत्त्वम् तस्मात् । इष्टवादित्वात् । स्वेषामिव द्विषताम् अपि इष्टः प्रियः आसीत् । अर्थादेव अनीकनिर्द्धारणं लभ्यते । तथाहि—प्रयुक्तमुच्चारितं माधुर्य्यं सकृदेकवारं विविग्नान् भीतान् अपि हरिणान् ग्रहीतुं वशीकर्त्तुम् ईष्टे शक्नोति ॥

১৩। দেবানীকের "অহীনগু" নামে জিতেন্দ্রিয় এক তনয় জন্মগ্রহণ করে, হরিণগণ একবার ভীতিপ্রাপ্ত হইলেও মাধুর্য্যগুণে যেমন পুনরায় বশীভূত হয়, তদ্রূপ তিনিও প্রিয়ংবদতাগুণে স্বজনগণের ন্যায় শত্রুদিগেরও প্রিয়তর হইয়াছিলেন।

अहीनगुर्नाम स गां समग्रामहीनबाहुद्रविणः शशास ।
यो हीनसंसर्गपराङ्मुखत्वात् युवाप्यनर्थैर्व्यसनैर्विहीनः ॥१४

१४ अः। अहीनबाहुद्रविणः हीनसंसर्गपराङ्मुखत्वात् युवा अपि अनर्थैः व्यसनैः विहीनः यः अहीनगुः नाम, सः समग्रां गां शशास ॥

१४ । अहीनबाहुद्रविणः समग्रभुजपराक्रमः । 'द्रविणं काञ्चनं वित्तं द्रविणञ्च पराक्रमः' इति विश्वः । हीनसंसर्गपराङ्मुखत्वात् नीचसंसर्गविमुखत्वात् हेतोः युवा अपि अनर्थैः अनर्थकरैः व्यसनैः पानद्यूतादिभिः विहीनो रहितो योऽहीनगुर्नाम स पूर्वोक्तो देवानीकसुतः समग्रां सर्वां गां भुवं शशास ॥

১৪। ভুজবীর্য্যসম্পন্ন দেবানীকতনয় অহীনগু যুবা হইলেও নীচসংসর্গবিমুখতাহেতু অনর্থকর মদ্যপানাদি কাম-ক্রোধজ ব্যসনবিরক্ত হইয়া সমগ্র পৃথিবীরাজ্য শাসন করিয়াছিলেন।

गुरोः स चानन्तरमन्तरज्ञः पुंसां पुमानाद्य इवावतीर्णः ।
उपक्रमैरस्खलितैश्चतुर्भिश्चतुर्दिगीशश्चतुरो बभूव ॥ १५

१५ अ:। पुंसाम् अन्तरज्ञ: चतुर: स: गुरो: अनन्तरम् अवतीर्ण: आद्य: पुमान् इव अस्खलितै: चतुर्भि: उपक्रमै: चतुर्दिगीश: बभूव॥

१५। पुंसाम् अन्तरज्ञो विशेषज्ञ: चतुरो निपुण: स: अहीनगुश्च गुरो: पितुरनन्तरम् अवतीर्णो भुवं प्राप्त आद्य: पुमान् विष्णुरिव अस्खलितै: अप्रतिहतै: चतुर्भि: उपक्रमै: सामाद्युपायै:। 'सामादिभिरुपक्रमै:' इति मनु:। चतुर्दिगीश: चतसृणां दिशामीशो बभूव॥

১৫। জনক দেবানীকের দেহান্তে মানবগণের বিশেষজ্ঞ অতিনিপুণ অহীনগু বিষ্ণুর ন্যায় চারি অংশে অবনিতলে অবতীর্ণ হইয়া আদিপুরুষ বিষ্ণুর ন্যায় অপ্রতিহত সামাদি উপায় চতুষ্টয় দ্বারা চতুর্দ্দিকের অধীশ্বর হইয়াছিলেন।

तस्मिन् प्रयाते परलोकयात्रां
जेतर्य्यरीणां तनयं तदीयम्।
उच्चै:शिरस्त्वाज्जितपारियात्रं
लक्ष्मी:सिषेवे किल पारियात्रम्॥ १६

१६ अ:। अरीणां जेतरि तस्मिन् परलोकयात्रां प्रयाते (सति) उच्चै:शिरस्त्वात् जितपारियात्रं पारियात्रं तदीयं तनयं लक्ष्मी: सिषेवे किल॥

१६। अरीणां जेतरि तस्मिन् अहीनगौ परलोकयात्रां प्रयाते प्राप्ते सति उच्चै:शिरस्त्वात् उन्नतशिरस्कत्वात् जित: पारियात्र: कुलशैलविशेषो येन तं पारियात्रं पारियात्राख्यं तदीयं तनयं लक्ष्मी: राज्यलक्ष्मी: सिषेवे किल॥

১৬। অনন্তর শক্রজিয়ী অহীনগু স্বর্গে গমন করিলে তদীয় তনয় পারিযাত্র স্বীয় উন্নতমস্তকদ্বারা পারিযাত্র নামক কুলাচলকে অতিক্রম করিলেন এবং রাজলক্ষ্মী তখন তাঁহাকে আশ্রয় করিয়াছিলেন।

तस्याभवत् सूनुरुदारशील:
शिल: शिलापट्टविशालवक्षा:।
जितारिपक्षोऽपि शिलीमुखैर्य:
शालीनतामव्रजदीड्यमान:॥ १७

१७ अ:। तस्य उदारशील: शिलापट्टविशालवक्षा: शिल: सूनु: अभवत्। य: शिलीमुखै: जितारिपक्ष: अपि ईड्यमान: (सन्) शालीनताम् अव्रजत्॥

१७। तस्य पारियात्रस्य उदारशीलो महावृत्त: 'शीलं स्वभावे सद्वृत्ते'

ইত্যমরঃ। শিলাপট্টবিশালবক্ষাঃ শিলঃ শিলাখ্যঃ সূনুরভবৎ। যঃ সূনুঃ শিলীমুখৈঃ বাণৈঃ। 'অলিবাণৌ শিলীমুখৌ' ইত্যমরঃ। জিতারিপক্ষঃ অপি। ঈড্যমানঃ স্তূয়মানঃ সন্ শালীনতাম্ অধৃষ্টতাং লজ্জাম্ অব্রজৎ অগচ্ছৎ 'স্যাদধৃষ্টে তু শালীনঃ' ইত্যমরঃ। 'শালীনকৌপীনে অধৃষ্টাকার্য্যয়োঃ' ইতি নিপাতঃ॥

১৭। মহারাজ পারিযাত্রের উদারচরিত্র শিলাপট্টের ন্যায় বিশালবক্ষ "শিল" নামে এক তনয় জন্মগ্রহণ করেন, তিনি শরদ্বারা অরিপক্ষ পরাজিত করিতেন এবং কেহ তাঁহাকে প্রশংসা করিলে তিনি অতীব লজ্জিত হইতেন।

তমাত্মসম্পন্নমনিন্দিতাত্মা

কৃত্বা যুবানং যুবরাজমেব।

সুখানি সোঽভুঙ্ক্ত সুখোপরোধি

বৃত্তং হি রাজ্ঞামুপরুদ্ধবৃত্তম্॥ ১৮

১৮ অঃ। অনিন্দিতাত্মা সঃ আত্মসম্পন্নং যুবানং তং যুবরাজং কৃত্বা এব সুখানি অভুঙ্ক্ত, হি (যস্মাৎ) রাজ্ঞাং বৃত্তং সুখোপরোধি (অতএব) উপরুদ্ধবৃত্তম্॥

১৮। অনিন্দিতাত্মা অগর্হিতস্বভাবঃ স পারিযাত্রঃ আত্মসম্পন্নং বুদ্ধিসম্পন্নম্ 'আত্মা যত্নো ধৃতির্বুদ্ধিঃ স্বভাবো ব্রহ্ম বর্ষ্ম চ' ইত্যুভয়ত্রাপি অমরঃ। 'যুবানং তং শিলং যুবরাজং কৃত্বা এব সুখানি অভুঙ্ক্ত। ন ত্বকৃত্বা ইতি এবকারার্থঃ। কিমর্থং যুবরাজশব্দকরণমিত্যাশঙ্ক্য অন্যথা সুখোপভোগা দুর্লভ ইত্যাহ—সুখোপরোধীতি। হি যস্মাৎ রাজ্ঞাং বৃত্তং প্রজাপালনাদিরূপং সুখোপরোধি বহুনত্বাৎ সুখপ্রতিবন্ধকম্। অতএব উপরুদ্ধবৃত্তং, কারাদিবদ্ধতুল্যমিত্যর্থঃ। উপরুদ্ধস্য স্বয়মূঢ়ভারস্য চ সুখং নাস্তীতি ভাবঃ॥

১৮। নরপতিগণ বহুবিধ কার্য্যভারহেতু কারারুদ্ধের ন্যায় সুখভোগে একান্ত বঞ্চিত হন, এজন্য অনিন্দিতস্বভাব পারিযাত্র সদ্বুদ্ধিসম্পন্ন যুবা তনয় শিলকে যৌবরাজ্যে অভিষিক্ত করিয়া স্বয়ং শান্তিসুখে নিরত হইলেন।

তং রাগবন্ধিষ্ববিতৃপ্তমেব ভোগেষু সৌভাগ্যবিশেষভোগ্যম্।

বিলাসিনীনামরতিক্ষমাপি জরা বৃথা মৎসরিণী জহার॥ ১৯

১৯ অঃ। রাগবন্ধিষু ভোগেষু অবিতৃপ্তম্ এব (সন্তম্) বিলাসিনীনাং সৌভাগ্যবিশেষভোগ্যং তম্ অরতিক্ষমা অপি (অতএব) বৃথা মৎসরিণী জরা জহার।

১৯। রাগং বধ্নন্তীতি রাগবন্ধিনঃ রাগপ্রবর্ত্তকা ইত্যর্থঃ, তেষু ভোগেষু

विषयेषु अविच्छिन्नमेव सक्तं, किञ्च, विलासिनीनां भोक्त्रीणां सौभाग्य-विशेषेण सौन्दर्य्यातिशयेन हेतुना भोग्यं भोगार्हं 'चजोः कु घिण्यतोः' इति कुत्वम्। तं पारियात्रं रतिक्षमा न भवन्तीति अरतिक्षमा अपि अतएव तथा मत्सरिणी रतिक्षमासु विलासिनीषु इत्यर्थः। जरा जहार वशीचकार॥

১৯। অনুরাগসম্ভূত ভোগসুখে অতৃপ্ত সৌন্দর্য্যহেতু রমণীগণের সম্যক্ উপভোগ্য নরপতি শিলের প্রতি কামিনীদিগের রতিদর্শনে মৎসরিণী হইয়াই যেন জরা তাঁহাকে একেবারে বশীভূত করিয়া ফেলিল।

उन्नाभ इत्युद्गतनामधेय-
स्तस्यायथार्थोन्नतनाभिरन्ध्रः।
सुतोऽभवत् पङ्कजनाभकल्पः
कृत्स्नस्य नाभिर्नृपमण्डलस्य॥२०

२० अः। तस्य उन्नाभ इति उद्गतनामधेयः अयथार्थोन्नतनाभिरन्ध्रः पङ्कजनाभ-कल्पः कृत्स्नस्य नृपमण्डलस्य नाभिः सुतः अभवत्॥

२०। तस्य शिलाख्यस्य उन्नाभ इत्युद्गतनामधेयः प्रसिद्धनामा यथार्थं यथा तथा उन्नतं नाभिरन्ध्रं यस्य सः गम्भीरनाभिरित्यर्थः। तदुक्तम्—'स्वरः सत्त्वं च नाभिश्च गाम्भीर्य्यं त्रिषु शस्यते'। पङ्कजनाभकल्पो विष्णुसदृशः कृत्स्नस्य नृपमण्डलस्य नाभिः प्रधानम्। 'नाभिः प्रधाने कस्तूरीमदेऽपि क्वचिदीरितः' इति विश्वः। सुतः अभवत्। 'अच् प्रत्यन्ववपूर्वात् सामलोम्नः' इत्यत्राजिति योगविभागादुन्नाभपद्मनाभादयः सिद्धाः॥

২০। অনন্তর ভূপাল শিলের পদ্মনাভতুল্য গভীরনাভিগুণসম্পন্ন নিখিল নৃপ-মণ্ডলের প্রধান "উন্নাভ" নামে এক বিখ্যাত পুত্র জন্মগ্রহণ করিলেন।

ततः परं वज्रधरप्रभावस्तदात्मजः संयति वज्रघोषः।
बभूव वज्राकरभूषणायाः पतिः पृथिव्याः किल वज्रणाभः॥२१

२१ अः। ततः परं वज्रधरप्रभावः संयति वज्रघोषः वज्रणाभः तदात्मजः वज्राकर-भूषणायाः पृथिव्याः पतिः बभूव किल॥

२१। ततः परं वज्रधरप्रभाव इन्द्रतेजाः संयति संग्रामे वज्रघोषो-ऽशनितुल्यध्वनिः वज्रणाभो नाम तस्य उन्नाभस्य आत्मजो वज्राणां हीर-काणामाकराः खनय एव भूषणानि यस्याः तस्याः पृथिव्याः पतिः बभूव किल खलु। 'वज्रं त्वस्त्री कुलिशशस्त्रयोः। मणिभेदे रत्नभेदेऽप्यशनी-वाशनान्तरे।' इति केशवः॥

২১। তদনন্তর বজ্রধর ইন্দ্রতুল্য প্রভাশালী, সমরে বজ্রনিনাদী উন্নাভতনয় "বজ্রণাভ" হীরক-খনিভূষণা বসুমতীর অধিপতি হইলেন।

**तस्मिन् गते द्यां सुकृतोपलभ्यां तत्सम्भवं शङ्खणमर्णवान्ता।**

**उत्खातशत्रुं वसुधोपतस्थे रत्नोपहारैरुदितैः खनिभ्यः॥२२**

২২ অঃ। তস্মিন্ সুকৃতোপলভ্যাং দ্যাং গতে (সতি); উৎখাতশত্রুং শঙ্খণং তৎসম্ভবম্ অর্ণবান্তা বসুধা খনিভ্যঃ উদিতৈঃ রত্নোপহারৈঃ উপতস্থে॥

২২। तस्मिन् वज्रणाभे सुकृतोपलभ्यां सुधर्मार्जितां द्यां स्वर्गं गते सति उत्खातशत्रुम् उद्धृतशत्रुं शङ्खणं नाम तत्सम्भवं तदात्मजम् अर्णवान्ता वसुधा खनिभ्य आकरेभ्य उदितैः उत्पन्नैः रत्नोपहारैः उत्कृष्टवस्तुसमर्पणैः उपतस्थे सिषेवे। जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते इति भरतविश्वौ॥

২২। বজ্রণাভ স্বকীয় পুণ্যবলে স্বর্গলাভ করিলে সসাগরা ধরিত্রীদেবী তৎপুত্র শত্রুনিহন্তা মহীপতি শঙ্খণকে আকরোৎপন্ন রত্নোপহারদ্বারা সেবা করিতে লাগিলেন।

**तस्यावसाने हरिदश्वधामा पित्र्यं प्रपेदे पदमश्विरूपः।**

**वेलातटेषूषितसैनिकाश्वं पुराविदो यं व्युषिताश्वमाहुः॥२३**

২৩ অঃ। তস্য অবসানে হরিদশ্বধামা বিশ্বরূপঃ পিত্র্যং পদং প্রপেদে। বেলাতটেষু উষিতসৈনিকাশ্বং যং পুরাবিদঃ ব্যুষিতাশ্বম্ আহুঃ॥

২৩। तस्य शङ्खणस्य अवसाने अन्ते हरिदश्वधामा सूर्यतेजाः अश्विनोरिव रूपम् अस्य इत्यश्विरूपोऽतिसुन्दरः तत्पुत्र इति शेषः। पित्र्यमिति सम्बन्धिपदसामर्थ्यात्, पित्र्यं पदं प्रपेदे। वेलातटेषु उषिता निविष्टाः सैनिका अश्वाश्च यस्य तम्, अन्वर्थनामानमित्यर्थः। यं पुत्रं पुराविदो वृद्धा व्युषिताश्वम् आहुः॥

২৩। নরপতি শঙ্খণের অবসান হইলে অশ্বিনীকুমারসদৃশ সুন্দর সূর্যতেজঃ-সম্পন্ন তদীয় পুত্র পৈতৃকপদ প্রাপ্ত হন, ইনি সাগরতীরে সেনা ও অশ্বসকল সন্নিবেশিত করিয়াছিলেন এজন্য পুরাতত্ত্ববিদ্গণ ইঁহাকে "ব্যুষিতাশ্ব" বলিয়া আহ্বান করিতেন।

**आराध्य विश्वेश्वरमीश्वरेण**

**तेन क्षितेर्विश्वसहो विजज्ञे।**

**पातुं सहो विश्वसखः समग्रां**

**विश्वम्भरामात्मजमूर्त्तिरात्मा॥ २४**

२४ अ:। तेन क्षितेः ईश्वरेण विश्वेश्वरम् आराध्य विश्वसहः (नाम) विश्वसखः समग्रां विश्वम्भरां पातुं सहः आत्मजमूर्त्तिः आत्मा विजज्ञे ॥

२४। तेन क्षितेरीश्वरेण व्युषिताश्वेन विश्वेश्वरं काशीपतिम् आराध्य उपास्य विश्वसहो नाम विश्वसखः समग्रां सर्वां विश्वम्भरां भुवं पातुं रक्षितुं, सहत इति सहः क्षमः, पचाद्यच्। आत्मजमूर्त्तिः पुत्ररूपो आत्मा स्वयमेव, 'आत्मा वै पुत्रनामासि' इति श्रुतेः। विजज्ञे सुषुवे। विपूर्वो जनिर्गर्भविमोचने वर्त्तते। तथाह भगवान् पाणिनिः—'स मां विजायते' इति ॥

२৪। ভূপতি ব্যুষিতাশ্ব বিশ্বেশ্বরের আরাধনা করিয়া সমগ্র অবনিশাসনে সমর্থ—বিশ্বের সখা "বিশ্বসহ" নামে এক তনয় উৎপাদন করিলেন।

अंशे हिरण्याक्षरिपोः स जाते
हिरण्यनाभे तनये नयज्ञः।
द्विषामसह्यः सुतरां तरूणां
हिरण्यरेता इव सानिलोऽभूत् ॥ २५

२५ अ:। नयज्ञः सः हिरण्याक्षरिपोः अंशे हिरण्यनाभे तनये जाते (सति) तरूणां सानिलः हिरण्यरेताः इव द्विषां सुतराम् असह्यः अभूत् ॥

२५। नयज्ञो नीतिज्ञः स विश्वसहः हिरण्याक्षरिपोर्विष्णोरंशे हिरण्यनाभे नाम्नि तनये जाते सति तरूणां सानिलो हिरण्यरेता हुतभुक् इव द्विषां सुतरामसह्यः अभूत् ॥

२৫। অনিলের সাহায্যে অনল যেরূপ তরুরাজির অসহ্য হইয়া উঠে, তদ্রূপ নীতিবিশারদ বিশ্বসহের হিরণ্যাক্ষরিপু বিষ্ণুর অংশে জাত "হিরণ্যনাভ" তনয়ের তেজ অরাতিগণের পক্ষে একান্ত অসহনীয় হইয়া উঠিল।

पिता पितॄणामनृणस्तमन्ते
वयस्यनन्तानि सुखानि लिप्सुः।
राजानमाजानुविलम्बिबाहुं
कृत्वा कृती वल्कलवान् बभूव ॥ २६

२६ अ:। पितॄणाम् अनृणः (अतएव) कृती पिता अन्ते वयसि अनन्तानि सुखानि लिप्सुः आजानुविलम्बिबाहुं तं राजानं कृत्वा वल्कलवान् बभूव ॥

२६। पितॄणाम् अनृणः निवृत्तपितॄऋण इत्यर्थः। 'प्रजया पितृभ्यः

इति श्रुतेः। अतएव कृती कृतकृत्य इत्यर्थः। पिता विश्वसहः अन्त्ये वयसि वार्द्धके अनन्तानि अविनाशीनि सुखानि लिप्सुः मुमुक्षुरित्यर्थः। आजानुविलम्बिबाहुं दीर्घबाहुं, भाग्यसम्पन्नमिति भावः। तं हिरण्यनाभं राजानं कृत्वा वल्कलवान् बभूव। वनं गत इत्यर्थः॥

২৬। প্রজানাথ কৃতী বিশ্বসহ পুত্রলাভে পিতৃঋণ হইতে মুক্ত ও আত্মাকে কৃতকৃত্য মনে করিয়া শেষবয়সে অনশ্বর সুখলাভকামনায় আজানুলম্বিতবাহু হিরণ্যনাভকে রাজপদে প্রতিষ্ঠিত করিয়া স্বয়ং বল্কল ধারণপূর্ব্বক বনগমন করিলেন।

कौशल्य इत्युत्तरकोशलानां
पत्युः पतङ्गान्वयभूषणस्य।
तस्यौरसः सोमसुतः सुतोऽभू-
न्नेत्रोत्सवः सोम इव द्वितीयः॥ २७

२७ अः। उत्तरकोशलानां पत्युः पतङ्गान्वयभूषणस्य सोमसुतः तस्य द्वितीयः सोमः इव नेत्रोत्सवः कौशल्यः इति औरसः सुतः अभूत्॥

२७। उत्तरकोशलानां पत्युः पतङ्गान्वयभूषणस्य सूर्य्यवंशाभरणस्य सोमसुतः सोमं सुतवतः यज्वन इत्यर्थः। 'सोमे सुञः' इति क्विप्। तस्य हिरण्यनाभस्य द्वितीयः सोमः चन्द्र इव नेत्रोत्सवो नयनानन्दकरः कौशल्य इति प्रसिद्ध औरसो धर्म्मपत्नीजः सुतः अभूत्॥

২৭। সূর্য্যবংশভূষণ অযোধ্যাপতি যাগশীল হিরণ্যনাভের নয়নানন্দকর দ্বিতীয় শশধরের ন্যায় "কৌশল্য" নামে এক ঔরসপুত্র জন্মগ্রহণ করিলেন।

यशोभिराब्रह्मसभं प्रकाशः स ब्रह्मभूयं गतिमाजगाम।
ब्रह्मिष्ठमाधाय निजेऽधिकारे ब्रह्मिष्ठमेव स्वतनुप्रसूतम्॥२८

२८ अः। आब्रह्मसभं यशोभिः प्रकाशः सः ब्रह्मिष्ठं स्वतनुप्रसूतम् ब्रह्मिष्ठम् एव निजे अधिकारे आधाय ब्रह्मभूयं गतिम् आजगाम॥

२८। आ ब्रह्मसभाया आब्रह्मसभं ब्रह्मसदनपर्य्यन्तम्, अभिविधावव्ययीभावः। यशोभिः प्रकाशः प्रसिद्धः स कौशल्यः अतिशयेन ब्रह्मवन्तं ब्रह्मिष्ठं ब्रह्मविदमित्यर्थः। ब्रह्मशब्दात् मतुबन्तादिष्ठन्प्रत्यये 'विन्मतोर्लुक्' इति मतुपो लुक्, 'नस्तद्धिते' इति टिलोपः। ब्रह्मिष्ठं ब्रह्मिष्ठाख्यं स्वतनुप्रसूतं स्वात्मजमेव निजे स्वकीये अधिकारे प्रजापालनकृत्ये आधाय निधाय, ब्रह्मणो भावो ब्रह्मभूयं ब्रह्मत्वं तदेव गतिस्ताम् आजगाम, मुक्तः अभूदित्यर्थः। 'स्याद्ब्रह्मभूयं ब्रह्मत्वम्' इत्यमरः। भुवो भावे क्यप्॥

২৮। যশঃপ্রভাবদ্বারা ব্রহ্মসভা পর্য্যন্ত প্রকাশমান কোশলা তদীয় "ব্রহ্মিষ্ঠ" নামক ব্রহ্মনিষ্ঠ তনয়কে নিজরাজ্যে প্রতিষ্ঠিত করিয়া ব্রহ্মত্বলাভ করিলেন।

तस्मिन् कुलापीड़निभे निपीड़ं
सम्यङ्महीं शासति शासनाङ्काम्।
प्रजाश्चिरं सुप्रजसि प्रजेशे
ननन्दुरानन्दजलाविलाक्ष्यः॥ २९

२९ अः। कुलापीड़निभे सुप्रजसि तस्मिन् प्रजेशे शासनाङ्कां महीं निपीड़ं सम्यक् शासति (सति) आनन्दजलाविलाक्ष्यः प्रजाः चिरं ननन्दुः॥

२९। कुलापीड़निभे कुलशेखरतुल्ये, 'शिखास्वापीड़शेखरौ' इत्यमरः। सुप्रजसि सत्सन्तानवति 'नित्यमसिच् प्रजामेधयोः' इत्यसिच् प्रत्ययः। तस्मिन् प्रजेशे ब्रह्मिष्ठे शासनाङ्कां शासनचिह्नां महीं निपीड़ं निर्बाधं यथा तथा सम्यक् शासति सति आनन्दजलाविलाक्ष्यः आनन्दवाष्पाकुलनेत्राः प्रजाश्चिरं ननन्दुः॥

২৯। রঘুকুলভূষণ প্রজানাথ ব্রহ্মিষ্ঠ স্বীয় শাসনচিহ্নিত পৃথিবী সম্যক্‌রূপে শাসন করিতে প্রবৃত্ত হইলে আনন্দাশ্রুদ্বারা অশ্রুপূতনেত্র তদীয় প্রজাসকল বহুকাল প্রীতিলাভ করিয়াছিল।

पात्रीकृतात्मा गुरुसेवनेन स्पष्टाकृतिः पत्ररथेन्द्रकेतोः।
तं पुत्त्रिणां पुष्करपत्रनेत्रः पुत्त्रः समारोपयदग्रसङ्ख्याम्॥ ३०

३० अः। गुरुसेवनेन पात्रीकृतात्मा पत्ररथेन्द्रकेतोः स्पष्टाकृतिः पुष्करपत्रनेत्रः पुत्रः तं पुत्त्रिणाम् अग्रसङ्ख्यां समारोपयत्॥

३०। गुरुसेवनेन पित्रादिशुश्रूषया पात्रीकृतात्मा योग्यीकृतात्मा, 'योग्य-भाजनयोः पात्रम्' इत्यमरः। पत्ररथेन्द्रकेतोः गरुड़ध्वजस्य स्पष्टाकृतिः स्पष्टवपुः। तत्स्वरूप इत्यर्थः। 'आकृतिः कथिता रूपे सामान्यवपुषोरपि' इति विश्वः। पुष्करपत्रनेत्रः पद्मदलाक्षः पुत्रः पुत्राख्यो राजा। यद्वा पुत्रशब्द आवर्त्तनीयः। पुत्त्रः पुत्त्राख्यः पुत्त्रः सुतः, तं ब्रह्मिष्ठं पुत्त्रिणामग्र-संख्यां समारोपयत्, अग्रगण्यं चकारेत्यर्थः॥

৩০। ব্রহ্মিষ্ঠের "পুত্র" নামক এক পুত্র জন্মগ্রহণ করেন. তিনি পিতা প্রভৃতি গুরুজনের সেবাদ্বারা আপনাকে যোগ্যপাত্র করিয়াছিলেন, তাঁহার আকার বিষ্ণুর তুল্য ছিল এবং সেই পুণ্ডরীকনয়ন পুত্র, পিতা ব্রহ্মিষ্ঠকে পুত্রবান্‌দিগের অগ্রগণ্য করিয়াছিলেন।

वंशस्थितिं वंशकरेण तेन सम्भाव्य भावी स सखा मघोनः।
उपस्पृशन् स्पर्शनिवृत्तलौल्यस्त्रिपुष्करेषु त्रिदशत्वमाप ॥३१

३१ अः। स्पर्शनिवृत्तलौल्यः (अतएव) मघोनः सखा भावी सः वंशकरेण तेन वंशस्थितिं सम्भाव्य त्रिपुष्करेषु उपस्पृशन् त्रिदशत्वम् आप ॥

३१। स्पृश्यन्त इति स्पर्शा विषयाः, तेभ्यो निवृत्तलौल्यः निवृत्ततृष्णः अतएव मघोन इन्द्रस्य सखा मित्रं भावी भविष्यन्, स्वर्गं जिगमिषुः इत्यर्थः। स ब्रह्मिष्ठो वंशकरेण वंशप्रवर्त्तकेन पुत्रेण वंशस्थितिं कुलप्रतिष्ठां सम्भाव्य सम्पाद्य त्रिषु पुष्करेषु तीर्थविशेषेषु, 'दिक्संख्ये संज्ञायाम्' इति समासः। उपस्पृशन् स्नानं कुर्वन् त्रिदशत्वं देवभूयमाप ॥

৩১। বিষয়বাসনাবিমুখ, দেবরাজ ইন্দ্রের ভাবী প্রিয় সখা, ব্রহ্মিষ্ঠ, বংশধর পুত্রদ্বারা স্বীয় বংশমর্য্যাদা রক্ষিত করিয়া স্বর্গকামনায় পুষ্করতীর্থে অবগাহনপূর্ব্বক দেবত্বলাভ করিলেন।

तस्य प्रभानिर्जितपुष्परागं पौष्यान्तिथौ पुष्यमसूत पत्नी।
तस्मिन्नपुष्यन्नुदिते समग्रां पुष्टिं जनाः पुष्य इव द्वितीये ॥३२

३२ अः। तस्य पत्नी पौष्यां तिथौ प्रभानिर्जितपुष्परागं पुष्यम् असूत, द्वितीये पुष्ये इव तस्मिन् उदिते (सति) जनाः समग्रां पुष्टिम् अपुष्यन् ॥

३२। तस्य पुत्राख्यस्य पत्नी पौष्यां पुष्यनक्षत्रयुक्तायां पौर्णमास्यां तिथौ। 'पुष्ययुक्ता पौर्णमासी पौषी' इत्यमरः। 'नक्षत्रेण युक्तः कालः' इत्यण्प्रत्ययः, 'टिड्ढाणञ्'—इत्यादिना ङीप्। प्रभया निर्जितः पुष्परागो मणिविशेषो येन तं पुष्यं पुष्याख्यम् असूत। द्वितीये पुष्ये पुष्यनक्षत्र इव तस्मिन् उदिते सति जनाः समग्रां पुष्टिं वृद्धिमपुष्यत् ॥

৩২। নরপতি পুত্রের পত্নী পূর্ণিমা তিথিতে পুষ্পরাগমণি অপেক্ষাও অধিক প্রদীপ্ত "পুষ্য" নামক এক তনয় প্রসব করিলেন। দ্বিতীয় পুষ্যানক্ষত্রের ন্যায় পুষ্যের উদয়ে প্রজাগণ সবিশেষ অভ্যুদয়লাভ করিয়াছিল।

महीं महेच्छः परिकीर्य्य सूनौ
मनीषिणे जैमिनयेऽर्पितात्मा।
तस्मात् सयोगादधिगम्य योग-
मजन्मनेऽकल्पत जन्मभीरुः ॥ ३३

३३ अः। महेच्छः जन्मभीरुः (सः) सूनौ महीं परिकीर्य्य मनीषिणे जैमिनये अर्पितात्मा (सन्) सयोगात् तस्मात् योगम् अधिगम्य अजन्मने अकल्पत ॥

३३। महेच्छो महाशयः, 'महेच्छस्तु महाशयः' इत्यमरः। भवभीरुः संसारभीरुः स पुत्रः सूनौ महीं परिकीर्य्य विसृज्य मनीषिणे ब्रह्मविद्याविदुषे जैमिनये मुनयेऽर्पितात्मा शिष्यभूतः सन्नित्यर्थः। सयोगात् योगिनः तस्मात् जैमिनेर्योगं योगविद्यामधिगम्य अजन्मने जन्मनिवृत्तये मोक्षाय अकल्पत समपद्यत। क्लृपि:सम्पद्यमाने चतुर्थी वक्तव्या। मुक्त इत्यर्थः॥

৩৩। উচ্চাভিলাষী মহীপতি পুনর্জ্জন্মে ভীত হইয়া পুত্রহস্তে রাজ্যভার অর্পণকরত ব্রহ্মতত্ত্ববিদ্ পরমযোগী জৈমিনিসমীপে দীক্ষাগ্রহণপূর্ব্বক পুনর্জ্জন্মনিবৃত্তির জন্য যোগবিদ্যা প্রাপ্ত হইয়া মুক্তিলাভ করিলেন।

**ततः परं तत्प्रभवः प्रपेदे ध्रुवोपमेयो ध्रुवसन्धिरुर्वीम्।**
**यस्मिन्नभूज्ज्यायसि सत्यसन्धे सन्धिर्ध्रुवः सन्नमतामरीणाम्॥३४**

३४ अ:। ततः परं तत्प्रभवः ध्रुवोपमेयः ध्रुवसन्धिः उर्वीं प्रपेदे। ज्यायसि सत्यसन्धे यस्मिन् सन्नमताम् अरीणां सन्धिः ध्रुवः अभूत्॥

३४। ततः परं स पुण्यः प्रभवः कारणं यस्य स तत्प्रभवः तदात्मज इत्यर्थः। ध्रुवेण औत्तानपादिना उपमेयः, 'ध्रुव औत्तानपादिः स्यात्' इत्यमरः। ध्रुवसन्धिः उर्वीं प्रपेदे। ज्यायसि श्रेष्ठे सत्यसन्धे सत्यप्रतिज्ञे यस्मिन् ध्रुवसन्धौ सन्नमताम् अनुव्रतानामित्यर्थः। अरीणां सन्धिर्ध्रुवः स्थिरोऽभूत्। ततः सार्थकनामा इत्यर्थः॥

৩৪। অনন্তর ধর্ম্মাত্মা পুষ্যতনয় ধ্রুবতুল্য "ধ্রুবসন্ধি" বসুধার আধিপত্য লাভ করিলেন; সত্যপ্রতিজ্ঞ নৃপতিশ্রেষ্ঠ সেই ধ্রুবসন্ধির নিকট অনুরক্ত শত্রুগণের সন্ধি কদাচ ভগ্ন হয় নাই।

**सुते शिशावेव सुदर्शनाख्ये दर्शात्ययेन्दुप्रियदर्शने सः।**
**मृगायताक्षो मृगयाविहारी सिंहादवापद्विपदं नृसिंहः॥३५**

३५ अ:। मृगायताक्षः नृसिंहः सः दर्शात्ययेन्दुप्रियदर्शने सुदर्शनाख्ये सुते शिशौ (सति) एव मृगयाविहारी (सन्) सिंहात् विपदम् अवापत्॥

३५। मृगायताक्षो नृसिंहः पुरुषश्रेष्ठः स ध्रुवसन्धिर्दर्शात्ययेन्दुप्रियदर्शने प्रतिपच्चन्द्रनिभे सुदर्शनाख्ये सुते शिशौ सति एव मृगयाविहारी सन् सिंहात् विपदं मरणम् अवापत्। व्यसनासक्तिरनर्थावहेति भावः॥

৩৫। মহীপতি ধ্রুবসন্ধির প্রতিপদ্ চন্দ্রের ন্যায় প্রিয়দর্শন "সুদর্শন" নামে এক পুত্র উৎপন্ন হইলেন; মৃগয়াবিহারী হরিণনয়ন পুরুষপ্রবর ধ্রুবসন্ধি পুত্রের শৈশবাবস্থাতেই সিংহের হস্তে ইহলীলা সংবরণ করেন।

